# प्रस्तावना।

शब्दशास्त्रमनधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे।
बन्द्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना ॥ १ ॥

विदितमेवैतद्विद्योत्साहवतां विविधविबुधभाषां विविदिषूणां जनानां यद्वेदाङ्गेषु मुखमिव मुख्यं व्याकरणं विराजते तदध्ययनमन्वेवान्यशास्त्राध्ययनमानन्द दायकं बोभवीति नान्यथा तत्त्वग्रहणपाटवसामर्थ्याजननात्। अत एवोक्तं सारासारविवेकवद्भिः कैश्चित्कविवरैः।"कृतदुरितनिराकरणं व्याकरणं चतुर धीरधीयानः। बुधगणगणनारम्भे कनिष्ठिकायां परंजयति" इति । तत्मवर्त्तकास्तावन्महामहिमशालिन इन्द्रचन्द्रादयोऽष्टावेवाचार्या अनन्तातलाऽऽलम्बनेन मणत्याः स्तुत्याश्च गीर्वाणवाणीमणीतविविधस्तोत्रकलापैर्यशःपरंपराभिर्ब्रह्माण्डभाण्डोदरं धवली कुर्वन्ति।परञ्च । हा कष्टं तत्तत्मणीततन्त्रतत्यां यथा महर्षिपतञ्जलिभाष्यभूषितं पाणिनिमुनिमणीतशास्त्रं सर्वतो लब्धप्रतिष्ठमध्ययनाऽध्यापनादिरूपेण जागर्तितरां जगत्यां तथा नान्यानि यतोन्यानि कालकवलितकीर्तिकुमुदबान्धवानि । तच्च गूढार्थकत्वादतिविस्तृतत्वाच्च न हि साधारणजनगम्यमित्यालोच्य श्रीमदनुभूतिस्वरूपाचार्यः पुंक्षिवति मयोगसाधनव्याजेन श्रीसरस्वतीमुपास्य श्रीभगवतीसरस्वतीमसादतस्तस्या एव नाम्ना ( सरस्वतीसूत्रनाम्ना ) सूत्रसप्तशतीं लब्ध्वा जगदुपकारं कृतवाननतिविस्तरबोधदायकव्याकरणतंत्रेण । तच्चरामाश्रमाद्याचार्यैर्वृत्तिवचनटीकादिभिर्जनानां सुकरत्वेन जिग्राहयिषयाऽतिसुलभमकारि । किञ्च महाभाष्यकारशैलीमनुकृत्यास्यार्थविचारखण्डनमण्डनपरष्टीकाग्रंथो न केनाप्यद्यावधिनिरमायि, इत्येतदालोच्य हाटकेशपुरवास्तव्यविनायकात्मजसर्वशास्त्रनिष्णातश्रीरघुनाथनागरेण कौमुदीमुग्धबोधकालापसूत्रखंडनपुरस्सरं "लघुभाष्यं" नाम ग्रंथो व्यरचि । एतस्याऽध्येता सटीककौमुद्यामधीतिभिः सहाऽप्यतिमागल्भ्येन शास्त्रार्थं कृत्वा जेतुं शक्नोति । किं बहुना। तदेतच्चान्द्रिकपरमोपयोगिलघुभाष्यस्याऽतीवशुद्धं समग्रं पूर्वार्द्धं किञ्चिन्न्यूनोच्च-

रार्द्धं च महता प्रयत्नेन पंचनददेशान्तर्गतनाभाख्यराजधानीवास्तव्यवि-द्वद्वरश्रीवंशीधरपुस्तकालयतस्तदुदारभावेनोपलभ्य मया स्निग्धपुष्टपत्रेषु स्थूल-सूक्ष्मसीसकाक्षरैर्मुद्रणमकारि । अत एव प्रार्थयेहं विमलधियो विद्वांसः पठनपाठनादिप्रचारेणैनं सफलीकुर्वन्तु मामनुगृह्णंतु चेति निवेदयामि क्षेमराज-श्रेष्ठी । किञ्च । योऽस्योत्तरार्द्धपूर्त्तिमवशिष्टोत्तरार्द्धपुस्तकप्रदानेन कारायिष्यात स छात्रगणोपकारित्वलब्धयशाः कोटिशोस्मदीयधन्यवादभाजनं भविष्यत्येव । अन्यच्च । एभिरेव श्रीवंशीधरबुधवरैर्निर्मिता श्रीमद्भागवतभावार्थ-दीपिकाप्रकाशिकाख्याऽतिविलक्षणा टीका मुद्रणार्थमस्मभ्यं प्रदत्ता सा शीघ्रमे-वाध्येत्रध्यापयितृचित्तानन्दाङ्कुरोद्गमं कुर्वन्ती प्रसिद्धिं गमिष्यतीत्याशास्महे ॥



भवदीयकृपाकांक्षी—

**क्षेमराज श्रीकृष्णदास,**

**" श्रीवेङ्कटेश्वर " मुद्रणयन्त्रालयाध्यक्ष—मुंबई.**

श्रीः ।

# अथ लघुभाष्यं प्रारभ्यते ।

## ओंस्वस्तिश्रीगणेशाय नमः ।

**गोपिकावल्लभं नत्वा गिरं भट्टोजिदीक्षितम् ॥**
**वाक्सूत्रे विदधे व्याख्यां फणिभाषितमार्गगाम् ॥ १ ॥**

नन्वयं ग्रंथो व्याख्यानानर्होऽशिष्टप्रणीतत्वाद्बाह्यग्रंथवत् तच्च मंगलाचरणादर्शनात् । शिष्टा हि कृतमंगला ग्रंथकरणादौ प्रवर्तंते इति चेत् । उच्यते । नहि पद्यरचनैव मंगलं वृद्धिसिद्ध्यथशब्दानामपि मंगलार्थत्वदर्शनात् । आशीर्नमस्करणादिक्रिया मंगलं तस्यात्राकरणे प्रमाणं नास्ति । नच करणेपि तन्नास्ति निर्विघ्नसमाप्तेरेव प्रमाणत्वात् । किंच ग्रंथस्यास्य कर्त्री सरस्वतीदेवता सा ग्रंथकरणे प्रवृत्ताप्यात्मानं जानाति तद्देवताज्ञानं मंगलमेव । यद्वा 'अक्षराणामकारो स्मी'ति भगवद्वचनादकारोच्चारणमेव मंगलम् । यद्वा 'अकारो वासुदेवः स्यादित्ये' काक्षरकोशदर्शनात्तत्रेणाकारेण जातं वासुदेवस्मरणमेव मंगलं पद्यनिर्माणं तु शिष्यशिक्षार्थं तदत्र न कृतं तस्याः प्रकारांतरेणैव संभवात् । वस्तुतस्तु मंगलस्य निर्विघ्नपरिसमाप्तिं प्रति पद्यरचनाया ध्वंसादि प्रति वा न कारणता मानाभावात् । न तावद्दंडघटयोरिवान्वयव्यतिरेकलक्षणं मानं बाह्यग्रंथे विनापि मंगलं समाप्तिदर्शनात् नापि श्रुतिः 'स्वर्गकामो यजेते' तिवत् विघ्नध्वंसादिकामो मंगलं कुर्यादिति श्रुतेरदर्शनात् । नापि शिष्टाचारानुमिता श्रुतिर्मानम् । आचारस्य साक्षाच्छ्रुतिसंबंधाभावात् । आचारो हि स्मृतिमूलको न साक्षाच्छ्रुतिमूलः । अस्तु तर्हि आचारानुमिता स्मृतिरेव मानं तस्या अपि दृष्टे फले संभवति अदृष्टफलकल्पनाया अन्याय्यत्वात् न 'बाहुभ्यां नदीं तरेदि'त्यादिषु यथा स्मृतेर्दृष्टद्वारा विघ्नध्वंसं प्रति कारणत्वबोधकताया अदर्शनात् । आचारोऽपि दृष्टफल एव स्वाचरितुः शिष्टत्वबोधनात् शिष्टत्वे च पूजादि दृष्टमेव फलं लभ्यते । यथा भोजनमर्दनादिक्रिया स्मृतिं न कल्पयति तथाचारोपि स्मार्तशिष्टाचारस्य

शिष्टत्वलाभ एव फलं न विघ्नध्वंसादिकं पुनः शिष्टा आर्यावर्तनिवासे ये ब्राह्मणाः कुंभीधान्या अलोलुपा अगृह्यमाणकारणाः किंचिदंतरेण कस्याश्चिद्विद्यायाः पारं गताः तत्रभवंतः शिष्टा इति नागनाथः। कः पुनरार्यावर्तः प्रागादर्शात्प्रत्यक् कालवनाद्दक्षिणेन हिमवंतमुत्तरेण पारिपात्रमित्यार्यावर्तः। प्राचि देशे प्राक् अव्यादित्वादस्तातिः। लुग्बहुत्वेकचिदित्यस्तातेर्लुक्। तद्योगे ऋतआदित्वात्पंचमी।एवं प्रत्यक् दक्षिणस्मिन् देशे दक्षिणेन। अव्यादित्वादेनः प्रत्ययः। तद्योगे विनादित्वाद्वितीया। एवमुत्तरेण। आदर्शादयः पर्वतविशेषाः। कुंभ्यामेव धान्यं येषामिति अधिकसंग्रहव्यावृत्तिः।दंभार्थमेव तत्स्यादत आह। अलोलुपा इति। अत्यंतविषयासक्तिशून्या इत्यर्थः। सत्येवमाचारशून्यानामपि शिष्टत्वं स्यात्। यद्वा लोकप्रतारणार्थमुक्तप्रकारद्वये शिष्टत्वं स्यादत आह। अगृह्यमाणेति। दृष्टं कारणमंतरेणैव सदाचारानुवर्तिन इत्यर्थः। किंचिदंतरेणेति। विनैव परपराभवं सर्वविद्यापारगाः स्वधर्मबुद्ध्या विद्या अधीतवंत इत्यर्थः। इदं नागेंद्रेण प्रोक्तं शिष्टलक्षणमादर्तव्यं पौरुषेयमाधुनिकैर्नादर्तव्यम्। अथ व्याकरणाध्ययनेन किं साध्यम्। उच्यते। धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः। तथाहि। ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्चेत्यध्ययनविधिर्व्याकरणाध्ययनस्य धर्मसाधनतां गमयति। सांगवेदाध्ययनतदर्थज्ञानपरोऽयं धर्मो नित्यः संध्योपासनादिवादित्यर्थः। षट्स्वंगेषु प्रधानं व्याकरणं पदपदार्थज्ञानस्य व्याकरणमूलत्वात्। वाक्यार्थज्ञानस्य तद्धेतुत्वात्। तथा च संध्योपासनादेर्भावेऽभावे च यथा धर्माधर्मौ तथा म्लेच्छो ह वा एष यदपशब्द इति तस्माद्ब्राह्मणेन न म्लेच्छितवैनायिकभाषितवैशब्दप्रयोगनिषेधोऽपि व्याकरणाध्ययनं विनाऽपशब्दवर्जनासंभवात्। तथा "यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्॥ तावुभौ पुण्यकर्माणौ पुण्यपावनपावनौ॥" इति स्मृतिरपि अर्थसाधनतां "यो वा इमां पदशः स्वरशो वाचं विदधाति स आर्त्विजीनो भवती" ति बोधयति। यजने याजने च विदुष एवाधिकारात् "षण्णां तु कर्मणां तस्य त्रीणि कर्माणि जीविका॥ याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहम्॥" इति स्मृतिरपि अध्यापनं ब्राह्मणस्य वृत्तिः। तन्निर्वाहश्च शब्दज्ञानाधीनः न। ह्यशब्दज्ञं समुपगच्छन्ति शिष्याः। शब्दज्ञानं

च व्याकरणं विना लघुनोपायेन न संभवति शब्दानामानंत्यात् । प्रतिपद-पाठस्याशक्यत्वात् । एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीति कामसाधनतां बोधयति । साधुशब्दप्रयोगस्य स्वर्गहेतु-तावगमात् । "यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले सोऽनंतमाप्नोति जयं परत्र ॥ वाग्योगविद्दुष्यति चापशब्दैरि" ति स्मृतिरपि । दुष्यतीत्यत्रावैयाकरणः कर्त्ता सामर्थ्याद्बोध्यः । "सक्तुमिव तितउना पुनंतो यत्र धीरा मनसा वाचमक्रत ॥ अत्रासखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि" इति मोक्षहेतुतां दर्शयति । यथा तितउना सक्तोस्तुषाद्यप-नीयते तथा व्याकरणेन वाचोऽपशब्दाः । वाचमक्रतेति अपशब्देभ्यो विविक्तं कृतवंतो धीरा वैयाकरणा अत्र एकगम्ये ज्ञानेनैव प्राप्ये सखायः समा-नज्ञानाभेदग्रहस्य निवृत्तत्वात्सर्वमेकमिति मन्यंते सख्यानि सायुज्यानि वाचि वेदाख्ये ब्रह्मणि सा लक्ष्मीर्वेदांतेषु परमार्थसंविल्लक्षणोक्ता सैषां निहिता शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति । " आसन्नं ब्रह्मणस्तस्य तपसा-मुत्तमं तपः ॥ प्रथमं छंदसामंगमाहुर्व्याकरणं बुधाः ॥ प्राप्तरूपविभागा-या वाचः स परमो रसः ॥ यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमांजसः ॥ अर्थप्रवृत्तितत्त्वानां शब्द एव निबंधनम् ॥ तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥ तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ॥ पवित्रं सर्व-विद्यानामधिविद्यं प्रकाशते ॥ यथार्थजातयः सर्वाः शब्दाकृतिनिबंधनाः ॥ तथैव लोके विद्यानामेषा विद्या परायणम् ॥ इदमाद्यं पदस्थानं सिद्धिसो-पानपर्वणाम् ॥ इयं सा मोक्ष्यमाणानामजिह्मा राजपद्धतिः ॥ यदेकं प्रक्रियाभेदैर्बहुधा प्रतिलभ्यते ॥ तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते ॥ तस्माद्व्याकरणं साधुशब्दज्ञानद्वारा पुरुषार्थचतुष्टयहेतुः । तत्र साधु-शब्दा विषयाः साधुशब्दज्ञानं साक्षात्प्रयोजनं तद्द्वारा तु पुरुषार्थचतुष्टयं तत्कामोऽधिकारी प्रयोजनं व्याकरणस्य सप्रयोजनत्वम् ।अस्य ग्रंथस्य तु किं प्रयोजनमिति चेत् । उच्यते । अतिलाघवेन साधुशब्दज्ञानमेव । अल्पायु-षो मंदमतीनलसान्मंदभाग्यान्विघ्नोपद्रुताञ्जनान्दृष्ट्वा तेषां कृपयातिपीडिते-नानुभूतिस्वरूपाचार्येण प्रार्थितेन श्रीहयग्रीवेण प्रेरिता सरस्वती तेषां महा-व्याकरणाध्ययनाशक्तानामतिलाघवेन शब्दज्ञानार्थं सूत्राणि प्रणिनायेति

वृद्धेभ्यः श्रूयते। ननु किमिदं साधुत्वं न तावद्बोधकत्वं गाव्यादावपि तस्य सत्त्वात् । नापि शक्तत्वं लाक्षणिकानां लक्ष्यार्थेष्वसाधुतापत्तेः । कचिच्छक्तत्वस्य व्यावर्तकत्वात् । नापि जातिविशेषः । कत्वादिनासंकरापत्तेः । उच्यते । अनपभ्रष्टताऽनादिर्यद्वाभ्युदययोग्यता।व्याक्रिया व्यंजनीया वा जातिः कापीह साधुता॥शक्तिवैकल्यप्रमादभ्रमविप्रलिप्साकरणापटवादिप्रयुक्तमन्यथोच्चारणकत्वमपभ्रष्टत्वं तदविरहोनपभ्रष्टता।यः शब्दो यमर्थं बोधयितुं द्योतयितुं वा शक्तोऽनादिवृद्धौ प्रयुक्तः स तस्मिन्नर्थे उक्तदोषादन्यथात्वमप्राप्तः साधुरन्यथा त्वसाधुः । यद्वाऽनादिप्रयुक्तत्वमेव साधुत्वमपभ्रंशास्तु दोषान्मध्य एव जायंते ।यद्वाऽभ्युदयजननयोग्यता साधुता । यद्वा व्याकरणाभ्यासजन्यसंस्कारसहकृतश्रोत्रेंद्रियगम्यो जातिविशेषः उपाधिसंकरवज्जातिसंकरो न दोषः दूषकताबीजाभावात् । इदं चतुर्विधमपि साधुत्वं व्याकरणैकसमधिगम्यम्।एतत्प्रसिद्धमसाधुत्वमपि चतुर्विधमपभ्रष्टता सादिता प्रत्यवायजननयोग्यताजातिविशेषो वेति । यद्वा "अनिदंप्रथमाः शब्दाः साधवः परिकीर्त्तिताः ॥ त एव शक्तिवैकल्यप्रमादालसतादिभिः ॥ अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः ॥" अत्रेदमवधेयं प्रथमश्लोकोक्तलक्षणचतुष्टयमध्ये आद्यंतोक्तं लक्षणद्वयं वृद्ध्यादिसंज्ञास्वस्ति । मध्यमपक्षद्वये तु तासामसाधुत्वं प्राप्तं यद्यपि तथापि साधुशब्दज्ञानस्य तन्नांतरीयकत्वान्न दोषावहम् । यावता विना साधुशब्दा ज्ञातुं न शक्यंते तावद्व्याकरणाध्ययनविधिः । ननु ज्ञातं न म्लेच्छेदिति निषेधानाक्रांतत्वान्न दोषमावहति । किंच न म्लेच्छेदित्ययं निषेधो याज्ञे कर्मणि क्रतुप्रकरणात् । तत्र तासां प्रयोगे प्रत्यवायोस्तु । नत्वन्यत्र सः "पर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञा" इत्यादिश्रुतेः । ते हि विरक्त्यतिशयाल्लौकिकेष्वर्थेष्वाग्रहविरहेण यथा तथास्माकं भवत्विति विवक्षवो यद्वानस्तद्वान इति वक्तव्ये पर्वाणस्तर्वाण इत्युक्तवंतः, याज्ञे कर्मणि साधूनेव प्रयुक्तवंतः अतो न पराभूताः । असुरास्तु याज्ञे कर्मण्यपभाषणात्पराभूताः । अन्ये त्वाहुः 'नानृतं वदेदि' त्यनारभ्याधीतात्पुरुषार्थान्निषेधात्क्रतोर्बहिरप्यपशब्दप्रयोगे पुरुषः प्रत्यवैति । तत्र निषेध्यमनृतं द्विधा शब्दानृतमर्थानृतं चेति शब्दस्यार्थस्य वा विपरीतप्रतिपत्तिहेतुभूतमुच्चारणमनृतवदनम् । एवं च यथार्थानृतं वदतः

प्रत्यवायस्तथा शब्दानृतमपीति तुल्यं क्रतुरपि विगुण इति वचनद्वयबलाल्लभ्यते इति दिक् । द्वितीयश्लोकोक्तलक्षणपक्षे तु तासां साध्वसाधुबहिर्भावः 'यास्त्वेताः स्वेच्छया संज्ञाः क्रियंते टिगुणादयः ॥ कथं तु तासां साधुत्वं नैव ताः साधवो मताः ॥ अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता॥हस्तचेष्टा यथा लोके तथा संकेतिता इमाः ॥ तासां प्रयोगेऽभ्युदयः प्रत्यवायोपि वा भवेत् । लाघवेनार्थबोधार्थं प्रयुज्यंते तु केवलम्'' ॥ तासामप्यनादितापक्षे तु सर्वपक्षे साधुतैव तदा संज्ञाप्रणयनं तु नियमार्थम्। अस्मिञ्छास्त्रेऽनेन शब्देनायमेवार्थो बोध्यो नान्य इति व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् "नित्य एव तु संबंधो डित्थादिषु गवादिवत् ॥ वृद्ध्यादीनां च शास्त्रेस्मिञ्छक्त्यवच्छेदलक्षणः ॥ अकृत्रिमोऽभिसंबंधो विशेषणविशेष्यवत्॥''सर्वेष्वपि पक्षेषु संज्ञाशब्दानामनुशासनविषयतास्तीति निर्विवादमिति दिक् । अत्र साधुशब्दस्य ज्ञानपूर्वकात्प्रयोगात्फलं न ज्ञानमात्रात् "वाग्योगविदिति च प्रयुंक्ते इति चापादानात् । सम्यग्ज्ञातःसुष्ठु प्रयुक्तः'' इति श्रुतौ तु ज्ञातप्रयोगयोरुपादानस्याविशेषेपि प्रयोगात् फलम् । ज्ञानं तु प्रयोगांगं प्रयोगस्य फलप्रतिसंनिहितत्वात् । ज्ञानस्य तु व्यवहितत्वात् । ज्ञानस्य प्रयोगांगतायां दृष्टार्थताभावात् । अन्यथाऽदृष्टकल्पनाप्रसंगात् । तथाऽपशब्दस्य प्रयोगात्प्रत्यवायो न तु ज्ञानात् । "तेऽसुरा हेलयो हेलयः कुर्वंतः पराबभूवुरि'' तिश्रुतेः । कुर्वंतः प्रयुंजानाः ॥ अथ व्याकरणशब्दस्य कोर्थः । सूत्रं । तर्हि षष्ठ्यर्थो नोपपद्यते व्याकरणस्य सूत्रमिति उच्यते । सूत्रसमुदायो व्याकरणस्य शब्दस्यार्थः तदेकदेशः सूत्रशब्दस्य, यथा वृक्षस्य पत्रमिति । एवमपि व्याकरणाच्छब्दान्प्रतिपद्यामहे इति नोपपद्यते । नहि सूत्रमात्राच्छब्दान्प्रतिपद्यंते किं तर्हि व्याख्यानात् । नैवं तदेव सूत्रंविगृहीतं व्याख्यानं भवति । यद्वा उदाहरणं प्रत्युदाहरणं सूत्रं वाक्याध्याहार इति समुदितं व्याकरणं तदेकदेशः सूत्रम् । समुदायसमुदायिसंबंधे षष्ठी । यद्वा शब्दो व्याकरणं व्याक्रियत इति कर्मणि युट् । इत्थं पाणिनिना प्रोक्तमिति पाणिनीयं व्याकरणमिति तद्धितो नोपपद्यते । न हि पाणिनिना शब्दाः प्रोक्ताः किं तर्हि सूत्राणि । मैवम् । व्याकरणार्थत्वात् पाणिनीयं व्याकरणमिति उच्यते । तादर्थ्यात्ताच्छब्द्यं भवतीति सूत्रा-

दिकमपि व्याकरणम्।यथा कुंडलार्थं सुवर्णं कुंडलमिति।अथ कथं व्याकरणस्य सूत्रमिति षष्ठी । उपकार्योपकारकसंबंधे । अथ कथं व्याकरणे भवो वैयाकरणो योग इति । नहि शब्दे भवोयोगः किं तु सूत्रे ।उच्यते । अन्वाख्यापकतासंबंधेन शब्दे भवो यथा विषयितासंबंधेन शास्त्रे ज्ञानम् । इत्थं पक्षत्रयं स्थितम् ।

## अइउण्‌ ॥ १ ॥

अनेन क्रमेणैते वर्णा ज्ञेयाः । संज्ञासूत्रमिदमाद्यंताभ्यामित्यनेन संज्ञासूत्रेण सहैकवाक्यत्वात् ।तेनाऽच इल इत्यादिसंज्ञासिद्धिः । क्रमश्चायं विवक्षितः । तेनावमध्ये इकारस्य ग्रहः इलमध्येऽकारस्य न ग्रहः । अत्राकारादीनां स्वरूपेणानुकार्य्येण वार्थेनार्थवत्त्वस्य सतोप्यविवक्षणान्न नामसंज्ञेति गवित्ययमाहेत्यादाविव विभक्तेरनुत्पत्तिः । अत एव च समासाभावः,विभक्त्यंतानां समास इति वक्ष्यते । अतः पंच पदानि । माधवस्तु विभक्तिं द्वंद्वं च स्वीकृत्य द्विपदतामाह । तदसत् । समासे सति नियमेन संधिप्रसंगात् । अविवक्षितत्वादिति मूलविरोधात्।अविवक्षा हि वाक्ये न तु राजाश्व इत्यादौ।समासेऽर्थस्याविवक्षितत्वादविभक्तिको वा निर्देश इति स्वग्रंथविरोधाच्च विभक्त्यभावे समासाभावेनैकपदत्वाभावात् । यत्तु अइकौ मत्वर्थे इति निर्देशेन समासे संहिताया अनित्यत्वं ज्ञाप्यत इति समाधानम् । तन्न । वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसंभवात् । किंच वाक्ये विवक्षितः संधिरित्यस्याज्ञापकत्वप्रसंगात् । मन्मते अइकौ इति निर्देशेन समासेऽनित्यत्वं ज्ञाप्यते तेन सप्तऋषीणामित्यादि सिद्धम् । अनेन तु वाक्येऽनित्यत्वज्ञापनादधि अत्रेति सिद्धम् । तव त्वियं व्यवस्था न स्यात् । वस्तुतस्तु " ए अय् ओ अव्" इत्यादिज्ञापकाद्वाक्ये विवक्षां विना संधिर्नेति ज्ञापितत्वात् । अनेन समासे संधिर्नेति ज्ञापनादयं पक्षोऽपि साधुरेवेति ध्येयम् । स्वरसंध्यकरणेन चैतज्ज्ञाप्यते हि प्राचां परिभाषा " संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ " इति । संहिताग्रंथेऽत्र संधिः । समासस्य पृथग्ग्रहणं गोबलीवर्दन्यायेन,एकपद इत्यनेनैव तत्संग्रहस्यापि सिद्धत्वात्।यद्वा एकमेव पदमेकपदं समासस्त्ववांतरपदविभागान्नैवमिति पृथग्गृहीतः। तेन"हे रोहिणि त्वमसि शीलवतीषु धन्या

एनं निवारय पतिं सखि दुर्विनीतम् । जालांतरेण मम वासगृहं प्रविश्य श्रोणीतटं स्पृशति किं कुलधर्म एषः ॥ धर्मिष्ठ आर्यवचसा यदगादरण्यम्" इत्यादिषु धन्या एनमित्यादीनां नासाधुता ॥ केचित्तु चादिषु पाठान्निपात-संज्ञा 'ओ निपात' इति प्रकृतिभावात् । यद्यप्यनिपातानामपीह ग्रहणमिष्टं दध्यश्व इत्यादिसिद्ध्यर्थं तथापि न सर्वा व्यक्तयः साक्षान्निर्देष्टव्या आनन्त्यात् । किंतु काचिद्व्यक्तिर्निर्दिश्यमाना स्वसदृशीरितरा अपि प्रत्यापयति तत्र किं निपातव्यक्तिरेव निर्दिश्यतामुत तदितरेति संशये आद्यकोटिरेव युक्ता । संधिकार्यविरहेण निर्दिश्यमानरूपस्य स्फुटप्रतीतिसिद्धेः । अत्वादीनि सामान्यान्येव निर्दिष्टानीतिपक्षेऽपि तेषां व्यक्तिं विना निर्देशासंभवेऽपि स्फुटप्रतिपत्तये निपातव्यक्तिरेव निर्देश्येत्याहुः । तन्न । इत्थं संध्यभावस्य न्यायप्राप्तत्वेन वाक्ये तु सा विवक्षामित्यस्यार्थस्याज्ञापकत्वप्रसंगात् । ओ अवित्यादावपि निपातव्यक्तेर्निर्देश इति सुवचत्वात् । यत्तु वर्णोपदेशकाले स्वरादिसंज्ञानामनिष्पादात् संधिर्नेति समाधानं तदन्ये न मन्यंते, वर्णोपदेशे स्वरादिसंज्ञायां च सत्यां प्रवर्तमानानां यकारादीनां दध्यानयेत्यादौ तटस्थरव उद्देश्यतावच्छेदकरूपाक्रांते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात् अन्यथा नामसंज्ञासूत्रांतर्गतानां नामत्वं स्रोर्विसर्ग इति सूत्रे विसर्गः एदोतोत इति सूत्रेऽकारलोपश्च न स्यात् । वस्तुतस्तु आद्यन्ताभ्यामिति संज्ञाविधावकारादीनां संज्ञित्वेनापेक्षास्ति सा च वर्णोपदेशवाक्यार्थे निष्पन्न एव निर्वहति न तु ततः पूर्वं । वर्णोपदेशवाक्यार्थनिर्णयसमयेऽबादिसंज्ञानिष्पत्तिर्युक्तैव वाक्यापरिसमाप्तेः । स्वरादिसंज्ञायां तु सा नास्ति स्तोकतस्तत्प्रसिद्धेः सत्त्वात् । अतो विवक्षैव समाधानम् । अमी यद्यपि वर्णा निर्दिष्टास्तथापि कारप्रत्ययो न भवति वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसंभवात् । अन्ये त्वाहुः । 'वर्णात्कारः' इत्यस्य नायमर्थः वर्णादुच्चार्य्यमाणात्कारप्रत्ययो भवतीति । एवं हि विज्ञायमाने ककार इत्यादावुच्चार्य्यमाणस्य स्वरहससमुदायस्यावर्णत्वात्कारप्रत्ययो न स्यात् । किं तर्हि इकृश्तिपौ धातुनिर्देश इत्यतो निर्देश इत्यनुवृत्तेर्यस्योच्चार्य्यमाणस्य प्रयोगस्थो वर्णो निर्देश्यः प्रतिपाद्यः तस्माद्वर्णाद्वर्णस्य प्रतिपादकात्कारप्रत्यय इत्यर्थः । अत्र चानुपूर्वीसंपादने तात्पर्यं न तु कविपुत्र इत्यादिषु दृष्टानामकारादीनां प्रतिपादन इति

कारप्रत्ययाभाव इति । यद्वा 'कृदिकारात्' इति वार्तिकात् 'एऐऐ' इति सूत्राच्च वा कारप्रत्ययः । कथं तर्हि एवकारोऽहंकारो वषट्कार इति । उच्यते । नायं कारप्रत्ययः । एवशब्दस्यकरणम् उच्चारणार्थात्करोतेर्भावे घञ् । एवं चकारककारादिप्रयोगसिद्धेः 'वर्णात्कार' इति वार्तिकं व्यर्थम् । ननु कार्यार्थो वर्णानामुपदेशो न तु स्वरूपज्ञापनमात्रफलकः । अकाराद्युपदेशे दंडाग्रं दध्यत्रेत्यादौ स्थानित्वनिमित्तत्वादिकं कार्यमस्ति । ऌकारोपदेशस्य तु न किंचित्पश्यामः । स हि कल्पनायामेव प्रयुज्यते । तत्र च स्वरादिसंज्ञाकार्यं न दृश्यते ऌादेशस्तु स्वरूपनिर्देशादेव सिद्ध इति चेत् । न । द्विर्वचनादिकार्यस्य सत्त्वात् । क्लृप्त इत्यत्र 'हसेऽर्हहसः' इति स्वरात्परत्वात्पकास्य द्वित्वं सिद्ध्यति । यदृच्छाशब्देऽनुकरणशब्दे च प्रयोजनसंभवात् । कस्यचिद्यदृच्छातः ऌतक इति नाम दध्य्ऌतकाय देहि कुमार्य्य्ऌकार इत्याहेत्यादौ ऌकारे यकारादि सिध्यति । नच विधिवाक्येषु ऋकारो दीर्घादिकं यथा गृह्णाति तथा ऌवर्णमपि ग्रहीष्यति ऋकारऌकारयोः सावर्ण्यस्य वक्ष्यमाणत्वात्तत्किं पृथग्ऌकारोपदेशेनेति चेत्सत्यम् । ऋकारऌकारयोः सावर्ण्यविधानं होतृऌकारइत्यादौ दीर्घप्रवर्तनेन चरितार्थं सवर्णग्राहकवचनं विना ऌवर्णं ग्राहयितुं न शक्नोति । सवर्णग्राहकं तु सूत्रं नास्ति । तर्हि दीर्घप्लुतानामपि पृथगुपदेशः क्रियतामित्यवशिष्यते । तत्रोत्तरं सामान्यनिर्देशोऽत्र विवक्षितः । व्यक्तिनिर्देशस्तु नांतरीयको[1]ऽविवक्षितः । अष्टादशाकारादिवर्णव्यक्तय इति पक्षे अनंतास्ता इति पक्षे नास्ति ह्रस्वदीर्घप्लुतसाधारणम् । एकं सामान्यं कंठादिजन्यतावच्छेदकं तज्जन्यध्वनिव्यंग्यतावच्छेदकं वा । तद्व्याप्यमेकमात्रद्विमात्रत्रिमात्रेषु तत्तन्मात्रवृत्त्यपि सामान्यमस्ति । हकारादिष्वप्येषैव गतिः । ननु ऌवर्णो न दीर्घोऽस्तीति परे आहुस्तत्कथम्ऌवर्णस्याष्टादश व्यक्तयः । उच्यते । ऋकारस्याशक्त्यादिना ऌकार इत्युक्ते संभवति । किंच 'ऋति ऋ वा ऌति ऌवेत्यस्य प्रत्याख्याने तयोरच्त्वं वक्ष्यामीति फणिनोक्तम् । सति चाच्त्वे दीर्घप्लुतसंज्ञे स्तः । विवृतो दीर्घो नास्तीति तेषामाशयः । ईषत्स्पृष्टस्तु दीर्घोऽस्त्येव । तथा च 'अइउऋऌ इत्यादौ

---

१ यं विना यो न सिध्यति स नांतरीयकः ।

व्यापकसामान्यपरो निर्देशः स्वरादिसंज्ञा अपि तस्यैव। एवं हसादिसंज्ञा अपि हत्वादिसामान्यस्यैव। 'इ यम् उ वम् ऋ रम्'इत्यादावपि इत्वादिरूपव्यापक-सामान्यपरो निर्देशः । 'त्यदादेष्टेरः' इत्यादौ तु व्याप्यह्रस्वावर्णमात्रवृत्ति-सामान्यपरः । 'सेरौ, आसौ' इत्यादौ तु दीर्घावर्णमात्रवृत्तिसामान्यपरः । 'अतोऽम्, अतोत्' इत्यादावप्येवम्। तकारस्तूच्चारणार्थ इति व्याख्यानमेव शरणम्। यदि तु लाघवादेकैव तत्तद्वर्णव्यक्तिः। अनुबंधव्यवस्था तु लोकव-द्भविष्यति। लोके हि इह मुंडो भव इह जटिलो भव इह शिखी भवेत्यादि-क्रमेण एकस्यानेकधर्मोपदेशेपि तत्तद्देशभेदेन धर्मे व्यवतिष्ठन्ते तथेहापि'अ-पत्येऽणू' इत्यत्रैव णित्वम्। आतो ड इत्यत्र डित्त्वं 'घञि'त्यत्र घित्त्वञित्वे 'स्वराद' इत्यादौ तु नैकमप्यनुबंधकार्यमिति व्यवस्था, कथं तर्हि सुन्वंती-त्यादावनेकस्वरत्वप्रयुक्तो वकारइति चेन्न । आवृत्याऽनेकस्वरत्वस्य संभ-वात्। यथा सप्तसामिधेन्यो भवंतीति वाक्ये प्रथमांत्ययोस्त्रिरावृत्त्या सप्त-दशत्वं सामिधेनीनाम् । नचैवं ह्रस्वदीर्घत्वादिविरुद्धधर्म्मानुपपत्तिः । तेषां व्यंजकध्वनिधर्मत्वादिति मतन्तदा नचाशंका नचोत्तरम्। किं त्विदं मतमेव न सम्यक्। ह्रस्वादिवदत्वेत्वादीनामपि ध्वनिधर्मत्वप्रसंगात् । अत्वैत्वादीनां विरुद्धत्वेन नानावर्णाः स्वीक्रियंते तेषां ह्रस्वत्वादिवद्ध्वनिधर्मत्वसंभवेऽनेक-वर्णस्वीकारो व्यर्थः । एकेनैव निर्वाहात् । यदि व्यक्तिनिर्देशपक्षोऽत्राभि-प्रेतोऽनंता अष्टादश वा व्यक्तय इति पक्षः तस्मिन्नपि पक्षे इहोच्चारितोऽका-रादिः सर्वा व्यक्तीः तुल्यस्थानप्रयत्नत्वरूपसादृश्याख्यसंबंधेन व्यापकसा-मान्याश्रयत्वरूपसंबंधेन चोपस्थापयति तासां च स्वरादिकाः संज्ञाः । तपराणां तु तपरत्वसामर्थ्यादेकव्याप्यसामान्याश्रयत्वरूपसंबंधाद्वा न सर्वसवर्णव्यक्तिप्रत्यायकत्वम् । दीर्घाणामपि स्वग्रहणे तदुच्चारणात् । प्रय-त्नाधिक्यात्, एकव्याप्यसामान्याश्रयत्वरूपसंबंधाद्वा । संध्यक्षराणामपि एऐओऔ इत्यत्र भेदेनोपादानात् एत्वादिसामान्याश्रयत्वरूपसंबंधाद्वा इति सर्वमनवद्यम् ।

## समानाः ॥ २ ॥

पूर्वसूत्रमनुवर्तते । अकारादयः समानसंज्ञाः स्युः । अत्राष्टौ विकल्पाः संभवंति । अनर्थकम् १ साध्वनुशासनम् २ प्रयोगनियमार्थम् ३ आदेशा-

र्थम् ४ आगमार्थम् ५ विशेषणार्थम् ६ तद्गुणाऽध्यारोपार्थम् ७ संज्ञार्थमिति ८ । तत्रानर्थकाभिधानं प्रमादाशयदोषानवधानादशक्तेर्वा भवति । नचैतच्चतुष्टयं भगवत्याः सरस्वत्याः संभवति । सरस्वती हि मंगलपूर्वकं महता प्रणिधानेन सूत्राणि प्रणीतवती । तत्राशक्यं वर्णनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण । साऽप्यनुशासनमपि न भवति सिद्धत्वात्तस्य । समानं मानं येषामिति समासरूपत्वात्समानशब्दस्य पूर्वसूत्रेणाकारादीनाम् । नापि प्रयोगनियमार्थम् । यत्र हि सहप्रयोगप्रसंगस्तत्र नियमः कार्यः । नचाकारादीनां समानशब्दस्य च सहप्रयोगप्रसंगः संज्ञाप्रणयनात्प्रागसंभवात्। उत्तरकाले तु समानशब्देनैव गतार्थत्वात् । किंच नेह प्रयोगनियमार्थमारभ्यते प्राग्धातोरिति संज्ञानियमोऽयं न प्रयोगनियमः । प्रादयो धातोःप्राक् प्रयुज्यमाना एव उपसर्गसंज्ञाः स्युरिति कासादिप्रत्ययादाम् कृभ्वस्तिपरइत्ययमपि न केवलः प्रयोगनियमः। इन्द्राश्चकारेत्याद्येकपदं वा तस्मात्केवलस्य प्रयोगनियमस्य साक्षादुच्चारणेन क्वचिदप्यविधानान्नायं प्रयोगनियमः । आदेशार्थमपि न भवति स्थान्यर्थाभिधानसमर्थस्यैव ह्यादेशत्वं न च समानशब्दोऽकारादीनां ते वा तस्यार्थमभिधातुं समर्थाः । निर्देशाच्च 'इ यम् उ वम् ऋ रम्, इत्यादिप्रयोगात्। समानाद्धेरित्यादिप्रयोगाच्च । नाप्यागमार्थं षष्ठ्यभावात् । षष्ठीनिर्दिष्टस्यागमा विधीयंते टित्त्वकित्त्वमित्त्वेन लिंगेन च। नचात्रागमलिंगमस्ति । नापि विशेषणार्थम्। असंभवात् । नहि संभवति समानशब्दोऽकारादिशब्दः । नाप्यकारादिः समानशब्दः. । नाप्येव विशेषणे प्रयोजनं किमप्यस्ति । एतेन तद्गुणाध्यारोपोपि निरस्तः । यथाहि सिंहो माणवक इति सिंहो माणवक इति सिंहो माणवके आरोप्यते । नैवमत्रसंभवति प्रयोजनाभावात् । अतः पारिशेष्यात्संज्ञासंज्ञिसंबंध एव प्रागुक्तः । संज्ञासंज्ञिभावेऽपि । का संज्ञा कः संज्ञीत्यत्र जातिग्राहकास्तु बहवो न्यायाः । तथाहि यच्छब्दप्रयोगः प्राथम्यमित्याद्युद्देशलक्षणं तच्छब्द एवकारश्च स्यादुपादेयलक्षणमित्यभियुक्तोक्तेस्तथैवानुभवाच्च । प्राथम्यं तावत्संज्ञित्वे लिंगम् । आवृत्तिश्च संज्ञात्वे लिंगम् । व्यवहारार्थमेव संज्ञाकरणात् । समानशब्दश्चावर्त्तते नाकारादिः शब्दः। 'अभ्दि, इदुद्भ्याम्,' इत्यादावावृत्तावपि सादृश्येनैव सवर्णव्यक्तिग्रहणे सिद्धेः संज्ञाया

वैयर्थ्यापातात् । भेदाभेदाभ्यामपि संज्ञित्वसंज्ञात्वे निर्णीयेते बहूनां ह्येका संज्ञोचिता लाघवात् । न त्वेकस्य बह्वयः संज्ञा गौरवात् । लघ्वक्षरत्वमपि क्वचित्संज्ञात्वे लिंगम् । एतैर्हेतुभिः समानशब्दः संज्ञा अकारादयः संज्ञिन इति स्थितम् । इह प्रत्येकमकारादीनां संज्ञा न समुदायस्य तस्य युगपल्लक्ष्ये प्रयोगाभावात्, समानाद्धेरिति ज्ञापकाच्च । अन्यथा समुदायस्य धातोरभावादधातोरभावादधातोरिति व्यर्थं स्यात् । ब्राह्मणा भोज्यंतामित्यादौ प्रत्येकं वाक्यपरिसमाप्तिदर्शनात् । यद्यपि गर्गाः शतं दंड्यंतामित्यादौ समुदायेपि वाक्यपरिसमाप्तिर्दृश्यते । गुणकर्मभूतानामपादानस्थानापन्नानां गर्गाणामनुरोधेन ईप्सितकर्मतया प्रधानभूतस्य शतस्यावृत्त्ययोगात् । तथापीह शास्त्रे यत्नं विना समुदाये शास्त्रं न समाप्यते । समाससंज्ञायां संयोगसंज्ञायां च महासंज्ञाकरणमेवान्वर्थताविज्ञानार्थमित्ययमेव यत्नः । इह प्रत्येकं वाक्यपरिसमाप्तौ बहुवचननिर्देशोपि लिंगम् । अन्यथा समासः संयोग इत्यादिवत्समान इत्यादिसिद्धौ किं तेन । महासंज्ञाकरणं तु प्राचामनुरोधात् । स्यादेतत् । मा भूदकारादीनां समानसंज्ञा 'समानाद्धेरि' त्यादौ स्वरूपेणैवाकारादयो निर्देश्या लाघवात् । ननु समानशब्देन गौरवादकारादीनां निर्विभक्तीनां पंचमात्रा भवंति समानशब्दस्य तु सार्द्धपंच । किं च ऌकारस्यात्र संग्रहे फलं न ऌकारान्तस्य नाम्नो लोकेऽदर्शनात् । अत एव 'ऋतो ङ उः' इत्यादौ ऌकारस्यासंग्रहेपि न क्षतिः । अकारादीनां समाहारद्वंद्वेन अय्वुर्द्धेरिति सूत्रमस्तु । किंच आद्यंताभ्यामित्यनेनाकारमारभ्य ऌकारान्तः प्रत्याहारः ततो विभक्तौ 'ऌअऌ' इत्यलादेशे च कृते 'अलो धेः' इत्येवं निर्देशेनैवेष्टसिद्धौ किं संज्ञाप्रणयनेन । अत्रोच्यते । 'संज्ञापूर्वको विधिरनित्य इति ज्ञापनार्थं समानसंज्ञाप्रणयनम् । तेन हाहां वातप्रम्यामित्यादौ समानसंज्ञाप्रयुक्तो नुड् न भवति । यत्तु विधेयस्यैव संज्ञानिर्देशेन संज्ञापूर्वकत्वं न गुणवृद्ध्योरेवेति मतं तत्त्विह नाश्रितं गौरवात् । संज्ञापूर्वकत्वेनानित्यत्वज्ञापने लाघवाच्च । यदि तु तदाश्रीयते तदा समानसंज्ञाविधानं न कर्तव्यम् । हाहामित्यादौ नुडभावस्तु प्रकारांतरेणैव समाधेयः । अन्ये तु नैकं प्रयोजनं संज्ञारंभं प्रयोजयति, इत्यतः संज्ञाप्रयोजनमन्यदप्यस्तीति ज्ञायते । तच्च समानस्य ऋदॄऌतोर्वा ह्रस्वः समानस्यानवर्णस्यासमासेऽसवर्णे

स्वरे पदांते वा ह्रस्व इति ज्ञेयम् । ह्रस्वविधिसामर्थ्याच्च न संधिरित्याहुः । यत्तु त्रिलोचनदासेनोक्तम् 'ननु परस्परं विलक्षणमाकारं बिभ्राणाः कथमकारादयः समानपरिमाणाः।येन च समानं मानं परिमाणं तुल्यं येषामित्यन्वर्थः कथ्यते । सत्यम् । उदात्तानुदात्ता समाहारभेदात्त्रयस्तावदकाराः पुनश्च सानुनासिकनिरनुनासिकभेदात्त एव द्विःमकारा भवंति इत्यकारः षोढा भिद्यते । एवं दीर्घप्लुतावपि । ततश्चाष्टादशधा भिद्यतेऽवर्णः तथेवर्णाद्योपीति सिद्धोऽन्वर्थः' इति । अत्रोच्यते । व्यर्थमित्थं क्लेशेनान्वर्थसाधनम् । अव्याप्त्यतिव्याप्तिवारकत्वेन फलाभावात् । किंच 'दश समानाः' इत्यनेनाकारस्य व्यक्तय एव समानसंज्ञाः स्युर्नाधिकाः । इकारादीनां च समानसंज्ञा दूरापास्ता स्यात् । किंच प्लुतस्य षड्भेदकथनं प्रकृतानुपयुक्तम् । समानसंज्ञायां तस्यानुपादानात् । ह्रस्वदीर्घयोर्हि तद्विधानात् । किंच अकारस्य इकारेण उकारेण च आकारस्य ईकारेण ऊकारेण च तुल्यमानत्वमस्त्येवेति किं व्यक्त्यंतरसादृश्यकल्पनया।अन्यच्च ह्रस्वदीर्घयोः षट्षड् व्यक्तयः संति तासु एकैका वर्णसमाम्नायेऽस्ति इतरासां समानसंज्ञा न स्यात्, तत्र पाठाभावात् । अथ परोक्तरीत्या सामान्येन सादृश्येन वा तासामपि ग्रहणं ब्रवीषि तर्हि तद्वद्वर्णसमाम्नायमपि स्वीकुरु लाघवानुरोधात् ।'ननु यथा न्यासे सर्वैरेकवाक्यतया सूत्रद्वयं व्याख्यातमत्र योगविभागः किमिति कृत' इति चेच्छृणु । एकवाक्यतायामकाराद्यनुवादेनसंज्ञाविधानं नोपलभ्यते अनुपूर्वीविशेषविशिष्टानामकारादीनामुपलब्धिर्न स्यात् । अनेनैवोभयविधाने वाक्यभेदस्यापरिहरणीयत्वात् । वाक्यभेदस्यैव योगविभागशब्दाभिधेयत्वात्। तथाच पार्दाकर्व वचः "एको योगः करिष्यते" इति । व्याख्यातं च प्रदीपे एको भवति ह्यध्याह्रियते इत्यैकवाक्यं संपद्यते इत्यादि । यदि तु 'एङि पररूपम्, अमि पूर्वः' इत्यादौ वाक्यभेदेपि योगविभागव्यपदेशो नास्तीत्युच्यते । तदैकयोगत्वेपि न दोषः ।

## ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥ २ ॥

अइउऋऌ इत्यनुवर्तते ।तच्च षष्ठ्या विपरिणम्यते ह्रस्वदीर्घप्लुतत्यविभक्तिको

---

१ पृदाकोः शेषावतारस्य भाष्यकारस्येदं पार्दाकवम् ।

निर्देशः । अइउऋऌ इत्येषां ये भेदा एकमात्रद्विमात्रत्रिमात्रास्ते ह्रस्वदीर्घप्लुतसंज्ञाः स्युः । महासंज्ञाकरणं त्वन्वर्थताविज्ञानार्थं तेनैकमात्रो ह्रस्वः द्विमात्रो दीर्घः त्रिमात्रः प्लुत इत्येषा व्यवस्था लभ्यते।ते च सवर्णसंज्ञाः स्युरिति वाक्यभेदेन व्याख्येयम् । एकवाक्यतायां तु संज्ञिनोऽप्रसिद्धिः स्यादत्र ह्रस्वादिसंज्ञाया अप्रणयनात् । यद्वा अइउऋऌइति नानुवर्तते ह्रस्वदीर्घप्लुतरूपा ये भेदा विशेषा व्यक्तय इति यावत्। अर्थादकारादीनामेव ते सवर्णसंज्ञाः स्युरित्येकवाक्यतैवास्तु।यद्वा ह्रस्वदीर्घप्लुतानां ये भेदा उदात्तानुदात्तस्वरितास्ते सवर्णसंज्ञाः स्युरिति व्याख्येयम् । अस्मिन् पक्षद्वयेप्यनुवादसामर्थ्यात् वृद्धकुमारीवरन्यायात् ह्रस्वादिसंज्ञालाभः। अथवा लोकप्रसिद्धानामनुवादेन सवर्णसंज्ञा विधीयते संज्ञाप्रयोजनं तु सवर्णे दीर्घ इत्यादौ। माधवस्तु ह्रस्वादीनां भेदांतानां द्वंद्वः भेदाः पुनरुदात्तानुदात्तस्वरिताऽनुनासिकनिरनुनासिका वर्णा इत्याह । तच्चिंत्यम् ।अन्यतरग्रहणस्य वैयर्थ्यप्रसंगात्। तर्हि ह्रस्वादयोऽनुदात्तादयश्च परस्परपरिहारेण संति यदर्थं ह्रस्वादिग्रहणं भेदग्रहणं च सार्थकं भवेत्। यदपि माधवेनोक्तमेकारादीनामप्यनेन सवर्णसंज्ञा विधीयते अन्यथा हे गौरेहीति ' नामिनो रः' इति रेफो न स्यादिति । तदप्यापाततो जातिनिर्देशेन प्लुतस्यापि संगृहीतत्वात्। व्यक्तिपक्षेपि निर्देशस्य सादृश्यपरत्वात् । सादृश्यप्रधाननिर्देशाच्च सर्वासामप्यवर्णादिव्यक्तीनां समानादीनां संज्ञासिद्धिरिति स्वोक्तेश्च। किंच सत्यामपि सवर्णसंज्ञायां सवर्णग्रहणं केन तद्ग्राहकवचनाभावात् । नचैषां सवर्णग्राहकत्वं सवर्णसंज्ञाया ग्रहणफलत्वाद्भवतीति वाच्यम् । उक्तरीत्या निर्वाहात्सामर्थ्यकल्पनस्य वैयर्थ्यात्। " सवर्णे दीर्घः सहे " ति प्रवर्तनेन सामर्थ्यस्योपक्षीणत्वाच्च । हेहरे एहि विष्णो ओषति तस्मै ऐतिकायनः तौ औपगवावित्यादौ सवर्णदीर्घापत्तेश्च । स्वराणां हसैरन्योन्यं जातिभेदादसावर्ण्यादिश्यमिति न यस्यलोप इति वदता त्वया पि जातिग्रहणस्यात्रोपजीव्यत्वोक्तेश्च । यदपि हकारादीनां सकारांतानां वर्णानामनेन सावर्ण्यमिति स्वीकृतं माधवेन सँय्यन्तेत्यादौ कृतस्य परसवर्णस्य द्वित्वार्थं तदपि निर्देशस्य जातिपरत्वस्य सादृश्यपरत्वस्य च स्वीकारेणैव प्रत्युक्तम् । स्यादेतत् । अंत्ये पक्षद्वये भेदग्रहणं ना-

वश्यकं ह्रस्वदीर्घप्लुता इत्येतावतैवेष्टसिद्धेः । आद्यपक्षेऽप्यनावश्यकमेव न चाकारादिव्यक्तीनामविवक्षितत्वादत्वादीनामेव संज्ञात्रयं स्यादिति वाच्यम्। अनेकसंज्ञाविधानस्यैवैयर्थ्यप्रसंगात् । अतोऽनेकसंज्ञाविधानबलादत्वाक्षिप्तानां तद्व्यक्तीनामन्वर्थत्वेन व्यवस्थितं संज्ञात्रयं भवति । किंच सवर्णसंज्ञाऽपि न विधेया । अकारऌकाराभ्यां प्रत्याहारो ग्राह्यः । ततश्च "सवर्णे दीर्घः सहे" त्यस्यस्थानेऽलोलिदीर्घ इति सूत्रणीयम् । किंच ह्रस्वदीर्घप्लुतसंज्ञा अपि न विधेयाः । तासां लोके तंत्रांतरे च प्रसिद्धत्वात् । ताभिरेव"नपुंसकस्य ह्रस्वः, न्सम्महतो धौ दीर्घः, शौ च दूराद्वाह्वाने टेः प्लुतः" इत्यादौ कार्यनिर्वाहात् । अस्ति च प्राचां संज्ञाभिः प्रथमाद्वितीयेत्यादिभिः कर्त्ताकर्मेत्यादिभिश्चेहापि व्यवहारः।एवं च सूत्रमेव मास्त्विवति पूर्वः पक्षः। अत्रोच्यते । ह्रस्वदीर्घप्लुता इत्येतावत्तु सूत्रं कर्तव्यम् ।नच तासामन्यतः सिद्धिरुक्तेति वाच्यम् । सर्वसंज्ञासु तथात्वापातात्। अत्राप्रणीतानामेवान्यत उपादानस्यौचित्यात् । अन्यतः सिद्धिमाश्रित्य प्रत्याख्यानस्य चमत्कारावहत्वाभावाच्च । सवर्णसंज्ञापि विधेया तां विना असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवावित्यत्रानिर्वाहात् । सवर्णदीर्घस्य संज्ञापूर्वकत्वेनानित्यत्वात् । होतृऋकारः होतृऌकार इत्यादिसिद्धिरपि फलं संज्ञाविधानस्य । किंच'हसाज्झसस्य लोपो वा सवर्णेझसे' इत्यादिवचनस्य सद्भावः सवर्णसंज्ञाविधानबलादनुमीयते । एकप्रयोजनोद्देशेन संज्ञाया अविधानात्। इयं च ह्रस्वदीर्घप्लुतानां जायमाना सवर्णसंज्ञा समानजातीयानामेव भवति न भिन्नजातीयानाम्" ईस्थानी, माद् ,य्वादेः, य्वे द्वित्वे" इत्यादिनिर्देशात् ' इ यम् उ वम्, इत्यादिसूत्रवैयर्थ्यापत्तेश्च । तथाचैवमृकारऌकारयोरपि न स्यात् । भिन्नजातीयत्वात् । अतस्तत्र विध्यर्थं भेदग्रहणं कृतं तेन होतॄकार इत्यत्र सवर्णदीर्घोपि सिद्धः । एवं च सूत्रे ह्रस्वश्च दीर्घश्च प्लुतश्च भेदश्चेति द्वंदः भेदस्तु ऋऌवर्णयोरेव मिथो ग्राह्यो नान्येषां, लक्ष्यानुरोधात, । य्वादेरि' ति लिंगाच्च । यत्तु त्रिलोचनदासेनोक्तम् ' ऋकारऌकारयोः संज्ञा लोकोपचारतः सिद्धेति तन्न । लोके ऌकारे ऋकारव्यवहारस्यादर्शनात् । नहि लौकिका ऌकारमृकारत्वेन ऋकारं वा ऌकारत्वेन च व्यवहरंतः कचिद्दृष्टाः । अदृष्टस्याप्यभ्युपगमे अकाराकारयोरपि लोकत एव तदाभ्युपगम्यतां किं सूत्रेण'।

माधवस्तु ननु चैवं सावर्ण्ये अइउऋऌ एषां मिथः सावर्ण्यात् देव इहेत्यादौ दीर्घत्वादिकार्यप्रसंग इति चेत् । उच्यते । इह लघ्वर्थमेकाक्षरायां संज्ञायां कार्यायां महासंज्ञाकरणमन्वर्थताविज्ञानार्थम् । तेन स्थानप्रयत्नाभ्यां समानो वर्णः सवर्णः । सहादित्वात्समानस्य सादेशः । नन्वेवमपि स एव दोषः । एषां वर्णांतरेणापि समानस्थानप्रयत्नत्वात् । मैवं समानशब्दस्य सापेक्षत्वाद्यो येन स्थानप्रयत्नाभ्यां जात्या च समानः स तेनैव सवर्णो नान्येन इत्यकारादीनां मिथो भिन्नस्थानप्रयत्नान्नोक्तदोषप्रसंगः । स्वराणां हसैरन्योन्यं जातिभेदादसावर्ण्याद्विश्यमिति यस्येति न शलोपः । अथवा सवर्णसंज्ञावचनारंभसामर्थ्यान्न दोषः । यदि ह्येवं सावर्ण्यं स्यात्सवर्णसंज्ञावचनमनर्थकं स्यादित्याह । अत्र वक्तव्यम् । अकारादीनां मिथो भिन्नस्थानप्रयत्नत्वादिति व्यर्थम् । हसैरिव परस्परमपि जातिभेदस्य सत्त्वात् । किं च ह्रस्वादिभेदांतस्य ग्रहणं व्यर्थं सवर्ण इत्येतावतैवेष्टसिद्धेः । तुल्यस्थानप्रयत्नस्य सवर्णस्य संज्ञिनो लाभात् । ह्रस्वादिस्थाने स्पष्टार्थं तुल्यास्यप्रयत्नं सवर्णमित्यस्यैव वक्तुमुचितत्वाच्च । जातिस्थानभेदाद्दलवर्णयोस्सावर्ण्याप्राप्तेश्च । यैदपि माधवेन भेदग्रहादेव वर्ग्याणां सवर्णसंज्ञां स्वीकृत्य एषां सवर्णग्राहकत्वं सवर्णसंज्ञाया ग्रहणफलत्वात् । चोः कुरित्युदित्करणलिंगाद्वर्ग्याणामुदितानामेव सवर्णग्राहकत्वमिति स्कोराद्योरित्यत्र ककारस्य न सवर्णग्राहकत्वमित्युक्तं तन्न । न चोःकुरिति लिंगम् । उदित्त्वस्यैवासिद्धेः । लाघवार्थत्वादुकारोच्चारणस्य उदिदेव सवर्णग्राहको नान्य इति नियामकवचनाभावाच्च । यदपि " चजोः कगावि "ति ज्ञापकमस्ति अन्यथा चः को घितीत्येव ब्रूयात् । तदपि न । एवं सति पुच्छो विच्छइत्यादौ उज्झत्यादौ च छझयोरपि खत्वप्रसंगात् अतश्चजोःकगाविति कृतम् । किं च तन्मते इयं कल्पना कुचुटुतुपुवर्गा इत्यनेन गतार्थत्वाद्व्यर्था । यदपि माधवेनोक्तं सवर्णा इति महत्याः पूर्वाचार्यसंज्ञाया इहाश्रयणं तदीयोपाधिपरिग्रहार्थमिति पूर्वोक्तोर्थस्तत एव सिध्यतीति । तन्न सम्यक् । तथात्वे लाघवात्तुल्यास्यप्रयत्नं सवर्णमित्येवात्र पठेत् किं ह्रस्वादिग्रहणेन गुरुणा क्लिष्टेन भेदग्रहणेन च । यद्वा प्रथमाद्वितीयाविभक्तीत्यादिसंज्ञावत्तदीयसंज्ञयैव व्यवहरेत् । कृतेपि सूत्रे तन्मुखनिरीक्षकत्वानपायात् । तुल्यास्यप्रयत्नं सवर्णमिति

सूत्रं व्यर्थं योगार्थेनैव गतार्थत्वात् । तथाहि । अकः सवर्णे इत्यत्र समानः सदृशो वर्ण इत्यर्थो ग्राह्यः । समानता च जात्या ग्राह्या न च ऋलृवर्णयोरव्याप्तिः लृऋवदित्यतिदेशेन निर्वाहात् 'झरो झरि सवर्णे'इत्यादौ तुल्यस्थानप्रयत्नत्वेन समानत्वं ग्राह्यम् । एवं सर्वत्रोन्नेयम् । 'पूर्वो ह्रस्वः'परो दीर्घः, इति द्वे कातंत्रसूत्रे व्यर्थे । लोकतः सिद्धेः । लोके हि ह्रस्वः पुरुषो दीर्घः पट इत्यादिव्यवहारो यथा जायते तथात्रापि भविष्यति ।अल्पोच्चारणो ह्रस्वः अधिकोच्चारणो दीर्घ इति व्यंजनेष्वतिप्रसंगस्तु विभक्तिशब्दस्य कृत्तद्धितेष्विव परिहर्तव्यः अन्वर्थत्वात् । यत्तु त्रिलोचनदासेन निरन्वया ह्रस्वसंज्ञा दीर्घसंज्ञापीत्युक्तम् । तन्न । नामिव्यंजनस्वरादिष्विव तत्राप्यवयवार्थकल्पनसंभवात् । ह्रसति ह्रस्यते वा ह्रस्वः दृणाति दीर्यते वा दरयाति दर्यतेऽनेन वा दीर्घ इति तेषां द्वौद्वावन्योन्यस्य सवर्णाविति । कातंत्रसूत्रे त्वेषामन्योन्यस्येति च व्यर्थम् । द्वौद्वौ सवर्णावित्येतावतैवेष्टसिद्धेः । नच भिन्नजातीयेष्वतिप्रसंगः । द्वौद्वावित्यस्य ग्रहणसामर्थ्यात् । अन्यथान्योन्यस्येत्युक्तेपि दोषतादवस्थ्यात् । सर्वथाप्यृलृवर्णयोरव्याप्तिरस्त्येव । वस्तुतस्तु द्वौद्वावित्यपि नोचितम् । सवर्णा इत्येव सूत्रमुचितम् । दश समानाइत्यनुवर्त्तनीयं समानशब्दस्तुल्यार्थोऽनुवृत्तिसामर्थ्यान्न संज्ञिपरो दशशब्देनैव तेषां लाभात् । तुल्यत्वं च जात्या ग्राह्यम् । विभक्तिव्यत्ययश्च ' दश समानाः ' इत्यस्य पूर्वो ह्रस्व इत्यादौ यथा । अन्यथा ' एऐ ' इत्यादावप्रसंगात् । एवं हि दश जात्या समानैः सह सवर्णाः स्युरित्यर्थे सर्वं सुस्थम् । एतेन वर्ण समाम्नायस्य क्रमसिद्धत्वाद्ध्रस्वदीर्घयोरेव सवर्णसंज्ञा स्यान्न तु ह्रस्वयोर्द्वयोर्दीर्घयोश्च द्वयोरिति । ततश्च दंडाग्रमित्यादौ दीर्घो न स्यात् । ननु समानो वर्णः सवर्ण इत्यन्वर्थे सवर्णशब्दे सति कथं ह्रस्वदीर्घयोरेव सवर्णसंज्ञा स्यादसमानत्वादनयोरिति।नैतदस्ति। वर्णसमाम्नायस्य क्रमसिद्धत्वाद्वचनबलादेवासमानयोरपि स्यात्।तेषां ग्रहणेन तु व्यक्तेः प्रतिपादितत्वात्। क्रमाविवक्षाविवक्षायामपि व्यक्तिद्वारेण भिन्नयोर्ह्रस्वयोर्दीर्घयोश्च सवर्णसंज्ञासिद्धेति त्रिलोचनदासोक्तं प्रत्युक्तम् । किंच समानो वर्णः सवर्ण इत्यन्वर्थता त्वयैवाश्रिता । एवं हि प्रदेशेष्वेवावयवार्थः स्वीक्रियतां मास्तु सवर्णसंज्ञेति दिक् ।

---

## एऐओऔ ॥ ४ ॥

अनेन क्रमेणैते वर्णा बोध्याः । पूर्ववत्सर्वम् । यद्यपि छंदोगविशेषा अर्द्धमेकारमोकारं च स्वीकुर्वंति तथापि लोके तयोरदर्शनादत्राग्रहः । यदि त्वकारादीनामिव तयोरपि लोके दर्शनं स्यात्तर्हि लाघवात्तावेवोपादिशे-दकारादिवत् । नन्वेवं "ह्रस्वादेशे संध्यक्षराणामिकारोकाराविे" ति वार्त्ति-कं व्यर्थं स्यात्तद्धि ह्रस्वादेशे प्राप्तवतोरर्द्धैकारार्द्धौकारयोर्निवृत्त्यर्थं क्रियत इति चेन्न । वैकल्पिकप्राप्तिमतोऽकारस्य व्यावृत्तये तदारंभात् । एकारादीनां हि पूर्वो भागोऽकारसदृशः उत्तरस्तु इवर्णोवर्णसदृशः तत्रोभयसदृशस्य ह्रस्व-स्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्यातां तस्मान्मा कदाप्य-वर्णो भूदिति तदारंभः । वस्तुतस्तु नारंभणीयं तद्वचनं संध्यक्षराणामुभय-भागसदृशस्य ह्रस्वस्याभावेनोत्तरभागस्य सदृशाविवर्णोवर्णावेव विधास्येते । उत्तरभागस्याधिकत्वात्, शब्दपरपरत्वस्याश्रयणात्, श्लिष्यमाणवर्णद्वय-सदृशावयवत्वात्संधीयमानमक्षरमित्यन्वर्थसंज्ञाविधानाच्च । एतदर्थं महासं-ज्ञाकरणम् । इहाकारादयो वर्णाः सांशाः प्रतीयंते तत्र संति केचिदंशाः स्व-तंत्रवर्णांतरस्य सदृशाः । यथा आकारादिष्वकारस्य सदृशौ भागौ एका-रादिषु पूर्वभागोऽकारस्य सदृशः उत्तर इवर्णोवर्णयोः । ऋकारे रेफस्य स-दृशोऽर्द्धमात्राभागः ऌकारे लकारसदृशः । तत्र स्वतंत्रतत्तद्वर्णग्रहणेन विधीय-मानं कार्यं तत्तत्सदृशेष्वंशेषु न प्रवर्त्तते तत्सदृशा हीमे न तु त एव । नर-सिंहवज्जात्यंतराक्रांतत्वात् । तेनाग्ने इंद्रं वायो उदकमित्यत्र सवर्णदीर्घो न । न च ए अयित्यादिना तस्य बाधोऽस्त्विति वाच्यम् । अयादयो हि येन नाप्रा-प्तिन्यायेन मध्येपवादन्यायेन वा यत्वादीनामेव बाधकतया अग्न आयाहीत्या-दौ चरितार्थाः । अग्न इंद्रमित्यादौ परेण दीर्घेण बाध्येरन् । अंतरंगश्च दी-र्घोऽवयवमात्रापेक्षत्वात् । तथा अग्ने एतीत्येदोतोत इत्येतन्न आलूय प्रमाये-त्यत्र तुङ्गमालाभिरित्यत्र क्य इत्यकारो न यातेत्यादौ यत इत्यातो लोपो न । नचैवं चलीक्लृप्यत इत्यत्र ' कृपो रो ल ' इत्यनेन ऋवर्णैकदेशस्य रस्य ल-वर्णैकदेशो लकारो न स्यादिति वाच्यम् । रो ल इत्यत्र स्वतंत्रास्वतंत्रसा-धारणजातेरनुवादे विधेये च विवक्षितत्वात् । एकदेशस्य च पृथङ्निष्कर्षा-योगात्तद्द्वारा ऋकारस्यैव ऌकारादेशः फलति । यद्वा कृप उः रः ल इति

छेदः,कृप इत्यविभक्तिकं तच्च तंत्रेणावृत्त्या वा योज्यम्। कृपेर्यो रेफस्तस्य लः कृपेर्ऋकारस्यावयवो रेफः रेफसदृश इति यावत्। तस्य च लकार इति। इदं च शिष्टसमाचारात्प्रक्रियादशायामवश्यं स्वीकार्यम् । परमार्थस्तु " पदे वर्णा न विद्यंते वर्णेष्ववयवा न च ॥ वाक्यात्पदानामत्यंतं प्रविवेको न कश्चन ॥ " इति ।

## संध्यक्षराणि ॥ ५ ॥

पूर्वसूत्रमनुवर्त्तते । एकारादीनि वर्णानि संध्यक्षरसंज्ञानि स्युः। संज्ञाप्रयोजनं तु संध्यक्षराणामित्यादि । ननु योगविभागः किमर्थमिति चेत् शृणु। पूर्वेण सहैकवाक्यतायामेकारादीनां संज्ञाविधावुपक्षयात् । प्राधान्येन वर्णोपदेशो न स्यात् । ततश्च इलनाम्यादिसंज्ञा तेषां न लभ्येत । यदि तु वृद्धकुमारीवरन्यायेन ज्ञापकेन वा सा लभ्यते इत्युच्यते तर्ह्येकवाक्यत्वेऽपि न क्षतिः। पूर्वसूत्रेप्येवं बोध्यम् स्यादेतत्। नेयं संज्ञा प्रणेया गौरवात्। स्वरूपेण प्रत्याहारेण वा प्रदेशेष्वेकारायो निर्देश्या मात्रालाघवात्। एऐओआवामेति वा अयावामेति वा सूत्र्यताम् । अत्रोच्यते । आत्वविधेः संज्ञापूर्वकत्वेनानित्यत्वं यथा स्यादिति संज्ञाप्रणयनं ततश्च संविव्यायेत्यादि सिध्यति । संज्ञापूर्वकत्वं चात्र यथाकथंचित्संज्ञाश्रयणेन स्वीकार्यं न तु विधेयत्वेनैवेत्याग्रहः। अन्यथा संज्ञाविधानं व्यर्थं स्यात् । उक्तलक्षणनिर्वाहाय च वचनांतरमारंभणीयं स्यात् । एकारादीनि संध्यक्षराणीत्यत्र कारग्रहणं व्यर्थम् ॥ एआदीनीत्युक्तावपि कादीनीत्यादाविव क्षत्यदर्शनात् ॥

## उभये स्वराः ॥ ६ ॥

अकारादय एकारादयश्च स्वरसंज्ञाः स्युः। संज्ञाप्रदेशा 'इयं स्वरे' 'नामिनः स्वर' इत्यादयः। अथ उभयेग्रहणं किमर्थम् । अकारादीनामेकारादीनां चानुवृत्त्यैव लब्धत्वात् । उच्यते । अनंतरस्य विधिर्वा प्रतिषेधो वेत्येतदनेन ज्ञाप्यते । अनंतरत्वादेकारादीनामेवानुवृत्तिः स्यान्नत्वकारादीनां व्यवहितत्वात् । अथ यद्युत्तरसूत्रे अवर्णपर्युदासाल्लिंगादकारादीनामप्यनुवृत्तिर्लभ्यत इत्युच्यते तर्हि व्यर्थं तत्रोभयेग्रहणम् । सर्वादिषु त्वस्य सार्थक्यं वक्ष्यते । नचोक्तन्यायज्ञापनासिद्धिः न्यायसिद्धत्वेन तस्याज्ञाप्यत्वात्। अंव्यवधानेनोपस्थितत्वादेवानंतरग्रहः । बहुवचनं तु प्रत्येकं

संज्ञाविधानमिति तात्पर्यग्राहकम् । यदि तु समुदायस्य लक्ष्ये युगपददर्शनात्सख्युः य्वे द्वित्वे इत्यादिलिंगाच्च प्रत्येकं संज्ञा लभ्यत इत्युच्यते तदा मास्तु बहुवचनम्। पूर्वोत्तरसूत्रयोरप्येवमुन्नेयम् । जातिपक्षाश्रयणाद्व्यक्तिपक्षेऽपि सादृश्याश्रयणाद्वा ह्रस्वदीर्घप्लुतानां संज्ञा सिध्यति । ह्रस्वदीर्घप्लुतभेदा इत्यनुवर्तनाद्वा शब्दाधिकारमाश्रित्य ह्रस्वदीर्घप्लुता भेदा येषामित्यत्र व्याख्येयम् । अत एव तत्र भेदग्रहणं सार्थकम् । ऋऌोस्सवर्णार्थत्वे तु तत्रैव ऋऌग्रहणं कुर्यात् । ह्रस्वदीर्घप्लुतऌर इति ह्रस्वदीर्घप्लुतऌे इति वा।एवं च तत्र चतुर्दशादौ स्वरा इति कातंत्रसूत्रेऽपि बहुवचनं व्यर्थम् । तत्रेत्यपि सवर्णसमाम्नाय इत्यनुवर्त्य विभक्तिविपरिणामेन व्याख्यानेऽनिष्टादर्शनात् । चतुर्दशादावित्यऽपि व्यर्थम् । कादीनि व्यंजनानीत्यनेन कादीनां व्यंजनसंज्ञाविधानात्पूर्वेषां स्वरसंज्ञा भविष्यति । यदि तु संज्ञानां सामान्यविशेषभावेपि बाध्यबाधकभावो नास्त्येकारादीनां स्वरसंज्ञाऽप्रसंगाद्वर्गाणां च व्यंजनसंज्ञाऽप्रसंगादित्युच्यते । तर्हि न व्यंजने स्वरा अनुसंधेया इति सूत्रं त्यक्त्वा तत्स्थाने न व्यंजनं स्वर इत्येवं करिष्यते । यद्वाऽव्यंजनं स्वर इति अकादिः स्वर इति वा सूत्रणीयम् । यद्वा कादीनि व्यंजनानीत्यस्य स्थाने न कादीनीति सूत्रं कर्त्तव्यम् । स्वरो वर्णवर्ज इत्यतः स्वर इत्यनुवर्तनीयः कादीनि स्वरसंज्ञानि न भवंतीति व्याख्येयम् । ततो व्यंजनानीति पाठं कादीनीत्यनुवर्तते नेति निवृत्तम्। एतयोः पक्षयोर्न व्यंजने स्वरा इति सूत्रं न कर्तव्यं स्वरे एव संधिर्विधातव्यः । यद्वा स्वर इत्यन्वर्थसंज्ञाविज्ञानान्नानुस्वारविसर्गयोः कादिषु चातिप्रसंगः । स्यादेतत् । अकारौकाराभ्यामौ प्रत्याहारो गृह्यताम् । इयं स्वर इत्यादावियमावि इति सूत्र्यताम् । एवं च सर्वलक्ष्यसिद्धिर्निर्बाधा । स्वीकृतश्चौंप्रत्याहार औ निपात इत्यत्र सर्वैरिति । सत्यम् । संज्ञापूर्वको विधिरनित्य इति ज्ञापनार्थमिदम् । तेन वातप्रमी आहितः विष्णो इति उ इति स्वर इति अमुमुईच इत्यादिप्रयोगाः संगच्छंते । रूढा चेयं संज्ञा टिउपधेतिवत् । केचित्त्वन्वर्था वदंति स्वयं राजत इति स्वर इति । स्वयंराजनं च परानपेक्षोच्चार्य्यमाणत्वं तन्मते संज्ञाविधानं व्यर्थं योगार्थेनैवेष्टसिद्धेः । यत्तु त्रिलोचनदासेनोक्तं स्वर इति संज्ञान्वर्था सुखा-

र्थमन्वाख्यायते । स्वयं राजंत इति स्वराः । एकाकिनोप्यर्थप्रतिपादने समर्थाः । तथाहि लिंगधातुनिपातानामसहायानामर्थप्रतिपादने सामर्थ्यमुपलभ्यते न व्यंजनानामिति । तन्न । अर्थांतरव्यावृत्त्यर्थमवश्यविधेयत्वेन सुखान्वाख्यानासिद्धेः । एकाकिनामर्थप्रतिपादनसामर्थ्यं न स्वरत्वेन किंतु धात्वादिना । अतोऽसहायस्य व्यंजनस्यापि धातुत्वादौ सत्यर्थवत्त्वं भवत्येव।तद्इवाचरति तति ततीति त् स्तः संति । भिदपां घङाः कः रामम् हरिम् नदीरित्यादावकारे गते मकारसकारयोः भ्यांभ्यस्सुप्सु स्वराणामर्थवत्ता न, प्रत्ययत्वाभावात् । रामशब्दस्य स्वरस्य स्वरत्वे सत्यपि नार्थवत्त्वं लिंगत्वाभावात् । स्वरसंज्ञाया अन्वर्थत्वं लिंगादीनां चार्थवत्त्वं किं केन संगतं तर्ह्यन्वर्थता कथम् । स्वेन राजंते राजृ दीप्तौ नाम्नीति डः परानपेक्षोच्चारणत्वं स्वराजनम् । व्यंजनोच्चारणस्य परसापेक्षत्वान्न तत्रातिव्याप्तिः । अवर्जा नामिनः अं वर्जयंतीत्यवर्जाः कार्येण स्वरा नामिसंज्ञाः स्युः । पूर्वत्र संज्ञापरमपि स्वरा इत्यत्रानुवृत्तं सत्संज्ञिपरं भविष्यति । स्वरसंज्ञायाः पूर्वेण सिद्धत्वात् । यद्वा उभये इत्यनुवर्त्य अवर्जा उभये नामिसंज्ञा इति व्याख्येयमिति माधवः । अन्ये तु अवर्जा इति विशेषणस्य विशेष्याकांक्षायां प्रकृतत्वादकारादय एव संबध्यंते नत्वप्रकृता हकारादय इति वदंति । परे तु नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगातिरिति न्यायेनावर्जा इत्यनेनैवावर्णभिन्ना अवर्णसदृशाः स्वरा उपस्थाप्यंते न तु हादय इत्याहुस्तन्न । नञ एव तत्र ग्रहणात् नञर्थस्याग्रहणात् । अन्यथा पृथग्घादेरपि ग्रहणप्रसंगः । संज्ञाप्रदेशाः नामिनोरः नामिनोऽचतुर्णामित्यादयः । अवर्जाः किम् । कुलं कुलं नामिनः स्वर इति नुम्स्यात् । यद्यपि कर्त्तरि पंच उभे एकत्वे इत्यादिलिंगादवर्णस्य नामित्वाभावः सिध्यति स न युक्तः । 'य्वोः कर्तुर्लिदि' त्यादिनिर्देशेनैयमित्यादेरप्यनारंभप्रसंगात् । नहि निर्देशमाश्रित्य सिद्धं प्रत्याख्यानचमत्कारानहम् । स्यादेतत् । मास्तु नामिसंज्ञा । कथं तर्हि 'नामिनो र' इति इलाद्र इत्येवास्तु । नामिनोऽचतुर्णामित्यत्र तु लिलिहिढ्वे तत्वरिढ्वे इत्यादिसिद्ध्यर्थमिलादित्येव पाठ्यम् । नाम्युपधात्क इत्यत्र य्वुपधादिलोपधाद्वेति पाठेपि न क्षतिः । ढौकः त्रौकः मल्ल इत्यादौ कप्रत्ययेऽप्रत्यये वा विशेषाभावात् ।

पचाद्याकृतिगण इति वक्ष्यमाणत्वात् । हसोपधे मव्यः मूर्च्छः फुल्ल इत्यादावपि विशेषाभावात् । 'नामिनः स्वरे' इत्यस्य स्थाने इलस्य स्वरे इति पठनीयम्।न च हसांतेष्वतिप्रसंगः। यवरळांतेऽयम इति प्रतिषेधो भविष्यति। अथ प्रतिषेधो नकारमकारांतेषु चरितार्थ इति परत्वान्नुमा भाव्यमिति चेत् । तर्ह्युत्तरसूत्रेऽयम इत्यस्यानुवृत्तिसामर्थ्यान्निषेधो भविष्यति । एवमपि प्रियानडुहीत्यादौ हांते नुम्स्यादिति चेत्तर्हि इलस्य स्वरेऽह इति वक्ष्यामि । यद्वा इकारौकाराभ्यां प्रत्याहारं कृत्वा तेनैव सर्वत्र व्यवह्रियताम् । अथ वा युः स्वर इति य्वॄणां स्वर इति वा सूत्र्यताम्। किं नामिसंज्ञाप्रणयनेनेति । उच्यते । संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येतदर्थमिदं सूत्रम् । तेन देः चोर इत्यादौ नाम्युपधलक्षणः कप्रत्ययो न वारीणां मधूनां कर्तॄणामित्यादौ नामिनः स्वर इति नुम्च नास्यादेतत्। अना नामिन इति सूत्र्यताम्। आदन्येऽना इति च विग्रहः । न च आकारव्यतिरिक्ताः स्वरा नामिन इत्यर्थः संभाव्येत । ततस्त्वकारस्य नामित्वं स्यादिति वाच्यम् । उभे इति निर्देशात् । अन्यथा नुमि सति उभनीति स्यात्। नञोक्तमनित्यमिति ज्ञापनार्थम् । तेन अजरत् अदर्शदित्यादि सिध्यति । ऋवर्णदृशोर्ङे गुण इति न वक्तव्यं भवति । यत्तु कातंत्रसूत्रं स्वरो वर्णवर्जो नामीति । तत्र वर्णग्रहणं व्यर्थमेअयित्यादाविव तेन विनाप्यदोषात् । ननु वर्णग्रहणे सवर्णग्रहणमिति भाषणात्तेन विना सवर्णग्रहणं न स्यादिति चेन्न । लाघवात् केवलग्रहणे ह्रस्वग्रहणे वा सवर्णग्रहणमिति परिभाषणस्यौचित्यात् । जातिनिर्देशाद्वा स्वर इत्यपि व्यर्थम् । ह्रस्वदीर्घशब्दानुवृत्त्या अन्वर्थत्वेन अवर्जे इति पर्युदासाश्रयेण वा कादिष्वप्रसंगात् । अन्यथा त्वदीयान्वर्थत्वाभ्युपगमस्य प्रयोजनाभावाद्वैयर्थ्यप्रसंगः । यत्तु त्रिलोचनेनोक्तं नमनं नाम इति भावे घञ् सोऽस्यास्तीति नामी । तथा चामीषां ह्रस्वदीर्घभेदेन तत एव ध्वनिरुच्चरति न चोर्द्ध्वं स्पृशतीति । तन्न। एतादृशान्वर्थतावर्णने फलाभावात्। ईदृगन्वर्थत्वस्य सर्वत्र संभवेन ह्रस्वादिसंज्ञाया अनन्वयत्वोक्तिविरोधाच्च । यदपि अनंतरत्वाद्दीर्घोऽनुवर्तते इति शंकानिरासार्थं स्वरग्रहणमिति । तदपि न । एवं हि आकारवर्जे आवर्जो वा नामीत्येवावक्ष्यत् । ह्रस्वे प्राप्तिविरहात् । वर्णग्रहणानर्थक्यात् । अतो व्यर्थं स्वरग्रहणम् । किंच तत्रादौ

चतुर्दश स्वरा इत्यस्याग्रे अवर्णो नामीति सूत्रणीयमित्थं नोक्तशंकावकाशः। यदपि स्वरोऽनवर्णो नामीति सिद्धे यदवर्णग्रहणं तत्र जातिनिर्दिष्टमनित्यमिति ज्ञापनार्थम् । तेन पित्र्यमित्यादयः सिद्धा इति।तदपि न। इवर्णो यमसवर्णे स्वरे इति वाच्ये यत्र व्यंजनं स्वराः संधेया इत्युक्तं तेनोक्तार्थलाभात् । हयवरल एते वर्णा अनेन क्रमेण ज्ञेयाः। इहापि पूर्ववद्विभक्त्यनुत्पत्तिः । माधवस्तु इहाप्यर्थस्याविवक्षितत्वाद्विभक्तेरनुत्पत्तिः, लुग्वा छांदसः। एवं सर्वत्राप्यविभक्तिकनिर्देशे ज्ञेयमित्याह । तत्र लुग्वा छांदस इति रिक्तम्, एषां सूत्राणां छंदस्त्वस्य छंदोंगत्वस्य चाभावात, छंदसि विभक्तिलुग्विधायकवचनस्यात्राभावाच्च। ननु हकारस्यात्रोपदेशे फलं न दृश्यते । यदि तु शषसेत्यत्र वसयोर्मध्य एवोपदिश्येत तर्हि हशषांतात्सक् रुदादेश्चतुर्णां हसादेरित्यत्र च शहांतादिति वसादेरिति च निर्देशे सति लाघवं, झसग्रहणे च भवति हकारग्रहणमिति चेत् । उच्यते । अत्रोपदेशं विना अबहबेलग्रहणेषु हकारस्य ग्रहणं न स्यात्।ततश्चार्हेणेत्यत्रावकुप्वंतरेपीति णत्वं न स्यात्। ब्राह्मणा हसंतीत्यत्र आदबे लोपशिति लोपश् न स्यात्।तथा ब्राह्मणो हसतीत्यत्र हबे इत्युकारो न स्यात् । तथा लिलिहिध्वे लिलिहिढ्वे इत्यत्र ढत्वविकल्पो नस्यात्।नामिनोऽचतुर्णामित्यत्र हि हलात्सेटो वेति वक्ष्यते।तदेवम् अबहबेलेषु ग्रहणमादौ हकारस्य फलमिति स्थितम् । स्यादेतत्।रेफस्य यपकार्यं प्राप्नोति।तद्यथा, कुंडं रथेनेत्यादौ 'वापदांतस्य' इति पक्षे रेफःप्रवर्तेत, भद्रह्रदो भद्रह्रद इत्यत्र स्वराद्धात्परस्य रेफस्य रहाद्यप इति द्वित्वं स्यादिति तु न दोषः । 'रि लोप' इति तल्लोपसंभवात् । न च पूर्वत्राप्ययं परिहारोऽस्त्विति वाच्यम्।दीर्घप्रसक्तेर्दुर्वारत्वात्।अत्र तु पूर्वस्य हस्य दीर्घभाक्त्वाभावान्न दोषः । न च परस्य यपस्य सवर्णा यमा अनुस्वारस्य स्थाने विधीयंते रेफस्य तत्र सवर्णाभावात्तदप्राप्तिरिति वाच्यम्।रेफस्य रेफेण सावर्ण्यस्य सत्त्वात् । स्वस्य स्वेनासावर्णस्य वक्तुमशक्यत्वात् । अथैतद्दोषपरिहाराय यवाभ्यां पूर्वत्र रेफोऽनुकृष्येत हरयवलेति । तर्हि नानिटिसे इत्यत्र वक्ष्यमाणेन रसांताद्व्युपधात् हसादेः सेटोः क्त्वासयोर्वेति वचनेन देवित्वा दिदेविषतीत्यत्र पक्षे गुणो निषिध्यते तस्य वचनस्य सत्त्वेऽयमेव रेफस्य परपाठे ज्ञापक इति । अत्रोच्यते । अनुस्वारस्य परसवर्णविधिः ससदृशे त्वङ्क-

रोषीत्यादौ क्वचिल्लब्धावकाशोऽसद्दशे प्रागुक्ते न प्रवर्तते । माधवस्तु एवं च रेफलस्य यपांतर्भावात् शिवं रोगादित्यादौ प्राप्तोऽनुस्वारस्य यमादेशो जातिपदार्थांगीकारात्परिहार्य्यः । जातौ हि पदार्थे नांतरीयकतया तद्वतीषु व्यक्तिषु वर्तमानं तं करोतीत्यादावनुस्वारस्य सानुनासिकयमविधानेन कृतार्थं यपलक्षणरेफस्याननुनासिकत्वावश्यंभावेन बाध्यते इत्याह । ञमङणनम्, झढधघभ, जडदगब खफछठथ, चटतकप शषस, अनेन क्रमेणैते वर्णा ज्ञेयाः। एतानि च संज्ञासूत्राण्याद्यंताभ्यामित्यनेनैकवाक्यत्वात्। अत्र सवर्णा इत्यनुवृत्य वाक्यभेदेन व्याख्येयम् । एते वर्णास्तुल्यस्थानप्रयत्नाः सवर्णाः स्युरिति अत्र सवर्णसंज्ञा भिन्नजातीयानामेव ग्राह्या । हादौ शादौ तु जातिग्रहणेनैव निर्वाहः । तेन वर्ग्यो वर्ग्येण सवर्ण इति सिद्धम्। फलं तु हसात्परस्य झसस्य लोपो वा सवर्णे झसे इति । स्यादेतत् । शषसेत्यत्र सूत्रे हकारः पठनीयः । यथा वसरसझसग्रहणेषु गृह्येत ततश्च रुदिहि स्वपिहीत्यत्र वसादित्वप्रयुक्त इट् सिध्यति रुदादेश्चतुर्णां हसादेरित्यत्र हकारग्रहणं न कर्तव्यं भवति। स्निह प्रीतौ स्निहित्वा स्नेहित्वा सिस्निहिषति सिस्नेहिषतीत्यत्र रसांतादुपय्वुधाद्धसादेः सेटोः क्त्वासयोर्वेति गुणविकल्पः सिध्यति । तथा लीढीत्यत्र होढ इति ढत्वं दुग्धीत्यत्र दादेर्घ इतिघत्वं जंगहीत्यादौ लोपस्त्वनुदात्ततनामिति ञमस्य लोपः । नानद्धीत्यत्र नहो ध इति धत्वं च सिध्यति। तथा हशषांतात्सगित्यस्य स्थाने शहांतादित्येव पाठ्यम् । षग्रहो न कर्तव्यः। न च शसात्खपा इत्यत्र हकारग्रहः स्यादिति वाच्यम्।खपपरस्य हकारस्य क्वचिदलाभात् । तदित्थं लाघवम् । यथान्यासे तु स्थलद्वये हकारः पठितः । झसरसयोश्च पठनीय इति गौरवम् । लाघवादत्रैवैको हः पठितुं युक्त इति । सत्यम् । अन्यथाकरणे फलं चिंत्यम् । यत्तु हो झस इति सूत्रेण हस्य झससंज्ञा विहिता मुग्धबोधे । तदपि गौरवादुपेक्ष्यम् । शसमध्ये हस्यैव पठितुमुचितत्वात् । ननु किमर्थो वर्णोपदेशः क्रियते, नहि तद्बलेन कस्यचिच्छब्दस्य साधुत्वमवगम्यते । नच ध्यातादिदोषरहितवर्णस्वरूपप्रतिपत्तिरेव तत्फलमिति वाच्यम् । लोकत एवाविप्लुतवर्णप्रतीतेरवश्यवाच्यत्वात् । अन्यथा प्लुतादिपाठस्यापीह कर्तव्यत्वापत्तेः। न च निर्देशस्य जातिपरत्वात् प्लुतादिसंग्रहः सेत्स्यतीति वाच्यम्।तत्तद्दोषविशिष्टानामप्यत्वादिजा-

त्याक्रांतत्वात्तेष्वतिप्रसंगात् । नच गर्गादिनडादिपाठस्य तंत्रणाभयार्थतया वर्णशुद्धिः अपठितेषु नामसु तथाप्यगतेः । मैवम् । आकृत्युपदेशादिष्टसिद्धिः धातुप्रत्ययादिषु शुद्धानामेव पाठात् । यत्वग्रहणेषु नामसु दोष इति । तन्न । त्वयापि प्रतिपदपाठस्यावश्याश्रयणीयत्वात् । अन्यथा शश इत्यत्र षष इत्यपि स्यात् । मञ्चकं मंजक इति पलाशे पलाष इति । वर्णोपदेशस्य फलं तु प्रत्याहारसिद्धिः । प्रत्याहारशब्दस्तु आद्यंताभ्यामित्येतत्सूत्रविहितसंज्ञापरः । प्रत्याह्रियंते संक्षिप्यंते वर्णा अत्रेति व्युत्पत्तेः । सोऽपि लाघवेन शास्त्रप्रवृत्त्यर्थः । अन्यथा 'चपा अबे जबाः' इत्यादौ कालावयवगौरवप्रसंगात् ॥

## आद्यन्ताभ्याम् ॥ ७ ॥

संज्ञासूत्रमिदम् । आदिश्चांतश्चाद्यंतौ ताभ्यामाद्यंताभ्यां कृत्वा मध्यस्था वर्णा ग्राह्या इत्युक्तेः आद्यंतौ तेषां संज्ञेति फलितम् । स्यादेतत् । आद्यंतौ तावदवयवौ ताभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेषु संज्ञावतरंती मध्यमेषु विश्राम्येत् नत्वाद्यंतयोः । संज्ञास्वरूपांतर्भावेन तयोः पारार्थ्यनिर्णयात् । ततश्चावहसादिग्रहणे आद्यंतयोर्ग्रहणं न स्यादिति । उच्यते । तंत्रावृत्त्योरन्यतरदाश्रिताद्यंताभ्यां कृत्वाद्यंताभ्यां सह मध्यस्था वर्णा ग्राह्या इति व्याख्येयम् । चपा अबे आदबे इत्यादिनिर्देशश्चात्र मानं, हसेर्हस इत्यत्र हकापर्युदासश्चात्र लिंगम् । न ह्याद्यंतयोरग्रहणे हकारस्य द्वित्वप्रसंगः । यद्वा आद्यंत आभ्यामिति च्छेदः । आद्यं पदमविभक्तिकम् । आद्यंतौ मध्यगानां संज्ञा उक्तरीत्या तयोरग्रहणे प्रसक्ते आभ्यामित्युक्तम् । इदंशब्दश्च सांनिध्यादाद्यंतावाह । इयं च सहार्थे तृतीया । समुदायाक्षेपप्रकारस्तूक्तः । ततश्चाद्यंतौ स्वसहितानां मध्यगानां संज्ञेति सिद्धम् ॥ इहादित्वांतत्वे अपेक्षबुद्ध्यधीने तं तं समुदायं प्रति यस्य तस्यादित्वांतत्वविवक्षणात् । ततः छतसिद्धिः । माधवस्तु अत्र सामर्थ्यादाद्यंतसामान्यवचनावाद्यंतशब्दावितीकारादीनां पूर्वोत्तरवर्णापेक्षया सत्यपि मध्यत्वे तदप्रतिषेधात्परपूर्वापेक्षमाद्यंतत्वमपि प्रयोजकमिति सुप्रहा इलादय इत्याह । आद्यंतयोश्च संनिवेशविशेषापेक्षत्वाच्छन्दक्रमसंनिवेशेऽपि भोसुभगोसूअघोसूइत्यादावप्यस्य प्रवृत्तिरुपपद्यत इति च । अथ यदि संज्ञाप्रदेशेष्वेवाद्यंतावयवाभ्यां संदेशन्यायेन समुदायानुकरणमुच्यते । तदा मा-

स्त्विदं सूत्रम् । यत्तु मुग्धबोधे आद्यंताख्या इति सूत्रितम् । एषां मध्ये ये वर्णास्ते स्वादिवर्णांतवर्णसमाहारसंज्ञाःस्युरिति च व्याख्यातं तत्राद्यंतयोर्ग्रहो न स्यात् । संज्ञायाः परार्थत्वात् । उक्तरीत्या व्यर्थं तत्सूत्रम् । आदिरंत्येन सहेतेत्यपि सूत्रमुक्तरीत्या प्रत्याख्यातम् । इह कैश्चित्प्रत्याहारगणनं क्रियते तत्तुच्छं सत्यसति वा तस्मिन्निष्टानिष्टयोरदर्शनात् । अ इ उ ण्, ऋ ऌ क्, एओङ्, ऐऔच्, हयवरट्, लण्, ञमङणनम्, झभञ्, घढधष्, जबगडदश्, खफछठथचटतव्, कपय्, शषसर्, हल् इति चतुर्दशसूत्र्यामित्संज्ञकास्त्याज्याः। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः, इत्यस्य स्थाने ढ्रलोपे पूर्वस्यौर्दीर्घ इति सूत्रणीयम् । संदंशन्यायेन अकारोकाराभ्यां प्रत्याहारेण वा निर्वाहात् । 'अणोऽप्रगृह्य स्यानुनासिकः' इत्यस्य स्थानेऽप्रगृह्यस्यौरनुनासिकः 'केणः' अस्य स्थाने कओः 'उरण्रपरः' अस्य स्थाने उरौ रपरः स र इति वा 'अकः सवर्णे दीर्घः' अस्य स्थानेऽकारऌकाराभ्याम् । अऌः सवर्णेदीर्घ इति वा, अलोलि दीर्घ इति वा सूत्रम् । 'इको गुणवृद्धी' अस्य स्थाने युल्गुणवृद्धी 'उगितः' अस्य स्थाने 'एदोतःपदांतादति' एदोतोति पदांतादिति वा । एवं स्वरूप-निर्देशे एङपेक्षया गौरवम् । सर्वत्राणामैकरूप्यनिर्वाहाय स्वीकार्य्य ङकारो-स्तु वा 'नादिचि' इत्यत्र नावावीति नादिहीति वा सूत्रं प्रथमयोर्हस्याभा-वान्न दोषः । 'अचः परस्मिन्' इत्यत्र आवः परस्मिन्निति अहः परस्मि-न्निति वा सूत्रम् । हकारस्तु प्रत्याहारे उपात्तोपि तत्कार्यभाङ्न भवति । 'होहंते' इति लिंगात्।'आदेच उपदेश'अस्य स्थाने आदेह उपदेश इति होऽत्र न कार्यभाक् । द्वंद्वंरहस्य वाहनमाहितादिति लिंगात् । 'आतोदि नित्यम्' अस्य स्थाने आतो रि नित्यम् । 'अणुदित्सवर्णस्य चाप्रत्ययः' अस्य स्थाने अलुदित्सवर्णस्याप्रत्ययः ओदिति वा 'इण्कोः' अस्य स्थाने इल्कोः यकोरिति वा यणः स्थाने य इति यलिति वा, शश्छोटीत्यत्र शश्छोमीति वार्त्तिककृता पठितं तस्य स्थाने शश्छोनि,'हलो यमां यमि' अस्य स्थाने हहो यनां यनि, 'ङमोह्रस्वादचिङमुण्नित्यम्' अस्य स्थाने ङमो ह्रस्वादाहि ङमुण्नित्यम् । 'अतो दीर्घो यञि'अस्य स्थाने अतो दीर्घो यभि'अपूर्वस्य योशि'अस्य स्थाने अपूर्वस्य योदि, 'हशि च' अस्य स्थाने हदि च 'एकाचो बशोभष्झषन्तस्य' अस्य स्थाने एकाहो वदो भधूझधंतस्य, 'नेड्वशि कृति'अस्य स्थाने वेड्वदि

कृति 'झलां जशोंते' अस्य स्थाने झहां जदांते,'झलां जश् झशि' अस्य स्थाने झहाम् जद् झदि, 'मय उञो वो वा' अस्य स्थाने मपउञो वो वा, 'शर्पूर्वाः खयः' अस्य स्थाने शसुपूर्वाःखयः,'चयो द्वितीया' अस्य स्थाने चयो द्वितीयाः, 'यरोनुनासिके'अस्य स्थाने यसोनुनासिके'झरो झरि सवर्णे'अस्य स्थाने झसो झसि सवर्णे 'खरि च'अस्य स्थाने खसि च,'अभ्यासे चर्च'अस्य स्थाने अभ्यासे चश्च,'शरोचि'अस्य स्थाने शसोहि 'अलोन्त्यस्य'अस्य स्थाने अहोंत्यस्य,'लोपो व्योर्वलि' अस्य स्थाने लोपोव्योर्वहि, 'रलो व्युपधात्' अस्य स्थाने रहो व्युपधात्,'हलि च'अस्य स्थाने हहि च, 'झलो झलि'अस्य स्थाने झहो झहि, 'शल इगुपधात्' अस्य स्थाने शहो युपधात । अथांतस्येत्त्वाभावात्कथं तेन प्रत्याहारः सति चेत्त्वे कथमंत्यस्य ग्रहणमिति चेच्छृणु । 'आदिरंत्येन सहेता'इत्यस्य स्थाने आद्यंताविति सूत्र्यते।आद्यंतौ मध्यगानां संज्ञा स्वस्य च रूपस्येति च व्याख्यास्यते। नन्वेवं सत्येङ्पदयोङ्काराकारयोरपि ग्रहणं स्यादिति चेन्न । ज्ञापकात् । 'कालसमयवेलासु तिङः' इति निर्देशात् । युल्पोहीत्यत्र यांतर्भूतोप्यकारः 'स्थानेंतरतमः' इति परिभाषया वार्य्यते । 'एच इग्घ्रस्वादेशे' इत्यत्रांर्भूतावपि ऋकारऌकारौ यथा। नन्वेवमपि सुप्तिङ्कृञादिष्वितां ग्रहणं प्राप्नोति । मैवम् । यस्येतो ग्रहणे पदांतत्वे इष्टापत्तिः विभक्तिप्राग्वर्त्तिनोपि स्यादिति चेन्न सुपो धातु अयोभीति निर्देशात । तिङः लिङ्याशिष्यङिति लिंगान्न ङस्य तिङ्संज्ञा। ततश्चङ मुण्‌ न इन्दाञ्चकारेत्यादौ क्रियासामान्यार्थस्यानुप्रयोगो न्यायसिद्ध आमंतस्यापरिसमाप्तार्थत्वात् । सूत्रं तु व्यवहितविपरीतधात्वंतरप्रयोगनिवृत्यर्थम् । एवं सति ञकारस्य क्रियावाचकत्वाभावान्नानुप्रयोगः । यद्वा आद्यंतौ मध्यगानां संज्ञेत्येकं वाक्यं स्वस्य च रूपस्येत्यपरं तत्र द्वितीयेन वाक्येन यावत्संज्ञा क्रियते ततः पूर्वमेव तस्य लोप इत्यनेन इत्संज्ञोपहियते ततः इत्संज्ञस्याभावादेव नाद्यंतसंज्ञकत्वं तस्य इह कैश्चिद्धसा व्यंजनानीति सूत्रं पठ्यते अन्येषां यानि व्यंजनसंज्ञानि तानि हसशब्देन ग्राह्याणीति च व्याख्यायते । अन्ये तु हसा हससंज्ञका वर्णा व्यंजनसंज्ञाः स्युरिति व्याचक्षते । तदुभयं तुच्छम् । आद्ये पूर्वसूत्रेण गतार्थत्वात् । द्वितीये प्रयोजनादर्शनात्। तस्माद्व्यर्थं तत्सूत्रम् । वस्तुतस्तु परमतदूषणपरमिदम् तथाहि । कादीनि

व्यंजनानीति सूत्रं न प्रणेयं हससंज्ञया निर्वाहात् । न व्यंजने स्वरा इत्यादावेव न कादौ स्वरा इति वक्तुं युक्तत्वाच्च । दूषणादिगियम् । हवसंज्ञया सिद्धे घोषवंतोऽन्ये इति घोषवत्संज्ञा, खससंज्ञया वर्गाणां प्रथमद्वितीयाः शषसाश्चाघोषा इत्यघोषसंज्ञा । ञमसंज्ञया अनुनासिका ङञणनमा इत्यनुनासिकसंज्ञा, यलसंज्ञया अंतस्था यरलवा इत्यंतस्थसंज्ञा, शससंज्ञया ऊष्माणः सषसहा इत्यूष्मसंज्ञा, औसंज्ञया, तत्र चतुर्दशादौ स्वरा इति स्वरसंज्ञा, यौसंज्ञया स्वरोऽवर्णवर्जो नामीति नामिसंज्ञा, अल्संज्ञया दशसमानासंज्ञयासिद्धेः एकारादीनि संध्यक्षराणीति संध्यक्षरसंज्ञा च व्यर्था, झससंज्ञया सिद्धे धुट्व्यंजनमनंतस्थानुनासिकमिति धुट्संज्ञा, आरंभेप्येवं युक्तम् । धुड्यवपंचममिति यवशब्देन संदंशन्यायेन यरलवा ग्रहीष्यंते । पर्युदासबलाद्व्यंजनमेव धुट्संज्ञं न स्वरः । इत्थं च क्रमान्यत्वेन वर्णोपदेश एव लाघवम् । ननु सिद्धवर्णसमाम्नायग्रहेण तेन सिद्धो वर्णसमाम्नाय इति सूत्रमपि व्यर्थं पूर्वाचार्याणां मते गौरवं दोषं दृष्ट्वा वर्णोपदेशोन्यथा कृतः । तत्र किं समाधानमभिसंधायतन्मतं स्थाप्यते । न चेष्टापत्तिर्गौरवे । सर्वशास्त्रेषु गौरवलाघवयोर्दूषणादूषणत्वव्यवहारदर्शनात् । तत्राऽर्थलाघवमन्येषां शाब्दिकानां तु शब्दलाघवमित्यन्यदेतत् । यत्तु त्रिलोचनदासेनोक्तं पूर्वाचार्यप्रसिद्धां स्वरव्यंजनादिसंज्ञामपनीय केचिदपूर्वामेवाभूलादिसंज्ञा प्रणीतवंतस्तत्प्रतिषेधार्थमिदमुच्यते । सिद्धइति । अत्रायं प्रष्टव्यः । पूर्वाचार्यप्रसिद्धामित्यस्य किं पूर्वाचार्याणामेव प्रसिद्धां विदितामित्यर्थः उत पूर्वाचार्याणामपि प्रसिद्धामिति । नाद्यः । लोके प्रसिद्धाभिरेव संज्ञाभिरित्त्युत्तरग्रंथविरोधात् । नांत्यः । पूर्वाचार्यग्रहणानर्थक्यात् । प्रसिद्धामित्यस्यैव वक्तुमुचितत्वात् । अथ पूर्वाचार्यैरेव प्रसिद्धां कृतामिति विवक्षितमुततैरपीति । नाद्यः । स्वरसंज्ञाया अकारादिषु लोकप्रसिद्धत्वेन घटादिशब्दवदीश्वरेणैव संकेतित्वात् । धुटीत्यादीनामाधुनिकैरेव संकेतितत्वाच्च । नांत्यः । पूर्वाचार्यप्रसिद्धामित्यस्यानर्थक्यापातात् स्वरव्यंजनादिसंज्ञामित्यस्यैव समंजसत्त्वात् । यदपि अपूर्वामेवेत्याद्युक्तं तदपि न । 'अचु गतौ, हलविलेखने' आभ्यां क्विपि अचतीत्यच् हलतीति हल् इति प्रसिद्धत्वात् । पराभिमतेर्थेनप्रसिद्धतेति तर्हि समानसंध्यक्षरनाम्यादिसंज्ञा अपि त्वदुक्तेर्थे न प्रसिद्धा इति तुल्यं समाधा-

नम् । यदपि तत्प्रतिषेधार्थमित्यभिहितं तदपि न । प्रतिषेधहेतोरनभिधानात्। प्रतिज्ञामात्रेणार्थासिद्धेः वर्णसमाम्नायस्य सिद्धता परैरपि ज्ञातैव । किं तु तस्याश्रयणे गौरवं बुद्ध्वा लाघवाय वर्णसमाम्नायोऽन्यथा पाठितः । गौरवोद्धारस्तु अनेन सूत्रेण न कृत इति व्यर्थं सिद्धो वर्णेति सूत्रं गौरवदोष एव नेति यो वदेत्स शिष्टसमयादपगलित इति वादकथायामुन्मत्त इव परीक्षकैरुपेक्षेत किंच यत्नगौरवमापद्येतेति परं प्रति कथं गौरवमापाद्यते । यदपि शब्दाः खल्विह साध्यत्वेनाभिमतास्ते च लोके प्रसिद्धाभिरेव संज्ञाभिः साध्यमानाः सुबोधा भवंति नाप्रसिद्धाभिरित्युक्तम् । तन्न । श्रद्धावुडग्निनद्यादीनां संज्ञानां लोके त्वदिष्टेर्थेऽप्रसिद्धत्वेन प्रसिद्धाभिरेवेत्यवधारणस्यासंगत्वप्रसंगात् । अथ कासांचित्संज्ञानां प्रसिद्धिरपेक्षितेति चेत् तर्हि धातुप्रत्ययाव्ययसर्वनामादिसंज्ञानां प्रसिद्धत्वात्समं समाधानं परस्यापि । यदपि अथ संज्ञापि कथं न साध्यते इति चेन्न । प्रथमसंज्ञासाध्या साधितया च पश्चाच्छब्दा व्युत्पाद्यंते इति यत्नगौरवमापद्येतेत्यभाणि, तदपि न । लौकिकवैदिकसकलव्यापारपरित्यागापातात् । साधितेन वस्त्रघटादिना छादनजलाहरणादि ओदनादिना तृप्त्यादियागाग्निहोत्रादिधर्मेण स्वर्गादि कथं तेन यत्नगौरवात्साधनीयं त्वया यथा वुटश्रद्धादिकां संज्ञां प्रसाध्य शब्दा व्युत्पाद्यंते तथा परैरपि । अज्झलादिसंज्ञामिति न तान् प्रति गौरवगंधोऽपीति यत्किंचिदेतत् । यदपि एतेन प्रतिषेध एव साध्यत्वेन परिणतो भवति यथा देवदत्तो दक्षिणेन चक्षुषा पश्यतीत्युक्ते वामेन न पश्यतीति गम्यते इत्यभ्यधायि तदपि न । सम्यगिव उक्तोत्तरत्वात् । यद्दूषणमभिप्रेत्यान्यथा वर्णसमाम्नाय उपदिष्टः तस्य गौरवस्यानेनानुद्धारात् । अतो हेत्वभावात्प्रतिषेधो दुःसाध्यः । यदपि ननु चतुर्दशेत्याभियोगैः स्वरादिसंज्ञा विधीयमाना दृश्यंते, इदमयुक्तम् । पूर्वाचार्यैप्रसिद्धसंज्ञान्वाख्यानद्वारेणेतरप्रणीतसंज्ञांतरप्रतिषेध एव तैरपि साध्यः । अन्यथा स्वरादिसंज्ञा हि प्रसिद्धाः, किमर्थं विधीयंत इति प्रोक्तं तत्तुच्छमुक्तोत्तरत्वात् । पूर्वाचार्यैः प्रसिद्धाः पूर्वाचार्याणामेव वा तेषामपि वा । नाद्यः । स्वरव्यंजनादिसंज्ञानामन्वर्थत्वेन तेभ्योऽपि प्राक्सिद्धत्वात् । अत एव न द्वितीयोपि । लोके प्रसिद्धाभिरिति त्वदुक्तिविरोधाच्च । नांत्यः । प्रसिद्धसंज्ञेति वक्तुं शक्यत्वात्, । पूर्वाचार्यग्रहणानर्थक्यात् । पूर्वाचार्यान्प्रति

गौरवोपन्यासात्तैर्न संज्ञाः कर्त्तुं शक्यंते तदनुवादस्तु तव दूरोत्सारित एव घुडग्न्यादिसंज्ञासु पूर्वाचार्यप्रसिद्धत्वं डुलिदुग्धायमानम् । अन्वर्थानां स्वरादिसंज्ञानां विधानं न परप्रणीतसंज्ञानां प्रतिषेधनाय । किंतु "स्वरो नासासमीरे स्यान्मध्यमादित्रिकस्वरे । उदात्तादावकारादौखड्गादौचध्वनौपुमान्" इत्याद्यर्थांतरवारणाय स्वरादिसंज्ञानामप्रणयने स्वरादिप्रदेशेऽर्थांतरवारणं कथं लभ्यते । अतस्तैः प्रतिषेधः साध्यः । परंतु संज्ञांतराणां न किन्तु अर्थांतराणाम् किंच यदानुनासिकादिसंज्ञान्वर्था किमर्थं विधीयते । नच स्वरादिसंज्ञाभिरज्झलादिसंज्ञावदेत्रतरप्रणीतसंज्ञांतरं प्रतिषेद्धव्यं दृश्यते । अन्वर्था अपि प्रतिषेद्धव्याभावेपि विधीयते चेत् तर्हि लोपविभक्तीत्यादिका अपि कुतो न विधीयंत इति प्रति वाक्यं भावयेति दिक् । किंच ≍क इति जिह्वामूलीयः ≍प इत्युपध्मानीय इति द्वे सूत्रे न कर्त्तव्ये, लाघवात् । प्रदेशेषु स्वरूपेणोच्चारणस्योचितत्वात् । जिह्वामूलीयोपध्मानीयशब्दयोर्यौगिकत्वेन योगार्थग्रहणेऽप्यदोषात् । व्यंजनसंज्ञायास्तु दुर्गेणैवान्वर्थत्वं स्वीकृतमन्वक् व्यंजनमिति तत्वं च परसापेक्षोच्चारणत्वं ततोऽपि संज्ञासूत्रं व्यर्थं योगेनैव निर्वाहात् । व्यंजनमस्वरं परं वर्णं नयेदित्यपि सूत्रं व्यर्थं वर्णस्य वर्णांतरं प्रति नयनस्यासंभवात् । नहि लिपिर्वर्णःसाहितस्य स्मारिका प्रतिमावत् । वर्णस्त्वाकाशाश्रयः वर्णस्य वर्णांतरेणानंतर्य्यसंबंधः । नह्यानंतर्य्येणोच्चारणं सूत्रसाध्यं सूत्रानभिज्ञानामपि दर्शनात् । न चान्यन्नयनं वर्णेषु शक्यते । यत्तुननुव्यंजनं परं वर्णनयेदित्येव युक्तं सत्यमस्वरमिति व्यर्थमिति त्रिलोचनेनोक्तं, तदसत् । उक्तरीत्या सूत्रस्यैवोक्तिसंभवाभावात् । एवमनतिक्रमयन्विश्लेषयेदित्येतत्सूत्रं व्यर्थं उक्तरीत्या वर्णानां संयोगाभावेनैव विभागासंभवात् । तेषां हि क्रमेणैवोच्चारणमाशुतराविनाशश्चेति दिक् । एतेन विश्लेषस्तु क्रमेण भविष्यति न व्युत्क्रमेणेति व्यर्थमिदमिति त्रिलोचनोक्तिः परास्ता । क्वचित्पुस्तकेषु अंत्यस्वरादिष्टिः, अंत्यात्पूर्वउपधा, कार्यायेत् आरै औ वृद्धिः अरेदोनामिनो गुण इति पंचसूत्री ताद्धितेषु पठ्यते । तत्र पाठे प्रयोजनं चिंत्यम् । इह पाठे तु प्रकरणशुद्धिरेव फलम् । अंत्यस्वरादिष्टिः । अंते भवोंत्यः"कारकात्क्रियायुक्ते" इतिण्यः । 'णितोवा' इति णित्वविकल्पाद्वृद्ध्यभावः । अंत्यश्चासौ स्वरश्चेति कर्मधारयः । स आदिर्यस्येति

तद्गुणसंविज्ञानो बहुव्रीहिः । स्वराणां मध्येंत्यस्वर आदिर्यस्य समुदायस्य स टिसंज्ञः स्यात् । संज्ञाप्रदेशाः यथा टः. त्यदादेष्टेरित्यादयः । अंत्यत्वं च सजातीयापेक्षं तेन स्वराणामिति लभ्यते । यत्र तु तदादिरन्यो वर्णो नास्ति तत्र स्वरस्यैवांत्यत्वं व्यपदेशिवद्भावात् । यथा पितन्यत्र सेगा, डिति टेः । यत्राप्येक एव स्वरः तत्रापि व्यपदेशिवद्भावादंत्यत्वं यथा त्यदादिषु कचिद्द्योः स धातुरित्यादि निर्देशश्चात्र लिंगम् । व्यपदेशिवद्भावस्तु लौकिको न्यायः । यथा यस्य बहवःपुत्रास्तस्य तस्मिंस्तस्मिञ्ज्येष्ठमध्यमकनिष्ठव्यपदेशः, यस्यत्वेक एव पुत्रस्तस्य ज्येष्ठादिव्यपदेशास्तस्मिन्नेव तथा यस्यानेके स्वराः तस्याद्यंतव्यपदेशोऽपूर्वत्वानुत्तरत्वलक्षणस्तस्मिंस्तस्मिन् । यस्य त्वेक एव स्वरस्तस्य तस्मिन्नेव । केचित्तु स्वरेष्वंत्योन्त्यस्वर इति विगृह्णंति । तत्रांत्यशब्दस्य पूर्वनिपातस्तु विज्ञापनार्थः। कचिदमाद्यंतस्यापि परत्वमिति। अस्मिन्पक्षे स्वराणामिति शब्दादेव लभ्यते । अन्यत्पूर्वेण तुल्यम् । यद्वा तंत्रादिनांत्यस्वरः अंत्यस्वरादिश्च टिरित्येवं वाक्यार्थद्वयं तत्पुरुषबहुव्रीहिभ्यां बहुव्रीहिस्तद्गुणसंविज्ञान एव । यथा टेरित्यादिलिंगात् । अन्त्यात्पूर्व उपधा। अंत्याद्वर्णात्पूर्वो यो वर्णः स उपधासंज्ञः स्यात् । संज्ञाप्रदेशाः नोपधायाः उपधाया लघोरित्यादयः । ननु वर्णादिति सूत्रेऽनुक्तं कस्माल्लब्धमिति चेत् । ज्ञापकादिति गृहाण । पराण्यात्, ब्रुव आहश्च पंचानाम्, विदो नवानामित्यादिकं च ज्ञापकम् । अत्र नोपधाया इति दीर्घः । उपधात्वं यदि समुदायात्पूर्वस्योच्यते तदेदं दीर्घत्वमनुपपन्नं स्यात् । तथा वर्त्तमाने इति निर्देशो लिंगम् । अत्र हि उपधाया लघोरिति गुणः । सच तदैव निर्वहति यदा वर्णात्पूर्वत्वमेवाश्रीयते । अथ वर्ण इति कस्माल्लब्धं न्यायात् । तद्यथा अवध्यवधिमद्भावः सजातीयानामेवेत्युत्सर्गः । लोके ह्यमीषां ब्राह्मणानामंत्यात्पूर्वमानयेत्युक्ते एक एवान्यादव्यवहितपूर्व आनीयते न तु समुदायः । एवं चेहापि वर्णादव्यवहितपूर्वोऽपि वर्ण एव संज्ञी न तु समुदायः । न वा व्यवहितो वर्णः, ज्ञापकाच्च । तथाहि सिस्योरिति सूत्रमव्यवहितपूर्वस्योपधाभूतस्य नामिनो गुणं निषेधति, तच्च वर्णस्य संज्ञित्वं विना न निर्वहति । अथवाऽस्तु अंत्याद्वर्णात्पूर्वस्य समुदायस्य संज्ञित्वं षष्ठीनिर्दिष्टत्वादंत्यस्य

कार्यं भविष्यति न चानर्थकत्वादंत्यस्य न स्यात्। अनर्थकस्य नेतीतीदृशस्य वचनस्य न्यायस्य वा दर्शनात् ॥

## कार्यायेत् ॥

क्रियते संपाद्यते तत् कार्यं प्रयोजनं कार्यं संपादयितुमुच्चारित इत्संज्ञः स्यात्।यस्येत्संज्ञायां सत्यांकिंचित्कार्यं संभवति स इत्संज्ञोऽन्यस्तु श्रवणार्थोऽन्यथातन्नोच्चारयेत्।द्विधा हि वर्णानामुपदेशःकार्यार्थो वा श्रवणार्थो वेति यथाङेङस्यादेर्ङकारो ङिति ङितो यडित्यादिकार्यार्थः क्यगादेःककारः क्ङित्यच्युसि यजां यवराणां कितीत्यादिकार्यार्थः । अन्वर्था चेयं संज्ञा । एति गच्छतीति इत् आशु विनाशीत्यर्थः । ततश्च इतो लोपो न वक्तव्यो भवति । अत एव ञिटुडूनां समुदायस्यैव लोपः। यत्तु इदित्यनुवृत्तेर्लोप इत्येव सिद्धे यस्येत्संज्ञा तस्य लोप इति वचनस्य समुदायलोपार्थत्वादित्युक्तं माधवेन । तन्न । तस्य वचनस्याभावात् । इच्छब्दार्थविवरणपरत्वादस्य । ननु कार्यायेति चतुर्थी नोचिता नैमित्तिकाधारे सप्तम्या औचित्यात् । सत्यम् । तादर्थ्ये तुमर्थे वा चतुर्थीयं, सा चानेन ज्ञाप्यते तद्ज्ञापनार्थमेवात्र चतुर्थीप्रयोगः । ननु तर्हि कृते इदित्येव सूत्र्यतां लाघवादिति चेन्न । संनिपातपरिभाषायां अनित्यत्वाज्ञापकत्वप्रसंगात् । किंच यदि कृते इत्यव्ययं सप्तमी वा तदोक्तचतुर्थ्यपि न लभ्येतेति दिक् । इत्थं चोपदेशेऽजनुनासिक इत्याद्यष्टसूत्री नारब्धव्या काम्यचूजाहजादौ प्रयोजनाभावादेवेत्संज्ञाभाव इत्यस्य शरणीकरणीयत्वात् । आरै औ वृद्धिः, आश्च आर् च् ऐश्च औश्च एषां समाहार आरै औ समाहारस्य एकत्त्वात् । एकत्वे द्विगुद्वंद्वाविति नपुंसकत्वेऽपि ह्रस्वो न कृतः संज्ञापूर्वकत्वेन तस्यानित्यत्वात् । यत्तु असंदेहार्थं ह्रस्वो न कृतः सति हि तस्मिन् किमौकारो निर्दिष्ट उकारो वेति संदेहः स्यात् । तन्न । भाव इति निर्देशेन तस्य समाधानसंभवात् । असमासेऽविभक्तिको वा निर्देशः । नन्वत्राकारस्यापि वृद्धिसंज्ञा वक्तव्या न वक्तव्या प्रश्लिष्यतेत्राकार आ आरिति प्रश्लेषे किं प्रमाणमिति चेत् । लिंगदर्शनमित्यवेहि । तथाहि निपातः भागैरिति घञंतावेतौ । अत उपधाया इत्यनेनात्र वृद्धिः सा चाकारप्रश्लेषं विना नोपपद्यते दीर्घत्वव्याप्यत्वजातेरेवात्र ग्रहणं तेन त्रिमात्रस्य न संज्ञा । ततश्च पावकः स्तावक इत्यत्र न प्लुतः । अन्यथैकमात्रस्यासदृशत्वाविशेषो

द्विमात्रवत्त्रिमात्रोपि स्यात् । एवमुत्तरसूत्रेऽपि प्रत्येकं च वृद्धिसंज्ञाभावे कार्ये भार्गैरित्यादिलिंगात् । समुदायस्य लक्ष्ये क्वचिददर्शनात् । ब्राह्मणा भोज्यंतामित्यादौ प्रत्येकं वाक्यपरिसमाप्तिदर्शनाच्च एकवचनमपि प्रत्येकाभिप्रायम् । स्यादेतत् । मास्तु वृद्धिसंज्ञा आदिस्वरस्य ञ्णिति आरै औ इति सूत्र्यताम् । तदेवोत्तरत्राप्यनुवर्त्यताम् । नचात उपधाया इत्यत्रारै औ इत्यनुवृत्त्या चत्वारोपि स्युरिति वाच्यम् । वृद्धिशब्देनोपस्थापितेष्वपि तुल्यत्वात् । अथ यद्यप्युपस्थितेषु सदृशो विधास्यत इत्युच्यते तर्ह्यत्रापि तुल्यं भार्गैरित्यादिलिंगाच्च । अत्रोच्यते संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येतदर्थं संज्ञाविधानम् । तत्फलं तु कविरिवाचारीत् अकवयीत् । विरिव अवयीत् । श्रीरिव अश्रयीत् । द्रुरिव अद्रवीत् । भूरिव अभवीदित्यादौ पाक्षिको वृद्ध्यभावः उत्तरार्थं च तत्त्वनुपदमेव वक्ष्यते । यद्वा संज्ञाविधानबलात्प्रयोजनांतराण्यनुमीयंते मृजेर्वृद्धिः ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु ऊर्णोतेर्वृद्धिः पैसौ अतो हसादेर्लघोर्वा वृद्धिः सेटि सावित्यादीनि अरेदो गुणः अर् ए ओ एते गुणसंज्ञाः स्युः । अर् च एच्च ओश्च एषां समाहारः अरेदो अत्रापि पूर्ववन्न ह्रस्वः । यत्तु असंदेहार्थं ह्रस्वो न कृतः तन्न भविष्यतीति निर्देशेन तन्निवारणस्य संभवात् । पूर्ववदसमासो वा प्रयोजनं गुणः चेः चेता स्तोता कर्त्ता विनोति तनोति तपरत्वं त्रिमात्रव्यावृत्तये । तेन चेता स्तोतेत्यत्र त्रिमात्रो गुणो न । अथ मात्रिकस्य द्विमात्र ईषत्सदृशत्वात्स्यान्न तु त्रिमात्रो वैसादृश्यादिति चेत्सत्यं स्पष्टार्थं तपरत्वम् । स्यादेतत् । गुणसंज्ञा न प्रणेया । गुण इत्यस्य स्थाने अरेदोनामिन इति सूत्र्यताम् । तदर्थस्तु नाम्यंतस्य धातोररेदो भवंतीति । उत्तरत्रापि । अरेदो इत्यनुवर्त्तिष्यते । एवं च सति द्विर्गुणग्रहणं तकर्त्तव्यं भवतीति । अत्रोच्यते । संज्ञापूर्वकत्वेन गुणविधेरनित्यत्वज्ञापनार्थं संज्ञाप्रणयतम् । तेन क्षिणोति ऋणोतीत्यादौ गुणाभावः सिध्यति । यद्वा संज्ञाविधानबलात्प्रयोजनांतराण्यनुमीयंते । अनेकप्रयोजनोद्देशेन संज्ञाविधानस्यौचित्यात् । मिदेर्गुणः ऋच्छेर्गुण इत्यादीनि । माधवस्त्वाह-ऋइउएषामरेदोभिः सह सावर्ण्याप्रसिद्धेः एषां स्थानेऽरादिविधायकस्य विधेरनुपलंभात् । लाभे वा तत्र प्रयोजनादर्शनात् । इदं सूत्रमकृत्वा गुण इत्यस्य स्थाने द्युरेदो र इति न्यासौचित्याच्च । एतेन सावर्ण्या-

दृऋइउएओ एषां स्थाने विधीयमाना वृद्धिसंज्ञा इति निरस्तम्। उरण्रपर इदं सूत्रं शक्यमकर्त्तुं कथं इत्थम् अरलेङ्गुणः,वृद्धिरारालैच् इति सूत्रयितव्यम् । अथातोगुणसंज्ञां विना सभवतीति कथम् । शृणु । अतो गुणे इत्यत्र अ गुणे इति छेदः । अकारे गुणे चेत्यर्थात् । नच आकारेऽतिप्रसंगः । एकमात्रावर्णमात्रस्य सामान्यस्य निर्देशात् । सादृश्यस्याप्येकमात्रत्वेन विवक्षणाच्च। अपदांतादत आति परे अतो लोप इत्यस्मिन्साति वा अकः सवर्ण इति वाऽतो गुण इति वा विशेषाभावाच्च । यद्वा अतो गुण इत्यस्य स्थाने अतोदेङीति सूत्रमस्तु।ऋत इद्धातोः,उदोष्ठ्यपूर्वस्येति तु ऋत इद्धातोः,उदोष्ठ्यपूर्वस्येत्येवंसूत्रणीयम्।ऋत उदित्यस्य स्थाने ऋत उरिति पाठ्यं गम्ॡ शक्ॡ इत्यस्यानुकरणे उरो रेफस्य कपिलिकादिगणस्याकृतिगणत्वाल्लत्वं बोध्यम्। ख्यत्यात्परस्येत्यत्रापि सर्वादेशे उरि कृते सिद्धं सख्युः पत्युरिति । आव्रश्चपृधामीदित्यत्र नामिनः यत्र ब्रूयाद्गुणो न भवति तत्र नामिन इति षष्ठ्यंतमुपस्थितं बोध्यम्।कर्त्ता चेता नामिन इत्युक्तेर्नेह पाता उंभितेति । ननु नास्त्येतत्प्रयोजनं ज्ञापके नैतद्व्यावृत्तिसिद्धेः।तथाहि आतो ड इति डित्त्वेनाकारस्य गुणो नेति ज्ञापितं तद्धि डित्त्वं गोद इत्यादौ टिलोपार्थं क्रियते यद्याकारस्य गुणः स्यात्तर्हि अदेइति वा यतइति वा लोपेनगोद इत्यादिसिद्धौ किं डित्त्वेन दानपात्रे इति निर्देशाच्च।नच नैतज्ज्ञापकम्।आकारस्य गुणोऽरेदोनामन्यतमः प्राप्नोति तथा चोक्तरूपा सिद्धिरिति वाच्यं सूत्रे एकाराद्वा परभागे एदोतोत इति लोपेन अकारस्यापि प्रश्लेषात् । तथा चाकारस्याकारो गुणो भविष्यति सादृश्यात् । एवं सिद्धे डित्त्वं ज्ञायमानो गुणो नेत्यस्य अकारस्य तु पचत्यादावुपधाया लघोरिति गुणे सत्यसति वा रूपे विशेषो नास्ति । चिकीर्षितेत्यादौ तु यत इति लोपेन भाव्यम् ।हसस्य तर्हि गुणः प्राप्नोति ततश्चेहितेत्यत्र हकारस्य कंठ्यस्याकारः स्यात् । उंभितेत्यत्र भकारस्यौष्ठ्यस्य ओकारः नैष दोषः । तनोतेर्ड उः सवश्चेति डित्त्वाज्ज्ञापकात् । संबंधे कर्तृसाधनयोरिति निर्देशाच्च । न हसस्य गुणो भविष्यति । किंच यथा यमायपेस्येति । अनुस्वारस्य परसवर्णविधिः सुसदृशो विषयेऽङ्कित इत्यादौ चारितार्थः । कुंडं रथेनेत्यादौ न भविष्यति । ननु नामिन इत्यस्यारंभे प्रत्याख्याने च गायति ग्लायतीत्यादौ संध्यक्षराणां गुणः प्राप्नोति । सत्यम् ।

ऐकारोपदेशसामर्थ्यान्न भवति । अन्यथा एकारमेवोपदिशेत् । मात्रालाघव-विरहेऽपि प्रक्रियालाघवसत्त्वात् । एकारस्य ओकारस्य च सत्यसति वा गुणे विशेषो नास्ति । औकारान्तस्तु धातुर्नास्ति । अस्तु वा, औकारोपदेश-सामर्थ्यान्न भविष्यति । नचैवमायादेशोऽपि न स्यादिति वाच्यम् । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति न्यायात् । गुणं प्रति हि ऐकारोपदेशोऽनर्थकः ग्ले इत्यस्यापि सुपठत्वात्। आयादेशस्य तु निमित्तमेव । नच ग्लाय् इत्येव पठ्यतामिति वाच्यम् । तथा सति हि त्वया ग्लायते इति न स्यात् । यकारद्वयश्रवणप्रसंगात् । जग्ला-वित्याद्यसिद्धिप्रसंगाच्च स्यादेतत् । संध्यक्षराणामित्यात्वमपि तर्हि बाध्य-ताम् नह्यै उपदेश आत्वस्य निमितं ग्ले इत्युपदेशेऽपि तस्य सुकरत्वात् । अपि गुणेन अनप्यात्वेन ऐकारापहारे प्राप्ते ऐकारोपदेशसामर्थ्येन गुणात्वयो-र्मध्ये कतरद्बाध्यम् । कतरन्नेत्यत्र विनिगमनाविरहेणोभयबाधप्रौढ्यात् । न चैवमात्वविधिरनवकाश इति वाच्यम्।'धेट्पाने' 'शो तनूकरणे'इत्यादेरवका-शस्य स्पष्टत्वात् । अत्राहुः । एदोतोरा इति वक्तव्ये यत्संध्यक्षरग्रहणं कृतं तत्सामर्थ्यादैकारस्याप्यात्वे किं च अन्यतरबाधेनैव संभवे उभयबाधकल्पन-मन्याय्यं नच विनिगमनाविरहः त्राणाद्या इति त्रैङः कृतात्वनिर्देशे-नात्वाबाधज्ञापनात् । तदित्थं गुण इत्यादिभिर्यो गुणो विधीयते स धातोरिति षष्ठीनिर्देशादत्यस्य प्राप्तः प्रागुक्तज्ञापकादिभिरात्संध्यक्षरहस्वे-भ्यो व्यावर्तित इउऋषु विश्राम्यति तस्माद्व्यर्थं नामिन इति । अत्रोच्यते । इहितेत्यादौ हसस्य गुणोऽपरिहार्य्यः। नच तनोतेर्ज्ञापकं ङित्त्वं विना तितउ-रित्यस्यासिद्धेः । नास्य हि गुणो विधीयमानोऽरेदोतामन्यतमस्स्यात् । नवाकारप्रश्लेषः अकारप्रश्लेषे प्रमाणाभावात् । अस्तु वाऽकारप्रश्लेषः। तथापि न कारस्याकारो वा गुणः स्यात् । अरेदोतो वा सुप्रदृशस्यैकस्याप्यभावादरे-दोतः स्युरकारश्च ततश्चानिष्टप्रसंगः तद्व्यावृत्त्या चरितार्थं ङित्त्वं कथं ज्ञापकं भवेत् । किंच उणादीनामव्युत्पत्तिपक्षे ज्ञापकस्यासत्त्वात् । उणादीनामस्मि-न्ग्रंथेऽव्युत्पादनाच्च । क्लिष्टज्ञापकबलेन सिद्धप्रत्याख्यानस्यानौचित्यात् । इदमत्रावधेयम् आरै औ वृद्धिरित्यतः सूत्राद्वृद्धिग्रहणमिहानुवर्तनीयं ततश्चा-यमर्थः । यत्र ब्रूयाद्वृद्धिर्भवति तत्र नामिन इति षष्ठ्यंतं पदमुपतिष्ठते इति ।

तेन मृजेर्वृद्धिरिति वक्ष्यते तत्र नामिनः स्थाने वृद्धिः सिध्यति । आदिस्व-रस्य ञ्णिति वृद्धिरित्यत्र तु स्वरस्येति स्थानिनो निर्देशान्नेयं परिभाषोप-तिष्ठते । अत उपधाया इत्यत्राप्यत इति स्थानिनिर्देशः धातोर्नामिन इत्यत्र तु नामिन इति न वक्तव्यम् । एतत्परिभाषाबलेनैव तल्लाभात् । स्यादेतत् । पथ्यादीनां सावाकारो विधीयते । आसावित्यनेन क्वचिदारित्यार् ऐ च मन्वादेरित्यैः, दिव औरित्यौकारः । ऋ अर् धेररित्यर् तत्रापीयं परिभाषो-पतिष्ठेत ततोऽनिष्टप्रसंग इति । अत्रोच्यते । संपूर्णं पूर्वसूत्रद्वयमनुवर्त्य वृद्धि-रित्यनेन शब्देनारैऔतो गुण इत्यनेन यत्रारेतो विधीयेते तत्र नामिन इति पदमुपतिष्ठत इति व्याख्यानान्नोक्तदोषः । एतेनेको गुणवृद्धी इत्यत्र गुणवृद्धि-ग्रहणं प्रत्युक्तं प्रसक्तस्यानुच्चारणं लोपसंज्ञमिति वक्तव्यं संज्ञाप्रदेशा हसेपः, सेर्लोपः, संयोगांतस्य लोप इत्यादयः । अर्थस्यैषा संज्ञा न तु शब्दस्य महा-संज्ञाकरणसामर्थ्यात् । नन्वेवं प्रदेशेष्वेव लोपनं लोप इति लौकिकोर्थो ग्रही-ष्यतेऽपत्यं देवतेतिवत् तत्किं संज्ञयेति चेन्न । प्रसक्तस्येत्येवं रूपविशेषला-भाय संज्ञारंभात् । अन्यथा दधि मध्वित्यादौ तुगागमप्रसंगात् । अस्त्यत्र क्विपोनुच्चारणं तच्च लोप इति प्रत्ययलक्षणापत्तेः । ननु प्रसक्तस्येत्युक्तेपि ग्रामणीरित्यत्र वृद्धिः स्यात् कार्येणः प्रसंगसत्त्वादिति चेन्न । क्विप्पक्षे तेनाणः प्रसंगस्य बाधितत्वात् । इदमत्र वावधेयम् । मास्तु संज्ञाविधानं प्रदेशेष्वेव यौगिकार्थो ग्रहीष्यते । नच प्रसक्तस्येत्येवं रूपविशेषलाभो न स्यादिति वाच्यम् । 'लुप्लृ छेदे' इत्यस्य धातोःप्रसक्ताभावार्थकत्वात् । लोके हि वृत्ति लोपो वंशलोपो विद्यालोप इत्यादिव्याहारो नाप्रसक्ते भवति लोप इत्यस्यादर्श-नसामान्यमर्थस्तस्य प्रसक्तानुच्चारणरूपविशेषे लक्षणा वास्तु अविभक्ति नाम, स्त्रियांयोः, वुःसेः इत्यादिलिंगान्यपि संति । एतेनादर्शनं लोप इति सूत्रं प्रत्याख्यातम् । अनुच्चारणविशेषस्य लोपशूसंज्ञाविशिष्टत्वं च तस्य कार्यां-तरप्रवृत्तिप्रतिबंधकत्वं स्वप्रवृत्यनंतरं कार्यांतरप्रवृत्तिप्रतिबंधकस्यानुच्चारण-स्य लोपशूसंज्ञेति निष्कृष्टोऽर्थः संबंध आधारभावेऽति लिंगात्तत्तत्कार्यप्रति बंधनाय लोपस्यैव शांतत्वेनाश्रयणाद्गम्यते । एतदिति माधवः । संज्ञाप्रदेशाः य्वोर्लोपश्वा, आदबेलोपशू, नाम्नोनोलोपशित्यादयः । अत्रेदमवधेयम् । मास्तु लोपशूसंज्ञालोपशब्देनैव प्रदेशेषु व्यवह्रियताम् । न च ता इह तस्मा इदं देवा अ-

त्रेत्यादौ लोपे कृते कार्यांतरं प्रवर्तेतेति वाच्यम्।अंत्यात्पूर्व उपधा,अत उपधायाः संबंध आधार आचार उपमानादित्यादिनिर्देशेभ्यो लोप आदेत लोप इत्यादिभिर्लोपे कृते कार्यांतरं न प्रवर्त्तत इति ज्ञापनात् । नाम्नो न इति लोपे कृते विभक्तिकार्यं न प्रवर्तते पंचस्वित्यादिनिर्देशात् । प्रत्ययादर्शनं लुक्संज्ञमिति वक्तव्यम्।इयमप्यर्थस्यैव संज्ञासज्ञाप्रदेशाःनपुंसकात्स्यमोर्लुक्, अव्ययाद्विभक्तेर्लुगित्यादयः विधिप्रदेशेषु सूत्रशाटिकावद्भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः। विशेषविहिते अप्येते संज्ञे लोपसंज्ञां न बाधेते लोके संज्ञायाः संज्ञांतरस्य बाधकत्वादर्शनात् । ननुमाभूल्लुक्संज्ञा प्रदेशेषु लोपसंज्ञयैव व्यवह्रियताम्। नच नपुंसकात्स्यमोर्लोप इत्येवं सूत्रेणांत्यस्यैव लोपः स्यात् । लुक्संज्ञायां सत्यां तु संपूर्णस्य प्रत्ययस्यानुच्चारणं सिध्यतीति वाच्यम् अल्लोपः स्वरे इत्यादितो लोप इत्यनुवर्तमाने पुनर्लोपग्रहणात्संपूर्णस्यैवानुच्चारणसंभवात्। न वयमित्यादिनिर्देशाच्च । उच्यते । लुकि न तन्निमित्तमिति विशेषं वक्तुं संज्ञाया आवश्यकत्वात् । लोपशब्देन व्यवहारे तु राजा दंडीत्यादाविव पंच सप्तेत्यादावपि नोपधाया इति दीर्घः स्यात् । लग्नहुत्वे इत्यादौ लोप इत्यस्यानुवृत्तेरभावाच्च । लुकि न तन्निमित्तमिति न वाचनिकं किं तु अविभक्ति नाम नवपमित्यादौ दीर्घादर्शनाज्ज्ञापितम । अथवा पूर्वाचार्यसंज्ञा लुगिति सा गृहीता संज्ञिनमपि तेषामाक्षिपति संज्ञी च तेषां प्रत्ययादर्शनमेवेति विशेषावसायो भवति । यद्वा 'लुंच अपनये' इत्यस्मात्कर्त्तरि भावे वा क्विप् । ततश्च लुक्शब्दस्य अपनेताऽपनयनं वार्थः स्यमोर्लुग्भवति अपनेता भवति । अपनयनं वा भवति । स चाभाव एव फलितो भवति । इत्थं योगार्थेनैव सिद्धे संज्ञा न वक्तव्या । अस्मिन् पक्षे भृजां लुकीत्यत्र लुचीति पाठ्यम् । लुक्शब्दस्य चांतत्वात् ह्रस्वं लघुसंज्ञं स्यादिति वक्तव्यम्। संज्ञाप्रदेशा उपधाया लघोः अङि लघावित्येवमादयः । स्यादेतत्किमर्थं लघुसंज्ञा प्रणीयते । उपधाया ह्रस्वस्य अङि ह्रस्वे ह्रस्वः ह्रस्वस्य दीर्घ इत्येवं ह्रस्वसंज्ञयैव व्यवहारः सिध्यति । अत्रोच्यते अतिष्ठिपत् । वा अननंदत् । अससंजादित्यादावित्वदीर्घादिकं प्राप्नोति । नच गुरुसंज्ञया ह्रस्वसंज्ञा बाधितेति वाच्यम् । संज्ञायाः संज्ञांतरस्याबाधकत्वाभ्युपगमात् । तर्हि लघुसंज्ञापक्षेऽपि समानो दोष इति चेत्संज्ञाविधानसामर्थ्याद्गुरुसंज्ञायां सत्यां लघुसंज्ञा न प्रव-

न्ते अन्यथा ह्रस्वसंज्ञयैव सिद्धौ किं लघुसंज्ञया यैस्त्वसंयोगादिपरो ह्रस्वो लघुरिति पठ्यते तन्मतेऽत्र शंकैव नास्ति किं तु तेषामादिशब्दफलं मृग्यं संयोगे परे ह्रस्वं गुरु संज्ञमिति वक्तव्यम्, प्रयोजनं गुरोर्हसादित्यादि। शिक्षा भिक्षा । दीर्घं गुरुसंज्ञमिति च वक्तव्यम् । प्रयोजनम् । ईहा ऊहेत्यादावङ् । यत्तु विसर्गानुस्वारसंयोगपरो दीर्घश्च गुरुरिति कैश्चित्पठ्यते । तत्र विसर्गानुस्वारग्रहणफलं मृग्यम् छंदःशास्त्रे तत्सत्त्वेपि व्याकरणे तदलाभात् । ननु ह्रस्वदीर्घप्लुतेत्यत्र लघुदीर्घप्लुतेत्येवं सूत्र्यताम्, ह्रस्वसंज्ञा त्यज्यताम् । अत्र तु संयोगपरो लघुर्गुरुरिति सूत्र्यतां किं संज्ञाद्वयेनेति चेन्न । असस्वंजत् अतिष्ठिपदित्यादौ लघुसंज्ञाकार्यप्रसंगात् । नच गुरुसंज्ञाया अनवकाशत्वं, भिक्षेत्यादावङ्विधाने सावकाशत्वात्। यद्वा पूर्वाचार्यसंज्ञयात्र व्यवहारः । वस्तुतस्तु लौकिकोऽर्थो गृह्यते ध्वनिकृतं प्रयत्नकृतं वा लाघवं गौरवं चात्राश्रीयते। ह्रस्वस्याल्पमुच्चारणम् । अन्यस्य त्वधिकं हसस्य तु स्वरं विनोच्चारणमशक्यमिति न तत्रातिप्रसंगः । नामिनः स्वरस्येति परिभाषया वा निर्वाहः । एवं हि ह्रस्वं लघु, संयोगे गुरु, दीर्घं चेति त्रिसूत्रीव्यर्था । तपरः स्वसमानकालस्य सवर्णस्य संज्ञा न भिन्नकालस्येति वक्तव्यम्। अन्यथा जातिपरत्वात्सादृश्यपरत्वाद्वा निर्देशस्य भिन्नकालस्यापि ग्रहणे वायो आयाहीत्यादावेदोतोत इति प्राप्नोति । तः परो यस्मात् तात्परश्च तपर इत्युभयथा तंत्रेण व्याख्येयम् । तेन प्लुतस्य न गुणसंज्ञा इदं च ज्ञापकसिद्धं न वाचनिकम् । तथा हि चपा अबे इत्यत्रातोत्युरिति न कृतम् । अकारेणाकारस्यापि ग्रहणे आदबे लोपशिति बाधित्वाऽतोत्युरित्युत्वं स्यात्तदकरणात्तपरो भिन्नकालस्य नोपस्थापक इति ज्ञापितम् । अइएइत्यत्र ग्रहणमपि ज्ञापकम् । यद्वा तपरः स्वसमानेति न ज्ञाप्यं न्यायसिद्धत्वादस्यार्थस्य अइए इत्यादौ व्यापकस्यात्वरूपस्य सामान्यस्य निर्देशः । अतोत्युरित्यादौ तु व्याप्यस्य एकमात्रावर्णनिष्ठस्य आ सावित्यादौ तु द्विमात्रावर्णमात्रनिष्ठस्य । त्यदादेष्टेरः स्यादौ आतोनपीत्यादावप्येवं दादेरिः नाम्नोय ईचास्य इतोऽत्पंचास्वित्यादावप्येवम्।इयं उ वमित्यादौ व्यापकस्य एअयित्यादावपि तपरत्वं तु व्यर्थम्।एतेन तपरस्तत्कालस्येति प्रत्याख्यातम् । उपसर्गादृति धातौ, ऋत्यकः, ऋत उदित्यादौ लृकारग्रहणं न स्यादिति चेत्सत्यम् । लृऋवदित्यतिदेशः कर्तव्यः,

सचास्माभिरपि कर्तव्यः । तत ऋतो ङ उरित्यादौ संनिहितं भवति घेर-
रित्यादावलग्रहणं च कर्तव्यम् । तेन गमा गमन्तौ गमन्त इत्यादि सिद्धेः ॥

## स्वरानन्तरिता हसाः संयोगः ॥

अन्तरगादित्यन्तरितः तद्भिन्नोऽनन्तरितः स्वरैऽनन्तरिता येषां ते स्व-
रानन्तरिताः । केचित्तु अन्तरमिता अन्तरिताः तद्भिन्ना अनन्तरिताः स्व-
रेणान्तरिताः स्वरानन्तरिताः । हलादित्वादन्तरशब्दस्याऽकारस्य लोप
इत्याहुः । माधवस्त्वन्तरं विवरं वर्णशून्यः कालः तज्जातं येषां तेन्तरिता
इत्याह । सर्वत्र पक्षे स्वरशब्द इतशब्दश्च व्यर्थः । अनन्तरा हसाः संयोग
इत्येतावतैवेष्टसिद्धेः । अन्तरशब्देन छिद्रवाचिना बहुव्रीहौ निश्छिद्रा इत्यर्थ-
लाभात् । छिद्रं तु हसानां मध्ये विजातीयस्य स्वरस्य प्रवेशेन भवति ।
आधेयप्रधानेनान्तरेत्यव्ययेन सह बहुव्रीहावपि हसानां मध्ये आधेयस्य स्व-
रस्य निषेध्यस्य लाभात् । अनन्तरा इति किं मनसमित्यत्राकारेण व्यव-
धानेऽपि सकारमकारयोः संयोगसंज्ञा स्यात् ततश्च स्कोराद्योश्चेति सलोपः
स्यात् । हसा इति किं । तितउभ्याम् । अत्र तनोतेर्डउः सन्वच्चेति डउप्रत्यय
औणादिकः व्यस्तोच्चारणसामर्थ्यात्सन्धिर्न यदि हि स्वरयोरप्यनन्तरयोः
संयोगसंज्ञा स्यात्तर्हिं संयोगान्तस्येत्युकारलोपः स्यात् । महासंज्ञाकरणम-
न्वर्थसंज्ञाविज्ञानार्थं संयुज्यतेऽस्मिन्समुदाये वर्ण इति । तेनात्र समुदाये
वाक्यपरिसमाप्तिर्न तु गुणवृद्ध्यादिसंज्ञावत् प्रत्येकम् । यदि प्रत्येकं स्या-
त्तर्हि ईषत्करोतीत्यत्र ककारसंनिधौ दकारस्य संयोगत्वात्संयोगान्तलोपः
स्यात् । शक्तावस्तेत्यत्र झसे तकारे परतः स्कोरिति लोपः स्यात् । हसा
इति जातौ बहुवचनम् । विवक्षितं वा तेन द्वयोरपि संयोगसंज्ञा भवति ।
अतः शिक्षेत्यादौ गुरोर्हसादित्यङ् । यत्र तु बहवो हसाः संश्लिष्टास्तत्र द्वयो-
र्बहूनां वा विशेषेण संज्ञा । यदि तु बहूनामेव स्यात्तर्हि संस्वर्यत इत्यत्र
गुणोर्त्तीति गुणो न स्यात् । गोमान् करोतीत्यत्र संयोगान्तलोपो न स्यात् ।
यद्वा पूर्वाचार्यसंज्ञायाः प्रदेशेषु ग्रहणम् । अथवा संयोगान्तस्य लोप इत्यत्रो-
क्तयोगार्थस्यैव ग्रहः । नच स्वरहससमुदायेतिप्रसङ्गः । पञ्चसु जश्शसोः शिः
त्यदादेष्टेरित्यादिनिर्देशेन स्वरहससमुदायस्य संयोगशब्देनाग्रहात् । अन्यथा
संयोगान्तस्येत्युकारादिलोपः स्यात् । नापि स्वरसमुदायेतिप्रसङ्गः । अइए-

ण्वे औ यू इत्यादिनिर्देशैस्तदभावज्ञापनात् । अन्यथा संयोगान्तस्येत्यनेनान्त्यस्य लोपं निर्दिशेत् । अइकौ मत्वर्थ इति वार्तिकनिर्देशोऽप्यत्र लिंगम् । अतः परिशेषात् हससमुदायस्यैव संयोगशब्देन ग्रहणंभवतीति नार्थः संज्ञारम्भेण हलोनन्तराः संयोग इति सूत्रं शक्यमकर्तुम् । संयुज्यन्ते वर्णा अस्मिन्निति संयोगशब्दस्य योगार्थत्वेन निर्वाहात् । ननु उक्तयोगेन निर्वाहः अव्यवहितोच्चरितवर्णसमुदायो यौगिकार्थः संयोगशब्दस्य । स च त्रिविधः । हलामेव अचामेव वा अज्झलामेववेति । तत्राद्य एव संयोगशब्दस्येष्टोऽर्थोनान्त्यौ । योगस्तु तत्राप्यतिव्याप्त इति चेन्न । दोषाऽभावात् । तथाहि संयोगे गुर्वित्यस्य संयोगे परे ह्रस्वं गुरुसंज्ञमित्यर्थः । नच ह्रस्वात्परोऽक्षरसमुदायः संभवति तितउशब्दादौजश्शसोः परतः संभवेपि इष्टत्वात्सिद्धत्वाद्वा पूर्वसर्णगुणाभ्यां भाव्यमित्यदोषः । हल्समुदायपरत्वं त्विष्टमेव । अज्झल्समुदायोवशिष्यते । स तु न संयोगशब्देन गृह्यते । अच्समुदायश्च वान्यस्य संयोगादेरित्यत्रादंतस्यांगस्याक्षरसमुदायादित्वं बाधितम् । अज्झलादित्वं च हलूमात्रादित्वसंभवात् । तथा संयोगादेरातो धातोर्य ण्व त इत्यत्र य ण्व त आदंतस्याच्समुदायादित्वं बाधितम् । अज्झल्समुदायादित्वं च हल्समुदायादित्वमिष्टमेव । एवं सर्वत्र संयोगादिग्रहणेषु संयोगशब्दस्ययौगिकत्वेपि हल्समुदायवृत्तितैव संभवति । नाच्समुदायवृत्तिता, असंभवात् । नाप्यज्झल्समुदायवृत्तिता । आदिग्रहणवैयर्थ्यापातात् । संयोगस्येवेत्येव सुवचत्वात् । ननु रामः रामावित्यादौ संयोगान्तलोपः स्यादज्झल्समुदायस्य संयोगत्वादिति चेन्न । संयोगग्रहणसामर्थ्यात् । अन्यथा अन्तस्य लोप इत्येव ब्रूयात् । पदस्येत्यनुवृत्या पदान्तस्य लोप इत्यर्थसम्भवात् । किंच एङः पदान्तादति, प्लुतप्रगृह्या अचीत्यादिसूत्रसंदर्भस्य ज्ञापकत्वात् । किंच ससजुषोरुः, खरवसानयोर्विसर्जनीयः, अणोप्रगृह्यस्यानुनासिकः, वावसाने, झलां जशोन्ते, क्विन्प्रत्ययस्य कुः, चोः कुः, हो ढः, नहो धः, इतश्च लोपः परस्मैपदेषु, स उत्तमस्य, नित्यं ङितः,इतश्चेत्यादिसूत्राविलयापातान्नाज्झल्समुदायोत्र संयोगशब्दवाच्यः । अच्समुदायस्तु पदांते न संभवति।गौरी आवित्यादावपि संयोगान्तस्य लोप इत्यस्यासिद्धत्वाद्यण् । हरी विष्णू इत्यादौ पूर्वसवर्णदीर्घः । तितउ इत्यत्र तुतितउपरिपवनमिति भाष्यप्रयोगाल्लो-

पाभावः । यद्वा वान्यस्यसंयोगादेरिति, संयोगादेरातो धातोर्य एव न इत्यादौ निर्णीतः । संयोगशब्दार्थो हल्समुदायरूपोऽन्यत्रापि स एव एकत्र निर्णीतोऽपरत्र शास्त्रार्थ इति न्यायात् । तत्रोक्तप्रयोगाः । वल्गासु वीप्सास्वित्यादि निर्देशाश्चानुकूलाः । यद्वा हलोनन्तरा इति सूत्रं मास्तु संयोगादेरित्यत्र हलादेरित्येवास्तु हलावादी अस्येति विग्रहः । एवं संयोगान्तस्येत्यत्र हलन्तस्येति पाठ्यं हलावन्ते यस्येति प्रत्येकं संयोगसंज्ञापक्ष इव सर्वत्र निर्वाहः संभवति । मुखनासिकाभ्यामुच्चार्य्यमाणोऽनुनासिक इति वक्तव्यं मुख सहिते नासिके मुखनासिके ताभ्याम् । अत्र द्विवचनं छिद्रद्वयाऽभिप्रायेण। केचित्तु मुखं च नासिका चेति द्वन्द्वमाहुः । नन्वेवमेकत्वक्लीबत्वे स्याताम्। प्राणितूर्यसेनाङ्गानां समाहार एव द्वंद्व इति परसिद्धान्तस्य स्वीकर्तुमुचितत्वादिति चेन्न । मुखनासिकावचन इति नासिकास्तनयोरिति च निर्देशैस्तैरपि तस्याऽनित्यत्वज्ञापनात् । अत एव कौटिल्यं कुचनेत्रयोः करचरणाधरदंतेषु रागस्त इत्यादिप्रयोगाः । माधवस्तु मुखं च नासा च मुखनासं तदस्त्याश्रयत्वेन ययोरुच्चारणयोस्ते मुखनासिके । मत्वर्थे इकस्ताभ्यामुच्चार्यमाण इत्याह । तन्न । उच्चारणयोर्वर्णोच्चारं प्रति करणत्वस्याप्रसिद्धत्वात्। स्थानस्याकरणत्वप्रसङ्गाच्च । मुखग्रहणं किम् । अनुस्वारस्यैव माभूत् । नासिकाग्रहणं किम् । कचटतपानां माभूत् । वस्तुतस्तु व्यर्थमिदं वचनम्। अनुनासिकसंज्ञाया अत्र प्रयोजनाभावात् । सति वा प्रयोजने नासिकामनुगतोऽनुनासिक इति योगेन अनुपश्चान्नासिका व्याप्रियते यस्मिन् नासिकायाः पश्चान्मुखं व्याप्रियतेयस्मिन्निति वा योगेन गतार्थत्वात् । अनुनासिको हि वर्णः कृत्स्नो मुखेनोच्चार्य्यते नासिकया चेत्येके । पूर्वो भागो मुखेन परो नासिकयेत्यन्ये । तद्वैपरीत्येनेत्यपरे । एतेन मुखनासिकावचनोऽनुनासिक इति पाणिनीयसूत्रंअनुनासिका ङञणनमा इति कातंत्रसूत्रं प्रत्याख्यातम् ॥

## कुचुटुतुपुवर्गाः ॥

एते वर्गसंज्ञाः स्युः । संज्ञाप्रयोजनं तु वर्ग्यो वर्ग्येण सवर्ण इत्यादि ननु कचटतपा वर्गा इत्येव कथं नोच्यते किमुकारेणेति चेच्छृणु । उकार उदित्सवर्णं गृह्णाति न वर्णमात्रमिति परिभाषाज्ञापनार्थः । तस्यास्त्वयमर्थः ।

उत् उकार इत् अनुबंधो यस्य वर्णस्य स उदित् स सवर्णस्य संज्ञा भवति न वर्णमात्रस्येति । तेन चोः कुरित्युक्ते पञ्चानां ग्रहणं भवति । ननु ककारादीनां पञ्चानां सवर्णसंज्ञा केनेति चेत् । अस्मादेवोदित्करणाज्ज्ञापकादिति गृहाण । यावता हि विनोदित्करणमनुपपन्नं तत्सर्वमनेन ज्ञापनीयम् वर्ग्याणां परस्परं सवर्णसंज्ञां विना नोपपद्यते । उदित्करणमिति । तदपि ज्ञापयति । अथवा ह्रस्वदीर्घप्लुतेत्यत्र वर्ग्यौ वर्ग्येणेति वक्तव्यं सवर्णौ इत्यनुवृत्त्या वेत्युक्तं प्राक् यत्तु क्रियायुक्त इत्यादिलिङ्गादुदितः सवर्णानां ग्राहका इति ज्ञायते । गुजेर्जस्य गः कथमन्यथेत्याहुः । ननु खसे चपा इति जस्य चकारे चोः कुरिति ककारेण निर्वाहात् । केचित्तु प्रसिद्धे वर्णपाठे पञ्चमो वर्णो भवत्युकारस्तदनुबन्धकरणात्तत्तदवधिकाः पञ्च पञ्च वर्णा गृह्यंते । नात्र सवर्णसंज्ञोपयुज्यते इत्याहुः । माधवस्तु शास्त्रान्तरे ये वर्गसंज्ञास्तेषामेवात्र कुचु टुतुपु इति संज्ञा विधीयन्ते । अत्र पक्षे स्कोरित्यादौ केवलानां ग्राहकत्वं तु संज्ञाविधानसामर्थ्यान्न चजोः कगाविति पृथङ्निर्देशाद्वेत्याह । इदं तु पूर्वेण विरुद्धं भेदग्रहणेनैवास्यार्थस्य सिद्धेरुक्तत्वात् । अस्य वचनस्य वैयर्थ्यापातात् । नहि सूत्रेण सिद्धे वार्त्तिकारम्भो युज्यते । वस्तुतस्तु व्यर्थमिदं वचनं कुहोश्चुरित्यादौ उदित्सवर्णं गृह्णाति न तु वर्णमात्रमिति परिभाषया निर्वाहात् । इयं च न शादित्यनेन ज्ञापिता । तथाहि प्रश्नः अश्नातीत्यादौ चुत्वनिषेधार्थं हि तत् । न चोदितः सवर्णग्राहकत्वं विना तत्र चुत्वप्राप्तिरस्ति अतस्तोरित्यत्र तु शब्देन नकारस्यापि ग्रहणमस्तीति । तुक् युक् इत्यादावुकार उच्चारणार्थो न त्वित् । अन्यथाऽग्निचिदित्यादौ नुम्प्रसंगात् । यत्तु तेष्वकारः सुखमुखोच्चारणार्थत्वादित्संज्ञ इत्यभिहितम् । तच्चिन्त्यम् । एतेनोदित्सवर्णस्येति प्रत्याख्यातम्, शादित्यनेन ज्ञापितयोक्तपरिभाषया गतार्थत्वात् । ते वर्गाः पञ्च पञ्च पञ्चेत्यपनीय तस्य स्थाने कुचुटुतुपु इति सूत्रं लाघवार्थं प्रणेयम् । पञ्चमस्वरस्योकारस्य ग्रहणात्प्रत्येकं पञ्च वर्णा ग्राह्याः । कादीनीत्यनुवर्त्तनीयं तत्प्रत्याख्याने तत्रैव पाठ्यम् कादीनि पञ्च पञ्च कुचु टुतुपुसंज्ञकानि स्युः वर्गादिवर्गांतस्थाने कादिकाद्यंतमिति पाठ्यम् । हाटकेशपुरस्थायी विनायकसुतोऽकरोत् । रघुनाथाभिधो व्याख्यां संज्ञापादस्य

नागरः ॥ १ ॥ विहिता बहुभिर्वृद्धैष्टीकाः सन्ति सहस्रशः लघुभाष्याभिधा त्वेषां तनोतु विदुषां मुदम् ॥ इति संज्ञाप्रकरणम् ॥

**षष्ठीनिर्दिष्टस्य य आदेशः स तदन्तस्य भवतीति वक्तव्यम् ।**

ऐ सख्युरित्यैकारः । सखिशब्दस्यान्त्यस्यैकारस्य भवति । षष्ठीनिर्दिष्टस्येति किम् । जसीति इकारोन्त्यस्य माभूत् । ङसिभ्यसोः स्तुः जश्शसोः शिरित्यादिना ज्ञापितमिदम् । नत्वपूर्वं वचनम् । तत्र हि शित्त्वमंत्यादेशं बाधित्वा सर्वादेशो यथा स्यादित्येतदर्थं कृतम् यदि षष्ठीनिर्दिष्टस्यादेशोन्त्यस्य न स्यात्तर्ह्यंतरेणापि शित्त्वं सर्वादेशः सिद्ध इति किं तेनेति शित्त्वं तां ज्ञापयति । अस्थ्नास्थ्नामिति निर्देशोपि ज्ञापकः । **ङिदन्तस्य भवतीति वक्तव्यम् ।** त्रेरयङ् त्रयाणाम् । नन्वंतरेणाप्येतद्वचनं पूर्वपरिभाषयांत्यस्यैव भविष्यतीति चेन्न । अनेकवर्णः सर्वस्येति वक्ष्यमाणबाधनेनास्यार्थवत्त्वात् । अनन्यार्थङित्वेऽयङादौ चरितार्थमिदं तातङि परेणानेकवर्णः सर्वस्येत्यनेन बाध्यते । ननूत्सर्गेणापवादस्य बाधो न युक्त इति चेत्सत्यम् । सर्वादेशेऽपि तातङि गुणवृद्धिप्रतिषेधः संप्रसारणं च प्रयोजनं संभाव्यते । तावता च किंचिद्विलंबितप्रवृत्तिकोयमपवादोऽप्यस्मिन्विषये उत्सर्गेण समकक्षतामापन्न इति युक्ते बाधः । अयङ्सुगौङादीनां ङित्त्वमेवास्याः सत्त्वे लिङ्गम् । ङित्त्वस्य फलांतरादर्शनात् । नच श्रवणार्थ एव स किं न स्यादिति वाच्यम् । नित्यानां शब्दानां व्युत्पाद्यमानत्वात्तत्र तस्यादर्शनात् । क्रियायुक्त इति ज्ञापकाच्च । अन्यथा क्रिया इति न सिद्ध्येत् । **शिदनेकवर्णश्च सर्वस्य भवतीतिवाच्यम् ।** जश्शसोः शिः । वारीणि । अन टौसोः । अनेन । शकारेणानुबंधेन श्यादीनामनेकवर्णत्वे सिद्धे शिद्ग्रहणं नानुबन्धकृतमनेकवर्णत्वमिति ज्ञापनार्थं ज्ञापकसिद्धमिदम् । तथाहि संध्यक्षराणि पराणीत्यादिनिर्देशः शिदंशे ज्ञापकः । जश्शसोःशिश्चेत्सर्वस्य न स्यात्तदोक्तनिर्देशोऽनुपपन्नःस्यात् । साधननिर्द्धारण उपमानकारकात् । इत्यादिनिर्देशोऽनेकवर्णांशे ज्ञापकः । ननु युवु एतयोरुकार इत् पकारवकारयोरेवानाकावादेशाविति चेन्न । पचनो नन्दनेत्यादौ नुमीपोः प्रसंङ्गात् । नच युव्वोरुकार उच्चारणार्थोऽवशिष्टस्यैवादेश इति वाच्यम् आतो युग्भुवोवुक् इत्यादीनामप्यादेशप्रसक्तेःनन्वर्थवद्ग्रहणेनानर्थकस्येति न्यायादेतयोर्न भविष्यति तर्हि वृक्षवित्यत्र

धातोर्वस्य स्यात् । प्रत्ययाप्रत्यययोः प्रत्ययस्येति परिभाषया न भविष्यति। इत्थमुक्तनिर्देशो न ज्ञापकः तर्हि सस्वर इति निर्देशो ज्ञापकः । नहि सहादेः सादिरिति सादेशस्य सर्वादेशतां विना सस्वर इत्युपपद्यते । तथाऽद्युसीति निर्देशोऽपिज्ञापकः।नहि अन उसित्यादेशस्य सर्वादेशतांविना द्विरुक्तात्पर उस्स म्भवति । अनाकारेण व्यवधानात् । यत्तु शिद्ग्रहणं नानुबन्धकृतमनेकवर्ण-त्वमित्यस्य ज्ञापकमित्युक्तम् । तत्तु अनुबन्धा एकान्ता इति पक्षाश्रयणेन अनेकान्ता इति पक्षे तूक्तज्ञाप्यस्य प्रयोजनाभावः। तथाहि उच्चारणावस्था-यामेवांतरंगतयेत्संज्ञा । अत एवोच्चरितप्रध्वंसिनोऽनुबन्धाः स्मर्यमाणाः संत एव कार्यं निर्वाहयंतीति सिद्धांतः । तथा नानुबंधकृतमनेकवर्णत्वमि-त्यस्य ज्ञापनं व्यर्थम् । शिद्ग्रहणं च सुतरां शेः शकारोच्चारणसामर्थ्यात्सर्वा-देशतायाः प्राङ्नलोपः । ननु आह वेदेत्यत्र णवित्यंत्यादेशः प्राप्नोति । मैवम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । य्वोर्लोपशित्यत्र षष्ठीनिर्दिष्टस्येत्य-स्यानित्यत्वस्य ज्ञापयिष्यमाणत्वात् । यत्तु कार्यायेदित्यत्र वृत्तौ प्रत्ययाद्य-तिरिक्त इति विशेषणमुक्तं तत्पक्षद्वयेऽपि व्यर्थम् । एतेनाऽनेकाल्शित्सर्व-स्येति पाणिनीयसूत्रे शिद्ग्रहणं प्रत्याख्यातं बोध्यम् । घ्वसोरेद्धावभ्यासलोप-श्चेत्यत्र वा सार्थकं बोध्यमिति दिक् । **टित्कितावाद्यन्तयोर्वक्तव्यौ ।** सिसतासीस्यपामिट् । भविता । रातो ञौ युक् । पाययति । अनन्यार्थे टित्कित्स्विदं प्रवर्तते । नेह। अटौ कुरुचरी । यक् चतुर्षु पूर्यते । अत्रेप्प्र-वृत्तिः । प्रयोजनं टस्य गुणावृत्तिश्च कस्य । यद्वाप्रत्ययविधौ नेयंपरिभाषा प्रवर्त्तते वक्ष्यमाणज्ञापकस्यागममात्रपरत्वात् इदमपि ज्ञापकसिद्धम्। तथाहि टिदंशे ज्ञापकम् । अत इति स्मट् । तस्मादित्यत्र रःसंख्याया इत्यत्र यट् । जवानामित्यत्र नुट् किदंशेऽपि कार्यायेत्यत्र ङेअगित्यक् ऐसख्युरित्यत्र ऋङ्के इत्यृक् वर्तमाने इत्यत्र मुगानेत इति मुक् । मिदन्त्यात्स्वराणां परो वक्तव्यः । स्वरणां मध्ये योन्त्यस्तस्मात्परो मित्स्यादित्यर्थः । स च पूर्व-स्यावयवो भवति । नुमयमः । ज्ञानानि यशांसि । पूर्वांतत्वान्नोपधाया इति दीर्घः सिध्यति। यदि परादिरभक्तोवा स्यात्तदा दीर्घो न स्यात् । परा-दित्वे वारिणे इत्यादौ ङितीत्येकारः स्यात् । अभक्तत्वे वहं लिहइत्यत्र मोनुस्वार इत्यनुस्वारो न स्यात् । इदमपि ज्ञापकसिद्धम् । सन्ध्यक्षराणीति

निर्देशो नुमःपूर्वान्तत्वं विनाऽनुपपद्यमानो ज्ञापको भवत्युक्तार्थस्य । तथा पचिनंदिग्रहादेरयुणिनीत्यत्र नंदीति कृतनुम्कस्य टुनादि समृद्धावित्यस्य निर्देशोऽपि ज्ञापकः । यत्तु कालापे आगमउदनुबंधः स्वरादंत्यात्पर इत्युक्तम् । तन्न । मुंचतीत्यादावव्याप्तेः । अत्र स्वरस्यांत्यत्वाभावात् । स्वरस्यांत्यात्पर इति तु युक्तम् । आगम इतित्वाधिकम् । उदनुबंध इत्यनेनैवेष्ट सिद्धेः । अंत्यात्पर इति स्थानकथनेनैवागमत्वावगमात् । नच प्रत्ययेऽति प्रसंगः । तत्र परत्वात् पर इत्यनेनैव बाधनात् । यत्तु उदनुबंध आगमस्य चिह्नमिति तन्न उदनुबंधस्य प्रत्ययेष्वपि सत्वात् किंच उदित्स्वराणामंत्यात्पर इत्येव सूत्रणीयम् एतीतीदिति यौगिकत्वेन अनुबंधशब्दस्य इच्छब्दस्य चैकार्थत्वात् । निर्द्धारणषष्ठ्येषा । स्वरादित्युक्ते स्वरस्य सर्वांत्यत्वमेव लभ्यते । न स्वरांतरापेक्षमंत्यत्वम् । तृतीयादौ तु परादिरित्यस्य स्थाने टादौ परादिरिति सूत्रणीयम् । लाघवात् । वारिणे वारिण इत्यादौ धुट् स्वराद्धुटि नुरित्यादिना नौ कृते ङेङसिङसोरलोपश्चेदोत्प्रसंगः । नोः परादित्वे नुसहितस्य ङेत्वाद्यनपायात् । यदागमा--स्तद्ग्रहणेन गृह्यंत इति न्यायात् । सप्तमीनिर्देशेषु पूर्वस्यैव कार्यं तच्चाव्यवहितोच्चारितं एवेति वक्तव्यम् । नियमार्थमिदम् । इ यं स्वरे इत्यत्र स्वरे इति भावे सप्तमी । अश्रूयमाणक्रियत्वाच्चान्तरंगस्यास्त्यर्थस्य लाभः । तेन स्वरे सति यकारो भवतीत्यर्थः । यद्वा गंगायां घोष इतिवदौपश्लेषिकाधारे सप्तमी तत्र सत्वं परस्येव पूर्वस्यापि संभवति । एवमुपश्लेषोऽपि तत्र युगपदेकस्य कार्यित्वनिमित्तत्वयोरसम्भवात् । दध्युदकं मध्विदमित्यादौ इकारोकारयोः पर्यायेण यकारवकारौ प्राप्तौ पूर्वस्यैवेति नियम्यते । तथा अग्निश्चिदत्रेति व्यवहितस्यापि प्राप्तोऽनन्तरस्यैवेति नियम्यते नारम्भणीयः । अत एव कालव्यवायेऽपश्लेषाद्यप्राप्तेः । संहितायामित्यधिकारः प्रत्याख्यातः । इत्थं हि परः संनिकर्षः संहितेत्यप्रयोजनकत्वाद्व्यर्थमिदमपि ज्ञापकसिद्धं न तु वाचनिकं ज्ञापकं तु य्वोर्धातोर्य्वादेः नॄणः लित्युषादेः स्वाम्यादिसखिपत्योरित्यादिनिर्देशः । अत्र हि पूर्वस्यैव व्यवहितस्यैव यादयो दृश्यंते तथा स नपुंसकं स धातुरित्यत्र स इति निर्देशः । त्यदादेष्टेरः स्यादावित्यत्वे सति संभवति । तच्च न लभ्येत । उदित इति लिंगाद्व्यवहिते

प्रवृत्तिः । यत्तु पूर्वेऽव्ययेऽव्ययीभाव इति पूर्वग्रहणं ज्ञापकं तन्न । पूर्वापरयोरविशेषेण प्राप्तौ नियमार्थं तत्स्यात् । यत्तु पूर्वपरसत्तायां संदिग्धस्यापि कार्यिणः परस्यामी अत्रेत्यादौ पूर्वस्थे स्वरे मकारव्यवधानात्संधेरभावेनामीत्यस्य वैयर्थ्यमिति माधवेनोक्तम् । तन्न । यदा परभागे स्वरस्तदा सूत्रस्य सावकाशत्वात् । नहि पूर्वस्मिन्नेवेत्यवधारणमस्ति पंचमीनिर्देशेपृत्तरस्यैव कार्यं तच्चाव्यवहितोच्चारिते एवेति वक्तव्यम् । उदः स्थास्तंभोः सलोप इति उत्थानमुत्तंभनमित्यत्र भवति । अन्यथा उदासते स्तंभ उद्गच्छत्यत्र माभूत् । न शात् । विश्नः प्रश्न इत्यत्र यथा स्यात् । तच् शाश्नमित्यत्र माभूत् । इह कारकविभक्तेरसंभवादत आदियोगलक्षणपंचमी । तत्राध्याह्रियमाण उत्तरशब्दवत्पूर्वशब्दोऽप्यविशेषादध्याह्रियेत । व्यवहितोऽपि च गृह्येत । तथा च उत्संस्थातेत्यत्राप्युदः स्थास्तंभोरित्यस्य प्रसंगः । इदमपि ज्ञापकसिद्धम् । तथाहि स नपुंसकं स धातुरित्यादिनिर्देशः । तत्र हि सेषादिति विसर्गलोपः कृतः । स च न लभ्येत सेषादित्यत्र पूर्वशब्देध्याह्रियमाणेऽतो ज्ञापक उक्तार्थस्य । **यत्र ह्रस्वो दीर्घः प्लुत इति शब्दैः स्वरो विधीयते तत्र स्वरस्य इति पदमुपतिष्ठते इति वाच्यम्।** षष्ठीनिर्दिष्टस्येत्यस्य नायमपवादः । शेषो वा । तेन शमां दीर्घ इत्यत्र शमादिभिः स्वरस्य विशेषणात् शाम्यतीत्यादि सिद्धं नपुंसकस्येत्यत्र तु स्वरान्तस्य नाम्न इति व्याख्यानात् । षष्ठीनिर्दिष्टस्येत्यन्त्यस्य ह्रस्वः । सोमपाम अतिरि अतिनु । नेह सुवाक् ब्राह्मणकुलं दूराद्धाने टेः प्लुत इत्यत्र टेःस्वरस्येति व्याख्यानात् । अग्निचि इत् सोमसु इत् से दीर्घः ये इत्यादौ स्वरान्तस्य धातोरिति व्याख्यानं जिगीषते । चेचीयते । नेह बिभित्सति बभिद्यते । ह्रस्वादिसंज्ञया विधाने नियमान्नेह द्यौः पंथाः सः ज्ञापकात् सिद्धमिदं तथाहि यजां यवराणां रुदादेश्चतुर्णामित्यत्र नामीति दीर्घस्य प्रवृत्त्यप्रवृत्तिभ्यां स्वरांतेषु नामीति दीर्घो न हसांतेष्विति ज्ञापितम् । एकदेशानुमतिद्वारा ह्रस्वप्लुतयोरप्येवं प्रसंगे सति सदृशतम आदेशःस्यादिति वक्तव्यम् । सादृश्यं चानेकधा स्थानार्थगुणप्रमाणभेदात् । स्थानतो यथा मध्वारिः अत्र झभेजबा

---

१ स्वरस्येति न व्याख्येयमिह दिव औः सुरथंत्यदादेरित्यादौ दिव् पथिन् त्यदादिशब्दैर्विधानसौत्वादेर्न तु वृद्ध्यादिशब्दैरिति ।

इत्यनेन दन्त्यस्य धकारस्य स्थाने दन्त्यो दकारः दैत्यारिः श्रीश इत्यत्रापि कंठ्ययोः कंठ्यस्तालव्ययोस्तालव्यः । अर्थतो यथा रूपवती भार्या यस्येत्यत्र पुंवद्वेत्यनेन पूर्वपदस्य स्थानेऽतिदिश्यमानः पुंशब्दस्तदर्थ एव भवति न तु यः कश्चित् । गुणतो यथा कुहोश्चुः । जुहोति घोषवतो नादवतो महाप्राणस्य संवृतकंठस्य तादृशो वर्गचतुर्थ एवादेशः । प्रमाणतो यथा अमुम् अमू अमून् । मादू इत्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घउवर्णः न्यायसिद्धमिदं न तु वाचनिकम् । तथाहि सभायामास्यतामित्युक्ते पण्डिताः पण्डितैः सहासते शूराः शूरैः कवयः कविभिः न तु संकरेण किं बहुना गवां संघं प्रति गौर्धावति अश्वोऽश्वानामित्यादिव्यवस्था तिर्यक्ष्वपि दृश्यते । तदेवं लोकतः सिद्धे किं वचनेनेति । एतेन स्थानेऽन्तरतम इत्यपि प्रत्याख्यातं बोध्यम् । स्थानानि तु अकुहविसर्जनीयानांकण्ठः, इचुयशानां तालु, उपूपध्मानीयानामोष्ठौ, ऋटुरषाणां मूर्द्धा, लृतुलसानां दन्ताः, एदैतोः कण्ठतालु, ओदौतोः कण्ठोष्ठम्, वकारस्य दन्तोष्ठम्, जिह्वामूलीयस्य जिह्वामूलम्, नासिकाऽनुस्वारस्य । गुणास्तु खस ≍क ≍पविसर्गाणां श्वासाः घोषविवारमहाप्राणाः हवानां तु घोषसंवारनादाल्पप्राणाः । हझभास्तुमहाप्राणाः । स्वरा उदात्तानुदात्तस्वरिताः । कुचुटुतुपुस्पृष्टम् । यरलवा ईषत्स्पृष्टाः । शसाईषद्विवृताः । स्वरा विवृताः । अकारः संवृतः । **लोपशि कृते सन्धिर्नेति वक्तव्यम्** । त आगताः । देवा अत्र । नस्य लोपशि कृते सन्धिर्भवत्येव । श्वादेरिति लिंगात् । नस्य लोपशि न विभक्तिकार्यं पंचस्विति निर्देशात् । पथिष्वित्यादौ तु षत्वं तु भवत्येव, क्लिात्षः स इति वर्णमात्राश्रितत्वात् । नह्यत्र विभक्तेरसाधारणं रूपं किमप्याश्रितम् । ज्ञापकसिद्धं चेदम् । आचार उपमानात्, अत उपधाया इत्यादि च । तत्विशेषणमात्मांतस्य विशेष्यस्य स्वस्य च रूपस्योपस्थापकमिति वक्तव्यम् । स्वरादः चयः अयः । विशेष्यसंनिधौ तु विशेषणत्वं भवति सन्निधिस्तु, क्वचित्साक्षान्निर्देशेन । यथा रः संख्याया इत्यत्र संख्यायाः क्वचिदधिकारात् । यथा स्वराद इत्यत्र धातोः क्वचिदाक्षेपात् । यथा हसेपः सेरित्यत्र ईयान्नाम्नः एवे द्वित्वे इत्यत्र द्वित्वेनार्थेन द्विवचनस्य । इयं स्वर इत्यत्र तु न कथंचिदपि । विशेष्यस्य सन्निधिः । अतो नेदं प्रवर्त्तते । इदमपि ज्ञापकसिद्धम् ।

अतिशये हसादेः अन्वये नाम्नां कार्येऽणित्यादिलिंगात् । न ह्यत्र तदन्तविधिं विना स्वराद् इति विधीयमानोऽमत्ययः । शीङो भवेत् । स्वग्रहणं विना च इधातोरमत्ययो न लभ्येत । एवं घ्यणापि इति परिभाषा आदेशः स्थानिवद्भवतीति वक्तव्यम् । कार्यस्य प्राधान्यात् । कार्य्यातिदेशोऽयं स्थान्यादेशयोः स्वरूपभेदात्स्थानिकार्यमादेशे न प्राप्नोतीत्यतिदेशोऽयमारम्भणीयः । अन्यथा लक्ष्म्यामित्यादौ ङेरामादेशे कृते तस्य ङित्त्वाभावात् ङितामङित्यट् न प्राप्नोति । ततश्च नुट् स्यात् । अटा हि स बाध्यते । एवं गंगायामित्यादौ यट् न प्राप्नोति । तथा असावित्यत्र सेरौकारे कृते त्यदादेष्टेरित्यत्वं न प्राप्नोति ज्ञापकात्सिद्धमिदं न तु वाचनिकम् । तथाहि साम आकमित्यनेनाम आकमादेशो विधीयते परत्वान्नित्यत्वात् प्रतिपदोक्तत्वाद्वा। त्यदाद्यत्वं सुटं च बाधित्वा आकमिति कृते तस्याम्त्वाभावात्सुटोऽप्रसक्तेः । ससुट्कनिर्देशो व्यर्थः स्यात् । स ज्ञापयत्याकमोऽप्याम्त्वमस्तीत्यत आकमः सुट् स्यात्तस्य श्रवणं प्रसज्जेत । तन्माभूदिति ससुट्कस्य स्थानित्वे चोपादानं कृतं तदनेन ज्ञापितमादेशेऽपि स्थानिकार्य्यं भवतीति । क्रियायां स्त्रियामित्यादि निर्देशोप्यत्र लिंगम् । स्थानिवदादेशोऽनल्विधावित्यादि चतुःसूत्री सवार्त्तिका नारम्भणीया । तथाहि युष्मदस्मदोरनादेश इति सूत्रेऽनादेशग्रहणे ज्ञापयत्यादेशः स्थानिवत्स्यादिति । अदो जग्धिरिति सूत्रेति कितीत्येव सिद्धे ल्यब्ग्रहणमनल्विधाविती ममंशं ज्ञापयति । अप्राधान्येनाप्यलाश्रयणे निषेध इत्यंशं च तथाऽचःपरस्मिन्नित्यपि नारंभणीयं पठयतीत्यादौ स्थानिवद्भावस्तु वीप्सायां वुन्लोपश्चेति ज्ञापकाद्भविष्यति । द्विपदिकामित्यादौ यस्येति चेति लोपे सिद्धे लोपश्चेति वचनं ज्ञापकं क्वचित्परनिमित्तोऽजादेशः स्थानिवत्स्यादित्यस्य सर्वत्रैव चानेन स्थानिवद्भावो ज्ञाप्यताम् । चिण्णमुलोरित्यनेन क्वचित्तदभावो ज्ञाप्यते । तथाहि चिण्णमुलोरित्यनेन प्रकृतो ह्रस्व एव विकल्प्यतां किं दीर्घग्रहणेन णिजंताण्णिचि अवीवदादित्यादौ स्थानिवद्भावस्तूक्तज्ञापकेनोभयथापि तुल्यः । ताद्ध्यर्थसद्दीर्घग्रहणं ज्ञापयति दीर्घविधौ क्वचित्स्थानिवद्भावो नास्तीति । तेन णिजंताण्णिचि अगामि गामंगामं गमंगममित्यादि सिद्धम् । यत्तु सूत्रानारंभे क्व स्थानिवत्वं क्वनेति स्पष्टप्रतीतिर्नास्तीति तत्सूत्रारंभेऽपि तुल्यम् । तथाहि क्लिलुगुपधात्वेति वार्त्तिकारं-

भोऽप्यावश्यकः । तत्र क्ङौ लुप्तं न स्थानिवत् । क्ङौ निमित्तं भूते न स्थानिवदिति द्वैधम् । तत्र कुत्र किमाश्रयणीयमिति कथं निर्णेयम् । यथाहुः । सर्वश्चायमर्थोऽननुगतो बहु वक्तव्यो बहुविघ्न इति । यदि तु नेति योगं विभज्य वार्त्तिकं प्रत्याख्यायते । यद्वा लक्ष्यानुरोधेनेति निपातमभ्यस्या सिद्धभाव साधनं विधिग्रहणमतिरिच्यमानं क्ङिल्लुगादिविधानां नियमार्थमिति प्रत्याख्यानेऽपि द्विर्वचनेऽचीति तु पूर्वविप्रतिषेधेन प्रत्याख्यानं परशब्दस्येष्टवाचित्वेन वा उत्तरार्थतयाप्यस्य नास्तीत्यभिप्रायेण भगवता प्रत्याख्यानम् । आरभ्यमाणे वेति तु यो लिंगादावव्युत्पन्नस्तदभिप्रायेण । किञ्च फणिनैव स्थानिवद्भावः प्रत्याख्यातः । तद्यथा लोके गो यस्य प्रसंगे भवति लभते ऽसौ तत्कार्याणि । तद्यथा उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते इति यत्तस्य समाधानम् । यद्यपि तावल्लोक एष दृष्टांतः दृष्टांतस्यापि पुरुषारंभो निवर्तको भवति अस्ति चेह कश्चित्पुरुषारंभः अस्तीत्याह कः स्वरूपविधिर्नाम हंतरात्मनेपदमुच्यमानं नेरेव स्यात्, वर्धनस्यादिति तेनोक्तं तत्स्वयमेव दूषितम् स्वरूपमित्यस्य प्रत्याख्यानात् । लोकव्यवहारस्य बाधको यः पुरुषारंभस्तदभावे व्यवहार एवावशिष्यते । प्रदीपेऽपि स्वरूपाश्रयं तत्कार्यं तद्भिन्नरूपत्वादादेशे न सिध्यतीत्याशंक्य लोके हि वचनमंतरेणापि तत्स्थानापत्त्या तद्धर्मलाभो दृष्ट इति समाहितम् । लोकन्यायस्तु पूर्वोक्तज्ञापकैः क्वचिद्बाध्यते इति दिक् ॥

## अथ स्वरसंधिः ।

---

### इ यं स्वरे ।

इ इत्यनेन इत्वं जातिर्निर्दिश्यते न तु ह्रस्वव्यक्तिरेव । अन्यथोत्तरसूत्रेष्वप्येवं व्यक्तेर्निर्देशे प्लुत इति निषेधो व्यर्थः स्यात् । एवं द्वित्वे य्वादेरिति निर्देशाच्च । व्यक्तिपक्षेऽपि सादृश्यपरत्वं निर्देशस्यतत्राप्युक्तनिर्देश एव प्रमाणं यमित्यादावपि यत्वादिजातेर्निर्देशाद्गुणनामभेदकत्वाद्वाऽनुनासिकयोर्ग्रहः । यमिति द्वितीयायोग्यत्वादापद्यते इत्यस्याध्याहारः । तत्रेवर्णस्यैव कर्तृत्वम् । यद्वा यमिति प्रथमा अकार उच्चारणार्थः । क्रिया वाचकपदाभा-

वेऽन्तरङ्गः सत्तार्थो धातुरध्याहार्यो भवतीति । इह सर्वत्र स्थान्यादेशत्वमागमादिलिंगाभावात्तज्ज्ञापकाद्बोध्यम् । यद्यपि इयम् । ऋरमित्यादिभिस्तत्र तत्राविरोधात् चपा अबे जवा इत्यादिभिश्चावरोधात् परिशेषादिवर्णः स्थानी लभ्यते । तथापि चिनोति जयतीति शेत इत्यादौ चकारादिष्वतिप्रसंगः स्यादिति इग्रहणम् । स्वर इति किम् । दधि पश्य चपा अबे इत्यतः प्राक् स्वरे इत्यनुवर्तते । यथाहि लोके निर्दिश्यमानमधिक्रियते । यथा उपरागे स्नायात् जुहुयात् दद्याच्चेत्यत्र होमदानयोर्निमित्तापेक्षायामुपराग एव निमित्तं यथा वा मैत्राय गौर्दीयतां चैत्राय कंबल इति कंबलो गोर्निवर्तकः । एवमुवमित्यत्रापि वकारो यकारस्येति प्राञ्चः । वस्तुतस्तु शब्दस्यानुवृत्तिर्नामोपगतशब्दस्य प्रकृतवाक्यार्थेऽन्वितार्थस्य शब्दांतरस्याध्याहार एव प्रकारान्तरस्यासम्भवात् । नच दध्यानयेत्यादौ संयोगान्तस्य लोपः स्यादिति शंक्यम् । काप्यतः, श्वादेः य्वे, ष्ठ्यूतः, व्रितः, त्रण, इत्यादिनिर्देशेन यलेषु तदप्रवृत्तेर्ज्ञापितत्वात् । प्रसिद्धं बहिरङ्गमन्तरङ्ग इत्यसिद्धत्वाच्च । संयोगांतलोपस्यैकपदाश्रितत्वेनांतरङ्गत्वं एकारादेर्भिन्नपदाश्रितत्वेनबहिरङ्गत्वम । अथार्थवद्ग्रहणे नानर्थकस्येति परिभाषया अस्यापत्यमिः स्त्री च ई यायोरित्यत्रैव अय् स्यान्न तु दध्यानयेत्यत्रैव रातीत्यय इत्यस्यैव अय् स्यान्न तु नमनमित्यत्रेति चेत्‌मैवम् । स्यादौ कर्तृकार्ययोरिति निर्देशेन तस्या अनित्यत्वज्ञापनात् । नामिनो यलायाऽऽयवाऽऽवः स्वर इति वा यावोऽयलायायवावः स्वर इति वा सूत्रणीयेऽष्टसूत्रीप्रणयनं स्पष्टप्रतिपत्त्यर्थं कालापसूत्रेषु वर्णग्रहणं व्यर्थमिति सूचनार्थं च माधवस्तु लाघवाय एओ ऐऔ अयवाव इत्येकयोगे कार्ये पृथग्योगकरणं क्वचित्स्वरतोन्यत्राप्यवयादिप्रवृत्तिज्ञापनार्थम् । तेन क्रय्यं गव्यूतिरित्यादि सिद्धमित्याह । ननु विभक्त्यन्तं पदमिति पदलक्षणात् । इइत्यादेर्निर्विभक्तिकस्य पदत्वं कथमिति चेत् मास्तु तत् । पदत्वाभावे प्रयोगः कथमिति चेत् साधुत्वादित्यवेहि । नच न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय इति सिद्धांतव्याकोप इति वाच्यम् । तस्यापरिनिष्ठितत्वेन प्रयोक्तव्यमित्येवं

तात्पर्यकत्वात् । ':परिनिष्ठितत्वं तु यावत्प्राप्तिकृतकार्यत्वं विपरीतमपरिणिष्ठितत्वं प्रकृते च नामत्वाभावेन शास्त्रान्तरप्राप्तिविरहात । परिनिष्ठितत्वं यदप्यपदं न प्रयुंजीतेत्युच्यते तस्याप्यत्रैव तात्पर्य ज्ञेयम । माधवस्तु इश्च इश्च उश्च उश्चेति समाहारे द्वन्द्वः सवर्णे दीर्घे कृते एकत्वे द्विगुद्वन्द्वौ इति नपुंसकत्वेन नपुंसकस्येति ह्रस्वः । ततश्च भो इड्डा भो इयिडा किमु उक्तं किम्वुक्तं उ इति विति इत्यादौ निपातयोरिकारोकारयोर्यकारवकारसिद्धिर्भवति न प्रकृतिभाव इत्याह । तन्न अव्यापकत्वात । नहि ओ अव इत्यादावयं परिहारः सम्भवति । तत्र पदत्वार्थमस्मदुक्तप्रकारस्यैवाश्रयणीयत्वात् । भो यिडेत्यादिसिद्धिस्तु प्रकृतिभावप्रकरण एव वक्ष्यते। स्यादेतत् । स्वरेष्वकारस्य प्राथम्यात्सन्धिरपि प्रथमं तस्यैव वक्तुमुचितोऽतः सवर्णे दीर्घः सह, अ इ ए इत्यादिसूत्राणि प्रथमं पाठ्यानि न च दध्यहेत्यादौ परत्वाद्यकारः स्यात् । सवर्णे दीर्घ इत्यस्यानवकाशत्वापत्तेः । नच दैत्यारिरित्याद्यवकाशः । तथा सति अ अ दीर्घः सहेत्येवावक्ष्यत, किं सवर्णग्रहेण उच्यते । इदमेव ज्ञापकमत्रान्योपि व्यत्ययो भवतीति । तेन क्वचिद्धसेऽपि यादिर्भवति । ततश्च क्वचित्स्वरवद्यकार इति सिद्धम।इवर्णो ऽप्रमएवर्णे । न च परो लोप्य इति कातन्त्रसूत्रे तु वर्णग्रहणं व्यर्थम । उक्तरीत्या निर्वाहात् । नच वर्णग्रहणमिति परिभाषणात् । तेन विना कथं निर्वाह इति वाच्यम्। समानग्रहणे । सवर्णग्रहणमिति वा केवलग्रहणे सवर्णग्रहणमिति वा परिभाषणस्योचितत्वात् । न चाकारादावतिप्रसङ्गः दीर्घग्रहणान्नाधिक्याददोषः । अन्यथा ह्रस्वमेव पठेत् । असवर्णे इत्यपि व्यर्थम्, स्वर इत्येव वक्तुमुचितत्वात् । नच सवर्णे स्वरेपि यत्वप्रसङ्गः। तत्र विशेषविहितेन दीर्घेण बाधात् । नच दीर्घस्याऽवर्णोऽवकाशः । तथा सति ओऽवर्णइत्येवावक्ष्यत् । अवर्णोवर्ण इति वा अतः सवर्णग्रहणसामर्थ्यात्तत्र दीर्घ एव नच परो लोप्य इत्यपि व्यर्थम् । इष्टानुरोधेऽनानुवृत्तेः स्वीकारात् । पूर्वसूत्रेऽनुवृत्तस्यात्राननुवृत्तौ किं प्रमाणमितिचेत्।  पइत्युपध्मानीयः अंइत्यनुस्वार इति निर्देश एव । किंच समानः । सवर्णे दीर्घीभवतीत्यस्य स्थाने सवर्णे दीर्घः सहेत्यस्यैव

वक्तुमुचितत्वात्।इवर्णोयमिति नवसूत्र्या समानसवर्ण इत्यतः प्राक्पाठस्यापि सुशकत्वाच्च।एवं वमुवर्णः रमृवर्णः लम्लृवर्ण इति त्रिसूत्र्यामपि वर्णग्रहणं व्यर्थं बोध्यमिति दिक् । लोकोपचाराद्ग्रहणासिद्धिरिति सूत्रं त्रिलोचनेनेत्थं व्याख्यातम् । इहोभये लोकाः शास्त्रकारा इतरेपि तेषामुपचारो व्यवहारो लोकोपचारः गृह्यतेऽनेनार्थ इति ग्रहणं शब्दस्तस्य सिद्धिरिति विग्रहः । अथ के ते शब्दाः निपातादयः, तथा वरणाः पाञ्चालाः हरीतक्य इति संज्ञाशब्दा इति अत्रेदं वक्तव्यम् । इहोभये लोका इति व्याख्यातं तावन्निर्बीजम् । लोकस्तु भुवने जने इत्यभिधानाज्जनमात्रे रूढः तेन शास्त्रकारा अप्यागता एव परंतु शास्त्रकारत्वेन तेषां वाच्यता किंतु जन्यत्वेनैव इहेत्युक्त्याऽन्यत्र लोकशब्दस्यान्यादृशोऽर्थ इति भाति, तत्तु न संगच्छते । उक्ताभिधानविरोधात् । किंच लोकशब्देन यदि शास्त्रकृतामन्येषां च ग्रहणं तर्हि किं तेन व्यवहाराद्ग्रहणसिद्धिरित्येव वाच्यम् । व्यावृत्या प्रसिद्धेः अपि च उभयेषां व्यवहारग्रहे निपातानां संज्ञाशब्दानामेव चोदाहरणता कथंजातिगुणक्रियाशब्दानामपि तद्व्यवहारसिद्धत्वात् । नहि शास्त्रव्यवहारविषयबहिर्भूताः केचन शब्दाः संति।इष्टापत्तौ तु सूत्रप्रणयनवैयर्थ्यं केषांचिदेव शब्दानां लोकव्यवहार सिद्धत्वाभ्युपगमे लोकाच्छेषस्य सिद्धिरिति सूत्रयितुं युक्तम् । किंच ग्रहणशब्दस्य शब्दपरत्वेन व्याख्यानमप्यसङ्गतम् । एवं सति हि लाघवार्थं च शब्दसिद्धिरित्येवावक्ष्यत् । किंच अशास्त्रकृद्व्यवहाराच्छब्दसिद्ध्यङ्गीकारे अपशब्दानामपि ग्रहणप्रसङ्गः । अशास्त्रव्यवहारेऽपशब्दानामेव प्रायशो दर्शनात् । तस्माच्छास्त्रकृद्व्यवहाराच्छक्तिग्रहसिद्धिरित्येवं परतपा सूत्रं व्याख्यातुं शक्यते किं तु तत्कथनस्याप्युपयोगो नास्तीति दिक् । यत्तु ननु सवर्णव्यपदेशः स्वरस्यैव तदपेक्षयाऽसवर्णेऽपि स्वर एव यत्वादिकं भविष्यति न तु व्यंजने नैवं सवर्णादन्योऽसवर्ण इति स्वभावाद्विसदृशवचनोपमसवर्णशब्दः प्रतिपत्तव्यः प्रसज्यार्थवृत्तिरिति व्यंजनेऽपि यत्वादिकं स्यादिति त्रिलोचनेनोक्तं तत्रेदं वक्तव्यम् । तेषां द्वौ द्वौ विहितसवर्णसंज्ञः सवर्णशब्देनोच्यते कृत्रिमत्वात् । तस्मादन्योऽसवर्ण इत्यवयवार्थरीत्या सवर्णादन्यः स्व-

रः प्रतीयते स्वभावाद्विसदृशवचन इत्युक्त्या रूढिः प्रतीयते उभयोर्विरुद्धत्वादन्यतरस्मिन्नाश्रयणीये आद्यपक्ष एवाश्रयितुं युक्तः । कृत्रिमाकृत्रिमयोः कृत्रिमस्य कार्यसंप्रत्ययात् । नञिव युक्तमन्यस्मिन्सदृशे तथा ह्यर्थगतिरिति न्यायाच्च । नह्यब्राह्मणोऽनश्वो वाऽऽनीयतामित्युक्ते लोष्टकाष्ठादिकमानीयते । किं तर्हि क्षत्रियादिः रासभादिर्वा अत एव न प्रसज्यार्थवृत्तिनाऽस्य । प्रसज्यपक्षे हि अनन्वितसमासो वाक्यभेदश्चेति दोषः प्राप्नोति । सवर्णे न भवतीति नञो भवति नान्वितत्वात उक्तदोषद्वयाभावात । पर्युदास एव श्रयितुं युक्तः । यदपि तेनोक्तं यद्येवं स्वरग्रहणं तत्र क्रियताम् । मैवम् । नञा निर्दिष्टमनित्यमिति ज्ञापनार्थत्वादस्य । तेन पित्र्यमित्यादि सिद्धमिति । तदपि न । नञा निर्दिष्टमित्यस्य स्वरोऽवर्णवर्ज इत्यनेन ज्ञापितत्वात् । क्वचित्स्वरवद्य इति क्वचिद्व्व इति वा सूत्रणस्य संभवात् । यदपि तेनोक्तं यद्येवं नञ्मात्रमेव किमिति न कृतमिति चिंत्यमिति । तदपि न । यादि विधौ स्वरग्रहणेन वर्जग्रहणेन नञोक्तमनित्यमित्यस्य ज्ञापितत्वेन नञ्मात्रस्याप्युपयोगाभावात् चिंत्यमेव चिंत्यमिति दिक् ॥ **ल्वोर्लोपश्च वा पदान्ते** ॥ अत्र पदान्त इति छेदो नत्वपदान्त इति । अन्यथा एदो तोत इत्यत्राप्यपदान्त इत्यनुवृत्तौ हरर्भानोरित्यादिसिद्धौ ङस्येति सूत्रं व्यर्थं स्यात् । य् च व् च ल्वौ तयोः । ननु ल्वोर्धातोः ल्वौर्वीत्यादाविव इवर्णान्निर्णयोर्ग्रहणं । कस्मान्नेति चेत् । आचार उपमानादित्यादिलिङ्गात् । पदस्यान्तः पदान्तः अंतशब्दोऽवयववाची । पदं तु विभक्त्यन्तमेव पद्यते गम्यतेऽर्थोऽनेनेति व्युत्पत्तेः । विभक्त्यन्तमेव हि लोके प्रयुज्यते । अत्र पूर्वसूत्रेभ्योऽय् आय् अव् आव् इत्यनुवर्तते । अनुवृत्तं च षष्ठ्या विपरिणम्यते । तच्च पूर्वत्र-विधेयसमर्पकमप्यत्रानुवाद्यसमर्पकं भवति व्याख्यानात् । लोपशिति विधेयान्तरनिर्देशाच्च । पदान्ते इति त्वयादीनां विशेषणम् । ततश्च पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपशित्यर्थो भवति । पदान्ते इति ल्वोर्विशेषणम् । तदा पदान्ते स्थितयोरयादीनां ल्वोर्लोपशित्यर्थः । उभयथापि फले कश्चिन्न विशेषः । हर एहि, श्रिया उद्यतः, विष्णु इह, गुराउक्त इत्यादौ

लोपशि सति सन्धिर्न भवति सम्बन्ध आधारभावयोरित्यादिनिर्देशात् । ननु गव्यूतिरित्यत्र वकारस्य लोपश् कस्मान्न भवति । उच्यते व्यवस्थितविकल्पत्वात्स्वरे इत्यस्यानुवर्तनाद्वा । नचात्र क्वचित्स्वरवदित्यनेन यकारस्यावादेश इव लोपश्यपि स्वरत्वमस्त्येवेति वाच्यम् । स्वर इत्यस्यानुवृत्तिसामर्थ्यान्मुख्यस्यैव तस्य ग्रहणेनातिदेशिकस्याग्रहणात् । अन्यथा तद्व्यावृत्तस्यासम्भवात् । संज्ञापूर्वको विधिरनित्य इति वा । यत्तु पदग्रहणसामर्थ्यात् टोरन्त्यात् षुर्णोणोऽनन्तेङत्यादाविव अन्त इत्युक्तावपि पदान्तलाभे सिद्धे पदग्रहणस्यैतत्प्रयोजनं यदेकमेव पदं तत्र भवति न त्ववान्तरपदभेदेसतीति । तन्न गईशः गउद्धः गण्डकादित्यादावव्याप्त्यापत्तेः ननु अन्ते इत्येकत्वविवक्षयाप्येतत्सिद्धमिति चेन्न । सूत्रे लिंगसंख्ये अविवक्षिते इत्युत्सर्गात् । अत्रार्थेऽस्य-पदग्रहणस्यैव प्रमाणत्वात् । केचित्तु अन्तशब्देन यत्कार्यं विधीयते तदपदांतस्यापि क्वचिद्भवतीति ज्ञापनार्थं पदग्रहणम् । तेन लिट्सु साषावापिनावित्यादौ ष्टुत्वणत्वे नस्तः । सूत्रलिंगसंख्ये अविवक्षिते इत्यत्र तु लुग्ब हुत्वे क्वचिदिति त्रण ईविति च ज्ञापकम् । अपत्ये इत्यादावेकत्वविशिष्टेऽर्थे विहितस्य प्रत्ययस्य बहुत्वविशिष्टे प्रसक्तेरेवाभावात् । नपुंसकत्वविशिष्टेऽर्थे विहितस्य स्त्रियां प्राप्त्यभावात् । कार्येऽणित्यस्यापि कर्तरि विहितस्य स्त्रियां प्राप्त्यभावात् । उक्तार्थस्य ज्ञापकत्वं संभवतीत्याहुः । पदान्ते इति किम् । नायकः, पावकः । स्यादेतत् । अयादयोऽत्र नानुवर्त्त्याः, प्रयोजनाभावात् । पदान्ते स्थितयोर्य्वोर्लोपशित्युक्तेरनतिप्रसक्तत्वात् । नच दध्यानय मध्वत्रेत्यत्रातिप्रसङ्ग इति वाच्यम । संयोगान्तलोप इवात्राप्यसिद्धम् । बहिरङ्गमंतरंग इत्यस्य सुवचत्वात् । अत्रोच्यते । वृक्षं वाति वेति वा वृक्षवा वृक्षवीः तं करोति ञिर्डित्करण इति ञिप्रत्यये टिलोपे च सति स धातुरिति धातुत्वं ततः क्विपि ञिलोपे च वृक्षव् इति भवति वृक्षवइत्यादावतिप्रसङ्गवारणायायादीनामनुवृत्तिर्बोध्या। न चात्राप्यवरूपस्य सत्वाद्वस्य लोपश् प्राप्नोतीति वाच्यम् । अवितिरूपस्य लाक्षणिकत्वात् । अवयवशो व्युत्पन्नत्वं हि तत् । किञ्च य्वोर्लोपोपि स्वरपरत्वापेक्षणाद्बहिरङ्गः स्वरानुवृत्तिपक्षे तु

न चायाद्यनुवृत्तावपि । तेषां पदान्तरस्थस्वरनिमित्तत्वादासिद्धत्वं स्यादेवेति वाच्यम् । लोपविधेर्वैयर्थ्यापातात् । नन्वेवं य्वोरिति व्यर्थम् । अयादीनां षष्ठ्या विपरिणामेनान्त्यस्य लोपश्विधानेनाऽतिप्रसक्तेरदर्शनात् । एवं तर्हि य्वोर्ग्रहणमेव ज्ञापयति । षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्येत्यनित्यमिति तेन स्थ इति विधीयमान इदमोऽकारः सर्वस्य भवति एवं हि माधवोक्त य्वोर्ग्रहणस्य वैयर्थ्यमपि परिहृतं भवति क्वचित् य्वोर्लोपाशीति योगविभागः कर्तव्योऽपदांतेऽपि य्वोर्लोपश्विधानार्थं तेनागार्ग्यो गार्ग्यो भवति गार्गी भवति कन्याया अपत्यं कानीनः गर्गस्य गोत्राऽपत्यं स्त्री गार्गी, देदिवः जीवेरदानुक् जीरदानुरित्यादि सिध्यतीत्याहुः । अथ पदशब्देन किमुच्यते न तावद्विभक्त्यन्तं सूत्रकृता विभक्त्यंतस्य पदसंज्ञाया अप्रणयनात् वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसम्भवात् । विभक्तिसंज्ञाया अत्राकृतत्वाच्च । नापि पूर्वपरयोरर्थोपलब्धौ पदमिति परिभाषितम् । अतिप्रसक्तत्वात् । तथाहि । किं पूर्वपरशब्दाभ्यां पौर्वापर्येण सन्निविष्टं यत्किंचिदुच्यते । प्रकृतिप्रत्ययौ वा । नाद्यः, अग्निचितावित्यादौ पूर्वोत्तरशब्दाभ्यामर्थस्योपलंभेन पदत्वे सति दकारः स्यात् । उष्णभोजिनावित्यादौ द्वित्वादिप्रसंगात् । नांत्यः । धीमन्तौ कृतवन्तावित्यादौ पदत्वे सति दकारः स्यात् । पूर्वपरशब्दाभ्यां प्रकृतित्वप्रत्ययत्वरूपेणानुपस्थापनाच्च । नापि सुप्तिङन्तमित्यादिना पाणिनिप्रणीतायाः पदसंज्ञाया इह ग्रहणं कर्तृकार्ययोरित्यादौ कर्तृसंज्ञाया यथेति वाच्यम् । वसां रसे इत्यादौ रसग्रहणवैयर्थ्यप्रसङ्गात् । यकारादिवर्जिते हसादौ स्यादौ तद्धितान्ते परे पूर्वस्य तैः कर्तृसंज्ञायाः कृतत्वात् । नापि शक्तं पदमिति । नैयायिकादिपरिभाषितं मरुतावित्यादौ प्रकृतिप्रत्ययभागयोः शक्तत्वेन प्रत्येकं पदत्वप्रसङ्गात् । अत्रोच्यते । पद्यते गम्यतेऽर्थोऽनेनेति पदमिति यौगिकस्यैव पदशब्दस्यात्र ग्रहणम्।तादृशं च लोके परिनिष्ठितमेव नान्यत् । तस्यैव लोके प्रयोगात् । एवं च अइउऋऌइत्यादीनामपि पदत्वं निर्बाधं इत्थं च पूर्वपरयोरर्थोपलब्धौ पदमिति कातंत्रसूत्रं व्यर्थमेव । तत्र किं पूर्वपरयोरर्थः पृथग्विवक्षित एको वा । नाद्यः । प्रकृतेरपि पदत्वप्रसङ्गात् । नांत्यः। संज्ञाविधानस्यानर्थक्यापातात् । योगार्थे

नैव निर्वाहात् । चिकीर्षति पाचयतीत्यादौ सति ञ्यन्तयोरतिप्रसङ्गाच्च धातारौ धातार इत्यादौ कृदन्तस्यापि प्रकृतिप्रत्ययसमुदायत्वेन विभक्तेः प्राग्भागस्यापि पदत्वापाताच्च । किं च अर्थोपि किं शास्त्रीयो विवक्षितो लौकिको वा । उभयथाप्युक्तदोषानिस्तारः । यत्तु अथ उपलब्धिग्रहणं किमर्थं पूर्वपरयोरर्थे पदमित्युच्यताम् । अर्थे सति पदं भविष्यति । सत्यम् उपलब्धिग्रहणं विशिष्टार्थप्रतिपादनार्थम् । अन्यथार्थमात्रे पदसंज्ञा स्यात् । ततश्च युवतिशब्दस्य केवलस्यापि पदप्रसङ्गः।युवञ्छब्दात्तिप्रत्यये पूर्वपरयोः समुदायेऽर्थमात्रं विभक्तिमंतरेणाप्यनुगतमस्त्येव । तस्यां च सत्यामित एत्वे कृतेऽल्लोपे च युवतय इति न सिद्ध्येदित्यभाणि त्रिलोचनेन । तन्न । ङसिङसोरल्लोपश्चेति ज्ञापकादल्लोपाभावात् । अर्थशब्दस्य सामान्यवाचकस्य विशिष्टार्थपरत्वसम्भवाच्च । तथाहि । प्रकृतिप्रत्ययसमुदायार्थवत्तामाश्रित्य पदसंज्ञा यदि स्यात्तर्हि हरेः विष्णोर्गोरित्यत्रापि एदोत्परः पदान्ते लोपमकार इत्यनेनैव सिद्धं कृतमनेन संति ह्यत्र हविषगमा धातवः इकुडो इति प्रत्ययाच्च । भवत्ययं प्रकृतिप्रत्ययसमुदायोऽर्थवांश्च तस्माज्ज्ञापकाद्विशिष्टपरत्वाद्विभक्त्यनवयवस्यार्थवत्समुदायस्य पदसंज्ञा न भविष्यति । किंचार्थवदभिधेयवत् अभिधेयं च लौकिकप्रयोगगम्यं प्रयोगश्च विशिष्टस्यैवेति तस्यैव भविष्यतीति व्यर्थमुपलब्धिग्रहणम् । यदप्युपलब्धिग्रहणे तु विशिष्टार्थः प्रतिपादितो भवति विशिष्टश्च स एव यः कारकसंसृष्टः कारकसंसर्गश्च तत्रैव यत्र परा विभक्तिर्भवतीत्युक्तम् । तन्न । उपलब्धिशब्दस्य विशिष्टार्थवाचकत्वाभावात् । भावार्थक्तिप्रत्ययान्तत्वेन प्राप्तिमात्रस्य वाचकत्वात्, पूर्वपरयोरर्थप्राप्तौ सत्यां पदसंज्ञा भवतीत्यस्यार्थस्य लाभाच्च कारकसंसृष्टएव विशिष्ट इत्यसङ्गतम्, दण्डी देवदत्तो ब्राह्मणो देवदत्तः शुक्लः पट इत्यादौ द्रव्यजातिगुणादिसंसृष्टविशिष्टार्थत्वसंभवात् । किंच कारकसंसर्गश्चेत्यत्र किं कारकत्वेन संसर्गो विवक्षितोऽन्यस्मिन्नुत कारकाणां संसर्गः । स्वस्मिन्नुत कारकेषु संसर्गो वा । नाद्यः । कर्तृकर्मकरणादीनामेव तथात्वेन पदत्वसम्भवेपि लिङ्गार्थप्रथमान्ते सम्बन्धषष्ठ्यन्ते आख्यातान्ते चाव्याप्ति

प्रसङ्गान्न द्वितीयः कर्टं करोति भीष्ममुदारं दर्शनीयमित्यादाविव देवदत्तस्य पुत्रं पन्थानं पृच्छतीत्यादौ षष्ठ्यन्त एव च सम्भवादन्यत्राव्याप्तेः किंच न विभक्तिपरत्वं कारकसंसर्गं प्रयोजकं देवदत्तः सुंदर इत्यादावभावात् । गुणवत्वमात्रे प्रतिपिपादयिषिते क्रियाध्याहारस्यानावश्यकत्वात् । यदपि प्रकृतिविभक्त्योः प्रत्येकमयमर्थः समुदायेन चायमर्थः । एवं प्रकृतिप्रत्ययौ संबद्धौ भवत इति व्युत्पादनार्थं गुरुकरणमित्युक्तम् । तन्न । पूर्वपरशब्दयोः प्रकृतिविभक्तिवाचकत्वाभावात् । धातूपसर्गयोश्च पूर्वपरत्वसंभवात् । अवयवार्थातिरिक्तसमुदायार्थानभ्युपगमादवयवार्थेन चरितार्थत्वाच्च । तदभ्युपगमे स्फोटवादस्वीकारप्रसङ्गाच्च । प्रकृतिप्रत्ययार्थसम्बन्धस्यावैयाकरणानामपि विदितत्वेन व्युत्पादनानपेक्षत्वात् । तत्र मात्रागौरवस्यादोषत्वेनार्थलाघवस्य सत्वेन गुरुकरणमित्यसङ्गतम् । यदपि विभक्तिरन्तावयवो यस्य तद्विभक्त्यन्तमित्युक्ते साक्षाद्विभक्त्यन्तानामेव स्यान्न तु लुप्तविभक्तिकानामित्याशंक्येत । यथा राजेति । अत्र नित्यत्वात्सिलोपः स्यादित्युक्तं, तन्न । एदोत्पर इति दकारनिर्देशेन शङ्कावारणसम्भवात् । न संबुद्धावित्यस्यारम्भाच्च । अन्यथा विरामव्यञ्जनपरत्वाभावेन लोपाप्राप्तेः । अवसानं पदान्तत्वं न तु वर्णानामभावो नाप्यन्तमात्रं राजाश्वदण्डिनावित्यादावव्याप्त्यतिव्याप्तिप्रसङ्गात् । किंच अन्तरङ्गत्वात्सिलोपात्प्राक् पदसंज्ञा भविष्यति नित्यादप्यन्तरङ्गस्य बलसत्वात् । अल्पापेक्षमन्तरङ्गं बह्वपेक्षं बहिरङ्गं पदसंज्ञायाः प्रकृतिर्विभक्तिश्चेति द्वयमपेक्ष्यते व्यञ्जनाच्चेति सिलोपे तु व्यञ्जनान्त लिंगं स्यादिसिद्धिरिति वा प्रतिपदोक्तो वाऽर्थवान्वेति चतुष्टयमपेक्ष्यते । अन्यथा मरुत्सिद्धः कुक्षिः रुणत्सीत्यादावतिप्रसङ्गो दुर्वारः । यद्वा लिङ्गग्रहणं नानुवर्तनीयं व्यञ्जनात्स्यादिः । सिरित्यनेनैवोक्तदोषवारणात् । अत्र पक्षे सिलोपः स्त्रीत्वसापेक्षत्वाद्बहिरङ्गः । अत्रेदमवधेयम् । विभक्त्यन्तपदमिति वा विभक्त्यर्थवत्पदमिति वा विभक्त्यर्थे शब्दः पदमिति वा विभक्त्यर्थे पदमिति वाऽर्थवत्पदमिति वा वृत्तिमत्पदमिति वा अपरिनिष्ठितं पदमिति वा शास्त्रे वाचकं पदमिति वा शक्ति

वाचकं पदमिति वा शक्तिमत्पदमिति वा सूत्रयितुमुचितम् । प्रकृतिप्रत्ययार्थ-मात्रवत्त्वेपि नातिप्रसंगः । प्रशंसारूपमत्वर्थाश्रयणात् लौकिकप्रयोगस्य च प्रशस्तत्वादिति एतेन सिद्धांते तु लुप्तायामपि विभक्तावुपलब्धिसंभवा-त्पदसंज्ञा न विहन्यत इति प्रत्युक्तम् । न चैवं सुप्तिङन्तमित्यादिकमपि व्यर्थमिति नः क्ये पदमिति च स्वादिष्वसर्वनामस्थानइति तावत्कर्त-व्यमेव तत्रोक्तयोगार्थस्यासंभवात् । एवं च पदप्रदेशेषु कृत्रिमाकृत्रिमन्या-येन कृत्रिमस्यैव पदस्य ग्रहणं स्यान्नाकृत्रिमस्य । अत. सुप्तिङन्तमि-त्यपि पदं कर्तव्यम् । यदि तु संख्याया अतिशदन्तायाः कन्नित्यादौत्यन्त-शदन्तप्रतिषेधेन ज्ञापकेनोक्तन्यायो यथा बाध्यते तथाऽत्रापि पदान्तस्येत्यादि ज्ञापकादुक्तन्यायो बाध्यतामित्युच्यते तर्हि सुप्तिङन्तमित्येतन्मास्तु संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति सनाद्यन्ता धातव इत्यनेनैव ज्ञापनीय-मिति दिक् । व्योर्लघुः प्रयत्नतरः शाकटायनस्य लोपःशाकल्यस्य ओतो गार्ग्यस्येत्येतेषां स्थाने व्योर्लोपो वेत्येव सूत्रयितुमुचितं भोसाद्योशीति पूर्व-सूत्राद्भोसादित्यनुवर्तते । इदानींतनामुच्चारणे लघुप्रयत्नतरालघुप्रयत्न-तरयोर्विशेषयोरनुपलंभादादेशविधानं नोपयुज्यते । ञञि च पदे हलि सर्वे षामित्येतयोः स्थाने हलुञोरित्युचितम् । आरंभसामर्थ्याच्च नित्यं लोपः । उञ् तु प्रतिपदोक्तत्वान्निपात एव ग्रहीष्यते । अयादीनां यवलोपः पदा न्ते न वालोपे तु प्रकृतिरिति कातंत्रसूत्रेऽयादीनामिति व्यर्थम् । एअ-यित्यादिभ्यः पूर्वसूत्रेभ्योऽयादीनामनुवृत्त्यैव लाभात् । आदिशब्दार्थज्ञाने तत्रापि तदपेक्षायाः सत्वात् । नशब्दोपि व्यर्थः । वाशब्देनैव विकल्पस्य लाभात् । नवेति संघातस्य विकल्पार्थताया अप्रसिद्धत्वाच्च लोपे तु प्रकृति रित्यपि व्यर्थं य्वोर्लोपः पदान्तेवेति सूत्रयित्वाऽग्रे स्वरानुसन्धेया इति सूत्र णीयम् । तत्र य्वोर्लोप इत्यनुवर्त्य विभक्तिपरिणामेन य्वोर्लोपे सति स्वरानु-संधेया इत्यर्थस्य सुसाध्यत्वात् । ततश्च व्यञ्जने इति सूत्रणीयम् । तत्र च स्वरा-नुसन्धेया इत्यनुवर्त्याभिमतार्थस्य लब्धुं शक्यत्वात् । यद्वा न व्यञ्जने स्वराः सन्धेया इत्यत्र यवलोप इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । यद्वा

अनुपदिष्टश्चेत्यस्यानन्तरं ष्वोर्लोप इति कर्तव्यम । तत्र प्रकृत्येयमनुवर्तनीय-मिति दिक् एदोतोतः एच्च ओच्च तयोः समाहार एदोत तस्मात् । अत्र तपरकरणं तपरः स्वसमानकालस्य संज्ञत्युक्तत्वेन दीर्घत्वव्याप्यैत्वौत्वसामान्यस्य दीर्घव्यक्तेर्वा निर्देशार्थं तेन प्लुतव्यावृत्तिः । आगच्छाग्ने ३ अत्र तिष्ठ एहि विष्णो ३ अत्र हविर्भुङ्क्ष्वेत्यादौ न सन्धिः । यद्वा स्पष्टार्थं तपरकरणम् । उक्तरूपसिद्धिस्तु प्लुत इत्यादिना सन्धिनिषेधेन बोध्या । माधवस्त्वाह क्वचित्प्लुतस्याऽपि सन्धिर्भवतीति ज्ञानार्थम । तेन सुश्लोक ३ इति सुश्लोकतीत्यादि सिद्धमिति पदान्त इत्येव । नेह । नयनम । भवनम। एदोतः किम । तस्मै अन्नम् । तौ अत्र । अतः किं विष्णो इह । अत इति तपरः किम् ते आगताः । वाग्रहणमिहानुवर्तते तच्च व्यवस्थितविकल्पार्थम् । तेन पदांते ओकारांताद्गोरतो वा लोपश्च । गो अग्रं गोग्रम। नच लोपश्यसति ओकारस्यात्स्यादिति वाच्यम् । अवादेशस्य लोपेन बाधे तस्याप्यनेन बाधेऽवादेशस्य पुनरप्रवृत्तेः । नहि देवदत्तस्य हंतरि हते पुनर्देवदत्तस्योज्जीवनं भवनं भवतीति न्यायात्।एदोत इत्यत्र पूर्वदले दकारनिर्देशेन उत्तरदले तदनिर्देशेन चैतज्ज्ञाप्यते समासप्रत्ययोरिति निभक्तेरिति लुकि प्रत्ययलक्षणेन पूर्वभागस्य पदत्वं भवति नोत्तरस्येति एतदर्थमेव तपरकरणं तेन परमदंडिनौ परमगोदुहौ प्रियवाचावित्यादौ द्वित्वघत्वकुत्वादीनि न भवंति । एदोत्परः पदांते लोपमकार इति कातंत्रसूत्रे तु पदांते इति लोप-मिति च व्यर्थम् । पूर्वसूत्रादनुवृत्तेरेव सत्त्वात् । यत्तु त्रिलोचनेनोक्तं पदान्ते इत्यनुवर्तमाने पुनः पदान्ते ग्रहणमुत्तरत्र तन्निवृत्त्यर्थमिति । तन्न । इष्टानुरोधेनानुवृत्तेः स्वीकारात्।अननुवृत्त्यर्थं सर्वत्र यत्नारम्भाच्च सन्धेया इति निर्देशेनाननुवृत्तेर्ज्ञापनाच्च अकार इति कारग्रहोप्यनर्थकः । एदोतोऽत इत्येव सुवचत्वात् । नच सवर्णग्रहणप्रसङ्गः । तपरग्रहणे केवलग्रहणमिति परिभाषितुमुचितत्वात् । ईदूदग्निरित्यादौ तस्याप्यावश्यकत्वात् । ननु कारग्रहणे केवलग्रहणमिति परिभाषणमुचितं गौरवात् । अतएव परग्रहणमपि व्यर्थमिति दिक् । न व्यञ्जने स्वराः सन्धेया इत्यपि कातन्त्रसूत्रं व्यर्थम् । इवर्णो यमि-

त्यत्रासवर्णे इति पर्युदासाश्रयणेन सवर्णभिन्नस्य स्वरस्य तत्र ग्रहणे व्यञ्जने प्रसंगाभावात् । प्रसज्यप्रतिषेधाश्रयणे तु व्यञ्जने परे प्रतिषेधेऽपि अवसानेऽतिप्रसंगसत्त्वात् । असवर्णे स्वरे इत्येव वा सुकरत्वात् ङस्य पूर्वसूत्रमनुवर्तते । लोपशिति च । ङोपलक्षितःअः ङः तस्य एदोतः परस्य ङस्य लोपश् । हरेः गोः एदोत इति किम् । रायः ग्लावः । ङस्येति किम् । हरये गवि । ङकारः किम् । हरयः । मानवः । स्यादेतत् । कवे ङकारं पठ । पटो ङकारंलिख । कवे ङवसे वटो ङवस्वेत्यादौ ङस्य लोपश् कस्मान्न भवति । उच्यते इत्संज्ञकस्य ङकारस्योपलक्षकत्वेन ग्रहणात् । अत्र मानं तु वा ग्रहणानुवृत्तिः तस्य व्यवस्थितविकल्पपरत्वेन ङसिङसोः ङस्यैव ग्रहणम् । आदेः ष्णओरोरि त्यादिनिर्देशो वा । यद्वा अत इत्यनुवर्तते । एदोतः परत्वं वाऽतो विशेषणम् । एदोतः परस्य ङस्याकारस्य लोपाशिति । इदं च ङकारस्य इत्वे सत्येव लभ्यते । अथवा ङित इत्येव सूत्रमस्तु । एदोतो ङितोऽतो लोपाशिति च तद्व्याख्यानम् । ङसिङसोश्चेति पाणिनीयसूत्रं तु गौरवादुपेक्ष्यं ङसिङसोरल्लोपश्चेति कातंत्रसूत्रं तु गौरवतरत्वात् । एदोत्पर इति सूत्रानन्तरं ङस्येति सूत्रयितुमुचितमिति संक्षेपः । सवर्णदीर्घः सह सवर्णशब्दस्य ससंबंधिकत्वात्सवर्णादिति लभ्यते । यदि ह्यन्यस्य सवर्णेऽन्यस्य दीर्घः स्यात्तदा स्वर इत्यनुवृत्त्यैव सिद्धेः सवर्णग्रहणं व्यर्थं स्यात् । ततः सवर्णात्सवर्णे परे सह दीर्घः इत्यर्थो लभ्यते । दैत्यारिः । खटाढकम् । ननु हरये हरे एहीत्यादौ कस्मान्न भवति । उच्यते । समानानामेवेति विवक्षणात् । तद्बीजं तु वेत्यस्यानुवृत्तिः यद्वा इयं स्वर इत्यादिभ्य इउऋलृग्रहणं अ इ ए इत्यतोऽग्रहणं वानुवर्तते नतु एदोत इत्यतोऽत इति । तस्य परत्वेन खट्वाढकमित्यादावव्याप्त्यापत्तेः । यद्वा अ इ ए, उ ओ, ऋ अर्, लृ, अल् इत्येतेभ्यः सिंहावलोकितन्यायेन अइउऋलृवर्णा अनुवर्तनीयाः ततो नोक्तदोषः । अथवा सवर्णे दीर्घः सहेत्यावृत्त्या व्याख्येयम् । तत्र प्रथमसूत्रं यथाश्रुतमेव द्वितीयसूत्रे तु अदीर्घ इति छेदः । अत्र च मंडूकप्लुत्या एऐओऔवर्णा अनुवर्त्याः । ततश्च एऐ ओऔ वर्णे परे सह दीर्घो न भवती-

त्यर्थो लब्धः । नन्वत्रादीर्घ इत्यत्र नञ्समासोऽनुपपन्नो नञो भवति नान्वया-
दिति चेन्न । क्वचिन्नञोऽनन्वयेऽपि समास इति वक्ष्यमाणत्वात् । यद्वा
सवर्णे इति न सवर्णसंज्ञकस्य ग्रहणं किं तु यौगिकस्य । तथाहि वर्णशब्दो-
क्षरे "वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे इति" चाभिधानात् ।
सशब्देन समानशब्दो लक्ष्यते । नामैकदेशेनापि नामग्रहणस्य भीमसेनो
भीम इत्यादौ संमतत्वात् । सगोत्रसनामेत्यादाविव समानशब्दस्यादेशः
स इति वा । अत्र समानशब्दः संज्ञात्वेन विनियुक्तो ग्राह्यो न तुल्यार्थः ।
ततश्च समानसंज्ञको वर्णः सवर्ण इत्यर्थः संपद्यते । माधवस्तु सवर्णशब्द-
स्यावृत्त्या समानस्तत्संज्ञको वर्णः सवर्ण इत्यस्याप्यर्थस्य निज्ञानादित्याह
केचित्तु समानानामेव सवर्णसंज्ञा न संध्यक्षराणां ततश्च सवर्णे परे इत्युक्ते
संबंधिशब्दत्वात्सवर्णादिति लभ्यते । यत्तु त्रिलोचनेनोक्तं यत्रानेनैव दीर्घस्त-
त्रैव परलोपः स्यान्न वृक्षा इत्यत्र । जसीति दीर्घत्वे इति समानग्रहणं समान
सवर्णे इत्यत्रेति । तन्न । एतत्सूत्रविहितसमुच्चयेन विधीयमानः परलोपस्य
सूत्रांतरविहितदीर्घोऽमासेरेव विरहात् । एकयोगनिर्दिष्टानां सहैव प्रवृत्ति-
निवृत्त्योर्दर्शनात् । यदपि क्विपक्षे स्वभावदीर्घस्य दीर्घत्वाऽभावे नदीत्यादि-
ष्वपि परलोपो न स्यात् । सन्नियोगशिष्टानामेकापायेन्यतरस्याप्यपाय
इति समानग्रहणमिति चेत् । तन्न । कृतेपि समानग्रहणे दीर्घप्रकृतिकस्य
दीर्घस्याभावाद्दोषतादवस्थ्यात् । नहि घटप्रकृतिको घटः संभवति । सत्यपि
समानग्रहणे स्वभावदीर्घस्य दीर्घत्वाभावेनेति त्वदुक्तस्य दोषस्य समाधाना-
सम्भवात् । सम्भवे वा आक्षिप्तेन समानशब्देनैव तद्भवतु । यदपि इनि-
पक्षे तु वचनांतरप्रणीतस्य स्वभावदीर्घस्य च पुनर्दीर्घः क्रियते परलोपार्थं
तदा समानग्रहणं स्थानित्वप्रतिपत्तिगौरववारणार्थमिति । तदपि न ।
सवर्णशब्दस्य संबंधिशब्दत्वेन सवर्ण इत्यस्य लाभाद्गौरवाभावात् लोके
हि मातरि पितरि च शुश्रूषितव्यमित्युच्यते गम्यते च स्वास्मिन्निति । शब्दं
विनापि स्वस्मिन्निति । न च गौरवं दोषं मन्यते क्विपक्ष इति पक्षश्च न संभ-
वतीत्युच्यते । किंच यथाऽस्मिन्पक्षे परलोपार्थं दीर्घस्यापि दीर्घो विधीयते ।

एवं च च्विपक्षेप्यभ्युपगम्यताम् । किं समानग्रहणेन । यदि तु आकारलृकाराभ्यां प्रत्याहारं कृत्वा अलोलि दीर्घः सहेति सूत्र्यते । तदा न चाशंका न चोत्तरम् । एवं अकः सवर्णे दीर्घ इति पाणिनीयसूत्रंअकोकि दीर्घ इत्येवं पठितुं युक्तम् । नच ऋति ऋ वा लृति लृवेत्यत्र सवर्ण इत्यपेक्षितमिति वाच्यम् । तयोरच्च वक्ष्यामीति फणिना प्रत्याख्यातत्वात् । सवर्ण इति किम् । दध्यत्र । मध्वेतत् । स्यादितत् । दीर्घग्रहणं मास्तु । सवर्णे सहेत्येव सूत्र्यतां सवर्णात्सवर्णपरे सहादेश इति च तदर्थः । नचागम एव किं न स्यादिति वाच्यम् । सहग्रहणसामर्थ्यात् । सहागम इति व्याख्याने हि सहग्रहण मनर्थकं स्यात् । सवर्णे परे इत्येतावतैव निर्वाहात् । दीर्घग्रहणेऽसति कः आदेशः स्यादिति चेच्छृणु । उभयोः सदृशो दीर्घ एव लभ्यते नह्रस्वो ह्रसो वा । कंठताल्वादिकस्य द्विमात्रस्य स्थाने कंठ्यतालव्यादिकद्विमात्र एवादेश उचितः । अच्चास्थां वादीपोरित्यादिलिंगाच्च । उच्यते । गंगात्र खट्वाढकं श्रीश इत्यादौ त्रिमात्रिकचतुर्मात्रिकस्य स्थाने प्लुतादेशः स्यात् । तद्वारणार्थं दीर्घग्रहणम् । अथ सहग्रहणं किमर्थम् । नच सवर्णात्सवर्णे परे दीर्घ इत्युच्यमाने द्वयोः स्थानिनोर्द्वावादेशौ स्याताम् । दस्तस्य नो दश्चेत्यनेन यथा दकारतकारयोर्द्वौ नकारौ भवत इति वाच्यम् । दीर्घ इत्यत्रैकत्वस्य विवक्षितत्वेनोभयोः स्थाने एकस्यैवादेशत्वसिद्धे अत्रार्थे मानं वादीपोः चादिरित्यादिः दृष्टांते तु दस्तस्येति नैकं वाक्यं, किं तु वाक्यद्वयम् । तथाहि । दस्तस्य न इत्येकं द्वितीयं दश्चेति वाक्यं दात्परस्य किं तस्तस्य नत्वं दकारस्य च नकार उच्यते । सवर्णे दीर्घ इति सूत्रिते पूर्वस्यैव स्थानित्वे प्रतीयते न परस्यापि । इयं स्वरे इत्यादौ यथा सप्तमीनिर्देशे पूर्वस्यैव कार्यित्वमित्युक्तत्वात् । अत उभयोः स्थानित्वलाभार्थं सहग्रहणम् । तच्च नामी इति यावदनुवर्तते । ननु विनासहेत्यनेन सहशब्दयोगे तृतीया किं न भवतीति चेन्न । उपपदविभक्तेः कारकविभक्तेर्बलीयस्त्वात् । तृतीया हि सहशब्दयोगे बिधीयमाना उपपदविभक्तिः सप्तमी तु भावे वा सामीपिकाधारे वा विहिता कारकविभक्तिः उभयोः क्रिया-

न्वयित्वात्। दीर्घ इत्यत्र तु प्रथमा। अन्तरङ्गत्वात्तदपि नामार्थमात्रे विधा-
नात्। एतेन एकः पूर्वपरयोरिति पाणिनीयसूत्रं प्रत्याख्यातम्। संहित्ये
वाधिकारस्योचितत्वात्। समानः सवर्णे दीर्घो भवति परश्च लोपमिति का
तंत्रे तु समान इति व्यर्थं समानानामेव सवर्ण संज्ञाविधानात्। सवर्णे इत्यु-
क्त्यैव समानस्यैव लाभात्। च्विप्रत्ययो भवतीति च व्यर्थं दीर्घ इत्येताव-
तैवेष्टसिद्धौ च्वेरनुपयोगात्। सत्तायाश्च सर्वाव्यभिचारितया चतुर्दशादौ
स्वराः दश समाना इत्यादावित्यर्थाल्लाभसंभवात्। परश्च लोपमित्यपि व्यर्थं,
तत्स्थाने संहित्यस्यैव पठितुं युक्तत्वात् किं च अस्यात्र पाठोऽयुक्तः इवर्णो
यमित्यनन्तरं पाठो युक्तः। तथा सति इवर्णो यमसवर्णे इत्यत्रासवर्णग्रहणं न
कर्तव्यं भवति। परत्वादनेन सवर्णे दीर्घविधानस्य सम्भवात्। न च क्रम-
भङ्गो दोषः। लाघवस्य सत्त्वे तस्याकिंचित्करत्वात्। किंच यथा न्यासेऽपि
असवर्णग्रहणं व्यर्थं सवर्णे परे दीर्घस्यैवापवादत्वेन यत्वाप्रसङ्गात्। यत्तु
त्रिलोचनेनोक्तं च्विरत्र न सम्भवति प्रकृतिविकाराभावाभावात्। तदयुक्तं
वर्णस्यैवावस्थाभेदेन विवर्तमानत्वात्। तथाहि प्राचीनां ह्रस्वावस्थां प्रति-
पद्यमानो वर्ण एव धर्मी प्रतीयते। यथा दुग्धं दधीभवति लोहं सुवर्णीभवति
गौरत्वलोहत्वसामान्यानुगमाच्चिः सिद्धस्तथात्रापीत्यदोष इति तन्न।
दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। दुग्धलोहयोः सावयवत्वात्सगुणत्वाच्च संभ-
वति धर्मित्वम्। दधिसुवर्णयोश्च तदवयवगुणानुगमाद्विकृतित्वं शब्दस्य तु
निरवयवत्वान्निर्गुणत्वाच्च कथं प्रकृतिविकृतिभावः। नहि ह्रस्वोपादानको
दीर्घः सम्भवति येन तद्गुणावयवभाग्भवेत्। तद्गतसामान्यानुगमात्तथाभ्युप-
गमे त्वतिप्रसङ्गः स्यात्। मनुजे पशौ च प्राणित्वानुगमात्। अथ बुद्धिपरि
कल्पितं तत्स्थाने प्रयुक्तत्वात्तदादाय च्वेः सम्भव उच्यते। एवमपि तत्सम-
र्थनस्य फलाभाव उक्त एव। नित्यत्वे शब्दस्य प्रकृतिविकृतित्वं न सम्भ
वति कार्यत्वपक्षेऽपि शब्दस्याकाश उपादानं पञ्चभूतानि वा उभयथापि तद-
सम्भवः शब्दोपादानकत्वाभावात्। निमित्तकारणेनापि प्रकृतिविकृति-
भावाभ्युपगमे घटी भवति दण्ड इति स्यात्। कथं तर्हि "द्वौ चापरौ वर्णे

विकारनाशौ" "गूढात्मा वर्णविकृतेः" इति च। शृणु । विकृतिरिव विकृतिस्तस्य स्थानेऽस्य प्रयोगादौपचारिकः प्रयोगः। किंच श्रद्धात्र। श्रीमितः श्रीत इत्यादावव्याप्तिः । अदीर्घस्य दीर्घीभवनरूपस्य व्यर्थस्यात्राभावात् । तदर्थं "अदीर्घो दीर्घतां याति नास्ति दीर्घस्य दीर्घता ॥ पूर्वदीर्घस्वरं दृष्ट्वा परलोपो विधीयते"इति वचनकल्पने त्वतिगौरवं दीर्घइत्युक्तौ तु दीर्घस्यापि दीर्घः सम्भवति । परलोपार्थं पर्जन्यवच्छास्त्रप्रवृत्तेः । यदपि दीर्घो स्यास्तीति दीर्घी । इति । दीर्घत्ववान् भवतीत्युक्तम् । तदपि तुच्छम् दीर्घोभवतीत्येव सिद्धे इनेर्वैयर्थ्यात् । दीर्घत्ववान् भवतीत्यपेक्षया दीर्घो भवतीत्यस्यैव लघुत्वात् । घटो भवतीति प्रयुज्यते । न तु घटत्ववान् भवतीति । स्यादेतत । दधीह । भानूदयः । श्रीशः । वधूपमेत्यादौ यकारवकारादिः प्राप्नोति । सवर्णे दीर्घश्च । तत्र किं भवतीत्यत आह । "सामान्यशास्त्रतो नूनं विशेषो बलवान्भवेदिति" । शासनाच्छास्त्रं लक्षणं नूनमित्यर्थनिश्चयेऽव्ययम् विचारे वा । बहुव्यापकं शास्त्रं सामान्यशास्त्रम् अल्पव्यापको विधिर्विशेषः । सामान्यशास्त्रमुत्सर्गः विशेषोऽपवादः विधिर्बाधक इति पर्यवसितोऽर्थः यथा रामोऽत्रेत्यत्र लोपशोऽपवाद उत्वम् । सर्वस्मै इत्यत्राकः स्मट् न्यायसिद्धमिदं न तु वाचनिकं तथाहि । लोके तावत्तक्रकौण्डिन्यन्यायः । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति तक्रदानेन दधिदानं बाध्यते । वेदेपि न हिंस्यादिति निषेधोऽग्निषोमीयपशुहिंसा विधिना बाध्यते तदेतदभिप्रेत्य येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीत्युच्यते । यथा कार्येणेत्युत्सर्गः आतो ङ इत्यपवादः । नुडाम इत्युत्सर्गः सुडाम इत्यपवादः । एवंमियमित्यस्य स्वरसामान्ये विहितस्य विशेषे सवर्णे स्वरे दीर्घोपवादः नन्वत्र यकारादेर्दीर्घस्य च येन नाप्राप्तन्यायोस्ति । दैत्यारिरित्यादौ दीर्घस्य प्राप्तः यकारादिस्तु न प्राप्नोतीति चेन्मैवम् । उक्तोदाहरणार्थम् । आदेर्दीर्घः सहेत्येव वक्तुं युक्तत्वात्सवर्णग्रहणस्य वैयर्थ्यापातात् अतः सवर्णग्रहणं सर्वसमानाभिप्रायेण तेन येन नाप्राप्तन्यायो लभ्यते अभ्युपेत्यवादेनाह परेण पूर्वबाधोवेति सूत्रपाठे परपठितेन विधिना पूर्व-

पठितो विधिर्बाध्यते । यथा प्रधीणामित्यादौ परेण नुमा यकारादिर्बाध्यते। तथा सवर्णदीर्घेण इयमित्यादिर्बाध्यते । माधवस्त्वाह । दध्यत्रेत्यादौ सावकाशत्वं श्रद्धात्रेत्यादि बहुतरावकाशेन दीर्घत्वेन कथं बाध्यत इति कोप्याशंकेत । तत्र व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणप्रवृत्तिरिति दधीहेत्यादिविषयकलक्षणवैयर्थ्यप्रसङ्गात्परिहारः । जातिपक्षे तु नैवमिति तमाश्रित्य परिहारान्तरमाह । परेणेति । अत्रार्थे काप्यतः, वादीपांः, तिसृचतसृवदिति निर्देशश्च मानम् । इदं च नित्यान्तरङ्गापवादव्यतिरिक्तस्थले द्रष्टव्यम् । तत्र। नित्यमावश्यकत्वाद्बाधकम्, अन्तरङ्गं तु लाघवात् । अपवादस्तु वचनप्रामाण्यात् । परस्परविषयपरिहारेण लब्धावकाशयोर्विध्योरेकत्र प्रसङ्गे परत्वं ग्राह्यम् । यथा रामेषु इत्यत्रैस्भि बहुत्वे इति सावकाशं रामाभ्यामित्यत्र त्वद्गीति रामेभ्य इत्यत्र युगपत्प्रसंगे विनिगमकाभावादप्रतिपत्तिः स्यात् द्वयं वा । तत्रास्माद्वचनात्परं क्रियते अयजे इदं वृक्षे इहेत्यादौ त्वन्तरङ्गत्वेनाप्यइ ए इत्यनेन दीर्घो बाध्यते । नन्वेवं वारीणां स्त्रीणामित्यादौ परत्वान्नुमियोः सतोर्नुट्स्यादित्यत आह "प्रायशो दृश्यतामिहेति" दृशिर्ज्ञानार्थः "दृष्टिर्ज्ञानेऽक्ष्णि दर्शने" इत्यभिधानात् । कर्मणि प्ररणं वा प्रायशब्दबाहुल्येऽव्ययं वेति पक्षान्तरे । ततोयमर्थः । बाहुल्येनेह शास्त्रे परेण लक्षणेन पूर्वस्य लक्षणस्य बाधः । प्रतिरोधो ज्ञायताम् । क्वचित्तु पूर्वेणापि परस्य प्रवृत्तिनिरोधो ज्ञायतामिति । तेन स्त्रीणामित्यादौ पूर्वोपि नुट् परमियं बाधते वारीणामित्यत्र नुमं च । नन्वत्र नुमि नुटि च को विशेष इति चेच्छृणु नुटि सति नामीति दीर्घः प्रवर्तते । नुमि सति तु तस्य प्रकृत्यवयवत्वात् यज्वनामित्यादाविव स न स्यात् एवं दधीहेत्यादौ परेण दीर्घशास्त्रेण पूर्वस्य यत्वशास्त्रस्य बाधः । एवमन्यत्रापि पूर्वेण परस्य बाधो बोध्यः अ इ ए । अवर्णे इवर्णे ए इति कातंत्रसूत्रे तूभयत्र वर्णग्रहोऽनर्थकः। जातिग्रहेणैवेष्टसिद्धेः । केवलग्रहणे सवर्णग्रहणमिति परिभाषणाद्वा निर्देशस्य सादृश्यपरत्वाद्वा । एतेन उवर्णे ओ, ऋवर्णे अर्, लृवर्णे अल्, इति त्रिसूत्र्यामपि वर्णग्रहणं प्रत्याख्यातम् । स्यादेतत् । अग्रहणमत्र

मास्तु । एदोतोऽत इत्यतोऽत इत्यनुवर्त्यते । न च तस्यै त्परत्वात् रमेश इत्यादावव्याप्तिः स्यादिति वाच्यम् । अत्वजातिग्रहणेन सर्वव्यक्त्युपलम्भसम्भवात्, तपरेण भिन्नकालव्यक्तग्रहइत्यपरिभाषणाच्च । अन्यथा व्यक्तेनिर्देशे अग्रहणे कृतेऽपि उक्तदोषतादवस्थ्यात् । अत्रोच्यते । तपरनिर्देशे तत्कालव्यक्तिरेव विवक्षिता न भिन्नकालव्यक्तिरपि । प्रमाणं चात्रेदमग्रहणम् अन्यथा अत इत्यनुवृत्त्यैव सिद्धे किमग्रहेण । यद्यपि अत्रामिषु गुणालैऔ इति सूत्रयितुमुचितम्, तथापि स्पष्टार्था कालापसूत्रेष्वेवमपि गौरवप्रदर्शनार्था च षट्सूत्री प्रणीता । ऋइअर् अत्र क्वचिदारिति वार्तिकं तच्च माधवेनेत्थं प्रत्याख्यातम् । ऋणऋणमित्यादाववर्णागमे कृते तस्य ऋवर्णेन सहानेनारिच पूर्वेण सवर्णे दीर्घः । अथवा अरित्यत्र सवर्णे दीर्घ इत्यतो दीर्घ इत्यनुवर्तते वाशब्दश्च निपातत्वात्कश्चिदर्थः । तेनावर्णस्य ऋवर्णेन सह भाव्यमान एवा क्वचिद्दीर्घो भवतीति । अन्ये तु शीतेन आ ऋत इत्याङ्प्रश्लेषं वर्णयन्ति । ऌ अल् । अत्र पाणिनीयमतानुयायिनः क्वचिदालिति वक्तव्यमित्याहुः।माल्कारीयति मल्कारीयति।एतत्प्रत्याख्यानं तु पूर्ववद्द्रष्टव्यम।वररुचिपतंजलिमतानुयायिनस्त्वाहुः इदं न वक्तव्यम।उक्तरूपस्यासंमतत्वात् । ग्रहणकशास्त्रे अणग्रहणस्य प्रत्याख्यातत्वेन उपसर्गादृतिधाताविति सूत्रे ऋग्रहणेन ऌग्रहणस्यानुपस्थानादिति । वस्तुतस्तु त्रयाणामपि मतमेकमेव तपरस्तत्कालस्येत्यनेन ऋग्रहणे ऌतोप्युपस्थितिसम्भवात् । एरे ए ए इति योगविभागः कर्तव्यः । तत्र च अग्रहणमेग्रहणं वा ग्रहणं चानुवर्तनीयम् । अवर्णादिकारे परे सह वा एकार इति च तदर्थः । व्यवस्थितविकल्पोयम् । तेनावर्णान्तादुपसर्गादिकारादौ धातौ नित्यमेकारः । नामधातौ तु वा प्रेजते उपेडकीयति उपेडकीयति । तत ऐऐ इति द्वितीयो योगः । तत्र ए इत्यनुवर्तते । तस्य च यथास्थित एवार्थः । एवमो औ इत्यत्राप्यो इति योगविभागं कृत्वा अओवा चानुवर्त्य अवर्णान्तादुपसर्गादोकारादौ धातौ नित्यमोकारः । नामधातौ तु वेति व्याख्येयम् । तेन उपोषति । प्रोधीयति प्रौधीयति । एवं विबोधः बिंबौष्ठ इत्यादावपि निर्बाधम् एकारे ऐ ऐकारे च

ओकारे औ औकारे चेति कातन्त्रसूत्रेषु कारग्रहणं स्वर्गं सवर्णाभावादेव ए अग्नि-
त्यादाविव दोषादर्शनात ॥ ॥ हाटकेशपुरस्थायी विनायकसुतोऽकरोत ॥ रघु-
नाथाभिधो व्याख्यां स्वरसंधेर्यथामति॥ **अथ प्रकृतिभावः। नामी स्वरे परे**
**सति तेन सहामीशब्दः सन्धि न याति** । अत्र मासन्नात्प्रस्तुतत्वाच्च सन्धिरेव
निषिध्यते । अदस इति वक्तव्यम वाग्रहणमनुवर्त्य व्यवस्थितविकल्पो
वा व्याख्येयः । तेन अमीमास्यामीति अमीत्यत्र मातिप्रसङ्गः । शर्मीत्यादि
त्वर्थवद्ग्रहणेनानर्थकस्येति परिभाषया वारयितुं शक्यम । माधवस्तु अत्र
एऐ इत्यत एइति सप्तम्यन्तमनुवर्त्तते । तेन एत्वे कृते पश्चाज्जातोऽमीशब्द
स्तथाविधश्चादस एव संभवति नान्यस्येत्याह । ननु परेण स्वरेण सन्धिनेति
विशेषः कस्माल्लब्ध इति चेत । शृणु । स्वरे परे सन्धि न यातीत्युक्ते उप-
स्थितत्वात्तेनैवेति लभ्यते । अत्र च नामीति निर्देशोऽप्यनुकूल । अत्र नेति
योगं विभज्य कश्चिदुक्तं नेति व्याख्येयम। तेन वातमर्मा आस्ते इत्यादि सिध्यति
ननु नादस इति सूत्रयित्वा पदांते इत्यनुवर्त्य द्विवचनादिसाधारण्येन व्या-
ख्यायतामितिचेन्न द्विवचनं एवं द्वित्वे इत्यनेन सिद्धत्वात । अमूनीत्यादाव-
तिप्रसक्तत्वात मात्रागौरवाच्च । बहुवचनममी इति कालापसूत्रं बहुत्वेऽमी
इति अदसोऽमी इति वा पठितुं युक्तं लाघवात । **स्वे द्वित्वे** । ईश्च ऊश्च
एश्च एषां समाहारो स्वे । एकत्वे द्विगुद्वंद्वौ इति नपुंसकत्वेपि नपुंसकस्येति
ह्रस्वो न । स्वोरिति निर्देशेन एकत्वे ङीत्यस्यानित्यत्वज्ञापनात । अनुकरण
त्वाद्वा ह्रस्वे कृते एकारस्यानुकरणमिदमैकारस्य वा इवर्णस्येति संशयः
स्यादित्यसंदेहार्थं तन्न कृतम अरैदो आरै आ इत्यादावप्येवं बोध्यम ।
अथवा भिन्नमेव पदं सर्वत्राविभक्तिकश्च निर्देशः यत्तु सर्वेषां द्वित्वे सम्बन्धार्थं
स्वे इति समस्तं पदमिति माधवेनोक्तं तन्न । समासाभावे स्वेइत्यस्य द्वित्व-
संबंधेऽनुपपत्त्यदर्शनात । अन्यान्वयस्यैकवाक्येऽदर्शनाच्च वाक्यभेदगौरवात
प्रयोजनाभावाच्च । ननु ईदूतोः स्थाने यवयोः कृतयोः संदेहो भवति किं ह्रस्व
योर्निर्देश उत दीर्घयोरिति । यद्यपि ह्रस्वनिर्देशे जातिग्रहणात्साहचर्याद्वा
दीर्घव्यक्तेरपि ग्रहणं सिध्यति तथापि अकुर्वह्यावामित्यादावतिप्रसंगो

दुर्वार इति चेत । न । अत्र दीर्घयोरेव ग्रहणं न ह्रस्वयोरिति ज्ञापकान्नि-र्णयसंभवात् । ज्ञापकं तु घिरीइत्यत्र दीर्घोच्चारणम् । तद्धिऔइत्यत्रानु-वृत्त्यर्थं क्रियते । हेगंगे इत्यादेस्तु ह्रस्वनिर्देशेपि सुसाध्यत्वात् । औइत्यनेन तु ईकारे कृते माले आनयेत्यादौ सन्धिनिषेधार्थं तत्क्रियते । यदि तु ह्रस्व ग्रहणमत्र स्यात्तर्हि ह्रस्वोच्चारणमेव कुर्यात् औ यू इत्यत्रापि यू इति दीर्घ-निर्देश इति वक्ष्यते । अथ द्वित्वे इति कस्य विशेषणं अत्रान्यस्य विशेष्यस्या विवक्षितत्वादानंतर्य्येण संबंधाच्च य्वेइत्यस्य द्वित्वे वर्तमानं यदीदूदेद् तत्स-न्धिं न यातीति किं वा पदग्रहणमनुवर्त्य तच्चेदादिना विशेष्य तस्य विशे षणं व्याख्यायते । द्वित्वे वर्तमानं यदीदूदेदंतं पदमिति कश्चात्र विशेषः । आद्ये यायमुभयोः स्थाने विहितो लभते सावन्यन्तरतो व्यपदेशमिति । हरी आसाते, भानू इमौ गंगे इमे इत्यादिसिद्धावपि पचेते इमावित्यादिर्न सिध्यति नह्यत्रैद्वित्वे वर्तते किंतु तदन्तम् । द्वितीये तूक्तदोषाभावेपि कुमार्योरगारं कुमार्य्यगारं वध्वोरगारं वध्वगारमिति न सिध्यति । अत्र ह्योसि लुप्ते ईदूदंतं द्वित्वे वर्तते । उच्यते । श्रुतत्वात् य्वे इत्यस्यैव विशेषणं द्वित्वे इति।नच पचेते इत्यादावव्याप्तिः।एकारमात्रस्य द्वित्वे वृत्त्यसंभवेन सामर्थ्यात्तदन्तं ग्रहीष्यते । नन गंगे इमे इत्यादावस्तीति वाच्यम् । घिरीत्यादौ दीर्घनिर्देशसामर्थ्या-दीकारान्तत्वेन सन्धिनिषेधकाभावात् । यद्वा एकारांशे तदन्तस्य विशेषणमंशान्त-रेणेति वैरूप्यपरिहाराय तदन्तस्यैव विशेषणमस्तु । नच कुमार्य्यगार-मित्यादावव्याप्तिः । समासे कृते पूर्वोत्तरपदयोरर्थ एव नास्ति किं तु समुदायस्यैवार्थवत्त्वमिति वक्ष्यमाणत्वात् । पूर्वपदोत्तरपदाभ्यामुभयार्थप्रति पादनात् । पूर्वपदस्य द्वित्वमात्रपरत्वाभावाद्वा । अशुक्ले शुक्ले संपद्येतां शुक्लयास्तां वस्त्रे इत्यत्रापि च्व्यंतस्याव्ययत्वादसंख्यत्वादद्वित्वार्थत्वम् । अत्रापि परेणैव सन्धिनिषेधः । तत्र ञित्स्वरितेत उभे इति निर्देशो लिङ्गम् यत्तु ईकारादीनां प्रत्ययत्वात्प्रत्ययग्रहणे तदन्तग्रहणादीकाराद्यन्तम् । द्वित्वे वर्तमानमित्युक्त्वा अत्रापि कुमार्योरगारं कुमार्य्यगारमित्यत्र समासप्रत्यययोरिति विभक्तेर्लुक्ति सत्यपि द्वित्वाऽनपायात्समासः प्रकृतिभाव-

स्तत्पुरुषस्योत्तरपदार्थप्राधान्यात् । पूर्वपदस्य जहत्स्वार्थस्याद्वित्ववृत्तेर्न प्रव-
र्ततीत्युक्तं माधवेन । तन्न । ईकारादीनां प्रत्ययत्वस्यासिद्धेः । नह्यत्र प्रत्य
यत्वोपस्थापकं किञ्चिदस्ति । ननु पचेते इत्यत्रैकारमात्रस्य प्रत्ययत्वमस्ति ।
तस्य प्रत्ययावयवत्वात् । नच द्वित्वमेव प्रत्ययत्वस्याक्षेपकमिति वाच्यम् ।
अयगारं स्वगारमित्यत्र द्वित्वे सत्यपि प्रत्ययादर्शनात् । यदपि पूर्वपदस्य
जहत्स्वार्थस्याद्वित्ववृत्तेरित्युक्तम् । तदपि न उभयोरपि जहत्स्वार्थत्वस्य ।
तुल्यत्वात्, समुदायस्यैव विशिष्टार्थे शक्तेः स्वीकारात् उत्तरपदार्थप्राधान्या-
दिति हेतोरसिद्धेः समुदाये एकदेशस्यानर्थक्याच्च । वस्तुतस्तु मास्तु तदन्त-
विधिः द्वित्वे यत् एवे तत्र सन्धि यातीत्येवार्थः । इत्वादिजातिनिर्देशो
व्यक्तेर्वा वारिणी इति मुख्यमुदाहरणं हरी वायू इत्यत्र तु द्वित्वार्थेन सह
एकादेशोऽपि द्वित्वार्थे इतीदूतोर्द्वित्वे वृत्तिः । गंगे कूले इत्यादौ तु द्वित्वार्थके
वर्णेन सहैकादेशो द्वित्वार्थे इत्येकारस्य द्वित्वे वृत्तिः । अकुर्वहीत्यत्र तु
द्वित्वार्थवत्त्वस्य वहीति समुदायस्यावयव इवर्णो न द्वित्वे वर्तते इति नाति
प्रसंगः कुमार्यगारं शुक्लयोम्नामित्यादावपि नेदूतोर्द्वित्वे वृत्तिः । अनया-
रीत्या पचेते इत्यादावप्यव्याप्तिप्रसङ्गः स चेत्थं परिहर्त्तव्यः । एवे द्वित्वे इत्यत्र
एकारग्रहणमनुवर्त्य तदनुवृत्तिसामर्थ्याच्च एकारांतमपि द्विवचनं ग्राह्यम् ।
एवं च औ भू धिरी इत्यत्र ह्रस्व एवोचितः । यत्तु मणीवादीनां नेति केचि-
त्पठंति तन्निर्मूलम् । मणी इवेत्यादेरेवेष्टत्वात् । मणीवोष्ट्रस्येति प्रयोगस्य तु वा
इवार्थकेन वाशब्देन वशब्देन वा निर्वाहात् । "वा विकल्पोपमानयोरिति"
"वंमप्येतस्मि जानीयादिवार्थे तु तदव्ययमिति मेदिनी" । यत्तु द्विवचनमनौ इति
कातंत्रसूत्रं तन्न सम्यक् । पर्युदासे अकुर्वह्यावामित्यादावतिप्रसङ्गात् ।
प्रसज्यप्रतिषेधे पचतोऽत्रेत्यादावतिप्रसंगात् । लाघवात् एवे द्वित्वे इति सूत्र-
यितुमुचितत्वाच्च । यत्तु त्रिलोचनदासेनोक्तं स्वरो द्विवचनं स्वरे प्रकृत्या
तिष्ठतीति तन्न । पचेते पचेथे इत्यत्राव्याप्तिप्रसङ्गात् । एतद्दोषवारणार्थं
प्रसज्यपक्षग्रहे तु पचतोऽत्र अकुर्वह्यावामित्यत्रातिव्याप्तिः । एतेन ईदूदेद्द्वि-
वचनं प्रगृह्यमिति पाणिनीयसूत्रमपि दूषितं तपरकरणस्य प्रयोजनकाभावात् ।

लाघवात् एवैद्विवचनं प्रगृह्यमिति पाणिनीयसूत्रमपि वा वक्तुमुचितत्वात् ।
**औ निपातः** औ इति अकारादारभ्य औकारेण प्रत्याहारः । तेन कृत्स्नः स्वरो लब्धः स च विशेष्यः लाघवात् । निपात औ इति वक्तव्ये प्रथमोच्चारणसामर्थ्यात् तेन निपातसंज्ञकः स्वरो लब्धः न तु स्वरांतो निपातइति अत्र चार्थे द्वंद्वः । वेङ्घोरित्यादिनिर्देशोऽप्यनुकूलः । अत्र माधवः ।किमिदमौकारस्यैव ग्रहणमाहोस्विददौतोर्वा आदौतोर्वा अदोतोर्वाआदोतोर्वा तत्राद्ये पक्षे औमात्रस्य ग्रहणं निपातस्य वा तत्रावादेशस्य निर्विषयत्वप्रसङ्गाद्दिवादावडिति निर्देशाच्च । नाद्यः । द्वितीयेप्यौकारांतस्य ग्रहणं केवलस्य वा तत्र हेतौ रात्रौ एतयोः स्वरादित्वेनानिपातत्वात् । हाहौ इहौ अनयोश्छांदसत्वा, दृष्टानुविधित्वाच्चच्छंदसः अन्येषां चौकारांतानामभावान्नाद्यः नद्वितीयःएकस्वरत्वेनैवसिद्धत्वात्। नापि द्वितीयः।तत्र हि अकारमात्रग्रहणे अइएइत्यादीनांनिर्विषयत्वप्रसंगः । अकारांतनिपातग्रहणं तु चादिभिश्चेति ज्ञापकान्न । एकाक्ष्यकारनिपातग्रहणमप्येकस्वरत्वेन सिद्धत्वात् । अइए इत्यतोऽनुवर्तनीयत्वे पृथग्ग्रहणाच्च न भवति । औकारोऽत्राद्यपक्षवत्परिहर्तव्यः । नच तृतीयः । तत्राऽऽकारमात्रस्य टौसोरिति निर्देशान्निषेधाभावात् । आकारांतनिपातस्यापि वेङ्घोरिति निर्देशादनिषेधात् । एकाक्ष्याकारनिपातस्य त्वेकस्वरत्वेन सिद्धत्वात् औकारोऽत्रापि प्राग्वत्परिह्रियते । नापि तुर्यः अकारस्य द्वितीयपक्षवत्परिहार्य्यत्वात् । ओकारमात्रग्रहणे अवादेशस्य वैयर्थ्यापातात् । एकाक्ष्योकारनिपातग्रहणस्य त्वेकस्वरत्वेनैव सिद्धत्वात् ओऔइत्यतोनुवर्तनीयत्वे पृथग्योगग्रहणाच्च । अस्य पुनरोकारांतनिपातग्रहादुपपन्नत्वेप्यकारानुपपत्त्यानुपपन्नत्वम् । अतः परिशेष्यात्पंचम एवोत्तमतमः पक्ष इत्याह । अत्रेदं वक्तव्यम् । औमात्रस्य ग्रह इत्यत्रापि पक्षे आकारग्रहणं व्यर्थम् । एकस्वरत्वेनैव सिद्धत्वात् । नच ङिदङिद्भेदादाकारस्य द्वैविध्ये अङित एव यथा स्यादिति नियमार्थमाकारग्रहणमिति वाच्यम् । ङित आकारस्य अनिपातत्वेन नियमार्थत्वायोगात् । नह्यत्र माङादीनां निपातसंज्ञास्ति । चादिभ्यः पृथगेव पाठात् । प्रयोगाभावाच्च । ओकारग्रहणमपि व्यर्थम् । एकस्वरत्वे-

नैव सिद्धत्वात नच ओकारांतग्रहणार्थं तत् । ओ औ इत्यतोऽनुवृत्त्यैव तद्धर्मस्य सिद्धत्वात् । अतस्तवौग्रहणं व्यर्थं स्यात् । यदपि हंतौ रात्रौ एतयोः स्वरादित्वेनानिपातत्वादित्युक्तम् । तदपि न स्वरादीनां निपातानां चात्र भेदादर्शनात् । अव्ययप्रकरणेचादिष्वेव स्वरादिपाठदर्शनाच्च । अन्यथा स्वरादीनामव्ययत्वासिद्धेश्च । यदपि हाहौ इहौ अनयोश्छान्दसत्वादिति । तन्न । छान्दसत्वे मानाऽभावात् । नह्येतौ छन्दस्येव प्रयोक्तव्यौ इति वचनमस्मिन्ग्रंथे पाणिनीये वोपलभ्यते अतः पारिशेष्यादित्युक्तिरुक्तरीत्या परिशेषाभावप्रतिपादनेनैव गतेति दिक् । औ इति आकारमारभ्य औकारान्तावर्णा आद्यन्ताभ्यामित्यनेन गृह्यन्ते । ततो निपातसंज्ञकः स्वरो न सन्धिं याति स्वरे परे इति पर्यवसन्नोऽर्थः । अ अपेहि उ उत्तिष्ठ, इ इंद्रं पश्य । ननु ओकारांतस्य निपातस्य अहो इत्यादेग्रहणं न प्राप्नोति । स्वरांतोयं निपातो न तु स्वररूप इति चेन्न । ओऔ इति सूत्रान्मंडूकप्लुत्या ओकारोऽनुवर्तते स च सामर्थ्यान्निपातस्य विशेषणं केवलस्य सिद्धत्वात् । तत ओकारान्तो निपातो न सन्धिं यातीत्यर्थलाभात् । न चैवमाङ्यतिव्याप्तिः । आङः प्रादिषु पठितस्य निपातत्वाभावात् । चादिर्निपात इति चादीनामेव निपातसंज्ञाभिधानात् प्रयोगे ङकारस्याश्रवणेन आङनाङोर्विवेकः कथमिति चेत । अर्थ एव भेदकः । वाक्यस्मरणयोरनाङ् अन्यत्राङ् । पूर्वोपक्रान्तवाक्यार्थस्याऽन्यथात्वद्योतनायाकारः प्रयुज्यते । आ एवं नु मन्यसे । नैवं पूर्वममंस्थाः संप्रति मन्यस इति । वाक्यारंभसूचनायाकार इत्यपरे । तथा स्मृतेः सूचक आकारः प्रयुज्यते । ततः स्मृतोऽर्थो निर्दिश्यते । आ एवं किलैतदिति स्वराणामपि निपातानिपातविवेकोऽर्थाधीनः । अनिषेधाक्षेपयोः इ विस्मये । उ जुगुप्सासन्तापान्वर्थाप्यर्थेषु । इत्याद्यर्थेषु निपातानामन्येषु, अत्रापि स्वरे परे सन्धिनिषेधात् पूर्वेण सह सन्धिर्भवत्येव जानु उ अस्य जान्वस्य रुजति उकारयोः सवर्णे दीर्घे कृते निपातस्य विकृतत्वात् परेणापि सन्धिर्भवत्येव । इहामदोदः समभवददोऽभवदित्यत्र च्व्यन्तत्वेन निपातत्वेपि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य शीघ्रमुपस्थितिर्भवति लाक्षणिकस्य तु लक्षणा

नुसंधानद्वारा विलंबिता । न चैवमपि गोऽभवदित्यत्रातिप्रसङ्गः गौणत्वात् जाड्यादिधर्मेण वाहीके गोत्वारोपात्, मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् । गौरनुबन्ध्य इत्युक्ते नहि कश्चिद्वाहीकमनुबध्नाति । यत्तु-केचित औ इत्यस्यावृत्तिं कृत्वा एकेन प्रत्याहारग्रहणं द्वितीयेन तु आओ इति छेदेन आकारौकारयोर्ग्रहणमित्याहुः । तन्न । पूर्वोक्तमाधवमतदूषणेनैव दूषितत्वात् आवृत्तेः प्रयोजनाभावात् । माधवस्तु निपातग्रहणेनैवैकस्वरे लब्धे औग्रहणमाकारांशे नियमार्थमोकारांशे ओकारांतनिपातग्रहणार्थमित्याह । तथाहि । निपात इति किं । स्वरहसमुदायस्य निपातस्य ग्रहणमेकहसस्य वा एकस्वरस्य वा । नाद्यः । अन्यथा स्म्थां मेऽन्योगिति निर्देशात् नापि द्वितीयः अभावात् । अतोंत्य एव पक्षः प्रमाणमिति । तन्न । पूर्वोक्तरीत्या नियमासम्भवादौग्रहणं व्यर्थमेव । अन्ये तु अइएइत्यादिसूत्रेभ्यो इ उ ऋ ऌ ए ऐ ओऔ इति वर्णा अनुवर्त्याः । तेच निपातग्रहणे न विशेषणीयाः । ततश्च निपातसंज्ञका आकारादय इत्यर्थोऽपि लभ्यते । द्वितियमोकार ग्रहणमनुवर्तते । तदनुवृत्तिसामार्थ्याद्विशेषणविशेष्यभावव्यत्यासः । ततश्च ओकारान्तो निपात इत्यर्थोपि लभ्यते । एवं सिद्धे औग्रहणं व्यर्थमेवमित्याहुः । अपरे तु आविति योगविभागः कर्त्तव्यः । तत्र अइउऋऌएओ इत्येतेऽनुवर्तनीयाः । एकमात्रादिव्यक्तिश्च विवक्षिता औशब्दे च प्रत्याहारः । ततश्चायमर्थः । स्वराणामकारादिरादेशो वा स्वरे स च सन्धिं न यातीति । सन्धिनिषेधस्तु अकारादिविधिसामर्थ्यान्निषेधप्रकरणबलाद्वा लभ्यः । ततश्च ब्रह्म ऋषिः ब्रह्मर्षिः, चक्रि अत्र चक्यत्र मधु एतत् मध्वेतत्, होतृ ऌकारः होतृऌकारः, त्वे इति वा यो इति इत्यादौ क्वचिदकारादिर्विधीयते । सच सन्धिं न यातीत्याहुः । अत्र वेत्यनुवर्त्य व्यवस्थितविकल्पाश्रयणात् । उइति विति किमु उक्तं किम्बुक्तम् भो इं इडा भो यिडेत्यादि निर्बाह्यम् । यत्तु ओदंता अइउआ निपाताः स्वरे प्रकृत्येति कातंत्रसूत्रम् । तत्रांतग्रहणं व्यर्थम् ओ इत्येव सुपठम् । ओकारस्य निपातस्याभावादोकारांतस्यैव ग्रहणसंभवात् । ओकारस्य निपातस्य सत्वे तु तत्राप्यव्याप्तिर्दोषः तस्यापि प्रकृतिभावस्येष्ट-

त्वात्। अइउ आ इत्यपि व्यर्थम्। स्वरा इति पूर्वसूत्रादनुवृत्तेः सत्वात्। नचैतद्भिन्ने स्वरे अतिव्याप्तिः। तत्रापि प्रकृतिभावस्येष्टत्वात्। तथा च पाणिनिः। निपात एकाजनाङित्यत्राज्ग्रहणं करोति बोपदेवोपि नाजोंतोऽनादिष्लुतश्चेत्यत्राजित्याह। न चान्ये न संत्येव तदा तु परिगणनं सुतरां व्यर्थं प्रकृत्येत्यपि व्यर्थं न सन्धया इत्यस्य पूर्वसूत्रादनुवृत्तेः सत्वात्। स्वरे इत्यपि व्यर्थं व्यञ्जनानवसानयोः सन्धेरप्रसङ्गात्। अवर्ण इवर्णे ए इत्यादिभ्योऽवर्णादीननुवर्त्य स्वरा इति वानुवर्त्य विभक्तिं च विपरिणमय्य तेषु प्रकृत्येति लब्धुं शक्यत्वाच्चेति दिक्। निपात एकाजनाङिति पाणिनीयसूत्रे एकाजिति व्यर्थं निपातोऽनाङित्येव सम्यक्। अनाङिति पर्युदासबलादेव अज्मात्रनिपातस्य लाभात्। निपातग्रहणं तु ओदित्युत्तरसूत्रार्थं स्पष्टार्थमिहैव कृतम्। यदि त्वोदित्यत्रा नाङित्यनुवर्त्य आङभिन्न आङ्सदृश ओदिति व्याख्यायते तदा निपात इत्यपि मास्तु। नन्वनाङ् इति नायं पर्युदासः किं तु प्रसज्यप्रतिषेधोऽयं प्रतिषिद्धार्थमेतत्स्यादित्योत्सूत्रस्थभाष्यादिति चेन्न। समासनिर्देशेन पर्युदासोऽयमित्येव निर्णयात्। यदि हि प्रसज्यप्रतिषेधोऽभिप्रेतः स्यात्तर्हि मात्रालाघवार्थं नाङ् इत्येव ब्रूयात्। प्रतिषिद्धार्थमिति भाष्यं तु गौण्या वृत्त्या पर्युदासपरमेव। पर्युदासेऽपि उत्तरपदार्थस्य वर्जनात्। प्रतिषेधशब्द प्रवृत्तिसंभवात्। नन्वेवमप्योदंतस्य ओदिति सूत्रोदाहरणता न घटते आङ्भिन्नैकाच्निपातत्वेन पूर्वसूत्रेण सिद्धत्वादिति चेन्न। अनाङिति आङ्भिन्नप्रतिपदपठितैकाच्निपातत्वेन सादृश्यस्य विवक्षणात्। यद्वा निपात इति न प्रत्याख्यायते। सप्तम्यन्तं च छिद्यते। निपातपाठे पठित आङ्भिन्नः अच् प्रगृह्यमिति व्याख्यानात्। अदोऽभवत् गोऽभवदित्यादौ नातिव्याप्तिः निपातेषु प्रतिपदपाठाभावात्। अकारो वासुदेवः- अस्मात् आ आङ्मर्यादेत्यव्ययीभावः। सवर्णदीर्घः ह्रस्वः। सुप्प्रमादेशः अभिहितः एतर्हि तस्य आङ्भिन्नत्वं नास्ति। तस्याङ्ग्रहणेन ग्रहणात्। अथ परादित्वेन गृह्यते तस्य निपातत्वमेव नास्ति। अस्य निपातत्वाभवात्। अस्तु निपातत्वम्। तथापि निपातेषु प्रतिपदपाठाभावान्नातिव्याप्तिः।

निर्वाहात् । नचैवं भवांष्टीकते इत्यादावतिप्रसङ्ग इति वाच्यम् । टठयोः षकारमित्यादिना बाधात् । एतेन कारहीनत्वादनुनासिकलमापद्यते स्थानेन्तरतम इति न्यायात् । चिन्त्यमिदं निरनुनासिकपाठवैयर्थ्यप्रसङ्गात् । अनुनासिकस्यैव सुपठत्वादितित्रिलोचनोक्तिः परास्ता । तल्लयाद्यर्थमनुनासिकपाठसम्भवात् । किंच कारहीनत्वादिति हेतुरप्रयोजकः । ळकारयोः सावर्ण्याभावात् । समानामेव सवर्णसंज्ञाविधानात् । सति हि तस्मिन् वर्णग्रहणे सवर्णग्रहणं कारग्रहणे केवलग्रहणमिति प्रवर्त्ततेऽतोऽत्रानुनासिकलग्रहणाद्यर्थं गुणानामभेदकत्वं वा जातिनिर्देशो वा व्यक्तिपक्षेपि सादृश्यपरत्वं वा हेतुर्व्यपदेष्टव्यः । वस्तुतस्तु सूत्रमेव दूषितम् । यदपि एतेनानुस्वार पूर्वमित्यपि न सम्बध्यते । यतोऽनुस्वारस्यापि नकार एव स्थानी स चानुनासिकेन सर्वात्मना घ्रात इति कथमनुस्वारः प्रवर्त्तेत स्थानिन एवाभावादिति । इदमपि चिन्त्यम् । सानुस्वारस्य लस्य विधेः सम्भवात् । कथमन्यथा पूर्वसूत्रैरपि शषसैर्विहितैः सर्वात्मनाऽवघ्राते नकारेऽनुस्वारविधिरिति त्रिलोचनेनोक्तम् । तत्रेदमवधेयम् । अनुस्वारपूर्वमित्यस्यानुवृत्तौ ज्ञापकाभाव उक्तः । अनुवृत्तिस्त्वनिष्टत्वान्न भवति । इत्थं हि उत्तरसूत्रे नवाधिकारनिवृत्त्यर्थमेव नवाग्रहणमवश्यकार्यमित्युक्तिः स्वोक्तिविरुद्धेति । **नषि** ॥ षकारे तोटुर्न । तोरिति किम् । कष्षष्ठः । षीति किम् । तट्टीका । षीति सप्तमीनिर्देशात्पूर्वस्थषकारयोगे टुत्वं स्यादेव । रोष्टा स्यादेतत् । न शादि सूत्रं न कर्त्तव्यम् । अत्रैव शग्रहणं क्रियताम् । न शषि इति न इति सप्तमीनिर्देशे सति पूर्वस्येति तच्छास्त्रमित्यत्र स्यान्निषेधो न तु विश्न इत्यादाविति चेत् । न । शादित्युक्तेऽपि दोषतादवस्थ्यात् । शात् पूर्वस्य नेत्येव व्याख्यानसम्भवात् । पञ्चमीनिर्देशो वर्णांतरेणाव्यवहितोत्तरस्येत्येवमत्रापरिभाषणात् । उच्यते । एवं तर्ह्यनेनैतज्ज्ञापितमस्त्यत्र पञ्चमी निर्देशे इति परिभाषेति । तेन चपाच्छः श इत्यादौ चपात्परस्यैव छो न तु पूर्वस्य विट्चर इत्यादौ । यदि तूक्तनिर्देशादिकमुक्तपरिभाषाया ज्ञापकमाश्रीयते । तदिदं विध्यर्थमेव । अन्यथा सप्तमीनिर्देशे पूर्वस्यैव निषेधः

स्यात् । **टोरन्त्यात्** ॥ स्तोरित्यत्रानुवर्तते न तोगिति तेन पट्सत इत्यादावपि ष्टुत्वनिषेधः सिध्यति । टोरिति किम । सर्पिष्टमम । अंते भवोन्त्यः तस्मादन्त्यात् । अंतशब्देन पदांतमुच्यते । ष्नो णो नन्त इत्यत्रैव । ततो भवार्थे ण्यः णिनो वेति णित्वविकल्पाद्वृद्ध्यभावः । अन्त्यादिति किम् । ईट्टे । स्यादेतत् । ष्वोर्लोपाशित्यतः पदांत इत्यनुवर्त्तते । तेन पदान्ते वर्तमानादितीष्टार्थे लब्धे किमर्थमन्त्यादिति । टोरन्त्यादित्यत्र च श्रुरित्यपि संबध्येत न शादिति ज्ञापकात् । नहि पदान्ते शकारः संभवति छशोषेति षकारेणापहारात् । मंडूकप्लुतिर्वास्तु । उच्यते । योग विभागेन पुनर्विधानार्थम् । अन्त्यादिति विभज्यते । अन्त्याट्टोः ष्टुर्भवति क्वचिदनेन टोरित्यस्य बाधः क्रियते । तेन षण्णवतिः । षण्णगर्य्यः इति सिद्धम् । ननु-ष्टुभिः ष्टुः, ततः न शात्, टोरन्त्यात्, तोः पि, लि लः इत्येवं सूत्राणि कुतोन पठितानि एवं हि विधिनिषेधयोः संकरो न भवति । नद्वयं च न कर्तव्यम् अत्राहुः । नद्वयोपादानं ष्टुत्वस्यानित्यत्वज्ञापनार्थम् । तेन लिट्सु, षट्सु इत्यादि सिद्धम् । माधवेन तु पदान्त इत्यनुवृत्त्यैव सिद्धेप्यंत्याद्ग्रहणं क्वचिदन्त्यत्वमात्रग्रहणार्थम् । तेन षट्स्वित्यादिसिद्धम् । एतदर्थं क्वचित्पदान्तताश्रयणीयेति न वक्तव्यमित्युक्त्वा एतदपि पूर्वाचार्य्यप्रणीतपदसंज्ञाया इहाश्रयणात्सिद्धमिति चोक्त्वा षण्णवतिः षण्णगर्य इत्यत्र तु सहादित्वादेव निर्वाह इति स्वीकृत्य प्रत्याख्यातमन्त्यादिति । अत्रेदं वक्तव्यम् । पूर्वाचार्यप्रणीतपदसंज्ञाया विधानात्सहादिकल्पनस्य निष्प्रयोजनत्वात् । षण्णगर्य्य इत्यत्रासंभवाच्च । समासे सति हि पूर्वोत्तरपदयोरादेशः सहादित्वात्क्रियते अत्र तु समासो नास्ति । संज्ञायामेव दिक्संख्ययोः कर्मधारय इति नियमात् । यत्तु स्तुश्चुभिःश्चवशात् ष्टुभिः ष्ट्वप्यपदांतटोरिति मुग्धबोधसूत्रं तत्र मात्रालाघवेऽपि वाक्यार्थे लाघवं नास्ति । अनन्वितसमासश्चाश्रीयते । पदांतग्रहणं च व्यर्थम् । अयां ष्वोर्लुव्वापदांत इत्यतोऽनुवृत्तेः सत्वात् । अटोरिति वाक्ये तत्सम्बन्धसम्भवात् । षण्णामित्यादिसिद्ध्यर्थं वचनान्तरारम्भाद्गौरवमिति दिक् ॥ **नः सक्छते** ॥ नांतस्य पदस्य सगागमोऽव परे

छते । अत्र पदस्यागमित्वं न तु नस्य । तथा सति नस्यानुस्वारो न स्यात् सको नकारभक्तत्वात । नस्य पदांतत्वानपायात् । पदस्येति किम् । हंति । न इति किम् । कष्टीकते तट्टीकते । छते इति किम् । भगवन्कुरु । अवपरे इति किम् । सन्त्सरुः । माधवस्तु शे चग्वेत्यतः सिंहावलोकितन्यायेन वेति संबध्य व्यवस्थितत्वान्नेत्याह । अत्र प्रशान्चित्रमित्यत्र कुतो न । अत्र केचित् ञमग्रहणं नञं चानुवर्त्य वाक्यभेदेन संबध्य ञमस्थानिकस्य नस्य नेति व्याख्येयमित्याहुः । अन्ये तु मोनुस्वार इत्यतः म इति योगं विभज्य तत्र म नः सगिति नानुवर्तते, ततश्च मस्थानिकस्य नस्य नेत्यर्थलाभान्नेति वदंति । अपरे तु वेत्यपकृष्य तस्य व्यवस्थितार्थत्वाश्रयणात्समादधुः । अथ राजंश्चित्रमित्यादौ नस्यागमित्वमिति पक्षेऽनुस्वारः कथम् । उच्यते । स कः । कित्वसामर्थ्यादवयवावयवस्यापि । समुदायावयवत्वाश्रयणान्नस्य पदान्तत्वापगमादनुस्वारः । एवं हि कित्वं सार्थकम् । अन्यथा सुटमेव विदध्यात् । यद्वा मोनुस्वार इत्यत्र नः सगित्यनुवर्त्य सकि परे नस्यानुस्वार इति व्याख्यानात् सकोऽकार उच्चारणार्थः यत्तु नान्तश्चछयोः शकारमनुस्वारपूर्वमिति कालापसूत्रे अंतग्रहणं व्यर्थं पूर्वसूत्रे दण्डिनावित्यत्रातिव्याप्तिवारणार्थं पदांता इत्यस्यानुवृत्तेरावश्यकत्वेनात्रापि वचनव्यत्ययेन तत्सम्बन्धसंभवात् कारग्रहणमनुस्वारपूर्वग्रहणं च व्यर्थं नश्चछयोरंशमिति सूत्रणीयम् समाहारद्वंद्वे नश्चेछेंशमिति वा असमासपक्षे नश्चछेंशमिति वा एवम् । टठयोः षकारम् । तथयोः सकारम् । इत्यनयोः सूत्रयोरपि पक्षत्रयं ज्ञेयम् अंशमिति अंषमिति अंसमित्यत्रादिरकार उच्चारणार्थः । यत्तु न पदान्तप्रतिपादनार्थमन्तग्रहणमपि तु पाठकृतविरत्यर्थम् । तेन त्वं तरसीत्यादौ न भवति । एवं प्रशान्तनोतीत्यादावपि त्रिलोचनो व्याख्यातः । तत्रेदंवक्तव्यम् । पाठकृतविरतिशब्देन किमवसानं विवक्ष्यते उत नामसंज्ञांतत्वम् । उताकृत्रिमत्वम् वा । नाद्यः । राजंश्चित्रमित्यादौ नस्यावसानत्वाभावात् । प्रकृतसूत्रोदाहरणादन्यत्रावसानत्वे विवक्षिते तु प्रशान् तनोतीत्यादावतिप्रस-

ज्ञात् । प्रशानित्यत्रानसानत्वदर्शनात् । अत एव न द्वितीयः । नामसंज्ञाप्रवृत्तिकालेतविवक्षया तु भवांस्तनोतीत्यादावव्याप्तिः । एधरंस्तापसा इत्यादावपि नस्य नामान्तत्वाभावात् । न तृतीयः । पटांस्तनोतीत्यादावव्याप्तिः नस्य कृत्रिमत्वात् । तस्मान्न त्वदुक्तमन्तग्रहणस्य प्रयोजनं सम्भवति । अतो नस्यैतनामकारजन्यत्वम् साक्षात्परंपरासाधारण्येन विवक्षणीयम् । तेन त्वं तरसि प्रशान् तनोतीत्यादौ नाऽतिप्रसङ्गः । पदान्तत्वं तु पचन्तौ पचन्त इत्यादिवारणाय विवक्षणीयमेवेतिदिक् । **शे चग्वा ॥** नान्तस्य पदस्य शे परे वा चक् भवाञ्च्छूरः । पदस्येति किम् । दंश नांतस्य किम् । पश्चशः । लोमशः । एकशः । बहुशः । शे इति किम् । भवांश्चिनोति । अत्र शि इत्येव वक्तुमुचितं मात्रालाघवात् चकः कित्त्वात्पूर्वान्ताच्छत्वं सिध्यति । ननु कुर्वस्तिष्ठ । कुर्वञ्छेते इत्यत्रापदांतत्वान्नस्य चुत्वादनुस्वाराच्च परत्वात् णत्वं प्राप्नोति । सत्यम् । अनन्ते इत्यन्तरङ्ग निषेधे बाहिरङ्गौ सच्चकावसिद्धं बहिरङ्गमन्तरङ्ग इति परिभाषयाऽसिद्धौ भवत इति न णत्वम् । सश्शंभुः तच्छास्त्र मित्यत्र चोः कुरिति कुत्वमप्यसिद्धत्वादेव न । कुत्वविधिस्तु वाग्भ्यां, वक्ष्यतीत्यादावेकपदस्थे चवर्गे सावकाशः । चपाच्छः अम्बगुक्ताच्छशादावित्यादिनिर्देशैश्चोक्तपरिभाषा ज्ञापिता अन्यथा ह्यत्र कुत्वं दुर्वारम् । माधवस्तु शकारे चुत्वस्य नियतत्वात्तगित्येव वाच्ये चक्करणं विधिकाल एवायं नांतस्य नस्य चुत्वनिवर्त्तको यथा स्यात् । तेन कुर्वञ्छेते इत्यत्र नस्यापदान्तत्वात्प्राप्तं णत्वं चुत्वेन बाध्यते इत्याह । अन्येतु चक्कत्यत्र प्राप्तस्य जवस्याकरणं जबविधेरनित्यत्वज्ञापकम् । तेन विद्युत्वान् तडित्वान् मरुत्वतीयामित्यादि सिध्यतीत्याहुः । अपरेतु चग्विधानमुक्तपरिभाषाया ज्ञापकम् । तथाहि चुत्वं हि पदत्वस्यानाश्रयणादन्तरङ्गं पदत्वस्याश्रयणात्तग्बहिरङ्गः अन्तरङ्गे चुत्वे बहिरङ्गस्तगसिद्धः स्यादिति भयेन चग्विधानमिति ज्ञापकं भवतीत्याहुः । एवं हि सिद्धो वर्णसमाम्नायग्रहणे प्रत्याहारस्य चाग्रहणे प्रतिसूत्रं कियद्गौरवमापततीति सुधियो विदांकुर्वंतु । **ङ्णनो ह्रस्वाद्विः स्वरे ।** ङ् च णूच नूच ते ङ्णनः ह्रस्वात्परे पदांते ङ णनाः स्वरे परे द्विरुच्चार्याः ह्रस्वादिति

ननु जानु उ अस्य जान्वस्य हलजीत्यत्राप्याप्तिः एकादेशस्योपदेशाभावात् । मैवम् । उञ् उपदेशसत्त्वात् । एकादेशस्य पराद्यवयवत्वविधानेऽन्तर्गतत्वात् । ओचिदित्यत्र पारादिसद्भावेन पूर्वेण गतार्थत्वादिति । अत्र तु यद्येकादेशः पूर्वान्तत्वेन गृह्यते । यत्तु एकग्रहणं वर्णग्रहणे जातिग्रहणमित्यस्यार्थस्य ज्ञापकमित्युक्तम् । तत्तु अपृक्त एकालित्येकग्रहणेनैव ज्ञापितम् । अत एव नाजोनानद्भिः प्लुतश्चेति मुग्धबोधसूत्रेऽज्ग्रहणं व्यर्थम् । अनाङिति पर्युदासबलेनैवाज्मात्रस्य निपातस्य लाभात् । निपातग्रहणं किम् । अकारो वासुदेवः तस्मात् । धो आगच्छ उः शंभुः अवागच्छ इः कामः अयागच्छ प्लुतः निपात इत्यनुवर्त्तते तच्च षष्ठ्या विपरिणम्यते । ततश्च निपातस्य प्लुतता वा भवति स च स्वरे परे सन्धिं न यातीत्यर्थः । निषेधस्तु प्रकरणबलाल्लब्धो वाक्यभेदेन विधीयते । अयं च व्यवस्थितविकल्पः । तत्र हे ३ राम रामेहे ३ हे ३ राम ओं ३ इषित्वा।यत्तु प्लुतः सन्धिं न यातीति व्याख्यातं तन्न । उत्तरसूत्रेणैव वाक्यभेदेन सन्धिनिषेधस्य विधानात् । यत्तु अनुपदिष्टाश्चेति कातंत्रसूत्रम् । तत्र प्रष्टव्यम्, किं लोकतः प्लुतः सिद्धो न वा । आद्ये लाघवात्प्लुत इति सूत्रणीयम् । अनुपदिष्टाश्चेत्यपि व्यर्थम् । तस्यैवासिद्ध्या सन्धिप्रसङ्गाभावात् । नच तस्य सिद्धावपि प्लुत इति संज्ञा न सिद्धेति वाच्यम् । लोकतः शास्त्रान्तरात् अन्वर्थत्वाद्वा तत्सिद्धेः । किंच अनुपदिष्टाः केन । ईश्वरेण त्वया वा । आद्ये शशशृंगवत्प्लुतः स्यात् । ईश्वरेणानुपदिष्टो वर्णो यदि भवेत्तर्हि सप्तमो रसोऽपि स्यात् । द्वितीये कस्यापि सन्धिर्न स्यात् । त्वयावर्णानामनुपदेशात् । सिद्धो वर्णसमाम्नाय इति सूत्रेण ईश्वरोपदिष्टवर्णसम्नायस्य स्वीकारात् । किंच अनुपदिष्टस्य सन्धिर्न प्राप्नोति तस्य स्वरसंध्यक्षरसमानसवर्णादिसंज्ञाभावात्। वर्णसमाम्नायक्रमोपजीवनेन स्वरादिसंज्ञानां प्रणयनात् । प्लुतस्य च तत्रानन्तर्भावात् । इवर्णो यम् । अवर्ण इवर्णे इत्यादिस्वरूपोपादानेन विहितस्यापि प्लुतेऽप्रसङ्गात् । अइइत्यादिह्रस्वव्यक्तेः साक्षादुच्चारणात् । दीर्घव्यक्तेस्तुवर्णग्रहणात् । प्लुतव्यक्तेस्तु तदुभयाभावात् । वर्णसमाम्नाय आद्यानां

दशानामन्यान्यस्य सवर्णसंज्ञाविधानात । प्लुतस्य ह्रस्वदीर्घाभ्यां सावर्ण्याभावात । अत्वादिसामान्यग्रहणे तु वर्णग्रहणानर्थक्यम । तेन दीर्घप्लुतयोरपि संगृहीतत्वात । **दूराद्धूते टः प्लुतः ॥** दूरत्वमिहाह्वानापेक्षं गृह्यते न देशापेक्षं पुरुषापेक्षं वा । तेन प्राकृतमदन्ताधिकारस्यत्रयत्रान्यशब्देन पदाह्वानं तस्मिन् गम्यमाने इत्यर्थः आह्वान इति संबोधनमात्रोपलक्षणं तेनाह्वानादन्यत्रापि भवति । सक्तून् पिब देवदत्त ३ अत्र वदन्ति । अत्र स्थानिनोऽनिर्देशात्कस्य प्लुतः । नच टेरित्यस्यैव स्थानित्वं टिशब्दस्यावयववाचित्वात । अवयविनोऽनिर्देशाच्च । अत्रोच्यते । दूराद्धाने यद्वाक्यं तस्य टेः प्लुतः । ननु वाक्यमप्रकृतं कथं लभ्यते इति चेच्छृणु । आह्वान इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते आधेयं च वाक्यमेव । तेनैवाह्वानसंभवात । एवं सामर्थ्याल्लब्धस्य वाक्यस्य टेः प्लुतः । यत्तु आह्वानशब्देन संबोधनस्य लक्षितत्वात । तस्य च पदेनापि सम्भवात् । पदाधिकाराच्च । पदस्य टेः प्लुत इति । तन्न । केवलस्य संबोधनस्यासंभवात् । विधेयसापेक्षत्वात् । तस्य विधानस्य चैकेन संबोधनपदेनासंभवात् । वाक्यस्यैव टेः प्लुतः सिद्धः । एवं हि वाक्यस्य टेः प्लुत उदात्तः" इति पाणिनीयसूत्रे वाक्यस्येति मास्तु । उक्तयुक्त्यैव तल्लाभात् । ननु वाक्यस्य प्लुत इति स्थितम् । एवं च टिग्रहणं मास्तु । षष्ठीनिर्दिष्टस्येत्यनेन अंत इत्यनुवृत्तेर्वा अंतस्यैव भविष्यतीति चेन्न । हसति इह सुस्रोत ३ इत्यादौ हसस्यैवांतस्य स्यान्माभूत्स्वरस्यैव भवत्विति टिग्रहणम् । नन्वेवमर्पादं कथं लभ्यते अंत्यहससहितस्यैव हि स्वरस्य टिसंज्ञाविधानादिति चेन्न स्वरस्यैव ह्रस्वादिसंज्ञया विधीयमानो भवतीतिसिद्धांतात् । अत एव न नपुंसकस्येति ह्रस्वः । सुवाक् कुलमित्यत्र षण्णामित्यत्र न नामीति दीर्घश्च नेत्युक्तम् । अत्रार्थे टिग्रहणमपि प्रमाणम् । अन्यथोक्तविधयांत्यस्य सिद्धेः किं तेन । ननु प्लुत इत्यनुवर्तमाने प्लुतग्रहणं किमर्थम् । योगविभागार्थमित्यवेहि । तथा हि दूराद्धाने टेरित्येको योगः अस्य चोक्त एवार्थः । प्लुत इत्यपरः । अत्र दूराद्धाने इत्यनुवर्तते । अनंत्यस्य प्लुतविध्यर्थमिदम् । वेत्युभयोरनु-

वर्तत एव । अत्र तु व्यवस्थितो विकल्पः । तेन दूराद्धूते वर्तमानं यत्स्य यो गुरुः ऋकारव्यतिरिक्तस्तस्य पर्यायेण वा प्लुत इत्यर्थः । अंत्यस्य तु गुरोर्लघोश्च पूर्वेण सिद्ध एव । केचित्तु दूराद्धूते टेः प्लुत इति सूत्रं लोकाच्छेषस्य सिद्धिरिति सूत्रात्प्राक्पठन्ति । तत्तु न सम्यक् । तत्र पाठे प्रयोजनाभावात् । अत्र पाठे च पदांते वा प्लुत इत्याद्यनुवृत्तिः प्रकरणशुद्धिश्चास्ति प्रयोजनमिति दिक् । हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ॥ रघुनाथाभिधा व्याख्यां संध्यभावस्य वाडवः ॥

## अथ हसन्धिः ।

### चपा अबे जबाः ।

स्यादेतत । झपा इति पाठ्यम् । इदमपि सिद्धं भवति । सामिदत्र ककुबत्र अग्निमदासनम् । चपा इति पाठे तु नेदं सिध्येत् । यद्वा किमपि न कर्तव्यम् अबे जबा इत्येवास्तु । पदान्ते इत्यनुवर्तते । पदान्ते वर्तमानस्य जबा भवन्त्यबे पर इत्यर्थः । स्वराणां पूर्वविधयो बाधकाः स्युर्हसानां तूत्तरविधय इति । अत्रोच्यते । राम रक्ष तथागताः पटविहेत्यादावतिप्रसङ्गवारणाय तावदन्यतरद्वक्तव्यं तत्र व्यक्तिलाघवाच्च ग्रहणमेवकर्त्तव्यम् । न चोक्तदोषः । वावसान इतीष्टसिद्धेः । अवसानं किमिति चेत् । अंत एवेति गृहाण । विद्यावसानं धनावसानं तच्छिष्याध्ययननिवेदितावसानामित्यादिप्रयोगदर्शनात् । अत्रार्थे चपग्रहस्यापि मानत्वात् । अन्यथा झपग्रहणमेव कुर्यात् । तर्हि लाघवात् वान्ते इत्येव तत्र सूत्रयितुमुचितमितिचेन्न । पर्यायशब्दानां गौरवं लाघवं नाद्रियत इत्यस्य ज्ञापनार्थं तद्ग्रहात् । तेन विसर्जनीयस्येत्युक्तिः सङ्गच्छते अन्यथा स्रोर्विसर्ग इत्युक्तत्वाद्विसर्गस्य स इति सूत्रणीयं स्यात् । अथाऽवग्रहणं किमर्थम् । खसे परे वाक्साधुः जगत्सर्वमित्यादौ खसे चपा झसानामित्यस्यैव प्रवृत्तेः । एवं तर्ह्युत्तरार्थमवग्रहणं स्पष्टार्थमिहैव कृतम् । पदान्त इति किम् । वाचौ । भवन्तौ । बहुवचननिर्देशस्तु व्यक्तिपक्षे सर्वव्यक्तिषु तात्पर्यबोधनार्थम् । एकवचननिर्देशस्तु जातिपक्षाभिप्रायेण पक्षद्-

मस्यापि सत्वे चपा अब इति निर्देशश्च मानम् । यत्तु वर्गप्रथमाः पदा-न्ताः स्वरघोषवत्सुतृतीयानिति कालापसूत्रम्, तत्र पदान्ता इति व्यर्थम् । एदोत्परः पदान्ते इत्यतोऽनुवृत्तेः सत्वात् । वर्गग्रहणमपि व्यर्थम् । प्रथ-मादिव्यवहारस्य तत्रैव संभवात् । यद्वा कचटतपा इत्युक्त्वा वर्गप्रथमा इति त्याज्यं वर्गाद्या इति वा पाठ्यम् । यत्तु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति नाशंकनीयमिह वर्गग्रहणस्य लाक्षणि-कस्यापि वर्गप्रथमस्य परिग्रहार्थत्वादन्यथा प्रथमादयो हि वर्गाणामेव धर्मा इति किं वर्गग्रहणेनेति त्रिलोचनेनोक्तं तन्न । वर्णग्रहणपृक्त-रिभाषाया अप्रवृत्तेः । तत्र ज्ञापकं बहुवचनमर्म इति सूत्रम् । अन्यथा इवर्णो यमित्यस्य लाक्षणिकेष्वप्रवर्तनाद्वामा अत्रेत्यादिसिद्धौ किं तेन अतो व्यर्थं वर्गग्रहणम् ॥ **ञमे ञना वा ॥** पदान्तइत्येव नेह वध्मि पाप्मा यत्नः । ननु वाग्रहणं किमर्थं वावसान इत्यनेन जबाश्चपाश्च पदान्ते विधी-यन्ते । तत्र चपपक्षे चपा अबे जबा इति प्रवर्तते । तस्यापवादोऽयं तेन वाङ्मधुरा,षण्मर्मेति सिद्धमिति चेत् सत्यम् उत्तरार्थं तत् । ननूत्तरार्थताप्यस्य न सम्भवति । घ्बोर्लोपशित्यतो वेत्यस्यानुवृत्तिलाभात् । पदांत इत्यस्येव । न चैवं चपा अबे इत्यत्राप्यनुवर्ततइति वाच्यम् । सूत्रारम्भसामर्थ्यात् । अन्यथा वावसान इत्येव सिद्धे किं सूत्रेण । यद्यपि चपा अबे इत्युत्तरार्थं तथापि जबग्रहो योगविभागस्य ज्ञापक एवेति चेत्तर्हि योगविभागार्थम् । ञमे ञमा इत्येको योगश्चपानामित्यर्थः । ततो वा पूर्वसूत्रं जबा इति चानुवर्तते । अनेनैव पूर्वस्य काचित्कत्वं सूचितम् तेन प्रत्ययञमे जब-स्यापि वा ग्रहणेन प्रत्ययस्येति लभ्यते । तन्मात्रम । चिन्मयम् । चपा इति किम् हरे मां पाहीत्यादौ स्वरस्य माभूत् यत्तु पञ्चमे पञ्चमांस्तृतीयान्नवेति कालापसूत्रम् तत्र तृतीयान्नवेति व्यर्थम् पञ्चमे पञ्चमान्नवेत्येव सुवचम् तृतीयास्तु पूर्वेणैव सिद्धाः यदपि यरोऽनुनासिकेऽनुनासिकोवेति पाणिनीयं सूत्रम् तदपि यरोञमि ञम्वेत्येव सुवचम् न चैवम् पदंतनूँ पदेतदूँ इति वा पठतीत्येवन्न सिध्येत् तस्यानिष्टत्वात् इष्टत्वेपि यरोऽनुनासिकञम् वेति

पश्यताम् चपाच्छः शः पदान्ते वर्तमानाच्चपादुत्तरस्य शस्य छो वा भवत्यवेपरे तच्छिवः।पदान्ते इति किं विश्पृशम् । स्पेर्विपूर्वादौणादिके शप्रत्यये रूपमेतत्। चपादिति किम् । प्रशान् शेते । अवे इति किम् । वाक्श्च्योतति । शः किम् । वाक्साधुः । ननु चपा इत्यनुवर्त्यार्थवशाद्विभक्तिवचनविपरिणामं कृत्वा चपादिति व्याख्यास्यते इति चेत्तर्ह्युत्तरार्थं । तच्च हो झभा इत्यत्र वक्ष्यते इहार्थं चात्र तन्त्रादिना वाक्यार्थद्वयमाश्रीयते । तत्राद्य उक्त एव । द्वितीयस्तु चपमतर्तीतिचपात् तेन सहितः यः छ् तस्य शो अमेऽग्न्यर्थे नञो ङित्वं ज्ञापकम् । अन्यथा विश्वः पामश्मि पामश्मः इत्यत्र गुणमात्तर-भावात् । ङित्वं व्यर्थं स्यात् । न चाकृतव्यूहपरिभाषया द्वित्वं नेति-वाच्यम् । ङित्वेनैव तस्यानित्यत्वज्ञापनात् । विधेयस्य पूर्वनिर्देश-स्त्वसंदेहार्थः । चप च्छश्छ इत्युक्ते संदेहः स्यात् । किं चपात् शस्य छो विधीयते, आहो स्वित् छस्यैव शो विधीयते मध्यतात्यदैः अपदान्त-निवृत्त्यर्थमिति । ननु चपाच्छः श इत्युक्तेऽपि संदेह एव किं शस्य छो वा छस्य वेति चेत् । न । छस्य शविधाने प्रयोजनाभावात् । लोकाच्छेषस्येति लिङ्गाच्च । विकल्पस्तु व्यवस्थितः । तेन क्विप्यपि तत्वमाट् तत्वमाशौ यत्तु वर्गप्रथमेभ्यः शकारः स्वरयवरपर श्छकारं न वेति कालापसूत्रम् । तत्र वर्गप्रथमेभ्य इति व्यर्थं वर्गप्रथमा इत्यनुवर्त्य विभक्तिव्यत्ययेन व्याख्याना-त्तदर्थलाभात् । यत्तु त्रिलोचनदासेनोक्तं तेभ्य एव हकारः पूर्वचतुर्थं न वा इत्यत्र तेभ्य इति व्यर्थम् । वर्गप्रथमेभ्य इत्यनुवृत्तेः सत्वात् । सत्यम् । एकयोगनिर्दिष्टत्वात्स्वरयवरपर इत्यप्यनुवर्तत इति । तन्न । उक्तरीत्या पूर्वसूत्र एव वर्गप्रथमेभ्य इत्यस्य प्रत्याख्यानात् । नह्येकयोगनिर्दिष्टत्वमेवा-नुवृत्तौ प्रयोजकम्, किं तु लक्ष्यानुरोधादिष्टत्वमेव । किंच स्वरयवरपर इत्यस्यानुवृत्तिरिष्टैवेत्युक्तम् । कारद्वयं व्यर्थम् । सवर्णग्रहणशङ्काभावात् । नकारोऽपि व्यर्थ वेत्येव विकल्पस्य लाभात् । स्वरेऽपि न्यूनं तच्छ्लोकः । तच्छ्मश्रु इत्यादावव्याप्तेः । स्वरयवरपर इति व्यर्थमेव । स्वरघोषवत्स्वि-त्यस्यानुवृत्तेः सत्वात् । एतेन स्वरयवरलेष्विति कर्तुं शक्यमिति त्रिलोचनदा-

सोपि प्रत्युक्तः यदपि तेनोक्तं नवेत्यनुवृत्तौ सत्यां न वेति किमर्थ सत्यम् । उत्तरसूत्रे शकारनिवृत्त्यर्थमेव । न वा ग्रहणमवश्यं कार्यमतश्चोभयोर्विभाषयोर्मध्ये यो विधिः स नित्य एवेति नित्ये प्राप्ते नवाग्रहणमिति । तदपि न । उत्तरसूत्रेपि नवाग्रहणस्याकरणीयत्वात् । पूर्वसूत्रादनुवृत्तेः सत्वात् । न चैवं पररूपे तकारो लचटवर्गेष्वित्यत्रानुवर्तत इति वाच्यम् । इष्टानुसारादनुवृत्तेः स्वीकारात् । अननुवृत्त्यर्थमन्यत्र यत्नस्यादर्शनात् । नहि ए अयित्यादौ अस वर्ग इत्यस्यानुवृत्तिवारणार्थं कश्चन परो दृश्यते । एवं हि सति उभयोर्विभाषयोरिति न्यायोपि परास्तः हो झभाः चपादित्येव भगवन् हरे । हकारस्येति किम् । तत् षष्ठम् । चपानां झगानां यथा क्रमं प्रवृत्तिः । उद्दिश्यमानविधीयमानयोर्यथाक्रमं प्रवृत्तिर्भवतीति वचनं विना कथं यथाक्रमं लभ्यत इति चेत् । ज्ञापकाद्वचनस्य सत्तानुमानात् । ज्ञापकं तु सैशद्धस इति सूत्रे तकारात्परस्य हस्य धकारकरणम् नड्डुतोक्कवत् इति निर्देशोपि । तथा नदादेः घ.तोरिति निर्देशोऽपि यद्वा न्यायात् । चपात्परस्य हस्य झभा विधीयन्ते।सर्वे च युगपत्कर्तुं न शक्यन्तेऽत एकः कर्त्तव्यः सः कः । सदृशः कस्य निमित्तभूतस्य चपस्यैव हस्य सदृशे क्रियमाणे तु सर्वस्य तथात्वेन व्यवस्था न स्यादत्र लिंगं सैशद्धस इति । यद्वा सवर्णग्रहणं चानुवर्तनीयम् । तेनायमर्थः । चपाद्धस्य चपस्य सवर्णा झभा वेति । यद्वा चपझभशब्दाभ्यां निमित्तादेशयोः समसंख्ययोः क्रमणोपस्थितेः । क्रमोऽत्र विवक्षित एव । बलवद्बाधकं विना उपस्थितपरित्यागे मानाभावात् । यत्तु तेभ्य एव हकारः पूर्वचतुर्थं नवेति सूत्रम् । तत्र तेभ्य एवेति व्यर्थम् । वर्गप्रथमेभ्य इत्यनुवृत्तेः सत्वात् । कारग्रहणं च व्यर्थम् । झयो होऽन्यतरस्यामिति सूत्रे तु अन्यतरस्यामित्यस्य स्थाने वेत्येवोचितम् ॥ **स्तोः श्चुभिः श्चुः** ॥ स च तुश्चानयोः समाहारः स्तु तस्य स्तोः । अनित्यमागमशासनमिति न नुम् । तस्य चेदमपि ज्ञापकम् । यद्वा एकत्वे द्विगुद्वन्द्वावित्यस्यानित्यत्वमनेन ज्ञाप्यते । अत एवैकविंशतिरित्यत्र न नपुंसकत्वम् । यद्वा सा सहितः तुः स्तुः तस्य शाकपार्थिवादित्वान्मध्यमपदलोपः

श च चवश्च श्चवः तैः श्चुभिः । श्चुरिति पुल्लिंगनिर्देशोऽयमिति माधवः । श्चिति नपुंसकनिर्देशोऽयमित्यन्ये । अत्र स्थान्यादेशयोर्यथासंख्यं निमित्त-कार्यिणोस्तु न न शादिति ज्ञापकात् । अस्मादेव च ज्ञापकात्परेण सन्निपाते पूर्वेण च भवति । श्चुना इत्यर्द्धमात्रागौरवाद्बहुवचननिर्देशः । यत्तूक्तं माधवेन । श्चुनेति वक्तव्ये श्चुभिरिति बहुवचनं शकारयोगे क्वचित्तत्श्मशानमित्यादौ चुत्वं न भवतीति सूचनार्थमिति । तदसत् । तस्य लाघवार्थत्वात् । तच्छ्मशानमित्यत्र चुत्वच्छत्वयोः प्रवृत्तेरिष्टत्वात् । श्चुभीति निर्विसर्गनिर्देशेनतज्ज्ञापितम्, । खसपरे शसे परे विसर्गस्य लोपो भवतीति स्तोरिति सविसर्गनिर्देशेन तु तस्य पाक्षिकत्वं ज्ञापितम् । एतदर्थोऽपि बहुवचननिर्देशः विनापि सहार्थयोगे तृतीया भिनेत्यादि निर्देशात् । यत्तु पररूपं तकारो लचटवर्गेष्विति कालापसूत्रं तत्र रूपग्रहणं च व्यर्थं परमित्युक्तेऽपि पररूपस्यैव ग्रहणसम्भवात् रूपातिरिक्तं किमन्यत्परस्य मात्रं यद्वारणार्थं रूपग्रहणम् । किंच तकारस्य छझठढभ वो निर्मूलः । पाणिन्यादावार्षे व्याकरणान्तरे चादर्शनात् ॥ **न शात्** ॥ स्तो श्चुरित्यनुवर्तते । शात्परस्य सस्य शकारप्रसङ्गो नास्ति । अतः शात्परस्य तवर्गस्य चवर्गो निषिध्यते । विश्नः । प्रश्नः । शादिति किम् । विहितप्रतिषिद्धतया विकल्पः स्यात् । षोडशीग्रहणाग्रहणवत् । याञ्चा । **ष्टुभिः ष्टुः** ॥ स्तोः ष्टुभियोगे ष्टुः । समासः पूर्ववत् । स्य दतत् । ष्टौ ष्टुरित्येवं सूत्रमस्तु । न च सप्तमीनिर्दिष्टविधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्यैव भवतीत्युभयतो योगो न लभ्येतेति वाच्यम् । एतस्य वचनस्याप्रामणयनात् । अतो भावे वा सामीप्याधारे वा सप्तमीमाश्रित्य ष्टौ सति ष्टुरिति व्याख्यानादिष्टार्थलाभः । उच्यते । एवं सिद्धे ष्टुभिरिति गुरुनिर्देशाज्ज्ञायतेऽस्त्यत्र सप्तमीनिर्दिष्ट इति परिभाषेति । यदि तु पूर्वोक्तनिर्देशादिकं ज्ञापकमुक्तपरिभाषाया आश्रीयते । तदा ष्टाविति कर्तुं शक्यम् । नच तज्ज्ञापितयैव परिभाषयोभयत्र योगो न लभ्येतेति वाच्यम् । न षि, टारन्त्यादिति लिंगे नोभयत्र योगस्य लाभात् । ष्टुभ्यां ष्टुनेति वोक्तौ गौरवात् । ष्टुभिरित्यु-

क्रम् । यत्तु यथाक्रमाभावार्थं बहुवचनमिति । तदसत् । नपीत्यनेनैव तस्य लब्धत्वात् । यत्तु ष्टुभिरिति बहुवचनं षकारटवर्गयोगं विनापि क्वचिदुत्तरपदेऽग्निः त इत्यत्र विसर्गस्य सकारे कृते टकार इत्येतदर्थमिति माधवेनोक्तं तत्तुच्छम् । उक्तरीत्या बहुवचनस्य सार्थकत्वात् । अग्निष्ट इति प्रयोगस्य लोकेऽनिष्टत्वात् । वैदिकानां त्वत्रानन्वाख्यानात् । एतेन स्तोः श्चुना श्चुः ष्टुना ष्टु अनयोः स्थाने स्तोः श्चौ श्चु षौ ष्टु इति कर्तुं सुशकम् जझञशकारेषु ञकारमिति कालापसूत्रेऽपि कारग्रहणं व्यर्थं । डढणपरस्तु णकारमित्यस्य स्थाने डढणेषु णमिति वाच्यम् । परस्तु कारेति व्यर्थम् । **तोर्लि लः** ॥ स्तोरित्यनुवर्तमाने तोर्ग्रहणं सकारनिवृत्त्यर्थमित्येके तन्न लकारपरस्य सकारस्याभावात् । को लुनातीत्यादावन्तरङ्गेण विसर्गेण भाव्यं सँल्लावक इत्यत्रापि परत्वादन्तरङ्गत्वाच्च दत्वे कृते लः । न च को लुनातीत्यत्र स्थानिवद्भावेन विसर्गस्य सत्वमाश्रित्य लः स्यादिति वाच्यम् । वर्णमात्रविधौ स्थानिवद्भावनिषेधात् । एवं तर्हीदं तोर्ग्रहणमेव ज्ञापयति वर्णमात्रविधौ स्थानिवद्भावनिषेधोऽनित्य इति । तेन क्वचिद्वर्णमात्रविधावपि स्थानिवत्त्वं भवति । ततश्च गणयतीत्यादौ वृद्ध्यभावः कुर्वे इत्यादौ दीर्घाभावश्च सिध्यति । ननु भवेदेवम् । यदि व्यर्थं स्यात्तोर्ग्रहणम् उत्तरार्थं तु तदिति चेन्न । इह ग्रहणस्य ज्ञापकत्वात् । अन्यथा न तोः षीत्यत्र ब्रूयात् । यद्वा न तोषि टोरन्त्यादिति द्विसूत्रीं पठित्वा लिल इति पाठ्यं तत्र तोरित्यनुवर्तते तदनुवृत्तिसामर्थ्यादुक्तार्थलाभः । नचैवं टोरन्त्यादित्यत्रापि तोरित्येवानुवर्ततेति वाच्यम् । यथा न्यास इवास्मिन्नपि पक्षे स्तोरित्यस्यैवानुवृत्तिसम्भवात् । तोरिति किम् । शक्नोतीति शश्लुनाति लाति किम् । तदत्र । यत्तु लेलस्तोरिति मुग्धबोधसूत्रं तत्र ले इत्युपेक्ष्यं गौरवात् लाति पाठ्यं लाघवात् । तोरिति तु व्यर्थं स्तु इत्यस्यानुवृत्तेः सत्वात् । सकारेति प्रसङ्गस्तूक्तरीत्या परिहर्तव्यः । लस्तोरिति विपरीतपाठोऽप्यनुचितः । उद्देश्यविधेययोः पूर्वपरपाठस्योचितत्वात् । ले लमिति कातन्त्रसूत्रं व्यर्थं पररूपं तकारो लचटवर्गेषु इत्यत्र तवर्ग इति पाठेन

किम् प्राङास्ते सुगाणास्ते भवानस्ति। ङणना इति किम्। किमास्ते। स्वरे इति किम् । प्रत्यङ् करोति पचन् वदति। पदांते किम् दण्डिनौ। ननु समिद्दण्डिनावित्यत्र पूर्वपदस्येवोत्तरखण्डस्य प्रत्ययलक्षणत्वेन पदत्वात् नस्य द्विर्वचनं प्राप्नोतीति चेत्। न उत्तरदलस्य प्रत्ययलक्षणेन पदान्तकार्यान्नेति एदोतः अम्शसोः न्सम्महतः अनुदात्ततनां वत्विनौ इत्यादिनिर्देशैर्ज्ञापितत्वात् । अत एव पदांतत्वेन नलोपे शपि न माधवस्तु । शे चक्रेत्यतो व्यवस्थितविकल्पार्थवाग्रहणानुवृत्त्या न मण्डूकप्लुत्या इयं स्वर इत्यतः स्वर इत्यनुवर्तते पुनः स्वरे ग्रहणं स्वरे साक्षादविधीयमाने स्वरे यथा स्यादित्येव मर्थम्। तेनात्र स्वरस्य विधीयमानत्वाद्वा नेत्याह ननु वाक्य संस्कारे भवन्नभव इत्यत्राव्याप्तिरेव स्यात् अतो ङ्णनांतात्पदादविधीयमाने स्वर इति विवक्षणान्न दोषः । ननु राजन्ननेनइत्यत्रापि न स्यात् स्वरस्यानटौसोरिति विधीयमानत्वादिति चेन्न । समुदायस्यात्र विहितत्वादवयवस्याविधीयमानत्वात् । ननु भवन्नभव इत्यत्रातिव्याप्तिश्चैवमेतन्मतं चिंत्यमेव अस्मिन्मते उत्तरपदे पदान्तत्वाभावान्नातिव्याप्तिः । ननु अनश्च इत्यत्रान्स्वर इत्यनादेशे कृते द्वित्वं कस्मान्नेतिचेच्छृणु । अनन्तेऽनपीत्यादि ज्ञापकात् द्विरिति क्रियावृत्तौ द्वित्रिचतुर्भ्यः सुरितिस्वन्तमव्ययं तच्च क्रियावृत्तिं नोपपद्यते इति क्रियामाक्षिपद्योग्यत्वादुच्चारणक्रियामेवाक्षिपति । कुर्वान्नास्ते इत्यादौ द्वित्वस्यासिद्धत्वान्न णत्वं ङणनाः ह्रस्वोपधाः स्वरे द्विरिति कालापसूत्रे उपधा इति व्यर्थम् । ङणना इति पृथगुच्चारणं च ङ्णनो ह्रस्वात्स्वरे द्विरित्येव सुवचत्वात् । स्वाण्णङ्नोऽचि द्विरिति मुग्धबोधसूत्रे प्येकमात्रागौरवम् । स्वात् ङ्ण्नोऽचि द्विरित्येव सुवचत्वात् । ङमो ह्रस्वादचि ङमुण्नित्यमिति पाणिनीयसूत्रे गौरवम् । ह्रस्वान्ङ्ण्नोऽचिङ्ण्नित्यमिति सुवचत्वात् । मकारप्रत्याख्याने ञकारेण प्रत्याहारेपि गौरवादिति दिक् । छः । स्वरात्परश्छो द्विरुच्चार्य्यः । अत्र पदान्ते वेत्यनुवर्त्तते, तच्च वाक्यभेदेन संबध्यते विकल्पस्तु व्यवस्थितः । तेन पदान्ते दीर्घादाङ्वर्जिताद्वा । अत्र ह्रस्वादिति नानुवर्त्यम् । तदनुवृत्तौ तु ह्रीच्छतीत्यत्राप्रसंगः स्यात् । स्वरे इत्यनुवर्त्य विभक्तिव्यत्ययेन स्वरादिति

बोध्यम् । स्वरादिति किम् । छन्नमिदं छदनम् । मुग्धबोधे तु छोऽच इति सूत्रेऽचीत्यनुवर्तितम् । तन्न । कृच्छ्रमित्यादावव्याप्त्यापत्तेः । नचेष्टापत्तिः । पाणिन्यादिविरोधात् । क्वचिच्छइत्यादावपि भवत्येव द्वित्वम् । द्विर्भावं स्वरपरश्छकार इति कालापसूत्रेऽपि गौरवम् । द्विः स्वराच्छ इति पठितुं युक्तम् । विसर्गसन्धौ पाठोऽप्ययुक्तः । प्रकरणविरोधात् । यद्वा ङणना इत्यस्यानन्तरं स्वराच्छ इति सूत्रयितव्यम् । पूर्वसूत्राद्विरित्यनुवर्तते ॥ **हसेऽर्हसः** स्वराद्धसो द्विर्वोच्चारणीयः । स्वरादितिकिम् । तस्मिन्स्नातः । हसे किम् । भवान् उहसः किम् । तितउच्छत्रम् । अर्हीति किम् । अर्धेन्द्रमः । नह्यस्ति । ननु हसपरत्वाभावेऽपि वाक् वाक्क इत्यादौ द्वित्वमिष्यते । तदनेन न सिध्यतीति चेन्न । हस इत्यनेन स्वराभावस्योपलक्षणात् । स्वराभावस्तु हसस्तदभावश्च । अन्ये त्वाहुः । हसे इत्युत्तरार्थमेवात्र कृतम् । नत्वत्र तस्यान्वयः । अनिटो-नामिवत इत्यत्र यथा स्वरे इति नेति चानुवर्तते । ह्रस्वादित्यनेन लक्षणया स्वरादिति लब्धम् । ततश्च स्वरात्परो हसो वा द्विर्न तु स्वरे इत्यर्थोऽतो नाव्याप्तिरिति । ननु ह्रस्वादिति चेन्न । अचो रहाभ्यामित्यादिद्वित्वस्य वैकल्पिकत्वाश्रयणेन तत्प्रत्याख्यानात् । यलाञ्जपो द्विर्वा, ञपाद्यलश्च । उल्कः २ वल्मीकः २ दध्यत्र २ अभ्यासः २ शशात्खपः खपाच्च शसः । पुंस्कोकिलः २ वत्ससाः २ अप्ससराः २ वाग्रहणादियं व्यवस्था । केचित्तु हसे इति योगो विभज्यते । हस इत्यावर्तते च । एकं च पंचम्यंतं विपरिणम्यते । द्वितीयं प्रथमांतम् । ततश्च हसात् हसो द्विर्वेत्यर्थः संपन्नः । उक्तविषये एवानेन द्विरुक्तिर्न सर्वत्रेत्याहुः । नन्वर्ह इत्यत्र संयोगान्तलोपप्राप्नोति । सत्यम् । अनुकरणत्वान्न भवति । हलोपे कृतेऽत्र हग्रहणमस्तीति न प्रतीयेत । अन्ये तु रेफात्सस्यैवसंयोगान्तस्य लोपो नान्यस्येति वक्ष्यमाणत्वाद्धस्य लोपो नेत्याहुः ॥ **रहाद्यपो द्विः ॥** स्वरात्पराभ्यां रहाभ्यां परो यपो द्विर्वा । गौर्य्यत्र २ नह्यस्ति २ स्वरादिति किम् । रीधातोः । क्विबन्तस्य रीः । र्येथम् । ह्यः । ननु मद्ध्रदइत्यत्र स्वरात्पराद्धाद्रेफस्यापि द्वित्वं इति चेन्न । विशेषेण सामान्यस्य बाधात् । विशेषो हि

ह्रस्य निमित्तत्वं यपांतर्भावेन । सामान्यं तु कार्यित्वं माठरकौंडिन्यन्यायात् ब्राह्मणा भोज्यन्तां माठरकौंडिन्यौ परिवेविष्टामिति ब्राह्मणभोजनं निमित्तभूतयोस्तयोर्भोजनं बाध्यते तद्वद्यपस्य द्विरुक्तौ निमित्तस्य द्वित्वं बाध्यते।यद्यपीह लक्ष्यव्यक्तिभेदेनोभयं संभवति तथापि सत्यपि संभवे बाधनं भवतीत्यभ्युपगमान्न दोषः । यद्वा पूर्वसूत्रादर्हित्यनुवर्तते ततश्च । हसयपस्याभावाद्रेफवर्जो यपो द्विरित्यर्थो लभ्यते । द्विरित्यनुवर्तमाने द्विर्ग्रहणं योगविभागार्थम् । रहाद्यप इत्येको योगः तस्योक्त एवार्थः । द्विरित्यपरः अस्य तु हसात् हसो द्विः हसे द्विरिति चार्थः । तेन पूर्वसूत्रोक्तसकलवचनानां सङ्ग्रहसिद्धिः । केचित्तु राद्यपो द्विरिति पठन्ति । तत्र हकारस्याग्रहणान्न्यूनतैव दोषः अन्ये तु रहादित्येव पठित्वा यपस्थाने हस इत्यनुवर्तयन्ति । तन्मते चतुर्ष्वित्यादावतिप्रसङ्गः । स्वरे नेत्यनुवृत्तौ तु हर्य्यनुभव इत्यत्रापि न स्यात् । अत्राहुः। स्तोः । न शात् न षीत्यतः शषसेत्यनुवर्त्य स्वरे परे रहात्पराः शषसा द्विर्नेति वाक्यभेदेन व्याख्येयमिति । यपग्रहणपक्षेपि रहात्पराः शषसाः हसे परे द्विर्वेति वाक्यभेदेन व्याख्येयम् । अन्यथा पार्श्वं वर्ष्मेत्यादावव्याप्तेः। रहादिति किम् । माहात्म्यम् । मात्म्यम् । माधवस्त्वाह । नेदं सूत्रं किं तु वार्त्तिकम्, तच्च हसेह्सि इत्यनेन लब्धार्थपरम् । तथाहि ह्रँ इति लुप्तपंचम्यंतं द्वितीयं च स्वरे इत्यनुवर्त्य वाक्यद्वयेन व्याख्येयम् । स्वरात्परो हसो हसे द्विः । स्वराभ्यां रहाभ्यां च परो हसो द्विरिति । अन्ये तु हसेह्सि इत्यत्रा हित्यावर्त्योक्तवाक्यद्वयं कृत्वेदं वार्त्तिकं मत्वाचख्युः । तन्मते रहयोर्द्वित्वाभावेप्यंजसैव सिद्धः ॥ **मोऽनुस्वारः** ॥ पदान्ते मस्यानुस्वारो हसे । हरिं वन्दे । पदांते इति किम् । गम्यते । म इति किम् । भवान्दसाति । हसे इति किम् । फलमस्ति । ननु मोम् इति सूच्यताम् । अत्राकार उच्चारणार्थः । ततः परस्यादेशः स्यादिति चेत्सत्यम् । संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येवमर्थमिदम् । अनुस्वार इति प्राचां संज्ञा । तेन सम्राट् । किम्ह्मलयतीत्यादि सिद्धम् । वस्तुतस्तु मों इति कर्तुं शक्यते । अम्शसोः आम्शसीत्यादिनिर्देशेनास्यानित्यताज्ञापनात्सम्राडित्यादि सिद्धम् । अत्र म

इति योगं विभज्य तत्र सकं चानुवर्त्य क्वचिन्मस्य सगागम इति व्याख्येयम् । तेन पुंस्कोकिलः पुंस्पुत्र इत्यादि सिध्यति । यत्तु पाणिनीयं सूत्रं मोनुस्वार इति तत्रानुस्वारग्रहणं व्यर्थम् । मों इत्येव सुवचम् । यत्तु मोनुस्वारं व्यंजने इति कालापसूत्रं तत्राप्यनुस्वारग्रहणं व्यर्थम् । नच संज्ञापूर्वकत्वेनानित्यत्वज्ञापनार्थम् । अम्शसोरित्यनेन तदनित्यत्वस्य ज्ञापितत्वात् ॥ **नश्चापदांते झसे ॥** नस्य मस्य चानुस्वारोऽपदांते झसेऽपुंभ्याम् भवतः । चकारो मकारस्य समुच्चयार्थः । अन्यथाऽपदांते नस्यैव स्यादित्याहुः । अपदांत इति किम् । भवान् भाति । एतदत्रापदांतग्रहणं ज्ञापयति पदांताधिकार एतत्सूत्रपर्यंत इति । नन्वेवं श्चुत्वादिकमपदांते न स्यादिति वाच्यम् । न शात्, टोरंत्यादितिलिंगेन तत्र पदांताधिकारस्यासंबंधात् । चपाच्छः श इत्यत्रापि पदांते इत्यस्य न प्रयोजनम् । निरप्शमित्यस्य छांदसत्वात् छांदसानामत्राव्युत्पादनात् । अपदांताच्चपात्परस्य लोके शस्यासम्भवाच्च । निशाया निशि कृते सुपि परे पाणिनीये स्वादिष्विति पदत्वेन प्रवृत्तेः संभवान्नातिव्याप्तिः । सिद्धं निश्चिवति । हो झभा इत्यत्रापि अपदांताच्चपात्परस्य हस्याभावान्न दोषः।कुक् वत्र कोकुग्धि वावग्धत्यित्र परत्वात् झसाद्धिरिति भवति । तत्रास्य प्रवृत्तौ तुवत्रौ स्याताम् । झसे इति किम् । मन्यते । यम्यते । हिंत्यनुवर्त्त्य विभक्तिविपरिणामेन सप्तमी व्याख्येया । य्वोरिति ञमे चानुवर्त्य तेन रेफे ह्य्वोंञमे च परतोऽपदांतस्य नस्यानुस्वार इति लभ्यते । ञमञपां नुगित्यत्र नुकानुस्वारो लक्ष्यत इत्येके । तन्मते हो झभा इत्यतो हमात्रमिहानुवर्त्य नान्यत्, प्रयोजनाभावात् । अत एवेन्वतीत्यादौ न दोषः । केचित्त्वनुक्तसमुच्चयार्थेन चकारेणैतत्संगृहीतम् । मस्य त्वनुवृत्त्यैव लाभ इत्याहुः । अन्ये तु नश्चापदांत इति योगो विभज्यते । हसे इति चानुवर्तते । तेनापदांते नस्यानुस्वारो हसे इति लभ्यते । अयं च क्वचिदेव झसे इत्युत्तरसूत्रारंभात् । तेनैतत् सिध्यति। झस इत्यपरो योगः तस्य तूक्त एवार्थः । अत्र नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । ततश्चापदांतस्य नस्य क्वचिदनुस्वारो नेत्यर्थः । तेन सुहि-

न्म्यामित्यादि सिध्यतीत्याहुः । यत्तु म्नोर्नुझस्यदांते इति मुग्धबोधसूत्रं तत्रा-
दांत इति व्यर्थम् ।ततः माग्दांत इत्यधिकाराभावात्।ननु श्रुत्वादिवदिदं दांता-
दांतसाधारण्येन मवर्तते इति चेत्तर्हि मग्रहणं च व्यर्थम् । दांते मोऽसम्राजो
हसे नुरिति पठित्वा नो झस्यदांते इति पाठ्याम इति नु इरिति वानुवर्त्यम्।एवं
च नो मशामः छते इत्यत्र नो इति कर्त्तव्यं न भवति अनुवृत्त्यैव लब्धत्वात्॥
**यमायपेऽस्य ॥** अस्येति किमर्थम् । अनुस्वारपरामर्शार्थं तु न संभवति
तस्यानुवृत्त्यैव लाभात् । न च मथमान्तस्यानुवृत्तस्यानुस्वार इत्यस्या षष्ठी
विपरिणामार्थमिति वाच्यम् । यमा इत्यादेशापेक्षायामर्थात्षष्ठीपरिणामसंभ-
वात् । एवं तर्हि यपपरामर्शार्थम्। अनुस्वारस्य यमा भवंति यपे परे तेऽस्य
यपस्य सम्बन्धिनो भवंति । संबंधश्च सावर्ण्यमेव, न तु सादृश्यमात्रम्,
तस्यास्येत्यस्य ग्रहणं विनापि सुलभत्वात् । सवर्ण इत्यध्याहारो वा । तथा
चानुस्वारस्य नासिक्यस्य सदृशाः यपस्य तु सवर्णा यमा भवन्तीत्यर्थः ।
तेन रेफो न भवति, अनुस्वारसादृश्याभावात् । नच सादृश्याभावेऽपि
वचनात्स्यादिति वाच्यम् । यपे इत्यस्य जातिपरत्वेन यपजातीये
सवर्णे यमजातीयस्यानुस्वारसदृशस्य विधानेन वचनस्य चरितार्थ-
त्वात् । यमा इति बहुवचनमपि जातौ ज्ञेयम् । एकवचनं वा पाठ्यम् ।
अस्मिंश्च पक्षेऽनुस्वार इत्यस्य षष्ठीपरिणामोऽपि मास्तु, अनुस्वारो यमो
भवतीति सुवचत्वात् । यमोऽस्येति सूत्रं युक्तम् । अनुस्वारेण झसे हसे
इति चाक्षेपणीयम् । अनुस्वारस्य सदृशः झसहसयोः सवर्णः आदेशो
भविष्यतीति व्यर्थम् । यप इति शषसहेषु तु नातिव्याप्तिस्तेषां यपे सव
र्णाभावात् । यपे इति किम् । आक्रंस्यते । स्वनड्वांहि । अनुस्वार इति
किम् । राजन् गच्छ । गम्यते । यमग्रहणं किमर्थं ञमा इत्यनुवृत्तेः
सत्त्वात् । यमवचनं यवलार्थं यवलेषु परतोऽनुनासिका यवला अनुस्वा-
रस्य सदृशा यथा स्युरिति यमग्रहणम् । सँय्यन्ता । सँव्वत्सरः । यँल्लोकम्।
यँय्यम्यते । वँव्वम्यते । नन्वत्र पदांतस्यानुस्वारस्य विकल्प
इष्यते स कथं सिध्यतीति चेत् । शृणु । अत्र पदांते इति वेति चानुवर्त्यं

११

वाक्यभेदेन व्याख्येयम् । केचित्तु पूर्वसूत्रेऽपदांतग्रहणेन पदांताधिकारस्य निवर्तितत्वात् पदांते विकल्पो न सिध्येदिति मत्वाऽत्र वा पदांतस्येति सूत्रं पठन्ति । अन्ये तु यमा यपेम्य वेति पठित्वा व्यवस्थितविकल्पं चाश्रित्य पदांते रूपद्वयं निर्वाहयन्ति । वस्तुतस्तु यमा यपेस्येति सूत्रम्। तत्रापदांते इत्यनुवर्तते । वेत्यपरं सूत्रम् । तत्तु परिशेषात्पदांतविषयम्। अत्र य्वोः, ञमे ञमा वा, हः, लि लः, इत्यनुवर्त्य य्वोरित्यावर्त्य वाक्यभेदेन व्याख्येयम् । यवलञमपरे हकारेऽनुस्वारस्य यवलञमा वा भवंतीति । तेन कियँह्यः किंवँह्वलयति,किँल्ह्लादयति, किन्ह्नुते, किम्ह्मलयतीत्यादि सिद्धम्।ननु कुर्वतीत्यत्रानेन कृतस्य नस्य णत्वं कस्मान्न । उच्यते।असिद्धंवहिरङ्गमन्तरङ्गे इत्यसिद्धत्वाद्रेफाद्याश्रयेणान्तरंगत्वं पूर्वपूर्वमंतरङ्गमिति स्वीकारात् । अन्तः अङ्गानि यस्येति व्युत्पत्तेश्च यपाश्रयत्वेन वहिरङ्गो यमः । परंपरं वहिरंगमिति स्वीकारात्, वहिरंगानि यस्येति व्युत्पत्तेश्च प्रकृतिप्रत्ययाश्रयत्वेन णत्वस्यान्तरङ्गत्वमिति माधवः। नश्छव्यशकारेषु ञकारमिति कालापसूत्रे उभयत्र कारग्रहणं व्यर्थम् । डढणपरस्तु णकारमित्यत्रापि परणकारग्रहणं व्यर्थम् । डढणेषुणमित्येव सुवचम् । यत्तु तुशब्दो वानिवृत्त्यर्थ इत्युक्तम् । तन्न । पररूपं तकार इत्यादाविव तेन विनापि तदनुवृत्तेः संभवात् । वर्गे तद्वर्गपंचमं वेत्यत्रापि यवलेष्वव्याप्तिः पदांते विकल्पाभावश्च दोषः । अंत इत्यनुवृत्तौ अपदांतेऽव्याप्तिः । अनुस्वारस्य ययि परसवर्ण इत्यत्र परग्रहणं व्यर्थम् । अनुनासिकग्रहणमनुवर्तते । अनुस्वारस्य ययि परसवर्ण इत्यत्र परग्रहणंव्यर्थम् । अनुनासिकग्रहणमनुवर्तते । अनुस्वारस्य ययि परेऽननासिकः सवर्णो भवतीत्यर्थः अनुस्वारस्य सवर्णाभाभावाद्यप एव सवर्णो भविष्यति । अनुस्वारस्य सवर्णा इत्येव सूत्रमस्तु अनुस्वारेण झलि हलिति चाक्षेप्यम् ।अनुस्वारांतरमाझलहलोः सवर्ण आदेशो विधास्यते । शषसहरेफाणामनुनासिकस्य सवर्णस्याभावाद्तो व्यर्थ ययीति। तोर्ल्लीत्यत्र द्विलकारो निर्देशः कर्तव्यः । तवर्गस्य लो ल इत्यर्थः । उदः स्थास्तंभोः । स्थितिसूत्रमुचितं पूर्वस्येति व्यर्थम् । झयो होन्यतरस्या

मित्यत्रापि सवर्ण इत्यनुवर्तते हस्य सवर्णाभावात् । झयः सवर्णो हस्यान्तरतमो वर्गचतुर्थो भवति ॥

वृद्धाख्यनगरस्थायी विनायकसुतोऽकरोत् ॥
रघुनाथाभिधो व्याख्यां हससन्धेः सतां मताम् ॥

## अथ विसर्गसन्धिः ।

### विसर्जनीयस्य सः ।

आसन्धिसमाप्तीदं षष्ठ्यन्तमधिक्रियते । परिशेषात्खसे एवास्य प्रवृत्तिः, अन्यत्र तूत्तरसूत्रैस्तत्र तत्र बाधः । तथाहि अवर्णादवे आदवे लोपशा बाधः । इवर्णादेस्तु नामिनो र इत्यादिना अवसानेऽपि पुनर्विसर्गादेशे सति विशेषाभावः । यद्वा हसे झसे इति वानुवर्तते । तत्रावे हबे नामिनो र इत्यादिना बाधात्खसः परिशिष्यते । यद्वा छते इत्यनुवर्तनीयम् । अत्र माधवः । कस्तनोतीत्यत्र सत्वे कृते तस्य विसर्गादेशः प्राप्तोऽसिद्धत्वाद्विधिसामर्थ्याद्वानेत्याह । विसर्गस्य स इति तु नोक्तम्, पर्यायशब्दानां गौरवलाघवयोरनपेक्षणात् । वस्तुतस्तु । तथैवाचितं मात्रालाघवस्यानुपेक्षणीयत्वात् । यद्वा अः स इति सूत्रणीये यद्विसर्जनीयस्येत्युक्तं तत्संज्ञापूर्वकत्वेनतस्यानित्यत्वबोधनार्थम् । तेन कस्साधुरित्यादिसिद्धम् । ननु कुप्वोः ≍ क ≍ पावित्यस्य वैकल्पिकत्वात् पक्षे सत्वं कुतो नेति चेत् । न । शेषाः कार्ये इति निर्देशेन≍क≍पाभ्यामुक्ते सत्वप्रवृत्त्यभावस्य ज्ञापनात् । माधवस्तु । कुप्वोरिति योगो विभज्यते । तत्रानन्तरत्वात । अः इत्यनुवर्तते । तेन विसर्गस्य कुप्वोः सम्बन्धिनि खसे अः विसर्ग एव भवति । न सः । प्रमाणं चात्र णादिः किदितिनिर्देश इत्याह । अत्र वेत्यनुवर्त्य व्यवस्थितविकल्पो व्याख्येयः चकारमनुवर्त्यानुक्तसमुच्चयो वा । तेन शषसेषु वा सकारः खसपरेषु तेषु विसर्ग एवेति च लभ्यते । अस्मिन्नर्थे वादीपोः शतुः जश्शसोः शिरित्यादिनिर्देशोऽप्यनुकूलः । कुप्वोः≍क≍पौ वेत्यत्र विसर्ग निर्देशो द्वितीयवार्तिकार्थे । अथ≍क≍पयोः शसत्वाभावात्कथमिदं ज्ञापकम् । उच्यते। विसर्गानुस्वारकपा अवमध्ये पठनीयाः । उरः केण, उर≍ केण, उरः पेण-उर≍पेण, प्रेंखणमित्यत्रावकुप्विति णत्वं यथा स्यात् तथा व्यूढोरस्केने-

त्यादौ स्थानिवद्भावेन सकारस्य विसर्गत्वाण्णत्वं प्राप्तम्. तत्र न तु वर्णमात्र-विधाविति प्रतिषेधो यथा स्यात । एवं च अवत्वे सिद्धे ऽ कस्य कुप्वोः ऽ-क ऽपाविति सूत्रे के परे नामिनो र इति विसर्गस्य रत्वं प्राप्नोति तदकरणा-देतस्यावबहिर्भावो ज्ञाप्यते । सचात्वपठितत्वे वा खसपठितत्वे वा शसपठित त्वे वा ज्ञापिते सम्भवति यद्यपि तथापि खसपाठ एव ज्ञाप्यते । तथा चोक्तवा-र्तिकार्थोपि ज्ञापितो भवति।यद्वा विसर्गादयोऽवमध्ये न पाठ्याः।उक्तप्रयोगास्तु-अवकुप्वंतरेऽपीत्यत्रानुक्तसमुच्चयार्थेनापि ग्रहणेन निर्वाह्याः । कुप्वोः ऽक ऽ पावित्यत्र विसर्गोपि पदान्तत्वमात्रप्रयुक्तो नत्वेषां शसमध्ये पाठं ज्ञापयितुं शक्तः अत एवात्र केचित् शसे वेति सूत्रं पठन्ति । अन्ये तु स् अ इति छित्वा विसर्गस्य सकारो विसर्गश्च विधीयते । खस इति परिशेषलभ्यम्, प्रयो गाच्च व्यवस्था।कस्तनोतीत्यादौ सः । कः, त्सरुः कः, क्षव इत्यादौ विसर्ग एवेत्याहुः। विसर्जनीयश्चे छे वा शमिति कालापसूत्रे वाग्रहणं व्यर्थं विसर्गश्च छे शमिति पठितुं युक्तम् । एवं टेठेषं तेथे समिति बोध्यम्॥**कुप्वोः ऽक ऽ पौवा।** अत्रादेशनिमित्तयोर्यथाक्रमम् । आदेशे कपावुच्चारणार्थौ केवलयोर्जिह्वा-मूलीयोपध्मानीययोरुच्चारणासम्भवात् । कखयोः ऽकः पफयोः ऽपः अन्यत्रो-त्तरविधेभिर्बाधनात् । कुप्वोरिति किम् । कश्चारः कखयोर्जिह्वामूलीयं न वेति कालापसूत्रम् । तत्र कखयोः ऽकं वेति युक्तम् । एवं पफयोरुपध्मा-नीयन्न वेत्यत्र पफे ऽपमित्येव शे षे से वा पररूपमित्यत्र । शषसे पर मित्येव युक्तं वेत्यनुवर्तते । अत्र केचित् । कुप्वोरिति योगो विभजनीयः । तेन कुप्वोः परतो विसर्जनीयस्य सो विधीयते । भास्करः । वाचस्पतिः । पयस्पाशम् । यशस्कल्पम् । क्वाचित्कं चेदं ऽ क ऽपयोर्विधानात् । णादिः किदिति लिङ्गाच्च । अत्र नः सगित्यनुवर्त्य वाक्यभेदेन सम्बन्धनीयम् । तेन नस्य सगागमः कुप्वोः परत इति लब्धम् । तेन कांस्कान् । नॄंःपाही-त्यादि सिध्यतीत्याहुः । इलाद्विसर्गस्य षः कुप्वोरितिवाच्यम् । सर्पिष्कु-ण्डिका । धनुष्कपालम् । निष्प्रत्यूहमित्यादि । वाग्रहणेनैवेदं संग्राह्यम् । चकारानुवृत्त्या वा । अन्ये तु अइएउओ इत्यत इकारोकारौ नषीत्य-

तः षीति मंडूकप्लुत्यानुवर्त्य विभक्तिविपरिणामं च कृत्वा वाक्यभेदेन इदुद्भ्यां विसर्गस्य सः कुप्वोरिति व्याख्यायोक्तप्रयोगान्समर्थयन्ते॥ **अतोत्युः ॥** अत इति किम् । अग्निरत्र । तपरः किम् । देवा अत्र । सुस्रोत ३ अत्र । अतीति किम् । देव इह । तपरः किम् । देव आगतः । तिष्ठतु पय अ ३ ग्निदत्त । विसर्गस्य किम् । राममनु । आदवेलोपशित्यस्यापवादोयम् । प्रातरत्रे-त्यत्र तु परत्वात् र इत्यनेन रेफः । उमकारयोर्मध्ये इत्यत्र तु गौरवं स्पष्ट-मेव ॥ **हवे॥**अतो विसर्गस्य उः । लोपशोऽपवादः । अतः किम् । वायु-र्वद्यः । तपरः किम् । वेधा वंद्यः । हवे किम् । देवः पक्ता । विसर्गस्य किम् । रामं भज । अतोद्धवे उरित्येकयोगो न कृतोस्यानित्यत्वज्ञापनाय । उमकारयोर्मध्ये अघोषवतोश्चेत्येतयोः कालापसूत्रयोः स्थाने अतोद्घोषवतो रुरित्येकयोगः कर्तुमुचितः यद्वा अतोत्युम् घोषवतीत्येवोचितं कर्तुम् । पूर्वसूत्रादत इति घोषवतीत्यत्रानुवर्तते । **आद्वे लोपश्** । आदिति पञ्च-म्यन्तं न तु तपरत्वम् । वसोर्व उः, दिव औरित्यादिनिर्देशात् । दीर्घोच्चारण-रूपप्रयत्नाधिक्याद्वा । दीर्घेण ह्रस्वग्रहणे हि दीर्घोच्चारणवैयर्थ्यापातात् । न च प्लुतव्यावृत्तिः तत्संग्रहस्येष्टत्वात् । निर्विभक्तिकनिर्देशापत्तेश्च । अत इति वर्तमाने अग्रहणं ज्ञापकं तपरः स्वमानकालस्यैवोपस्थापको न भिन्नकाल-स्येति । अइएइत्यग्रहणं ज्ञापकं चेदिदं न ज्ञापकं किं तु विध्यर्थमेव । नन्वा-द्ग्रहणं किमर्थम् । नचेकारादिनिवृत्त्यर्थम् । नामिनो र इति रेफेण बाधि-तत्वात् । नच हसव्यावृत्त्यर्थं हसाद्विसर्गस्यासम्भवात् । अत्र माधवः । अत इत्यस्याननुवृत्तिस्पष्टीकरणार्थमाद्ग्रहणं तदनुवृत्तौ तु देवा अत्रेत्यादौ न स्यात् । तन्न । चपा अवे इत्यादिलिंगेनैवात इत्यस्याननुवृत्तेर्ज्ञापितत्वात् । उच्यते । योगविभागार्थमाद्ग्रहणम् । आत्परस्य विसर्गस्य सः कुप्वोः । तेन भास्करः । अयस्कारः । अधस्पदम् । यशस्कल्पमित्यादि सिद्धम् । नन्ववग्र-हणं किमर्थम् । न च हवग्रहणाननुवृत्त्यर्थम् । ब्रुव आहः, पूर्वे उपधेत्यादिनि-र्देशैस्तज्ज्ञापनात् । नाप्युत्तरार्थम् । असंदेहार्थं लाघवार्थं तत्रैवाकरिष्यत् । नाप्यवसानवारणार्थम् । ज्ञापकादेव तत्रास्याप्रवृत्तेः । तथाहि यदाप इति

सिलोपं शास्ति तज्ज्ञापयति नानेनावसाने लोपश् भवतीति । अन्यथा सेर्वि सर्गलोपशोः कृतयोर्गङ्गेत्यादि सिद्धौ किं सिलोपविधानेन । ननु लोपशि सति गङ्गात्रेत्यादौ सन्धिर्न स्यादतो लोपविधानं न ज्ञापकमिति चेत्तर्हि सन्धिप्रकरणादेवावसानेऽप्रवृत्तेः । तर्हि खसव्यावृत्त्यर्थं तदिति चेत् । न । निरवकाशेन सत्वेनैव लोपशो बाधनात् । मैवम् । अत्रावग्रहे सति परिशेषात्तत्र खसलाभो भवति । अन्यथा सलोपशोर्विषयविभागो न लभ्येत । तल्लाभार्थं तत्र खसग्रहणमत्रावग्रहणं वा कर्त्तव्यम् । तत्रार्द्धमात्रालाघवादत्रावग्रहणमेव कृतम् । यदा तु विसर्जनीयस्य स इत्यत्र छतग्रहणमनुवर्तते । शसे च विकल्प आरभ्यते । तत्रोत्तरार्थमेवात्रावग्रहणम् । तथा हि विसर्जनीयस्य स इत्यस्यावकाशो यत्रावर्णात्परो विसर्गश्छतपरः । कस्ततः । रेफस्याव काशो यत्र नामिन परो विसर्गोऽवपरः । अग्निरिह । वपुश्छिन्नमित्यादावुभयप्रसङ्गे परत्वाद्रेफः स्यात् । अवग्रहणानुवृत्त्या न भवति । किं च अव सानेऽतिप्रसङ्गवारणार्थमुपयुज्यते । प्रकरणस्य संकोचकत्वं त्वगतिकगतिः अन्यथा देवादित्यत्रावसाने द्वित्वं न स्यात् । स्यादेतत् । आद्यो वे इति सूत्रणीयं, स्वरे यत्वं वेति तु न कर्त्तव्यम् । देव इहेत्यादौ यकारे कृते य्वोर्लोपश्चेत्यनेन लोपशि कृते रूपसिद्धेः । नच तत्रायाद्यनुवर्तनादस्य कथं लोपश् इति वाच्यम् । यकारात्पूर्वमवर्णं गृहीत्वाऽयित्यादिरूपसंभवात् । नच लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषयास्य ग्रहणं न स्यादिति वाच्यम् । न्यायमूलाया अस्या अनित्यत्वात् । प्रतिपदोक्तस्य हि शीघ्रमुपस्थितिर्भवति लाक्षणिकस्य तु लक्षणानुसन्धानद्वारेति विलम्बितोपस्थितिः । अनित्यत्वे लिंगं तु अस्थामिति निर्देशः । अत्र हीकारस्याकारे नुमि च कृतेऽतो लाक्षणिकत्वेनाल्लोपः स्वरेत्यत्राग्रहण उक्तनिर्देशो नोपपद्येत । अत्र उपधायाः, चपा अबे इत्यादि निर्देशोत्र लिङ्गम् । न चैवमपि देवा नम्या इत्यादौ लोपश् न स्यात्तत्र स्वर इत्यनुवर्तनात् । तदननुवृत्तौ तु पक्षे यकारश्रवणं स्यादिति वाच्यम् । य्वोर्लोपशित्यस्यानन्तरं हसे इति वचनारम्भात् । य्वोर्लोपशिति योगविभागाद्वा । सयथा अपदान्तार्थं

एवं हसार्थोऽपि भविष्यति । योगविभागादिष्टसिद्धिरिति गव्यूतिरित्यत्र नातिप्रसङ्गः । उच्यते भोस इत्यत्रापि योऽवेत्यनुवर्तेत ततश्च भोइहेत्यादि न सिध्येत् । ओकारात्परस्य यकारस्य लोपाभावात् । य्वोर्लोपशित्यस्यानन्तरं भोस इति सूत्रारम्भेन लाघवम् । हस इत्यस्यापि पठनीयत्वात् । यदि तु य्वोर्लोपशित्यत्र ओ अवित्यत ओग्रहणमनुवर्त्य ओकारान्तात्पदान्त य्वोर्लोपश्विधीयते । तदा गां वातीति गोवास्तं करोति ञिर्डित्करणे गोवयति । ततः क्विपि ञिलोपः गोव इत्यत्रातिप्रसङ्गः । नात्रेष्टापत्तिः । पाणिनीयादावनभ्युपगमात् । अपरो लोप्योऽन्यस्वरेऽयं वेति कालापसूत्रे पर इति, अन्येति च व्यर्थम् । आल्लोपं स्वरे यं वेत्येवोचितम् । कोऽत्रेत्यादौ तु विशेषविधानाद्दुर्बाधः । षः रेफस्तु पक्षे सावकाश इति न बाधकः स्यात् । स्वरे इति किम् । रामश्चतुरः विसर्जनीयस्येत्येव । नेह। राममनुनय ॥ **भोसः** ॥ षष्ठ्येषा न तु पञ्चमी । भोश्शब्दस्य सांतत्वेन ततः परस्य विसर्गस्याभावात् । स्यादेतत् । भोश्शब्दस्य निपातस्यानुकरणे भो देवाः । भोलक्ष्मि । भोविद्वद्वृन्देत्यादिसिद्धावपि भवच्छब्दस्य यौ यन्निपातितं तस्य ग्रहणं न स्यात् । हेभो अत्रेति । अथ सामान्येनोभयोरनुकरणं तर्हि सग्रहणं व्यर्थम् । भोरित्येवास्तु । भोशब्दात्परस्य विसर्गस्येत्यर्थसम्भवात् । नच विभोरित्यादावतिप्रसङ्गः । तस्यङितीत्यादिना निष्पन्नत्वेन लाक्षणिकत्वात् । भगोइह अघोयाहीत्यादावव्याप्तिश्च । उच्यते भोस्भगोस्अघोसिति सूत्रमस्तु । तत्राद्यन्ताभ्यां प्रत्याहारे भोसिति ततो ङस् । तेन भोस् भगोसघोसां विसर्गस्य लोपशवे स्वरे यत्वं वा । अथैवं भोस्शब्दस्य निपातस्य ग्रहणं न स्यादिति चेत् । न । तन्त्रेणावृत्त्यावा तस्याप्यत्र ग्रहणात् । यदि तु भगोसघोसावपि निपातौ स्तः तर्हि भोस्भगोसघोसस्त्रयोऽपि क्रमेण पाठ्याः । तत्राप्याद्यन्ताभ्यामिति प्रत्याहारः तन्त्रादिना चात्रोभयग्रहः । प्रत्याहाराश्रयणादेव च शम्भोरिदं सुभगोरिदं रघोरिदमित्यादो नातिव्याप्तिः तेषामुक्तप्रत्याहारेऽनन्तर्भावात्, लाक्षणिकत्वाच्च । ननु अभोसोऽवे लोपशित्येकयोग एव लाघवाय कर्तुमुचितः । यत्तु माधवः ।

पृथग्योगकरणं स्वरे पाक्षिकयत्वनिरासार्थमित्याह तन्नुच्छम् । पाक्षिकत्व स्येष्टत्वात् । तथा च पाणिनिः । भो भगोअघोअपूर्वस्य योऽशीति। उच्यते नञ्समासोऽत्र मर्तव्य । भोसब्दनिपिकाच्छब्दात्परस्येति अर्थेतद्दोषपरिहाराय अभोमोरव लोपाशिति सूत्रणीयम् । तदार्द्धमात्रा-लाघवेऽपि वैरूप्यं दोषः । भोसोऽवयवोऽवर्णात्तु पर इति सूत्रभेदे तु नायं दोष इति सूत्रभेद एवाश्रितः । भोभगोअघोअपूर्वस्य योऽशीति सूत्रस्थाने भोसाऽवोऽशीति वा अभोमो योऽशीति वा आद्भ्यो सो योऽशीति वा सूत्रयितुमुचितं लाघवात् । भोस्भगोसघोसां निपातानां चादिषु क्रमेण पाठं स्वीकृत्य प्रत्याहारस्वीकारोचितत्वात् । नन्वाघोसः ससंयत्वाभावात्कथं प्रत्याहार इति वाच्यम् । तत्रेतत्यस्य प्रत्याख्यानात् । तथाहि । इतेति किम् । रप्रत्याहारो यथा स्यात् । अन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेन प्रत्याहार इति हरदत्तः । एवं च लणूसूत्राकारस्यातथात्वात् । तेन रप्रत्याहारो न स्यात् । सति चेतत्यस्मिन् तद्ग्रहणबलादेव स सिध्यति । अत्रेदं वक्तव्यम् । मास्त्वितेति।रप्रत्याहारस्त्वनुनासिकत्वप्रतिज्ञासामर्थ्यादनन्त्येनापि सेत्स्यति। किंच लुप्ते णकारे भवत्यवान्त्योऽकारः । नह्यत्र हलन्तमित्यत्र चोपदेशग्रहण-मस्ति हरदत्तोक्ताविवक्षात्वफलत्वादुपेक्ष्या विभाषा।विभाषा भवद्भगवदघवता-मोच्चावस्येत्यस्य स्थानेऽपि वा भवद्भगवदघवतां भोस्भगोसघोस इति सूत्रयितव्यम् । एवं च प्रत्याहारेण तेषामपि ग्रहणं सम्भवति । तत्रादिनोभयेषां ग्रहणे प्रभोरिदं सुप्रभगोरिदं रघोरिदमित्यादौ नातिप्रसङ्गः । एषां प्रत्याहारेऽसन्निविष्टत्वात् । वस्तुतस्तु भोस आद्य इत्येवोचितम् । आदिरन्त्येन सहेतेत्यस्य स्थानेऽपि आद्यन्ताविति सूत्रणीयम् ।आद्यन्तौ मध्य-गानां संज्ञास्वरूपस्येति व्याख्येयम् । सकारस्य तु भोस्संज्ञायां सत्या-मपि न क्षतिः । सकारात्परस्य रोरभावात् । नचैवं देवाः सन्तीत्यत्रापि रोर्यादेशः स्यादिति वाच्यम् । विसर्गं प्रति यत्वस्यासिद्धत्वेन विसर्गसम्भ-वात् । न च स्थानिवद्भावेन विसर्गस्य रुत्वाद्यत्वं स्यादिति वाच्यम् । अल्विधित्वेन स्थानिवद्भावविरहात् । भोसप्रत्याहारस्यावर्णाच्च परस्य रो रेफस्य यादेश इति व्याख्यातत्वादल्विधित्वं यादेशस्य । न च वैरूप्यं दोषः।

आदेशप्रत्यययोरितिवत्समासप्रत्यययोरितिवत् निर्वाहात् । अपरो लोप्योऽन्य-स्वरे यंवा, आभोभ्यामेव स्वरे घोषवति लोपमिति कालापस्य त्रिसूत्र्याः स्थाने अभोभ्यां घोषवति लोपं स्वरे यं चेति सूत्रयितुमुचितम् । अशब्देन अत्वाश्रयत्वस्य विवक्षितत्वाद्ध्रस्वदीर्घयोः संग्रहः । अत एव प्लुतोपि संगृहीतो भवति । अन्यथा सुस्रोता अत्रेत्यादि न सिध्येत् । यद्वा घोषवतीत्यपि न कर्तव्यम् । अभोभ्यामित्येव घोषवतीति पूर्वसूत्रात् घोषवतीत्यस्यानुवृत्तेः सत्वात् । स्वरे यं चेति सूत्रे चकाराल्लोपमिति ज्ञेयम् । अवे किम् । भोस्तपस्विनः । भोसः किम् । हरिर्वेद्यः ॥ **नामिनोरः** । ननु नामिन इति किमर्थम् । अवर्णाल्लोपशादिविधानेन हसाद्विसर्गविधानेन च तस्यैव परिशेषात् । यत्तु माधवेनोक्तम् । साक्षाच्छ्रूयमाणान्नामिनः परस्य स्यादिति दिश्यमानान्माभूदित्येतदर्थं नामिन इति तेन गा यच्छतीत्यत्र न । अन्यथा आम्शसीति विहितौकारात्त्वस्य यदादेश इति स्थानिवत्त्वादपिस्यादिति तदसत् । वर्णमात्रविधौ यदादेशस्तद्वदित्यस्यानभ्युपगमात् । अन्यथा रासु इत्यत्र किलादिति षत्वं स्यात् । किंच अतिदिष्टादुपदिष्टं बलवत् । तेनात्र लोपश् । अन्यथा शसोऽकारस्य दीर्घो लोपो वा न स्यात् । न च नामिग्रहणसामर्थ्यादिति वाच्यम् । नामिन इति योगविभागे आदवे लोपशित्यतोऽवे लोपशिति चानुवर्तते । क्वचिन्नामिनः परस्य विसर्गस्यावे लोपश् । तेन सेमामित्यादि छांदसोदाहरणसिद्धिरिति त्वया व्याख्यातत्वात्तत्र सामर्थ्यस्योपक्षयात् । उच्यते । अत्र नामिन इति योगविभागः कर्त्तव्यः । तत्र कुप्वोरिति षीति चानुवर्तते । प्रथमायाः परिणम्यते । ततश्च नामिनः परस्य विसर्गस्य षः कुप्वोरित्यर्थो लब्धः । तेन निष्कृष्टं दुष्पिष्टं सर्पिष्कुण्डिकेत्यादि सिद्धम् । योगविभागस्य माधवेनोक्तोऽर्थो न संगच्छते । छान्दसानामत्राव्युत्पादनात् । सेमामित्याद्युदाहृतानामन्यथा सिद्धत्वात् । सेमां सोषामित्येतयोः पादपूरणे इत्यनेन गतार्थत्वात् । भूम्याददे इत्यत्रापि भूमिशब्दस्य कृदंतत्वेन कृदिति ईपि कृते हसेप इति सिलोपे इष्टसिद्धेर्निष्प्रत्यूहत्वात् । ततो र इति योगः । तत्र नामिनोऽवे इत्यनुवर्तितं वाक्यभेदेन संबध्यते । विसर्गस्य रो भवति । नामिनः परस्य विसर्गस्य रो भवत्यवे

इति चाऽस्य प्रथमो वाक्यार्थो रेफप्रकृत्यर्थः कश्चित्कः । तेन प्रचेता राजन् । उषर्बुध इत्यादि सिद्धम् । नामिन इति किम् । गामो वन्द्यः । अवेकिम् । अग्निः पुनाति । विसर्गस्य किम् । दर्गि नमामि । यगो रमित्यत्र नामिनो रमिति युक्तं घोषवत्स्वरपर इत्यत्र स्वरघोषवत्सु इति । यद्वा स्वरघोषवत्पर इति सूत्रं न कर्त्तव्यं घोषवतीति स्वरे यं चेतीति सूत्राच्चानुवृत्तेः सत्वात् । अनुवर्त्य घोषवतीति स्वरे च वाक्यभेदेन व्याख्येयम् ॥ **रः** । रेफान्तरस्य विसर्गस्यासम्भवान्नपञ्चमी किन्तु षष्ठी सा विसर्जनीयस्येत्यनेन व्यधिकरणात् गाधवस्तु अत्र नामिनो र इत्यतः प्रथमान्तानुवृत्तौ पुनार इति निर्देशात् षष्ठीयं विज्ञायत इत्याह । रेफस्य स्थाने विहितो यो विसर्जनीयस्तस्य रो भवति अवेपरे । नामिनः परस्य पूर्वेणैव सिद्धत्वादनाम्यर्थोयमारंभः । अत्र चेत्यनुवर्तते । उत्तरसूत्राच्चेति च । तत्रावे चेति संबंधे चादन्यत्रापीति लब्धम् । तत्रापि चेति संबंधः ततश्च रेफप्रकृतिकस्य खपे वेति वार्त्तिकं गतार्थम् । वार्तिके रेफप्रकृतिकस्येति व्यर्थम् । र इत्यनेनैव गतार्थत्वात् खपे वेति विवक्षितं तदप्युक्तयुक्त्या गतार्थम् । अवे किम् । प्रातः कालः । र इति किम् । रामो नम्यः । एतेन रप्रकृतिरनामिपरोपीति प्रत्युक्तं र इत्यनेनैव गतार्थत्वात् । रेफस्य विसर्जनीयो रमापद्यते इति व्याख्यानात् ॥ **रि लोपो दीर्घश्च** । अत्र पूर्वसूत्राद्र इति षष्ठ्यंतमनुवर्तते एतदर्थ एवात्रास्य पाठः । अन्यथा हससन्धावेव पठेत् । रीति सप्तमी निर्देशाल्लोपनिमित्ताद्रेफात् पूर्वस्य स्वरस्य दीर्घः परस्य दीर्घभाजोऽभावात् ऊरसे इति ज्ञापकाच्च । लोपशित्यनुवर्तमाने लोपग्रहणमुत्तरार्थम् । रीति किम् । प्रातर्वायुः । र इति किम् । मनोरथः । अत्र चकारो विधेययोर्लोपदीर्घयोः समुच्चयस्य द्योतकः अन्ये तु विधानादेव तयोः समुच्चयः सिद्धः किं तेन अतोनुक्तसमुच्चयार्थश्चकारः तेन खपे वेति वार्त्तिकं लब्धमित्याहुः । रो रे लोपं स्वरश्च पूर्वो दीर्घ इत्यत्र रो रे दीर्घ इत्येव युक्तम् । विधानाच्च विनैव समुच्चयलाभः लोपनिमित्ताद्रेफात्पूर्वस्य स्वरभिन्नस्यासंभवः । ढ्लोपे पूर्वस्य दीर्घोण इति सूत्रे पूर्वस्येति व्यर्थम् । ढ्रौ लोपयति यस्तस्मिन्वर्णे विधीयमानस्य दीर्घस्य परत्रासम्भवात् । तस्मिन्निति परिभाषणात् । न चोत्तरपदाधिकारं बाधित्वा पूर्वमात्र ग्रहणार्थं तदिति वाच्यम् । ढांशे असं-

भवादेव तस्य बाधे सिद्धे रेफांशेऽपि वा तद्बाधस्यैवौचित्यात् । एकस्मिन्वाक्ये विरुद्धार्थद्वयकल्पनस्यागतिकत्वात् ॥ **सैषाद्धसे** । स च एष च तयोः समाहारः सैषं तस्मात्।सइति तच्छब्दस्य कृतसत्वस्यानुकरणं एष इत्येतच्छब्दस्य अनुकार्यानुकरणयोर्भेदेऽर्थवत्त्वाद्विभक्त्युत्पत्तौ सत्यां द्वन्द्वे विभक्तिलोपे च कृते नामत्वान्ङसिः । अनुकरणत्वादेवैषादित्यत्र स्मटोऽभावः । यद्वा द्वन्द्वे सर्वादीनां सर्वकार्याभावोऽनेन ज्ञाप्यते । ननु कथमिदं निर्णीतं तदेतदोरिदमनुकरणं न तु सकारमात्रस्य । कंसः । हंसः । अवतंस इति । इषेर्वञ्चि एष इत्यस्येति। अत्रोच्यते। स नपुंसकम्, स धातुरिति ज्ञापकात्तच्छब्दस्य सस्येदमनुकरणम् । नतु सकारमात्रस्य । सो नः पुंसः, किलात्षः सः कृतस्येत्यादिलिङ्गात् । तत्साहचर्यादेषशब्दोऽप्येतच्छब्दस्य विकृतनिर्देशात्तु प्रथमातोन्यत्र न । तैः कृतम्, एतैः कृतमिति । अन्यथा स्पष्टार्थं तदेतदित्येवावक्ष्यत् । असः शिवः । एषको रुद्रः । अनेषो रुद्रः । इत्यादौ संज्ञापूर्वको विधिरनित्य इति लोपो न । ननु सैष दाशरथीत्यादौ स्वरे परे सशब्दाद्विसर्गस्य लोपः कथम् । उच्यते । लोप इत्यस्यानुवृत्तिसामर्थ्यात् । पूर्वसूत्रे रि दीर्घश्चेत्येव वाच्यं लोपशित्यनुवर्तते । लोपश्यपि वचनाद्दीर्घो भविष्यति तत्किं लोपग्रहणेन तदुत्तरार्थं कृतम् । इहापि हसे लोपलोपशोर्विशेषो नास्ति । तस्मात्तत्स्वरे लोपार्थं कृतम् । तेन सशब्दात्कचित्स्वरे लोपः सिध्यति । यद्वा सेति योगो विभज्यते । तत्राऽबे इत्यनुवर्तते । चकारोऽनुक्तसमुच्चयार्थोऽनुवर्तते । सशब्दाद्विसर्गस्य लोपोऽबे लोप एव पूरणं चेदित्यर्थः । तत एषाद्धस इति द्वितीयो योगः । सेत्यनुवर्तते । माधवस्तु सः एषादिति छेदः तत्र स इति पञ्चम्यर्थे प्रथमा विसर्गस्य सत्यपि लोपशि निर्देशस्य सौत्रत्वाल्लोपशि पुनरित्यैत्त्वानिषेधः । सूत्रे सैषादित्यमसक्तसन्धिकरणं सैष दाशरथिरित्यादौ संधेरौचित्तीज्ञापनार्थमित्याह । तन्न । लोपग्रहणस्य वैयर्थ्यप्रसङ्गात्, सौत्रत्वस्वीकाराच्च । एष सपरो व्यञ्जने लोप्य इति कालापसूत्रं तत्सैषाद्व्यञ्जने लोप्यमिति युक्तम् । तथा च रो रे लोपमित्यत्र लोपग्रहणं न कर्तव्यम् । अस्यैव तत्रानुवृत्तिसम्भवात् । न विसर्जनीयलोपे पुनः सन्धिरिति नलोपे सन्धिरिति पठितुं युक्तम् । यत्तूक्तं

वृत्तिकृता विसर्जनीयाधिकारे पुनर्विसर्जनीयग्रहणमुत्तरत्र विसर्जनीयाधिकारनिवृत्त्यर्थमिति । तन्न । उत्तरत्रासम्भवादेतन्निवृत्तिः स्यात् । तत्सूत्रं व्यञ्जनसन्धौ वा पाठ्यं यद्दप्युक्तं तेनैष च्छत्वेनेति द्विर्भावः सिद्ध इति। तन्न । परत्वादेव तत्प्रवृत्तिसम्भवात् । अनुस्वारविसर्गयोः स्वरत्वाभ्युपगमात् । एतत्तदोः सुलोपोऽकोरनञ्समासे हलीति पाणिनीयसूत्रम्, सैषात्सुलोपोऽकोरनञ्समासे हलीत्यपेक्षितं सोऽचि लोपे चेत्पादपूरणमित्यस्य स्थाने सात्पादपूरणमित्येवोचितम । प्रारंभसामर्थ्यादिनीति लभ्यते । पादपूरणसामर्थ्याल्लोप इति वा ॥

भट्टोजिदीक्षितात्तीर्थात्सर्वविद्याविशारदात् ॥
प्राप्याहिभाषितं शास्त्रं श्रुत्वा शास्त्रान्तराण्यपि ॥ १ ॥
वृद्धाख्यनगरस्थायी विनायकसुतोऽकरोत् ॥
रघुनाथाभिधो व्याख्यां विसर्गसन्धिसङ्गताम् ॥ २ ॥

इति विसर्गसंधिः ॥

# अथ विभक्तिप्रकरणम् ।

## तत्र स्वरान्तपुंलिङ्गः ।

**अविभक्ति नाम ॥** विभक्तिशब्देन तन्त्रादिना विभक्तिर्विभक्त्यन्तं चोच्यते । विभक्तिशब्देन सह नञस्तत्पुरुषः । विभक्तेरन्यच्छब्दरूपं विशेष्यमिति क्लीबत्वम् । नञ् तु द्विविधः । द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ ॥ पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत् ॥ प्राधान्यं तु विधेर्यत्र प्रतिषेधे प्रधानता ॥ पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ पर्युदासोऽत्र नञ् गृह्यते । स च नञिव युक्तमन्यसदृशे तथा ह्यर्थगतिरितिन्यायेन विभक्तिसदृशमर्थवदेव संज्ञिनमुपस्थापयति । एवं हि विभक्तिभिन्नं विभक्त्यन्तभिन्नमर्थवच्छब्दरूपं संज्ञीति स्थितम् । शब्दरूपापेक्षया चाविभक्तीति नपुंसकनिर्देशः । माधवस्तु नन्वविभक्तीति कथं विग्राह्यम् । नास्ति विभक्तिर्यस्योत्पत्तौ विभक्तिनिरपेक्षत्वात् । ग्रामप्राप्त इत्यादौ तत्सापेक्षत्वान्न स्यात् । न च समासत्वाद्भविष्यतीति वाच्यम् । एवं हि समासग्रहस्य वाक्यव्यावृत्तये नियमार्थता भज्येत । तस्मान्नाद्यः पक्षः । नापि द्वितीयः । भवतीत्यादावतिप्रसङ्गः । ततश्च तिबाद्यभिहितैकत्वादिसंख्ययाप्यव्ययादि-

स्विवैकवचनं स्यात् अतो नास्ति विभक्तिर्यस्मिन्नाधेयत्वेन विभक्त्याश्रयो यन्नास्तीत्यर्थ इहाश्रीयते इत्याह । तन्न सम्यक् । एवं वदता हि बहुव्रीहिः प्रसज्यप्रतिषेधश्चाश्रितः । तथाच नञिवयुक्तन्यायाभ्युपगमो न संगच्छते । नहि अयथोद्देशोऽसूर्यपश्या राजदारा इत्यादौ तत्स्वीकारः क्वचिद्दृष्टः । सरसिजमामुष्यायण इत्यादावलुक्समासादिषु विभक्त्याश्रयत्वेन नामसंज्ञा न स्यात् । यदपि तेनोक्तमत एव धातूनां व्यावृत्तिः । तिबादिविभक्त्यन्तत्वात्तेषां हन्तेत्यादावपि भूतपूर्वगत्या नाविभक्तित्वमिति । तदपि न । समुदायस्य विभक्त्याश्रयत्वेपि प्रकृतिभावमात्रस्य नामत्वप्रसङ्गस्य दुरुद्धारत्वात् । हन्तेत्यत्र भूतपूर्वगत्याश्रयणस्य व्यर्थत्वात् असम्भवाच्च यदा विद्यमाने तिबादौ प्रकृतिभागमात्रस्य प्राप्नोति तदा भूतपूर्वगत्या तत्परिहारः कथं सार्थकः । नापि तिबाद्यन्तात्तृवुणादयो विधीयन्ते । येन भूतपूर्वगतिस्सम्भवत्यपि किंतु तिबाद्यर्थे कर्त्रादौ विधीयन्ते । उक्तं हि । अहन्नित्यत्र लङुत्पत्तेः प्रागेव नामसंज्ञायामुत्तरकालं पदत्वे सति नलोपः स्यादिति । अर्थवदित्यत्रार्थशब्दोभिधेयवचनो गृह्यते, न प्रयोजनवचनोऽव्यभिचारात् । न निवृत्तिवचनः, स्वयं निवृत्तस्य किं संज्ञया । न धनवचनः स्वस्वामिभावस्यासम्भवात् । अभिधेयं तु जातिगुणक्रियाद्रव्यभेदेन चतुर्विधम् । तत्र जातिशब्दाः गौरश्वः पुरुषः । गुणशब्दाः शुक्लः कृष्णः पीतः । क्रियाशब्दा गन्ता पाचकः नंदनः । द्रव्यशब्दाः डित्थः लत्तकः लफिद्रुः । नचैवमभावशशविषाणवंध्यापुत्रनरविषाणगगनकुसुमादीनामर्थाभावान्न प्राप्नोति । येषां तावद्भूतलाद्याश्रयं घटादिप्रतियोगिकं नास्ति । बुद्धिबोध्यं पदार्थान्तरमभावस्तन्मते । तेनाभिधेयवत्वात् । येषामप्याश्रयाभिमतं भूतलादिस्वरूपमेव तद्बुद्धिविशेषो वाऽभावस्तन्मतेऽनेनैवाभिधेयवत्वात् । अभावशब्दसिद्धा संज्ञा बन्ध्यादिशब्दार्थः प्रसिद्धः । पुत्रादिशब्दार्थेऽपि तयोः संसर्गमारोप्य शब्दप्रयोगसम्भवात् । यद्वा तेषामपि मानसवृत्तिरूपस्यार्थस्य सत्त्वात् । अथ प्रमाणं च शब्दज्ञानानुपाती वस्तुनो विकल्प इति । " अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि " इति । " खत्वं जलत्वमुर्वीत्वमग्निवायुत्वमप्यसत् ॥ वेत्यन्तः स्वप्नसंकल्पध्यानेष्विव चितिः स्वयम् ॥ १ ॥ स्वप्नेन्द्र

जालपुरवत्संकथेहा पुरादिवत् ॥ संकल्पनदसत्यैव भाति सर्गानुभूतिभूः ॥ २ ॥ बहिर्न: किंचिदप्यस्ति खाद्यम्ब्युर्वीदिगादिकम् ॥ एतत्स्वचित्त एवास्ति पत्रपुञ्जमिवांकुरे ॥ ३ ॥ फलादि स्फारतामेति यथैव बहिरंकुरात् ॥ बहिः प्रकटतामेति तथा पृथ्व्यादि चेतसः ॥ ४ ॥ सत्यं पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचनेत्यादि च"। "मैवं मांसमयी योषित्काचिदन्या मनोमयी॥ मांसमय्या अभेदेपि भिद्यते हि मनोमयी॥ १॥ भ्रान्तिस्वप्नमनोराज्यस्मृतिष्वस्तु मनोमयम् ॥ जाग्रन्मानेन मेयस्य न मनोमयतेति चेत्॥ २ ॥ सत्येवं विषयौ द्वौ स्तो घटौ मृन्मयधीमयौ॥ मृन्मयो मानमेयः स्यात्साक्षिभास्यस्तु धीमयः॥ ३॥ इति च"। केचित्तु सकलशब्दाभिधेयत्वं ब्रह्मणोभ्युपगच्छंति । अन्ये तु बुद्ध्युपारोह एव चार्थस्य शब्दप्रयोगे कारणं न बहिः सत्ता । यदि बहिः सन्तमेवार्थं शब्दा अभिदधीरंस्तदा घटोस्ति पटो नास्तीति च प्रयोगो न स्यात् । एकत्र पौनरुक्त्यादपरत्र विरोधात् । बुद्ध्युपारूढस्य तु बहिः सत्वासत्वप्रतिपादनायोपपद्यते प्रयोगः । एवमपाक्षीत पक्ष्यति । अस्य सूत्रस्य शाटकं च येत्यादावपि बुद्ध्युपारूढ एव । पच्यादीनामर्थो न तु शब्दप्रयोग काले बहिः सन्नित्याहुः । ननु लौकिकप्रयोगाच्छब्दानामर्थत्वानिश्चयः स तु वाक्यस्यैव पदस्य वा, न तु प्रकृतिभागमात्रस्येति कथं तस्य निष्कृष्यार्थवत्त्वनिश्चयः येषां हि सहैव प्रयोगस्तेषां संघातस्यैवार्थवत्ता तथा वर्णानाम् । उच्यते । अन्वयव्यतिरेकाभ्यां शब्दार्थनिश्चयः । यस्य शब्दस्यान्वये योऽर्थः प्रतीयते व्यतिरेके च व्यतिरिच्यते स तस्यार्थः । वृक्षः वृक्षौ वृक्षा इत्यादौ च प्रत्ययसामान्याव्यभिचारेपि तद्विशेषव्यभिचारः सामान्यव्यभिचारश्च वृक्षखण्डः वार्क्षी शाखेति । अर्थस्तु मूलस्कन्धफलपलाशादिमान् यावद्वृक्षशब्दात्प्रतीयते । पर्युदासानाश्रयणे त्वर्थवदित्यस्या लाभात् । प्रतिवर्णसंज्ञाप्रसङ्गः । न चार्थवद्ग्रहणे नानर्थकस्येति परिभाषयाप्यर्थवदित्यस्य लाभः । एषा हि परिभाषा रूपविशेषोपादाने वर्तते । न त्वत्र रूपविशेषोपादानं न त्वस्त्वनर्थकस्यापि नामसंख्या कर्माद्यभावात्स्यादयो न भविष्यन्ति । मैवम् । अविशेषेणोत्पद्यते उत्पन्नानामर्थनियमः,

तथाचाव्ययवत्स्यादयः स्युरेव । ततश्च धनं वनमित्यादौ पदान्तप्रयुक्तो न लोपश्च स्यात् । विभक्तिश्रवणं च भविष्यति । समुदायस्य पृथङ्नामसंज्ञायां तदंतर्भावेऽपि लुकोऽभावात् । समासप्रत्यययोरिति तद्विधानात् । नन्वेवं द्विर्वचनन्यायेनावयवस्य संज्ञा न स्यात् । नैनं वैषम्यात् युक्तम्, तत्र पचू इत्यत्र येनैव स्वरेणावयवेन समुदायः सस्वरस्तेनैव तदवयवोऽच्शब्दः पशब्दश्च । नचैकस्यैकदाऽनेकं प्रत्यवयवत्वं निरूपयितुं शक्यं किंच समुदायद्विर्वचनेनावयवा अपि द्विरुच्यंते तादात्मकत्वात्तस्य । इह त्ववयवानां समुदायस्य च संज्ञानिबन्धनं शब्दः पृथगेव तत्र समुदायस्य यत्नेन तस्यैवकार्यं नावयवानाम् । ननु च एति आभ्यामौपगवः अ अपेहीति । धातुनामप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वृक्षादिष्वपि वर्णा अर्थवन्तः । तथा कूप इति ककारे सति कश्चिदर्थो गम्यते । यूप इति पकारेऽर्थान्तरं तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य यो यूपार्थः स पकारस्येति । तथा ब्राह्मण इत्युक्ते योऽर्थो गम्यते नासौ वकारादीनामन्यतमापायेपि गम्यते । येषां च संघातो यत्कार्यं करोति ते प्रत्येकमपि तत्कुर्वन्ति यथा तिलानां खारी तैलमुत्पादयति प्रत्येकं च तिलाः । ये च यस्मिन्प्रत्येकमसमर्थास्तेषां संघातोपि तत्रासमर्थः । यथा प्रत्येकं सिकतास्तैलं नोत्पादयंति न तासां खार्य्यपि । अतः संघातार्थत्वादर्थवंतो वर्णाः तत्कथं ग्रहणे सत्यपि तेषां निवृत्तिरितिचेत् अनर्थकास्तुवर्णाः । प्रतिवर्णमर्थानुपलब्धेः । नहि ब्राह्मण इत्यत्र ब्राह्मण इत्युक्ते कश्चिदर्थो गम्यते अतो धात्वादीनामेकवर्णानामर्थवत्त्वादन्येपि वर्णा अर्थवन्त इत्यनुपलब्धिबाधितमतत एवमन्येऽपि हेतवो बाधितविषयाः । किंच कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारपकारयोरर्थवत्त्वे ऊप ऊप इति वर्णानामानर्थक्यमभ्युपगतं स्यात् । अथ तेषामप्यर्थवत्त्वं भूयिष्टः कूपे यूपार्थः स्यात् । कूपार्थश्च यूपे यत्र भूयसामर्थवतामन्वयो व्यतिरेकस्तु कस्यचित । यथा देवदत्तगामभ्याज कृष्णां देवदत्तगामभ्याज शुक्लामिति । अतः संघाता एव तेनार्थेनार्थवन्तः संघातार्थवत्त्वाच्चेति हेतुरनैकान्तिकः । तैलाग्निवर्तिः संघातेन दीपो न प्रत्येकम् । रथावयवैश्चक्रादिभिः संहतैर्व्रजिक्रिया । किं चार्थवतां विपर्यासेऽर्थप्रत्ययस्यापि विपर्यासः । आहर पात्रं पात्रमाहरेति

अपाये चापायः गामभ्याज शुक्लां गामभ्याजेति उपजने चोपजनः गामभ्याज गामभ्याज शुक्लामिति वर्णेषु तु नैव हिनस्तीति सिंहः हंति हतः घ्नंति अतः संघातार्थवंतः । नन्वेवं धातोरपि प्राप्नोति अस्तु को दोषः । स्यादयः स्युरिति चेन्न । परत्वान्निरवकाशत्वाच्च तिबादिभिर्बाधनात् । नन्वहन्नित्यत्र नाम्नो नो लोपशधाविति प्राप्नोति । सत्यम् । अधावित्यत्र धिप्रत्ययेनाक्षेपात् । प्रकृतौ नाम्नि लब्धे पुनर्नामग्रहणस्यैतत्प्रयोजनं धातोर्माभूदिति यदि धातोर्नामसंज्ञा स्यान्नामग्रहणं व्यर्थं स्यात् । यद्वा समासश्चान्वये नाम्नामित्यत्र नामग्रहणं ज्ञापकम् । तथा हि विभक्त्यन्तानां समास इति सिद्धान्तः धातोर्यदि नामसंज्ञा तर्हि तिबाद्यन्तस्य समासोऽपि स्यादिति व्यर्थम् । नाम्नामिति तत्कृतं ज्ञापयति धातोर्नामत्वाभावं प्राधान्येन क्रियाप्रतिपादकस्य नामसंज्ञा नेति निष्पन्नम् । ननु क्रियासामान्यप्रतिपादकस्यैव नामसंज्ञा मास्तु इति केचित् । क्विबाद्यन्तस्यापि धातोर्नामसंज्ञा न स्यात् । धातुत्वस्य सत्त्वात् । उच्यते । समानाद्धेर्लोप इत्यत्राधातुग्रहणं ज्ञापकं क्विबाद्यन्तस्य धातोर्नामसंज्ञा न स्यात् । धातुत्वस्य तथा आतो धातोरिति धातुग्रहणमपि ज्ञापकमुक्तार्थस्य, स्वोर्धातोरित्यादि च लिङ्गमुक्तार्थस्य, अप्राधान्येन क्रियोपस्थापकस्य नामसंज्ञेति सिद्धम् । अथवा अहन्नित्यादौ प्रत्ययलक्षणेन विभक्त्यंतत्वादविभक्तीति पर्युदासोभविष्यति । यत्तु नामसंज्ञायां सत्यां न लोपश कार्यः । तत्र च नाम्नो नो लोपशधाविति प्रतिषेधो ज्ञापकः । प्रत्ययलक्षणेनाविभक्तीति निषेधो न प्रवर्त्तत इति । अन्यथा राजन्नित्यादिषु नामत्वाभावादेव नलोपशोऽप्रसक्तेः । किमर्थमधावितीति । तन्न । तस्य ज्ञापकस्य विशेषविषयत्वात् । यावता विना यन्नोपपन्नं तावत्तेन ज्ञाप्यं स्यादौ हि प्रत्ययलक्षणेन निषेधाभावं विनानुपपन्नमधाविति तावदेव ज्ञापयति न विभक्तिमात्रे, गौरवात् । न ह्यनिष्टं ज्ञापयित्वा पदान्तरपूरणमुचितम् । यद्वा प्रसज्यप्रतिषेध एवाश्रीयते । अविभक्तीति विशेषे निषेधात्सामान्येन विधिरनुमीयते । तथाच विभक्तेर्विभक्त्यन्तस्य च न भवत्यन्यस्य तु भवतीत्यर्थः । एवं चानर्थकस्यापि प्राप्नोति अस्तु को दोषः । विभक्त्युत्पत्तेः प्राप्नोति नैष दोषः । स्यादिविधेर्लिङ्गार्थे प्रथमेत्यादि-

विधीनां चैकवाक्यतया विधिपक्षे कर्माद्येकत्वाद्यभावात् । कर्माद्येकत्वादिकं हि समुदायस्यैवार्थो नत्ववयवानामिति न तेभ्यो विभक्तिः । नच भिन्नमित्यादौ नकारादौ परं नलोपशादि स्यात्, रसादौ स्यादौ पदान्तेच नलोपशादेर्विधानात् । राजतेत्यादौ पदान्तत्वान्नस्य लोपश्च विभक्त्यन्तात् । ब्रुवोवचः भुवो वुक्, अस्तेर्भूः सावित्यादौ प्रकृतिवदनुकरणमित्यातिदेशिकं धातुत्वं बिभक्तित्वं चाश्रित्य निषेधप्रसङ्गः । इदम इनांशौ सावित्यादिलिङ्गात्तस्यानित्यत्वाभ्युपगमात् । पर्युदासे तु स्वाभाविकतद्भिन्नत्वाश्रयासंज्ञाप्रवृत्तिः । नचैवमनन्वितसमासो नञो भवति नान्वयात् । असूर्यं पश्या अश्राद्धभोजीत्यादौ क्वचिदनन्वयेपितस्याऽभ्युपगमात् । अरात्र्यादि अनन्ते इत्यादिना तत्साधुत्वस्यापि ज्ञापितत्वात् । ननु चैवं पर्युदासे विभक्त्यविभक्त्योरेकादेशस्य स्थानिवत्त्वेन पूर्वान्तत्वान्नामसंज्ञा प्राप्नोति । कां डे कुडचे प्रसज्यप्रतिषेधेप्यन्तरङ्गत्वात्प्रागेव विभक्त्युत्पत्तेः प्रवृत्ता संज्ञा एकादेशस्य स्थानिवद्भावादस्त्येव । ततश्च संख्याकर्माद्यर्थायोगेप्यव्ययेभ्य इति विभक्त्युत्पत्तिःस्यात् । नपुंसकस्येति ह्रस्वस्तु न प्राप्नोति । विभक्त्यन्तस्य संख्याकारकशक्तिप्रधानत्वेन लिङ्गयोगाभावात् । एतेन यन्माधवोक्तमन्यथा अत्र संज्ञायां पुनः संख्या कर्माद्यर्थायोगाद्विभक्तेरनुत्पत्तावपि संज्ञाश्रयो नपुंसकह्रस्वः स्यादिति तत्प्रत्युक्तं माधवेनोक्तम् । अहन्नत्र हन्तेर्दिवादावटो यन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति धातुग्रहणे नलोपाभाव इति । तन्न । अटो मध्यपतितत्वाभावेनोक्तन्यायाविषयत्वात् । यदागमास्तद्ग्रहणेन गृह्यन्ते इत्यस्य वक्तुमुचितत्वाच्च । अत्रोच्यते उभे द्वित्वे एकत्वे इत्यादिनिर्देशैर्विभक्त्यनुत्पत्तिर्ज्ञाप्यते । अथ विभक्तिशब्दस्य किमभिधेयम्, स्यादयस्तिवादयश्च । तथाचवार्तिकम् । **अथ विभक्तिर्विभाव्यते** । अत्र माधवः । सन्धिप्रकरणकथनादनन्तरं ये विधयो वक्ष्यन्ते तेषां विभक्तिः संज्ञा स्यात् । सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यत इतिविभक्तिशब्दावृत्त्या योज्यम्।अभेदोपचाराच्चद्वितीयो विभक्तिशब्दः संज्ञिवचनः । आद्यः संज्ञावचनः महासंज्ञाकरणं तु विभज्यन्ते विविच्यन्ते संख्याकर्मादयोर्था अनयेति विभक्तिरित्यन्वर्थसंज्ञानार्थं तेनागमानामत्र वक्ष्यमाणानामपि विभक्तिसंज्ञा नेति । तन्न, वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्ययोगात्-

अन्येतु यौगिकार्थेनैव सिद्धमित्याहुः । विभज्यते प्रकटीक्रियते कर्तृकर्माद्य-र्थोऽनया सा विभक्तिः । अतिप्रसक्तं योगमात्रं कृदादौयद्यपि तथापि स्यादिषु तिबादिषु च योगरूढिः । एवं च विभक्तिश्चेति पाणिनीयसूत्रं प्रत्याख्यात-मितिभावः । यदपि पूर्वाचार्यसंज्ञाश्रयणाद्वा तदाश्रयणं तु लाघवार्थमपि कर्त्तव्यम् । तथाहि यद्यत्र सित्यादिर्विभक्तिरित्युक्ता आदिशब्दो नदिग्रहपचा-देरितिवत्संबध्येत । तथापि त्यादिग्रहत्यादौ भविष्यतीतिवत् । यात्तुप्रदिप्ण-बादीनामग्रहात्तेषां पृथक्संज्ञाविधानगौरवप्रसङ्ग इति माधवेनोक्तं तदपि उक्तरीत्या गतार्थं अत्र वार्तिकं कृत्तद्धितसमासाश्चेति । चकारो नामसंज्ञा-नुकर्षणार्थः । अत्र माधवः । ननु किमर्थमिदं नामसंज्ञा पूर्वेणैव सिद्धा। न-सिध्यति । तत्र कृत्सु क्विबाद्यन्तानां धातुत्वानपायात् । अत एव हंसामपा इति धिलोपो न । स्वार्थतद्धितानामपि गुणीभूतार्थवत्त्वात् । तथाहि चोर एव चौरः स्वार्थेण अत्र हि चोरशब्दस्य साक्षादर्थवत्त्वम्, चौरशब्दस्य तु चोरशब्दस्मरणद्वारकमिति गौणमुख्यन्यायेन चोरशब्दस्यैव पूर्वेण संज्ञा स्यान्न चौरशब्दस्येति विध्यर्थं कृत्तद्धितग्रहणं समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावात् । अत एव पञ्चाग्नीतिपदान्ताश्रयो नलोप इत्याह । अत्रेदं वक्तव्यम्। पञ्चनवदधिमधुइत्यादीनामविभक्तित्वेन नामत्वानपायात्कथं पदत्वम् । अत्र यदि विभक्तिसत्वसमय एव प्रवृत्ता पदसंज्ञा लुप्तायां विभक्तौ एकदेशविकृतन्यायेन प्रकृतिभागेपि सास्तीति ब्रूष । तर्हि प्रकृतेऽपि समम् । क्विबादिसत्वसमये प्रवृत्ता नामसंज्ञा लुप्तेऽपि तस्मिन्प्रकृतिभागे सास्तीति तुल्यम्। यदि तु लुप्ते प्रत्यये प्रत्ययलक्षणेन पदसंज्ञां स्वीकरोषि तदपि समं समाधानम् । यदपि स्वार्थतद्धितानामपीत्यादि तदपि न । गौणत्वासम्भवात् स्वार्थोपसर्जनार्थान्तराभिधायित्वं गौणत्वम्, तच्चात्र न संभवति । नहि चोर-चौरशब्दयोरर्थौ भिन्नौ येनैकोऽपरत्र गौणो भवेत् । यदपि अत्र चोरशब्दस्य साक्षादित्यादि तदपि न । नहि पर्यायाणां परस्परस्मरणद्वारा स्वार्थबोधकत्वं क्वचित्स्वीकृतम् । व्याकरणानभिज्ञस्यापि शक्तिग्रहे सति ततो बोधो जायते अन्यथा ज्ञानं ध्यानमित्यादौ युटः स्वार्थिकत्वेन गौणत्वादिकं स्यात् । यदपि समासेष्वपि भूतपूर्वविभक्त्येत्यादि, तदपि न । अवयवानां विभक्त्यन्तत्वेपि

समुदायस्यातथात्वात् । यस्माद्विभक्तिर्विधीयते तद्विभक्त्यन्तं सा चावयवेभ्यो विधीयते न समुदायात् । अन्यथा समासवद्वाक्यस्यापि विभक्त्यन्तत्वेन पूर्वेण प्राप्तिविरहादेव तत्र नियमानुपयोगात् । यदपि नन्वेवमप्यव्ययीभावादिति विभक्तिलुग्विधानाज्ज्ञापकात्समासे नामसंज्ञा भविष्यति । एवमपि नियमार्थं समासग्रहणम् । अर्थवत्समुदायानां मध्ये समासस्यैव यथा स्यात् । तेन वाक्यस्यार्थवतोपि न भवतीति तदपि न उक्तरीत्या समासस्याविभक्त्यंतत्वेन ज्ञापकोपन्यासवैयर्थ्यात् । अन्यथा समासवद्वाक्यस्यापि विभक्त्यन्तत्वे नियमफलाभावेन समासग्रहणवैयर्थ्यात् । तस्मात् पूर्वेणैव सिद्धे वार्त्तिकमिदं नारम्भणीयमितिस्थितिः। एवं स्थिते वाक्यव्यावृत्तिः कथमित्यवशिष्यते । तत्रोत्तरं तु तुमुतदर्थायां भविष्यतीति ज्ञापकमेव । नहि वाक्यस्य नामत्वे इत्यादिनिर्देश उपपद्यते । इदं हि वाक्ये वृत्तिस्वीकारपक्षे तदभावे तु प्राप्तिरेव नास्ति । यदपि प्रातिपदिकसंज्ञा इति केचिदिति । अत्र माधवः । किमर्थमिहतत्कृतसंज्ञानुवादः तच्छास्त्रवदस्यापि छान्दसप्रक्रिया निरूपणद्वारा वेदाङ्गत्वमस्तीति ज्ञापनार्थम् । तेन छन्दोवत्सूत्राणि भवन्तीत्यादिन्यायजालमप्याश्रयणीयमितिफलितं भवतीति ।अत्रेदमुच्यते।नहि संज्ञामात्रानुवादेन वेदाङ्गत्वं तदीयन्यायजालं च लब्धं शक्यम्, वैशेषिकादिष्वतिप्रसङ्गात् । शक्यत्वे वा उपधासम्प्रसारण तत्पुरुषबहुव्रीह्यादिसंज्ञानुवादात्तदस्तु किमनया विभक्त्यन्तपदमिति वक्तव्यम् । अत्र माधवः । विभक्तिरन्तोऽवयवो यस्य समुदायोत्र प्राधान्यात्संज्ञीक्ली बत्वं शब्दरूपापेक्षयेति अन्ये तु अवयवसमीपार्थयोरन्तशब्दयोस्तन्त्रादिना निर्देशं स्वीकृत्य विभक्तिरन्ते समीपे यस्येति विगृह्य विभक्तौ परतः पूर्वस्यापि पदसंज्ञामाहुः । अत्र पक्षे वसां रस इत्यादौ रसग्रहणं व्यर्थं विद्वत्तर इत्यादौ विभक्त्यन्तात्तद्धितविधानात् । पद्यते ज्ञायतेऽर्थोऽनेनेति योगार्थेनैव निर्वाहे वचनं नारब्धव्यमित्युक्तम् । एवप्रत्ययसंज्ञाप्यन्वर्था प्रतीयतेऽर्थो येन स प्रत्ययः । नन्वेवं स्वार्थिकानां कथं तेषामनर्थकत्वादिति चेन्न । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात्तेषां प्रकृत्यर्थेनैवार्थवत्त्वात् । योगरूढिश्च स्यादिषु अणादिषु तिबादिषु त्रादिषु चातः प्रकृतौ नातिप्रसङ्गः।एवं च प्रत्यय इति सूत्रे

मन्दप्रयोजनम् । नदित्यर्थविभक्तिं तदन्तधातुं च विनाऽर्थवन्नामसंज्ञमिति फलितम्। विभक्तिं विनेति किम् । हरिषु । करोमि । सुप्सिपोर्माभूत्। पदादित्वात्तस्य षो न स्यात् । यंपऽस्य, तौ सुनमां, कर्तृसाधनयो रित्यादिनिर्देशैः पदादेः सस्य षोनेति ज्ञापितत्वात् । विभक्त्यन्तं विनेति किम्। देवौ, भवन्ति । अत्र द्वित्वाद्यभिधानेऽप्यव्ययादिवेकवचनं स्यात । धातुं विनेति किम् । अहन् । नस्य लोपः स्यात । अर्थवदिति किम् । धनम् । वनम् । अत्र नान्तावधेर्माभूत् । नलोपादिकं स्यात् । अवयवानामानर्थक्येप्य- व्ययादिवेकवचनं स्यात । एतेनार्थवदधातुरप्रत्ययः प्रातिपदिकमिति मत्या ख्यातम् । तथाहि अनिप्प्रातिपदिकं समासश्चेति सूत्रणीयम् । तिबिति तिपस्तिशब्दादारभ्यासुपः पकारेण प्रत्याहारः । अतिबिति पर्युदासाश्रयणादर्थ- वदिति लभ्यते । नन्वेवं धातावतिप्रसङ्गः । धातोरिति लिङ्गात् । अन्यथाफि- षोऽत उदात्त इत्येव सिद्धे किमनेन सुपो धातुप्रातिपदिकयोरिति पृथङ्नि- र्देशो ज्ञापकः । न लोपः प्रातिपदिकान्तस्येति प्रातिपदिकग्रहणं चात्रज्ञापकं तद्धि धातोर्न लोपवारणार्थं कृतम् । नच विभक्त्यन्तव्यावृत्त्यर्थं तदिति वाच्यम् । तावन्मात्रे व्यावर्त्तनीये नलोपोऽनिपः, नलोपोऽसुप्तिङः नलोपो विभक्तेरिति वावक्ष्यत् । नन्वेवं क्विबाद्यन्तस्यापि न स्यादिति वाच्यम् । आतोधातोरिति लिङ्गात्। अन्यथा शसादावचि कथमातो लोपो लभ्येत । अत्व सन्तस्य चाधातोरित्यपि लिंगम् ।ओः सुपि नभूसुधियोरित्यादि च।नन्वेवं स्त्रीप्र- त्ययेष्वतिप्रसङ्गः । इष्टापत्तेः । नहि स्त्रीप्रत्ययांतानां प्रातिपदिकसंज्ञायां दोषः कश्चन दृश्यते नच गौरीपतिर्माधव इत्यादावतिप्रसङ्गः उपसर्जनस्त्रीप्रत्य- यान्तस्य प्रातिपदिकस्य सत्वेन गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वप्रसङ्गात् । मैवंप्रातिपदिकग्रहणानुवृत्तिसामर्थ्याद्विशिष्टस्य समासप्रातिपदिकस्यैव तत्र ग्रहणात् । अन्यथा प्रातिपदिकत्वस्याव्यभिचारात्किं तया । एवं चार्थ- वदधातुरप्रत्ययग्रहणं कृत्तद्धितग्रहणं ङ्याप्प्रातिपदिकादित्यत्र ङ्याब्ग्रहणम् । प्राचां ष्फ तद्धित इत्यत्र तद्धितग्रहणं च न कर्तव्यं धातुविभक्तिवर्ज- मर्थवल्लिङ्गमित्यत्राविभक्ति लिङ्गमित्युचितं यदि ज्ञापकानुसरणक्लेशो न

क्रियते तर्हि अधातुविभक्तिलिङ्गमित्यस्तु इत्याशयेन सरस्वत्या सूचितमविभक्तिनामेति दिक् । तस्मात् अधिकारोयं प्राग्धातो रित्यधिकारात्। स्यादीनां प्रकृतिरधिक्रियते स्यादेतत् । तस्मादित्यधिकारं विनापीय-मेव प्रकृतिर्लभ्यते । तथाहि प्रकृत्यन्तरं धातुस्तिबाद्यन्तं वाक्यं च । प्रत्यया अपि स्यादयोऽणादयश्च धातोस्तावन्न स्यादयः सामान्यविहितानां तेषां विशेषविहितैस्तिबादिभिर्बाधनात् । नन्वसत्यास्मिन्नधिकारे जुगुप्सा-दिभ्यो धातुभ्य आप्स्यात्, नान्तेभ्यो मन्यादिभ्यस्त्वीप्स्यादिति चेन्न । स्त्रियामाबादिविधानात् । धातोर्हि क्रियावाचित्वात् । क्रिया-याश्चाद्रव्यभूतत्वान्न लिङ्गयोगः । तस्य द्रव्यधर्मत्वात् एतेन तिबा-द्यन्ताद्वाक्याच्चाबादीनामुत्पत्तिः प्रत्युक्ता । तयोरपि क्रियाप्रधानत्वात् । तर्ह्यणादयो धातोः स्युरिति चेन्न तेषामपत्यादिषु विधानात्, धातोश्च लिंगव-दपत्यादिनाप्यर्थेन सम्बन्धाभावात् । एतेन तिबाद्यन्ताद्वाक्याच्चाणादीना-मुत्पत्तिर्निरस्ता । तदर्थस्यापि क्रियाप्रधानस्यापत्यादिना सम्बन्धाभावा-त् । स्वार्थिकास्तर्हि स्युरिति चेन्न । स्वार्थिकानामपि सामान्यविहितानां विशेषविहितैः स्वार्थिकैस्तुमुनादिभिर्बाधितत्वात् । तिबाद्यन्तात्तर्हि स्वा-र्थिकाः स्युरिति चेन्न । ज्ञापकात् । यत् किमोऽव्ययाऽऽख्याताच्च तरतमौ तदन्ताच्चामिति वदति तज्ज्ञापयत्याख्यातान्तात्तद्धिता न भवन्तीति । वाक्यात्तर्हि तद्धिताः स्युरिति चेन्न । अनभिधानात् । नहि देवदत्तस्या-श्वक इत्युक्ते वाक्यार्थगता अज्ञातादयोऽर्थाः कप्रत्ययेन द्योत्यन्ते किं तर्हि अश्वशब्दार्थगता एव स्यादयोऽप्याख्यातान्न भवन्ति एकत्वादिकं वक्तुं तैर्भवितव्यं तेषां तिबाद्यैरेवाभिधानात् । वाक्यादपि न स्यादयः लिङ्गार्थादिषु स्यादिविधानात् । वाक्यार्थस्य च लिङ्गार्थादिषु क्वचिदप्यनन्त-र्भावात् । एवं पारिशेष्यादियमेव प्रकृतिर्लभ्यते । तत्किं तस्मादित्या धिकारेणेति । अत्रोच्यते । भवेदेवं यदि प्रत्ययस्य परत्वनियमः स्यात् । स एव तु नास्ति तदर्थमात्रविवक्षायां केवलस्यापि प्रत्ययस्य प्रयोगः प्राप्तः । किमस्य परिमाणमित्यर्थे किमस्य दघ्नमित्यपि प्रयुज्येत । तद्वारणार्थमिदं सूत्रम् । तच्छब्देन प्रकृतं नाम परामृश्यते । प्रयोक्तव्यइति त्वध्याहारार्थे

सर्वं वाक्यं सावधारणमिति न्यायाद्वा, आरंभसामर्थ्याद्वा चकारानुवर्तनाद्वा। अवधारणं लब्धम् । ततश्च नाम्न एव प्रयोक्तव्यः स्यादिर्न तु केवल इति पर्यवसन्नोऽर्थः । नन्वेवमिदं सिद्धं प्रत्ययः केवलो न प्रयोज्य इति प्रकृतिस्तु तदर्थमात्रविवक्षायां केवलापि प्रयोक्ष्यते तन्नियमाभावादिति चेत्सत्यम् । तदर्थं द्वितीयो नियमः करिष्यते पूर्वसूत्रादत्र नामेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम । तेन नामप्रत्ययसहितमेव प्रयोक्तव्यं नतु केवलमिति सिद्धम्।आपदत्वनिष्पत्तेश्चायं नियमः । तदेतत्तत्रतत्रोच्यते न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय इति, अपदं न प्रयुंजीतेति च अपरिनिष्ठितं न प्रयुंजीतेति तस्यार्थः । तारतम्यमित्यस्य शब्दस्य अर्थे लक्षणया साधुत्वं रघूणां यदूनामित्यादावपि तदपत्ये लक्षणैव इष्यते हि गोणिशब्दस्य गवि गोणीसादृश्यशक्तिभ्रमाभ्यां प्रयुक्तस्य साध्वसाधुत्वव्यवस्था । एवं च तस्मादिति परिभाषापि भवति । परिभाषा ह्येकदेशस्थैव सर्वं शास्त्रं प्राप्नोति न प्रतियोगमुपतिष्ठते । तस्मादिति प्रकृतिमात्रोपलक्षणं ततश्च धात्वादिप्रत्ययेष्वयुक्तनियमलाभः । अधिकारत्वं परिभाषात्वं च तंत्रादिना च बोध्यम्। यद्वा धातोरिति योग उक्तार्थद्वयपरतया व्याख्येयः । तेन धातुप्रत्ययानां नियमो बोध्यः । यत्तु माधवेनोक्तम् ननु नाम्न इति प्रकृतेनैव लब्धे किं तस्मादित्यनेन । नच प्रथमान्तं प्रकृतं पञ्चम्यन्तेन चेहार्थः । अर्थवशाद्विभक्तिविपरिणामात् । उच्यते । तदनुवृत्तौ हि तस्य स्वरूपपरत्वादिहापि स्वरूपप्रतीतिः स्यात् । एवमपि स्पष्टार्थत्वान्नाम्न इति वाच्यम्। स्वरूपप्रतीतिरपि पुनर्नामग्रहणान्न भविष्यति ज्ञापकाच्च । यदयं रः संख्याया इत्याह तज्ज्ञापयति नात्र स्वरूपग्रहः नामशब्दादेव स्यादय इति रेफान्तसंख्याया आमो नुड्विधानं व्यर्थं स्यात् । अत एव षष्ठीभ्रान्त्या आदेशा अपि स्यादयो न भविष्यंति । किंच स्वरूपग्रहणं संज्ञाविधानवैयर्थ्यप्रसङ्गान्नेति तस्मादिति व्यर्थमिति चेन्न ज्ञापनार्थत्वात् । इह शास्त्रीयसंज्ञातोऽन्यत्र स्वरूपमेव शब्दस्य ग्राह्यं नार्थ इति । तेन सखिपत्योरीगित्यादौ तदर्थानां मित्रभर्त्रादीनां ग्रहणं न भवति । तत्रोच्य-

ते । अयमर्थोऽनेन न प्राप्यः । तथाहि । अपत्यं देवता प्रकर्ष इत्यादयो लोकवदर्था एव गृह्यन्ते । सखिपत्योरित्यादौ त्वर्थस्येगागमासम्भवात् । शब्दस्य कार्यं भवति शब्दस्याप्युपस्थितस्यैव ग्रहणं प्रत्यासन्नत्वाल्लाघवात् । नानुपस्थितस्य कल्पनागौरवात् । वस्तुतस्तु शब्दोपि शब्दार्थः । तदुक्तम् "न सोस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ १ ॥ ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा । तथैव सर्वशब्दानामेते पृथगवस्थिते ॥ २ ॥ इति" । अतो विशेष्ये बाधे विशेषणे कार्यान्वयः । अर्थवद्ग्रहणपरिभाषाप्युक्तन्यायमूलैव शब्दविशिष्टस्यार्थस्योत्सर्गेत उपस्थितौ विशेष्ये कार्यबाधाद्विशेषणीभूते शब्दे प्रवर्तमानं कार्यमुपस्थितार्थोपाहिते एव शब्दे कर्त्तव्यं नत्वनर्थकोऽपि अर्थस्य विशेषणविशेष्यभावव्यत्यासमात्रेणोपपत्तौ सर्वात्मना त्यागायोगात् । गौणमुख्यन्यायोप्येतन्मूलः । गौणस्यार्थस्य प्रथमतोऽनुपस्थितेः । स्यादेतत् । तस्मादिति पञ्चमीयं न विश्लेषावधौ । विश्लेषस्याभावात् । किन्तु ऋतआदिषु दिक्छब्दस्य पाठाद्दिग्योगलक्षणा, तत्र परः पूर्वो वेत्यानियमेनाध्याहारे प्रसक्ते पर एवेति नियमः कुतः भजो ण्विणित्यादौ षष्ठीनिर्देशेपि आनन्तर्य्यस्य षष्ठ्यर्थस्य पूर्वपरयोरविशेषादनियमस्तुल्य एवेति । उच्यते।गुभ्यः, युष्मदस्मदोः, इनो सिनेत्यादौ भ्यसादीनां परत्वदर्शनेन तस्मादित्यादौ परशब्दाध्याहारे निश्चिते तदेकरूप्याय प्रत्ययविधौ सर्वत्र परशब्दस्यैवाध्याहारो न पूर्वादिपदान्तरस्य । अथवा वा सिपोबहुः पुरस्तादिति वक्तव्यमेव बहुतृणं नर इत्यादिसिद्ध्यर्थम्, तन्नियमार्थं भविष्यति । बहुरेव पुरस्ताद्भवति नान्य इति । नियमेन बहौ पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यति । नचैवमपि षष्ठीनिर्देशेषु मध्यशब्दाध्याहारेण मध्येपि प्रसङ्गोवेति वाच्यम् । आख्याताव्ययसर्वादेष्टेः प्रागक इति वक्तव्यमेव । पचतकि उच्चकैः भवका नित्यादिसिद्ध्यर्थं तस्याक एव मध्यः नान्य इति नियमार्थत्वात् । नच बहुरेव पुरस्तादक एव मध्य इति देशनियमे बह्वकयोर्नियमो लभ्येतेति वाच्यंदेशनियमार्थयोरपि वाक्ययोर्बह्वकयोर्देशसम्बन्धप्रतीत्या निराकाङ्क्षतायां तयोर्देशान्तर

सम्बन्धे मानाभावात्, विकल्पस्यानेकदोषदुष्टत्वाच्च । नचाक एव माकूटेरिति नियमे मत्ययान्तरं टिमागभावरूपमध्यविशेषे माभून्मध्यान्तरंतुस्यादेवेतिवाच्यम् । लक्ष्यसिद्ध्यं मध्यसामान्यापेक्षनियमाभ्युपगमे बाधकाभावात् । तस्मात्परा विभक्तय इति कातन्त्रसूत्रे तस्मादित्येव सूत्रयितुमुचितम् । उक्तरीत्याधिकं व्यर्थं विभक्तय इति विशेषणं व्यर्थं स्यादीनां विभक्तित्वाऽव्यभिचारात् । मत्युतानिष्टावहं च । अणादीनां लिङ्गात्परत्वस्यालाभात् । दौर्गवृत्तौ तस्मादर्थवतो लिङ्गात्परा इति व्याख्यातम तत्रार्थवत इति व्यर्थं लिङ्गशब्देनैव तल्लाभात् । अर्थवत एव लिङ्गसंज्ञाविधानात् । ङ्याप्प्रातिपदिकादित्यत्र ङ्याब्ग्रहणं व्यर्थम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया निर्वाहात्।उक्तरीत्या तयोरपि प्रातिपदिकत्वाच्च । **सि, औ, जस्, अम्, औ, शस्, टा, भ्याम्, भिस्, ङे, भ्याम्, भ्यम्, ङसि, भ्याम्, भ्यस्, ङस्, ओस्, आम्, ङि, ओस्, सुप्॥** सरिकारोऽत्वसोः सावित्यादौ विशेषणार्थः अन्यथा सिइत्युक्ते सकारादौ स्यादावित्यर्थः स्यात् । तथाच वेधः सु इत्यत्रापि दीर्घः मसज्येत।दंडिषु इत्यादाविनांशावितिमसज्येत ।पथिषु इत्यत्र आ सावित्यात्वं मसज्येत । नच श्रवणार्थ एवास्तु गुण इत्यादिलिङ्गात् । एतेन प्रथमैकवचनस्येकार उच्चारणार्थः ।सेर्डाधेरितिं विशेषणार्थः कस्मान्न विज्ञायते । निवर्त्याभावादितिमत्युक्तम् । यत्तु माधवः । न सेरित्यादौ सुपो व्यावृत्त्यर्थः । अर्थवद्ग्रहणे नानर्थकस्येति परिभाषैव तद्व्यावृत्तेरित्याह । तन्न । एवं हि रैस्मि इत्यादावप्यनयैव परिभाषया सुपो व्यावृत्तिप्रसङ्गात्। एस्भीत्यत्र तु बहुत्वार्थकस्य सस्याभावात् परिभाषाबाध्यते । सुरां सुनोतीति सुरासुत् तंकरोति सुरासयति ततः क्विप् सुरास् इत्यत्र सस्य आप इति प्राप्तो लोपः स्याद्यधिकारेणापि वारयितुं शक्यः । माधवेन यदप्युक्तमसंदेहार्थः सौजसिति निर्देशे संशयः स्यात्किं द्वे विभक्ती निर्दिष्टे तिस्रोवेति । सति त्विकारे सिऔजसिति पृथक् निर्दिष्टास्तिस्र एवेत्यसंदेह इति । तदपि न । सूऔजसिति हसमात्रनिर्देशेऽपि तस्य सत्त्वात् । गुण इत्यादिलिङ्गाच्च । सुऔजसित्यत्रापीकार एव पठितुं युक्तः । हल्ङ्याबिति सूत्रे सुग्रहणं न कर्त्तव्यं सि-

ग्रहणेन सिद्धत्वात् । नच सानुबन्धकत्वात्सिपो ग्रहणं न स्यादिति वाच्यम् । तिसाहचर्यात्सिपो ग्रहणात् । तर्ह्यस्य सेर्ग्रहणं न स्यादिति चेन्न । इकारोच्चारणस्यात्र सामान्यग्रहणार्थत्वात् । अन्यथा सु इति सुपठितत्वात् । निष्कर्षे तु ङ्याप: सेरिति सुपठमिति वक्ष्यते । ङसस्त्विवकारो ङसिरत् । ङसस्य ङसिभ्यसो: तव मम ङसा इत्यादावसंकीर्णप्रतिपत्त्यर्थ: । यदि तु नपुंसकात्स्यमोर्लुक् नपुंसकस्येत्यादिलिंगादसंकर: सिद्ध: तर्हि स्पष्टार्थ: । ङकारस्तु ङितीत्यादौ विशेषणार्थ: । ननु मस्येति संज्ञा कस्मान्न भवति नच प्रयोजनाभावेति वाच्यम् । रुधादिनम इव मिदन्त्यात्स्वरात्पर इति प्रयोजनस्य सम्भवात् । तस्मादिति पञ्चमी तु स्याद्यपेक्षया चरितार्थेतीह षष्ठ्या विपरिणम्यते । अम्शसोरस्य । आम्स्मौ इत्यादिप्रवृत्तिस्तूभयथापि समानैव । नच प्रत्ययपरत्वेनापि देवं हरिमित्यादिसिद्धौ मित्त्वं वृथा स्यात् । दुहं लिहमित्यादौ विशेषसम्भवात् । मैवम् । नवानामित्यादौ विशेष सम्भवात् । मैवम् । नवानामिति ज्ञापकान्मस्य नेत्वम् । अत्र हि नोपधाया इत्यनेन नामिपरे दीर्घो विधीयते स न सिध्येत् । आमो मित्त्वे अन्त्यात्स्वरात्परत्वेनान्तस्य नाम्नो नाम्परत्वाऽसम्भवात्, । त्वा मामेतिलिंगाच्च । अन्यथा त्वा मामित्येवावक्ष्यत । अमि सति च विन्यस्यते । अत्र वसोर्व उमिति इयमित्यादि च निर्देशोऽनुकूल: । किंच स्याद: परत्वविधानार्थं तस्मादिति पंचमी स्वीकृता । अत्रापि सा तथैवोचिता न षष्ठ्या विपरिणमय्या विषेवैरूप्यप्रसङ्गात् । एकरूपे संभवति वैरूप्यस्यान्याय्यत्वात् । जश्शसोर्जकारशकारौ जसि शसीत्यनयोर्विषयविभागार्थौ । अन्यतस्तु निरनुबन्धक: शक्य: पठितुम् । माधवस्त्वाह । असीत्युक्तेऽप्यननुबन्धग्रहणे न सानुबन्धकस्येति परिभाषया शसादीनां ग्रहणं न स्यात् । एवं तर्हि जकारग्रहोऽस्या: परिभाषाया अनित्यत्वज्ञापनार्थ: । तेन तृतॄनो:, स्तुरारित्यारसिध्यतीति । तन्न । शसीत्यस्य स्थानेऽसीति सूत्रे असकारादौ परे दीर्घ: इत्यर्थ: स्यात्तन्निरासार्थं शकार: । एतेन जसो जकार: सन्धिवारणार्थ: असति हि तस्मिन्नौकारस्यावादेशे कृते संदेह: स्यात् । कीदृशस्य प्रत्ययस्योच्चारणमिति, तत्र व्याख्यानं कर्तव्यं स्यात् । अथ जसीत्यत्र विशेषणार्थ: कस्मान्न भवति ।

असीत्युक्तेऽतिप्रसङ्गाभावादिति प्रत्युक्तम् । असंदेहार्थं विसंधेरपि सुष्ठुत्वात्। तौ य्वावित्यादिलिङ्गाच्च। टकारः टेन टा, ना, टोसोः, टाङ्योरित्यादौ भेदकः ज्ञापकाद्यनुसरणेऽपि प्रतिपत्तिगौरवं प्रत्येकं तदलाभाच्च श्रवणार्थस्तु न भवति यूयं वयं जसेति निर्देशात् । नत्वेन आनेत्यादिनिर्देशोस्तु । नचाकारग्रहण-शंका । समानाः स्वरा इत्यादिलिङ्गात् । नचाम आकारेऽतिप्रसङ्गः । अर्थ-वद्ग्रहणे नानर्थकस्येति परिभाषया तत्समाधानात् । उच्यते । अस्या अनि-त्यत्वमनेन ज्ञाप्यते । तेन अनिनस्ग्रहणेष्वनर्थकस्यापिग्रहणं सिध्यतीति माधवः । पकारस्तु आसावित्यादौ भेदकः । अस्य ग्रहणं इष्टं स्पष्टार्थं सुपी-त्येवावक्ष्यदिति कश्चित् । तन्न । उभयोर्ग्रहणस्य दुर्वारत्वात् । नहि इदित उदन्तस्य वा साविति रूपे विशेषः । विनिगमनाविरहादुभयोर्ग्रहणम् । एतदर्थं लाघवार्थं च सुपीति न पठितं विनापि पकारं भेदः सिद्धः । अत्वसो सौ । आसावित्यत्र पञ्चस्वनुवर्त्य पञ्चसु मध्ये पठिते साविति व्याख्या नात् । सौ स इत्यत्रापीदित एव ग्रहणं स धातुरिति लिंगात । सौ स इत्यः पठितस्यैवोत्तरत्रत इत्यादावनुवृत्तेर्वासु इत्यत्रेयमादेशादर्शनाच्च पकारःकिमर्थं प्रत्याहारार्थः सिप्प्रत्याहारो यथा स्यात् । ततश्च वा सिपो बहुः पुरस्ता-दिति ज्ञापितं स्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तमीत्यन्ताः प्राचां-संज्ञा स्ताभिरिहाप्यस्ति व्यवहारः एषामेव प्रत्येकमेकैकस्यैकवचनद्विवचन-बहुवचनसंज्ञा अपि प्राचामेव । यद्वा अनर्था एते शब्दाः । एकं द्वौ बहून्वा वक्तीति, । यद्वा उच्यते अनेनेतिवचनम् । एकस्य वचनमेकवचनमित्यादि। एवं च तान्येकवचनबहुवचनान्येकशः । सुप् इति योगद्वयं पाणिनीयं प्रत्या ख्यातम्।तथा बहुषु बहुवचनम्' द्व्येकयोर्द्विवचनैकवचने इत्येतावपि योगौ प्रत्या-ख्येयौ । योगार्थेनैवैषां बहुत्वादिवाचकत्वं ज्ञातमेव । किंच नहि पटशब्दो घटवाचक इति विधानमस्ति यथा तथा बहुवचनादयः शब्दा बहुत्वाद्यर्था-भिधायका इत्यादिवचनमपि नापेक्षितं पाचकयाजकादि पाकयागादिकर्त्तरि योगेनैव प्रवर्त्तते यथा तथैकवचनादयो हि एकत्वादिषु, किं तत्र वचनेन । पञ्चादौ घुडित्यत्र आदाविति व्यर्थं स्यादीनां मध्ये पञ्च घुडिति व्याख्ये-

यम् । प्रथमातिक्रमे कारणाभावादाद्यानामेव ग्रहणं भविष्यति । उक्तव्याख्यानं तु त्वयापि कर्तव्यमेव । अन्यथा पश्चादावित्युक्तेऽपि केषामाद्याः पञ्चेत्याकांक्षाया अनिवर्तनात् । तिबाद्याद्यानामपि ग्रहणसम्भवात् । यद्वा पश्चादावित्युक्त्वा स्यौ घुडिति वा सूत्रणीयम् । संदंशन्यायेन मध्यस्थानामपि ग्रहः । सेरिकारोऽनुबंधो ग्राह्यो न वा । इत्थं स्यादयः औकारान्ताः । पञ्च लभ्यंते । औस्तु द्वितीयाया एव ग्राह्यो व्याख्यानात् । संदंशन्यायाश्रयणाच्च । जश्शसौ नपुंसक इत्यस्य स्थाने शि इति सूत्रं कर्त्तव्यम् । विध्यर्थमिदं शसः । पूर्वेणाप्राप्तत्वात् । ततः शीति पदं नियमार्थं कर्त्तव्यम् । शिना च नपुंसक इत्याक्षिप्यते तत्रैव तस्य विधानात् । तथाच नपुंसके पंचसु शिरेव घुट्संज्ञो नान्य इति नियमो भवति । यद्वा स्यौशी घुट् वा इति सूत्रयित्वा शिरित्येवं कर्त्तव्यम् । इदं त्ववधेयम् । प्रसिद्धाभिरेव संज्ञाभिर्व्युत्पाद्यमानाः सुबोधा भवंतीति व्याख्यातं प्राक् । घुडाद्यास्त्वत्संमतेर्थे कुत्र प्रसिद्धा इति । शि सर्वनामस्थानम् । सुडनपुंसकस्यैतयोः स्थाने शि सुट् च शिसंज्ञो भवति नपुंसके तु शिरेव शिसंज्ञो नान्य इति । **समानाद्धेर्लोपोधातोः।** समानादिति किम् । हेगौः । हेग्लौः अधातोरिति किम् । हेश्रीः । हेभूः स्यादेतत् । गृहीतेप्यधातोरित्यस्मिन् हेहाहाः हेवातप्रमीरित्यादावतिप्रसङ्गोऽस्त्येव तद्वारणाय समानादित्ययं सामान्यशब्दोऽपि लक्षणया विशेषपरः कर्त्तव्यः । ह्रस्वात्समानादिति । न च समानादित्यपनीय ह्रस्वादित्येव पठ्यताम् । उत्तरार्थत्वात्तस्य । अम्शसोरस्य वातप्रमीम् । वातप्रमीन् । नुडामः । नदीनाम् । एवं चाधातोरिति व्यर्थम् । नचोत्तरार्थम् । अम्शसोरस्येत्यत्रप्रयोजनादर्शनात् । श्रियं भुवमित्यादौ परत्वादियुभ्यां भाव्यम् । सेनान्यम् । खलप्वमित्यादौ तु य्वौ नुडाम इत्यत्रापि न प्रयोजनमस्ति श्रियां भुवामित्यादौ परत्वादियुवौ स्तः प्रत्युत दोषमावहेत् । वर्षाभूणाम् पुनर्भूणामित्यादौ नुटोऽभावप्रसङ्गात् । एवं लोप इत्यपि व्यर्थम् । रिलोपो दीर्घश्चेत्यतोनुवृत्तिसत्त्वात् नच तद्दीर्घसम्बद्धं सैषाद्धस इत्यत्र केवलस्य लोपपदस्यैवानुवृत्तिदर्शनात् । अत्रोच्यते समानाद्धेरिति योगविभाग

कर्त्तव्यः ततोऽधातोरिति योगः अत्र च समानादिति लोप इति घेरिति चानुवर्तते पूर्वेण सिद्धे किमर्थमिति चेत् भूतपूर्वसमानार्थः हेहरे हेभानो इत्यत्र परत्वान्नित्यत्वाच्चेदोतोः कृतयोर्लोपो न प्राप्नोति भूतपूर्वं समानमाश्रित्यानेन लोपो विधीयते लोपग्रहणं तु चिन्त्यमेव यद्वा समानाद्धेरित्येको योगः लोपोऽधातोरित्यपरः पूर्वेण सिद्धे पुनर्विधानार्थमिदं तेन परौ नित्यौ चैदोतौ बाधित्वा लोप एव भवति पश्चात्प्रत्ययलक्षणेनैदोतौ अधातोरिति तु भितो नुमित्यत्रोपयोक्ष्यते यद्वा समानशब्दे लक्षणानाश्रयणीया ङ्णो ह्रस्वादिति सूत्रान्मंडूकप्लुत्या ह्रस्वादित्यनुवर्तते तदनुवृत्तिस्तु इदुदर्थी अकारान्त्वतइत्यस्याप्यनुवृत्त्या सिद्धं तदनुवृत्तिसामर्थ्याच्चेदुद्भ्यां पूर्वं घिलोपः पश्चादेओमाधवस्तु कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति विधिरित्यादावकृत्रिमस्य धेर्न लोपः एवमपि हे हाहाः हे अतिलक्ष्मीरित्यादौ दीर्घात्प्राप्तो लोपः संज्ञापूर्वकस्य विधेरनित्यत्वान्नेत्याह विधिरिति लक्षणप्रतिपदोक्तयोरित्यनेन प्रत्ययाप्रत्यययोरित्यनेन स्याद्यधिकारबलेन चापि समाधानं शक्यम ।नन्वेवं हेग्रामणि कुलेत्यत्र न प्राप्नोति । एकदेशविकृतत्वेन धातुत्वानपायात् । सत्यम् । नपुंसकादित्यनेनं लुग्भविष्यति । यत्तु । ग्रद्यधातोरिति पर्युदासस्तर्हि नञिव युक्तन्यायेन क्रियायुक्तेष्वेव स्यान्न जात्यादिशब्देषु प्रसज्यप्रतिषेधाश्रयणात्सिद्धम् । तत्र हि नञः क्रियायाः संबंधात् प्रतिषेधे प्राधान्यान्न सादृश्यप्रतीतिरिति माधवेनोक्तं तन्न । अनेकधर्मसत्त्वेऽपि इष्टानुरोधेन सदृशग्रहणौचित्यात् । अर्थवत्त्वेनैव सादृश्यग्रहणात् । न तु क्रियार्थत्वेन मुखं चन्द्र इवेत्यत्र यथा शुभ्रत्वसकलत्वनयननासिकाराहित्याद्यनेकधर्मसत्त्वेपि आह्लादकत्वेनैवलोकेसादृश्यग्रहणात्, सत्यां गतावप्यसमर्थसमासवाक्यभेदं दोषवतः प्रसज्यस्य ग्रहणानौचित्याच्च इत्यादि स्वग्रन्थिविरोधोपि । यद्वा समानादिति विहितविशेषणम् । अधातोरित्यत्र धातुशब्दो दीर्घोपलक्षणार्थः । तथाच समानाद्विहितस्य धेर्लोपो दीर्घात्तु समानात्तु नेत्यर्थः । एवं हि हेहरे हेविष्णो इति सिद्धम् । हे नदि हे वधु इति च हे हाहा इत्यादौ तु नातिप्रसङ्गः। अन्यादेर्घेर्लोपो नेति तु वक्ष्यते यदि तु न

शीत्यतो नेति रिलोप इत्यतो दीर्घ इति चानुवर्त्य दीर्घात्समानान्नेति व्याख्यायते तदा धातोरित्येतद्भितो नुमित्यत्र सार्थकं बोध्यम्। हेकुलेत्यत्र तु परत्वादमादेशे कृतेऽम्शसोरस्येत्यकारलोपे स मस्यानेन लोपः । नच नित्यत्वात्पूर्व लोपः शब्दान्तरप्राप्त्या लोपस्यानित्यत्वात् । यदित्वकारलकाराभ्यां प्रत्याहारं कृत्वा अलो घेर्लोपो धातोरिति सूत्रं प्रणीयते तदाप्येते पक्षास्तुल्या एवेत्यवधेयम् । ह्रस्वनदीश्रद्धाभ्यः सिर्लोपमिति कातंत्रस्थाने ह्रस्वनद्याभ्यः सिर्लोपमिति सूत्रणीयम् । स्त्रियामादेत्यत्र स्त्रियामादाप् । एवं च आश्रद्धेति संज्ञासूत्रं न प्रणेयम्। श्रद्धायाः सिर्लोपमित्यस्य स्थाने आपः सिर्लोपमिति कर्तव्यं ह्रस्वोम्बार्थानामिति सूत्रं त्यक्त्वा संबुद्धौ ह्रस्व इत्यस्याग्रे वार्थानामिति सूत्रणीयम् । संबुद्धौ चेति सूत्रमपनीय औरीमित्यस्याग्रे संबुद्धिरिति सूत्रणीयं प्रथमाविभक्तिर्लिङ्गार्थवचने आमन्त्रणे चेत्यस्ति तस्याग्रे सिद्धिरिति सूत्रणीयं आमंत्रिते सिः संबुद्धिरिति सूत्रं तु त्याज्यम् । अनेकाक्षरसंज्ञाविधाने गौरवं बाधकम्। एङ्ह्रस्वात्संबुद्धेः अत्रेङ्ग्रहणं शक्यमकर्तुम् । कथं हेहरे । हे विष्णो इति सर्वविधिभ्यो लोपविधिर्बलवानिति परिभाषया प्रथमं लोपस्यैव प्रवृत्तिसंभवात् यो यस्य प्रसङ्गे भवति लभते सौ तत्कार्याणीति न्यायाच्च । हरमे इत्यनेन सिद्धप्रासंगे जातस्यैकारस्याऽभाक्त्वेन हल्ङ्याब्भ्य इत्यनेन सिद्धम् । यद्वा संबुद्धौ चेति सूत्रमपनीय जसः शीत्यस्यानन्तरं आपः संबुद्धेः औङ् इत्येवं सूत्रणात् । यद्वा यथान्यासं संबुद्धेरिति पाठ्यम् । आपूसंबुद्ध्योः स्थाने एद्भविष्यति एदिति शीत्येकत्वविवक्षणात् विधेयभेदकं तंत्रमिति वचनात् । यद्वा ह्रस्वात्संबुद्धेरिति सूत्रमित उत्कृष्य यीवर्णयोरित्यस्याग्रे तासस्त्योरिति लोपमुपजीव्य पाठ्यं ततश्च परत्वान्नित्यत्वाच्चादौ लोपः गुणे कृतेपि उक्तन्यायेन लोपप्रवृत्तेर्नित्यो लोपः लोपे कृतेपि प्रत्ययलक्षणेन गुणप्रवृत्तेर्गुणोपि नित्यः ह्रस्वग्रहणसामर्थ्यादादौ लोप इति तु न सम्यक् । हेगौरि हेवधु इत्यादौ चारितार्थत्वात् । यद्वा मास्तूत्कर्षः ह्रस्वग्रहणसामर्थ्यादेवादौ लोपः । हे गौरि हे वधु इत्यादि तु प्रकारांतरेण भविष्यति । अंबार्थनद्योर्ह्रस्व इत्यस्य स्थाने अंबार्थनद्याड-

ङिड इति पाठ्यम् । अथ ततः साम्याद्यथासंख्येन संबुद्धेरेते आदेशा भवंति नद्या इति पंचमी संबुद्धावित्यस्य षष्ठीं प्रकल्पयति । यद्वा ह्रस्वात्संबुद्धेरिति यत्र पठितं तस्यैवाग्रे इदं पाठ्यम् । इत्थं च ह्रस्वविधिसामर्थ्याद्गुणो नेत्यपि न वर्णनीयं भवति । नीळूभ्यां विचि गुणे ने लोप इति भवति तदर्थमेङ्ग्रहणं भविष्यतीति चेत् । दृशिग्रहणेनोक्तरूपाभावात् अचः परस्मिन्नित्यत्र पादोकवप्रदीपयोर्ध्वन्युक्तिभ्यामित्थं प्रतिपादितत्वात् ॥ **अम्शसोरस्य** ॥ समानाल्लोपः अधातोरिति तु नेहोपयुज्यते । श्रियं भुवमित्यादौ तु परत्वादियुवौ सोमप इत्यादावाल्लोपः । अत्रस्याद्यधिकारात्तत्संबंधिनोरम्शसोर्ग्रहणादचिनवं बहुश इत्यत्र नालोपः । अत्र माधवः । ननु कुलमित्यत्रस्याल्लाक्षणिकत्वादमः । अस्य ग्रहणाद्यथाकथंचिदमो लोपः । अन्यथाऽम्शसोरित्येवं वाच्यं स्यात् । नचैवं षष्ठीनिर्दिष्टस्येत्यन्तादेशो यो यः स्यादिति वाच्यम् । सो नः पुंस इत्यत्र शसः सस्य नत्वविधिसामर्थ्यात् । अन्तादेशे हि लोपे शसः स एव नास्ति कस्य नत्वं स्यात् । अत एव नपुंसकमिति निर्देश इति । अत्र ब्रूमः । अतोम्,अतोमनत इत्यादिविहितोप्यम् प्रतिपदोक्त एव नहि सूत्रकृतत्वं लाक्षणिकत्वम् । किं तु अवयवशो व्युत्पादितत्वं तत्तस्य नास्ति । अन्यथा देवमित्यत्रापि स्वौजसित्यादिविहितत्वेन लाक्षणिकत्वापातः । किंच नह्यत्र शसः सस्य न इति सूत्रमस्ति येन सामर्थ्यं वर्ण्येत, किं तु सो नः इति सूत्रं तच्च यत्रैव सकारं लभेत तत्रैव नत्वं विदध्यात् । नचात्र शस एव सकारो ग्राह्य इत्यत्र किंचिन्नियामकमस्ति स्याद्यधिकारात्तत्सम्बन्धिसकारो ग्रहीष्यते । यदपि श्रियमित्यादौ सर्वविधिभ्यो लोपविधिर्बलवानिति प्राप्तलोपवारणार्थमधातोरिति माधवेनोक्तं तदपि न । उक्तपरिभाषायाः प्रयोजनाभावात् । प्रत्युत यः स इत्यादावत्वापेक्षया हसे पः सेरित्यस्यापि बलवत्तापातात् । सोमपं कुलमित्यत्र ह्रस्वे कृते एकदेशविकारेऽपि धातुत्वानपायादम्शसोरस्येत्यस्याप्रवृत्तिप्रसङ्गाच्च । समानादिति किम् । रायम् । ग्लावम् । अम्शसोरिति किम् । वातप्रम्यः । हूहूः । जसोऽतो लोपः स्यात् । इह तु समानशब्दो मुख्यार्थ एव न लाक्षणिकः ।

अस्येति षष्ठीनिर्दिष्टस्येत्यनेनांत्यस्य माभूदिति । अर्द्धमात्रालाघवादिति इति वक्तुमुचितम् । उत्तरार्थं त्वस्येत्युक्तम् । केचित्त्वादबेलोपशित्यत आदित्यस्यानुवृत्तेरस्येति व्यर्थम् । अनुवृत्तौ लिंगं तु रान्नित्यम,स नपुंसकम् । ईमावित्यादिनिर्देश इत्याहुः । अमि पूर्व इत्यत्र पूर्वग्रहणं न कर्त्तव्यम् । प्रथमयोः पूर्वसवर्ण इत्यतोनुवृत्तिसंभवात् । एकदेशे स्वरितत्वप्रतिज्ञानात् । **सो नः पुंसः** । पुँल्लिंगात्समानांतान्नाम्नः परस्य शसः सस्य नः स्यात् । पुँल्लिंगादिति किम् । बुद्धीः । यदि पुँल्लिंगात्परत्वं शसो विशेषणम्,तदा रायः ग्लाव इत्यादावतिप्रसङ्गवारणाय समानादिति । यदि तु पुँल्लिंगात्परत्वं सस्य विशेषणं तदा नापेक्षितं समानादिति व्यावृत्त्याऽभावात् । लोपविषय एवास्य प्रवृत्तेः । अत एव बहुश इत्यादौ न अम्साहचर्यात्, स्याद्यधिकाराद्वा । शस इति किम् देवः । अम्शसोरिति समाननिर्देशेऽपि योग्यतया शस एवात्रानुवृत्तिर्नामः सस्याभावात् । स इति किम् । रामम् । अम्शसोरित्यनुवर्त्तेत तस्य च षष्ठीनिर्दिष्टत्वेनामोऽपि नः स्यात् । एवं व्याख्याने तु मानं नास्ति यदम्ग्रहणं निवृत्तम्,शस्ग्रहणमनुवर्तते इति । स्यादेतत् । युष्मदस्मदोरलिङ्गत्वात्ताभ्यां शसो नो वक्तव्यः । सलिङ्गत्वेऽपि स्त्रीनपुंसकयोरस्याप्राप्तेः तयोश्च त्रिषु लिङ्गेषु रूपाणां साम्यस्येष्टत्वात् । उच्यते । सो न इति योगो विभज्यते । तस्यार्थः समानात्परस्य शसः सस्य न इति । इदं च काचित्कं पुंस इत्यस्यारंभात्तन्मतेन युष्मान्, अस्मानिति सिद्धम् । बहुश्रेयसीन् अतिलक्ष्मीन् अतिचमूनिति च । पुंस इति योगस्य तूक्त एवार्थः । स्यादेतत् । अम्शसीत्योकारस्यात्वे कृते गाः पश्येत्यादौ नत्वं प्राप्नोति नच समानाद्विहितस्य शसः सस्येति व्याख्यानान्न दोषः । तान् यान् एतानित्यादौ दोषप्रसङ्गात् । उच्यते । सोन इत्यावर्त्य शसो नकार इति व्याख्येयं इष्टसिद्ध्यर्थमिदम् । तेन गाइत्यादि सिद्धम् । यद्वा आवृत्त्या लब्धं यत्सोन इति सूत्रं तत्र शसोरस्येत्यनुवर्तते । शस इत्यविभक्तिको निर्देशः । ओरिति च । ओकारस्य षष्ठीशब्दाधिकारात् । प्रथमपक्षेपि न इति षष्ठी स इति प्रथमा । अत्रापि पक्षे तथैव । ततश्च ओकारसंबंधी योऽवर्णस्तस्मात्परो यः शसो नकारस्तस्य

सकार आदेशो भवतीत्यर्थो लभ्यतेऽतो नातिप्रसङ्गः । यद्वा स् ओ न् अः पुंस इति पंच पदानि च्छित्वा पुंल्लिगात्समानात् शसः सस्य नकारः ओकार सम्बन्धिनोऽवर्णात्तु विसर्ग इति व्याख्येयम् । यत्तु आदेव इत्यत आदित्यनुवर्तते । अवर्णस्थानिकादवर्णात्परस्य शसः सस्य नो नान्यस्थानिकादवर्णादिति । तन्न । कानित्यादावप्रसङ्गात् । यत्तु एतान् गाः पश्येत्यत्र त्वात्वस्य तद्वद्भावान्नत्वाभावः । अथवा अम्शसोरस्येत्यतोऽनुवृत्तस्यार्थात्पञ्चम्यन्तस्य नियमार्थत्वादकारस्य वृत्तेर्न नत्वम् । अत एव हाहाः पश्येत्यादिसिद्धिरिति माधवेनोक्तं तन्न । आकारव्यावृत्तेर्हाहाः पश्येत्यादेश्च निष्प्रमाणकत्वात् । यदपि आदन्ताच्छसो नत्वाभाव इत्येकरामचन्द्रसंमतिप्रदर्शनं निर्मूलमेव । इह पुंस्त्रीनपुंसकशब्दैस्तत्रतत्र व्यवहारो दृश्यते । तेषु सत्याचार्याणां मतभेदाः । तत्र केषांचिन्मतं "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषो भवेत् । उभयोरंतरं यच्च तदभावे नपुंसकम्" । स्तनकेशवतीति भूमन्यतिशये वा मतुः लोमश इत्यत्र शोऽपि । उभयोः स्त्रीपुंसयोरन्तरं सदृशं स्तनलोमाद्युभयव्यञ्जनमित्यर्थः । एवं तर्हि तदुभयं समुदितं यत्र तन्नपुंसकम् । स्यात् । भवति हि समुदायिरूपं समुदायिरूपाल्लिंगवत्त्वे सदृशमित्यत आह । तदभाव इति । तदुभयंयत्र नास्ति तन्नपुंसकम् । तेन नोक्तदोषः । यदि तदभावे नपुंसकमित्येवोच्येत, ततोऽव्ययादाख्यातान्तानामेव नपुंसकत्वं स्यात् । अथाप्युभयोरन्तरमित्येवोच्येत, तदा कुक्कुटमयूर्यावित्येवमादीनां लिङ्गसमुदायवतां समुदायानामेव नपुंसकत्वं स्यात् । अतो द्वयमप्युक्तम् । तदेवं यत्र स्त्री न पुमान् लिंगवच्च वस्तु तन्नपुंसकमित्युक्तं भवति । अत्र मते भ्रूकुंसे आप्प्राप्नोति । भ्रूकंसः स्त्री वेषधारी नर्तकः । तस्य स्तनकेशसम्बन्धोपलम्भात् । खरकुटीः पश्येत्यत्र नत्वं प्राप्नोति । खरकुटी नापितगृहं तस्य लोमवत्त्वात् । ननु च स्वाभाविकस्तनादिसम्बन्धोऽत्र विवक्ष्यते न यथा कथंचित्स्तनादिमत्त्वं चान्यस्यापि प्रसिद्धस्योपलक्षणं तत्कुतोऽयं प्रसङ्गः एवं तर्हि खट्वावृक्षादि न सिध्यति । स्तनलोमाद्यभावात् । ननुवस्त्राद्यन्तरितवस्तुवत्खट्वावृक्षादेः सदेव लिंगं नोपलभ्यते इति चेत् । तन्न । वस्त्रापाये वस्तूपलभ्यते खट्वावृक्षयोस्तु तिलशस्तक्षणेपि लिङ्गं नोपलभ्यते यथा तयोदिगतिः

सतीप्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्या चानुमीयते तथा खट्वावृक्षादेरपि सदेव लिङ्गं सूक्ष्मत्वान्नोपलभ्यते आम्रकारादेस्तत्कृतस्य कार्यस्य दर्शनादनुमीयते यद्येवमितरेतराश्रयं प्राप्तं लिङ्गावगमादावादिशब्दप्रयोगस्तत्प्रयोगाच्च लिङ्गा-वगतिरिति लिङ्गविरहितखट्वादिवस्तुग्राहिणाप्रत्यक्षेण लिङ्गाभावावसायात्त-द्विरुद्धमनुमानं नोदेति नह्युच्यते भिक्षुगृहं गजवद्देशत्वाद्गजशालावदिति । किंच कुमार्य्यर्थः कुमारीवस्त्विति कुमार्य्यादिष्वर्थवस्तुशब्दयोः पुन्नपुंसकयो-रनुपपत्तिः।अत्र पक्षे खट्वावृक्षादिषु लौकिकलिङ्गराहितेष्वारोप्यते तत् । संख्या-याः सिना कर्त्तरि पंचेत्यादिनिर्देशादिति । यद्यपि शक्यते वक्तुं तथापि दारानित्यादावारोपितत्वमपि न भवति तस्मान्नलोकप्रसिद्धमवयवसं-स्थानविशेषात्मकं लिङ्गमित्याश्रयितुं शक्यते इति । अन्येषां तु दर्शनं संस्त्यानं सत्वरजस्तमसामपचयस्वभावं स्त्रीत्वं तद्यत्रास्ति सोर्थः स्त्रीप्रसव-स्तेषामुपचयात्मकः पुंस्त्वं तद्यत्रास्ति स पुमान् सत्वादीनामुपचयापचयार-हिता यावस्था तदात्मिका स्थितिर्नपुंसकत्वं तद्यत्रास्ति तन्नपुंसकम्।तदुक्तम् । "आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः ॥ धर्ममूर्त्तिषु सर्वासु लिंगत्वे-नानुदर्शिताः ॥ १ ॥ सर्वमूर्त्यात्मभूतानां शब्दादीनां गुणेगुणे ॥ त्रयः सत्वादिधर्मास्ते सर्वत्र समवस्थिताः ॥ २ ॥ कथितोदकवच्चैषामनवस्थिति-वृत्तिता ॥ अजस्रं सर्वभावानां भाष्य एवोपवर्णिता ॥ ३ ॥ रूप स्यचात्ममात्राणां शुक्लादीनां प्रतिक्षणम् ॥ काचित्प्रलीयते काचित्कथंचिदभि-वर्तते ॥४॥ प्रवृत्तिमन्तः सर्वेर्थास्तिसृभिश्च प्रवृत्तिभिः ॥सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः"इति॥५॥आवाद्यन्तः शब्द एवैनामवस्थांगोचरयतीत्यर्थः। तदेव परिणामिना लिङ्गत्वं सिद्धं पुरुषस्तु यद्यप्यपरिणामी तथापि"अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते । प्रतिबिंबकधर्मेण यत्तद्वाचो निबंधनम्॥ यश्चा-प्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते । अनुयातीव सोन्येषां प्रवृत्तिर्विश्वगाश्रयाः ॥ सामान्यमपि गोत्वादिव्यक्तेरव्यातिरेकतः । प्रवृत्तिधर्मद्वारा शशशृङ्गा-दिवाक्षतु ॥ स्यादुत्तरपदार्थस्य सद्भावाल्लिङ्गयोगिता । प्रवृत्तेरपि विद्यन्ते तिस्रोप्येताः प्रवृत्तयः ॥ पुंनपुंसकता स्त्रीत्वं तेन स्यादन्यलिङ्गता" ॥

तदेवं सर्वपदार्थव्यापित्वादुपचयापचयान्तरालावस्थास्त्रीणि लिंगानि । एवं च नक्षत्रं तारका तिष्यः कुमार्य्यर्थो वस्त्वित्येकस्याप्यर्थस्य नानालिंगयोग उपपद्यते । आविर्भावादित्रयस्यापि गुणभेदेन तस्मिन्नेवार्थे सर्वदाभावात् । नन्वेवं तदवृत्तेः सर्वस्यैव शब्दस्य त्रिलिङ्गताप्रसंगः । नह्यस्ति नियमः यः शब्दो यत्रार्थे वर्त्तते तत्र विद्यमानः सर्व एवाकारस्तेन शब्देनाभिधातव्य इति । किं तु य आकारोऽभिधीयते तेन सता भवितव्यमित्येतद्यथा तक्षा युवा कृष्णः कामुक इति तक्षादिशब्दानामेकार्थपर्यवसितानामपि व्यवस्थित एवाकारो वाच्यस्तथा लिङ्गेष्वपि द्रष्टव्यम् । उक्तं च "संनिधाने पदार्थानां किंचिदेव प्रवर्तकम् ॥ यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा"॥ इति उपचीयते कुमारीत्यत्रापि कुमारीशब्दः स्वमहिम्ना कस्यचिद्धर्मस्यापचयमेवाह । शब्दान्तरप्रयोगात्तु धर्मान्तरस्योपचयः प्रतीयते । एवं क्षीयते वृक्ष इत्यत्रापचयः । तदित्थं पारिभाषिकं लिंगत्रयम्।तच्च केवलान्वयि अयमर्थ इयं व्यक्तिरिदं वस्त्विति शब्दानां सर्वत्राबद्धप्रसरत्वात् । तत्र कश्चिच्छब्द एकस्मिन्नेव लिङ्गे शक्तः कश्चित्तु द्वयोः कश्चित्त्रिष्विति लिंगादिभ्यो निर्णयम् । कुमारीब्राह्मणादिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे । कथमन्यथा कुमारी कुमार इत्यादयः प्रयोगाव्यवतिष्ठेरन् करेणुरिभ्यांस्त्रीनेभइत्यादावप्येवमित्यवधेयम् । एकेषांतुमतम्।सामान्यविशेषा एते स्त्रीत्वपुंस्त्वनपुंसकानि गोत्वादय इव।यथैव हि गोत्वादयः सामान्यविशेषाभिन्नेष्वपि स्वाश्रये भिन्नाकारबुद्ध्यभिधानहेतवः तथा स्त्रीत्वादयोपि। तस्मात्तद्वदेवैते सामान्यविशेषाः । उक्तं हि "तिस्रो जातय एवैताः केषांचित्समवस्थिताः ॥ अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः ॥ हस्तिन्यां वडवायां च स्त्रीति बुद्धेः समन्वयः॥अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम्" इति।नन्वत्रापि मते तेषामपरिच्छिन्नदेशत्वात्सर्वत्र लिंगत्रयप्रसंगः स्यादिति चेन्न । सामान्यविशेषाश्रयाणां व्यञ्जकानां वैचित्र्यात्कश्चिदेव सामान्यविशेषः केनचिदाश्रयेण व्यज्यते न सर्वः । सर्वेण प्रतिनियतविषयत्वाद्भावशक्तीनां येनार्थेन स्त्रीत्वमेव व्यज्यते नपुंसकत्वे स स्त्र्येव भवति न पुमान्।न नपुंसकम् । येन पुंस्त्वमेव व्यज्यते स पुमानेव। येन नपुंसकत्वं स

नपुंसकमेव ।यस्तु द्वयोस्त्रयाणां वा व्यञ्जकः स द्विलिङ्गस्त्रिलिङ्गो वेष्यते । तत्र चेतनेषु स्तनादिसती व्यक्तिः स्त्रीत्वस्य व्याञ्जिका, लोमशत्वादि पुंस्त्वस्य,उभयवती नपुंसकत्वस्य । अचेतनेषु तु सर्वत्रोपदेशादेवाभिव्यक्तिः । उपदेशस्तु लिङ्गानुशासनादिषु अतीन्द्रियेष्वाकाशादिष्वेवं यस्मिन्नुपदेशेन स्त्रीत्वं व्यज्यते स स्त्री भवति यथा आशा । यत्र पुंस्त्वं स पुमान् यथा आत्मा । यत्र नपुंसकत्वं तन्नपुंसकम् यथा आकाशम् ब्राह्मणत्वादिवत् । ब्राह्मणत्वादीनां हि तथाविधः आश्रयो नास्ति यस्तान्व्यञ्जयेत्तदाश्रयाणामत्यन्तसादृश्यात् । उपदेशमात्रादेव ब्राह्मणत्वादीनामभिव्यक्तिर्भवति । एवं कावित्कत्वादीनामपि। अभावशशशृङ्गादिषु तूत्तरपदार्थद्वारकः सामान्ययोगः । सामान्यं जातिः स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्तेत्यादौ सामान्येऽपि सामान्यान्तरस्य सद्भावो यथा गोत्वादौ सत्तासामान्यस्य न त्वस्माकं वैशेषिकाणामिव निःसामान्यानि सामान्यानि । लिङ्गं नामार्थ इति मते पुंस इति पञ्चमी । पुँल्लिङ्गात्समानान्तान्नाम्न इति । यदा तु लिङ्गं प्रत्ययार्थस्तदा पुंस इति षष्ठी समानान्तान्नाम्नः परस्य पुंसो वाचकस्य शसः सस्य नं इति तदुक्तम् "एकं द्विकं त्रिकं चाथ चतुष्कं पंचकं तथा॥नामार्था इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः"इति स्वार्थद्रव्यलिङ्गसङ्ख्याकर्माद्यात्मकः पञ्चको नामार्थः । तत्र पूर्वस्य नामार्थत्वे परः परो विभक्त्यर्थः । तत्र शब्दप्रवृत्तिनिमित्तं स्वार्थः । स चानेकविधः स्वरूप जातिगुणक्रियाद्रव्यसम्बन्धभेदात् । स्वरूपं डित्थः । यदा शब्दरूपेण विशिष्टा जाति रुच्यते गौरिति । तदा गोशब्दस्य स्वरूपं विशेषणत्वात्स्वार्थो भवति। जातिस्तु विशेष्यत्वाद्द्रव्यम् । यदा तु जात्या विशिष्टो गुणोऽभिधीयते पटस्य शुक्लो गुण इति,तदा जातिर्विशेषणत्वात्स्वार्थः । शुक्लगुणो विशेष्यत्वाद्द्रव्यम्। यदा तु गुणविशिष्टं पटादिकं द्रव्यमुच्यते शुक्लः पट इति, तदा विशेषणभूतो गुणः स्वार्थः। विशेष्यभूतं पटादिकं द्रव्यम् । यदा तु द्रव्यमपि द्रव्यांतरस्य विशेषणं भवति यष्टीः प्रवेशय कुंतान्प्रवेशयेत्यादौ । तदा यष्ट्यादिद्रव्यं विशेषणत्वमापन्नं स्वार्थम्।पुरुषादिविशेष्यं द्रव्यं दण्डी विषाणीत्यत्र दण्डपुरुषसम्बन्धः स्वार्थः दंडीति द्रव्यम् । पाचक इत्यत्र क्रिया स्वार्थः । क्रियाका-

रकसम्बन्धोऽस्वार्थ इत्यपरे । शब्दस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदिष्यते ॥ पर्यवसानभूमिरित्यर्थः । तच्चानेकप्रकारं जातिर्गुणः क्रिया द्रव्यं स्वरूपमिति । गौः शुक्लः पाचकः यष्टिः डित्थः । सिसतासीस्यपामिद्र लिङ्गंस्त्रीत्वादि । संख्या एकत्वादि । कर्मादयो वक्ष्यमाणाः कारकविशेषाः । विशेषणं स्वार्थः विशेष्यं द्रव्यमिति निर्गलितोऽर्थः । नन्वेकं द्विकं वा नामार्थ इति पक्षे लिंगं विभक्तिवाच्यं ततश्च सर्वे शब्दास्त्रिलिंगाः स्युरिति चेन्न । लिंगानुशासनस्य तात्पर्यग्राहकत्वात् । एतच्छब्दसमभिव्याहृता विभक्तिरिदं लिंगं प्रतिपादयतीति । शब्दः पुँल्लिंग इत्यादिव्यवहारस्त्वनिट्धातुरिव तदुपचारात् पुमान्लिंगमस्मादिति योगाद्वा । द्रव्यं विना एकं नामार्थ इति पक्षे हि द्रव्यमाक्षेपेण लक्षणया वा लभ्यते । विशेष्यलिंगादीनीति त्रिकं नामार्थ इति पक्षे संख्या कारकं च विभक्त्यर्थः । पञ्चकं नामार्थः इति पक्षे विभक्तिर्द्योतिका स्यादेतत् । स्वार्थादिपञ्चकं नाम्नोर्थः, तत्र विधीयमानं स्यादिवचनं स्वार्थ एव स्यान्न संख्यायाम् । अनिर्दिष्टार्थत्वात् । लिङ्गार्थे प्रथमेत्यादिवदेकत्वद्वित्वबहुत्वेष्वेकवचनद्विवचनबहुवचनानीति वचनाभावात् । एवं धातोरपि आद्भुवि कर्मणीतिवदेकत्वेत्यादिवचननिर्वाहात् उच्यते चतुष्कपञ्चकपक्षावत्र मुख्यौ । तत्र च संख्यापि नाम्न एव वाच्या।तत्र ह्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति विनाप्येतेन वचनेन संख्याया विभक्त्याभिधेयत्वं सिद्धं संख्याया अपि स्वार्थत्वात् । अत एव पयो दधि मध्वित्यादावन्तरेण वचनं संख्यागतिर्भवति । नचैवमपि नियमावादन्यत्रापि संकरेण प्रयोगः स्यादिति वाच्यम्। प्रयुक्तानामत्रान्वाख्यानात् । अन्वयव्यतिरेकाभ्यां हि शब्दार्थनिश्चयः । यस्यशब्दस्यान्वये योर्थः प्रतीयते व्यतिरेके च व्यतिरिच्यते स तस्यार्थः। रामः रामौ रामा इत्यादौ च तत्तद्वचनान्वये सा संख्या प्रतीयते व्यतिरेके च व्यतिरिच्यते प्रकृत्यर्थस्त्वन्वयी ततः जानीमो वचनार्थः संख्येति । एवं रामं रामेण रामायेत्यादौ तत्तत्त्रिकान्वये स कर्मादिः प्रतीयते व्यतिरेके च व्यतिरिच्यते । तेन मन्यामहे त्रिकार्थः कर्मादिरिति । एवं च यथा प्रकृतिं विनैव वचनं प्रकृत्यर्थे प्रयुज्यते तथा प्रत्ययोपि प्रयोक्ष्यते । किन्च आरब्धेपि

नियमे आपो दाराः सिकता इत्यादौ प्रयोगानुरोधादेकस्मिन्नप्यवयविन्यवय-वगतबहुत्वाश्रयेण बहुवचनं स्वीकृतं यथा तदभावेपि भविष्यति प्रयोगानुरो-धस्तु सर्वस्याप्यपरिहार्य्य एव । एवं सति हि तान्येकवचनद्विवचनबहुवचना-न्येकशः, सुपः, बहुषु बहुवचनम्,द्व्येकयोर्द्विवचनैकवचने इति चतुःसूत्री मन्द-प्रयोजनेत्युक्तम्,बहुवचने झल्येदित्यादौ बहुवचनादिशब्दो यौगिको गृहीत इति दिक् । तस्माच्छसो नः पुंसीत्यत्र सूत्रे तस्मादिति व्यर्थं प्रकृतस्य दीर्घग्रहणस्या त्र पञ्चम्यां विपरिणामेन तदर्थस्य लब्धत्वात् । नचैकः पूर्वपरयोरिति महा-प्रकरणात्तस्यैवात्रोक्तरीत्या ग्रहणं स्यादिति वाच्यम् । तथा सति सत्वतुको-रासिद्ध इत्यत्रैवेदं पठेत् । इह पाठात्तु दीर्घग्रहणमेवानुवर्त्तिष्यते । तथा शस इत्यपि व्यर्थं सो नः पुंसीत्यत्रोक्तरीत्या पूर्वसवर्णदीर्घस्य ग्रहणात् । ततः पर-स्यसस्येत्युक्ते शसो लाभात् । नच जसोऽपि ग्रहणं स्यात् इदुद्दन्तेभ्यो जसो ग्रहणे सिद्धे अदन्तेभ्योपि शसग्रहणस्यौचित्यात् । अत्रार्थेअर्च्चाः नेमाश्चेत्यादि निर्देशा अप्यनुकूलाः कालापे अकारे लोपम्, शसि सस्य च नः,अम्शसोरादिर्लो-पम्, अग्नेरमोऽकारः,शसोऽकारः सस्य च नोऽस्त्रियाम्, औकारः पूर्वम्, टाना, अदोमुश्चेत्यष्टसूत्री त्याज्या । सम्बुद्धौ ह्रस्व इत्यस्याग्रे एवं पाठ्यम् । अत्यल्लोपं समानादम्शसोसोनोस्त्रियामग्नेष्टानाअदोमुश्चऔपूर्वमिति । शसि सस्य च न इति न्यासेतु हाहानिति न सिध्येत् । तत्राकार इत्यनुवर्तनात् । नच हाहान् हूहूनि-त्याद्यनिष्टमेव पाणिनीयादावार्षे तदिष्टत्वदर्शनात् । लाघवं त्वेवं महदिति ध्येयम् । यद्वा शसि सस्य च न इत्यस्य स्थाने शसो न इति कर्त्तव्यम् । अत्र अकारदीर्घ इत्यनुवर्त्य शसोऽकारो दीर्घो भवति शसोन्तस्य नोभवतीति व्याख्येयम्। यद्वा दीर्घ इति नानुवर्तते शसोन्तस्य नकारे कृते शस एवाकार-स्याकारो दीर्घः घोषवतीत्यनेन दीर्घो भविष्यति अल्लोपमितिन्यासे अ आ-भ्यीति न्यासे प्रकृतेरतो दीर्घः यद्वा अकारे लोपमित्यस्य स्थाने अमि लोप-मिति सूत्रणीयम् ।जसि शसीति नारम्भणीयं समानः सवर्ण इति दीर्घस्यस-त्त्वात् किंतु सस्य च न इत्यस्य स्थाने शस न इति वा शसो न इति वा सूत्रं कार्यम् न तु सो नः पुंसीत्युचितमर्द्धमात्रालाघवादिति चेन्न त्रिकं नामार्थ इति पक्षस्यानेन प्रचुरत्वज्ञापनात् । पुंसीत्युक्ते शसविशेषणत्वस्य स्फुटमती-

त्यापातात् किंच उत्तरार्थोपि पञ्चमीनिर्देशः समानान्तान्नुट् पुँल्लिंगात्तु ह्रस्वादेवेत्यर्थः सूचितः । **नुडामः** । समानांतादिति किम् । रायाम्, भवताम् । नाम्न इति किम् । कारयाञ्चकार । ननु हाहां वातमम्यामित्यादावपि प्राप्नोति । सत्यम् । ङ्ण्नोह्रस्वादिति सूत्रान्मंडूकप्लुत्या ह्रस्वादिति पुंस इति चानुवृत्त्याऽत्र वाक्यभेदेन सम्बध्यते।पुँल्लिङ्गाद्ध्रस्वांतादेवेति नियमो लभ्यते। अत्रार्थे झपानाम्, दांहौ, स्थामीत्यादिनिर्देशोऽप्यनुकूलः । अत्रेदमवधेयम् । अत्राधातोरित्यनुवर्तनीयम् । श्रियाम्, भुवामित्यादावुभयप्रसङ्गे परत्वादियुवौ । किंच स्त्रीलिंगादियुवन्तात्स्त्रीवर्जितादामो नुण्नेष्यते स च वेयुव इत्यत्र मण्डूकप्लुत्या नुडाम इत्यनुवर्त्त्य अत्रैव वा स्त्रियाम्,वेयुव इति सिंहावलोकितन्यायेनापकृष्य वाक्यभेदेन सम्बन्धाल्लभ्यते । एवं तर्हि कारयांचकारेत्यादावतिप्रसङ्गवारणार्थमधातोरिति । मैवम् । परत्वाद्गुणेन नुटो बाधात् नुटोऽवकाशो हरीणाम्।गुणस्य नयाति।कारयांचकारेत्यादावुभयप्रसङ्गे परत्वाद्गुणः। पताञ्चकारेत्यादौ परत्वाद्यत इत्यकारलोपः । कविरिवाचचार कवयाञ्चकारेत्यादावपि परत्वाद्गुणः पचातितरामित्यादावपि परत्वाद्यस्य लोपः।न चैवमपि मालाञ्चकारेत्यत्र नुट् स्यादिति वाच्यम् । स्याद्यधिकारेण स्यादिसम्बन्धिन आमोत्र ग्रहणात् । ङेरामस्तु न नुट् परत्वाद्यड्ध्र्यां बाधात् । संख्यायाम्, स्त्रियामित्यादि निर्देशाच्च । माधवस्तु यदादेशस्तद्वदिति ङेर्ङकारेणास्य सानुबंधकत्वादननुबंधकस्येति परिभाषया तस्याग्रहणम् । लाक्षणिकत्वाद्गाकासाद्यामो न ग्रहः नाम्न इत्यनुवृत्तेः तस्य धातोर्विधानात् । तरतमयोरामोपि न ग्रहः स्याद्यधिकारात् । अतः परिशेषात् षष्ठीबहुवचनस्य ग्रह इत्याह । तत्र लाक्षणिकत्वादित्यसिद्धो हेतुः । न हि विहितत्वं लाक्षणिकत्वं स्याद्यामोपि तत्त्वापत्तेः।किंतु अवयवशो व्युत्पादितत्वं तत्तु ङेरामो नामत्वस्य सत्त्वात् । तस्य धातोर्विधानादित्यप्यशुद्धं धातोर्विहितत्वेऽपि नाम्नो विहितत्वानपायात्। क्विबंतानां धातुत्ववन्नामधातूनां नामत्वानपायात् तस्माद्धचर्थाधातोरित्यनुवृत्तिः । प्रत्युतानिष्टावहा च।वर्षाभूणाम्, पुनर्भूणामित्यादावव्याप्तिप्रसङ्गात्। चतुराम्शौचेत्यस्य त्वनर्थकत्वेनापि वारणात्। समानान्तस्य नाम्नोऽसम्भवाच्च । देव आम्र।देव आमि। त्वया देव आम् कृतवानित्यादौ तु प्रत्य-

याऽप्रत्यययोः प्रत्ययस्यैव ग्रहणमित्यनेनापि वारणं शक्यम् । स्यादेतत् । स्त्रीणाम्, वारीणामित्यादौ परत्वादियूनुम्भ्यां भाव्यम् । इयूनुमोरवकाशः स्त्रियौ । वारिणे । नुटोऽवकाशः हरीणाम्, स्त्रीणाम्, वारीणामित्यादौ उभयप्रसङ्गे परत्वादियूनुमौ स्याताम् । नुम्नुटोः दीर्घत्वे विशेषः । नामीति दीर्घत्वं नुट्सहिते आमि प्रवर्तते नवानामिति लिङ्गात् । नुमो नाम भक्तत्वात्तस्मिन्सति यज्वनामित्येव स्यात् । इनामिति लिङ्गात् । उच्यते । परावपि नुमियौ बाधित्वा नुडेव भवति । प्रायशो दृश्यतामिहेति वचनात् परेण पूर्वबाधः प्रायशः क्वचित्पूर्वेणापि परस्य बाध इति तदर्थात् । यद्वा आमो नुडिति कर्तव्ये नुटः पूर्वोच्चारणं प्राथम्यार्थम्।यत्र नुट् चान्यच्च प्राप्नोति तत्र प्रथमं नुडेवेतीयूनुमौ ना।अथवा नामिनः स्वर इत्यत्र नामिन इति योगो विभज्यते तत्र नपुंसकादित्यनुवर्तते थोनुडित्यतो नुडिति च नुरामित्यत आमिति चापकृष्यते । ततश्चायमर्थो भवति । नाम्यन्तान्नपुंसकात्परस्यामो नुडिति।नुम्बाधनार्थमिदं नुम्च नामिनःस्वर इत्ययमेव बाध्यते नान्यः अच्चास्थ्नामितिलिङ्गात् । स्त्रीभ्रुवोरित्यत्र स्त्रीति योगो विभज्यते तत्र नुडिति आमिति चानुवर्तते । ततश्च स्त्रीशब्दात्परस्यामो नुडित्यर्थः संपद्यते । इयोऽपवादोयं तेन स्त्रीणामिति सिद्धम् । नन्वेवं ङेरामादेशेप्यातिप्रसङ्गः ॥ स्त्रियामिति लिङ्गात् नुडटोर्द्वयोरादित्वस्यासम्भवाच्च कश्चिदाह आमो प्रस्येत्संज्ञा कुतोन "रः संख्यायाः" इति ज्ञापकात् अन्यथा रेफान्तसंख्यायाः पर आम्नास्तीति कस्य नुट् स्यात् । रुदादेश्चतुर्णामितिलिङ्गाच्च॥**रः संख्यायाः** । रेफान्तसङ्ख्यायाः परस्यामो नुडागमः । चतुर्णाम्,र इति किम्। त्रिंशताम्,चत्वारिंशताम् न च "विंशत्याद्याः सदैकत्वे" इत्यभिधानादामेवात्र दुर्लभ इति वाच्यम् । सङ्ख्यार्थे द्वित्वबहुत्वे स्त इत्यनेन सङ्ख्यायां द्वित्वबहुत्वयोरभ्युपगमात् । सङ्ख्याया इति किम्। वाराम्,गिराम्,प्रियचतुरामित्यत्र न नुट् रेफान्तसङ्ख्याया विहितस्यामो नुडिति व्याख्यानात् । अत्र तु समुदायादामो विधानात्तस्य चान्यपदार्थवृत्तित्वेन सङ्ख्याभिधायित्वात् । एवमुत्तरसूत्रेपि । माधवस्तु सङ्ख्याया इति षष्ठी आमा सम्बध्यते । सङ्ख्याशब्दश्चान्वर्थः । सङ्ख्यायतेऽनयेति तेन संख्यायमानस्यार्थस्य बहुत्वे वाच्येऽविहितस्याम इत्याहुः । ननु ष्णः संख्या-

या इत्येव सूत्र्यतां किमर्थोयं योगविभाग इति चेन्न । रेफान्तसंख्याया अपि अश्शसोर्लुक् प्रसङ्गात्।ष्णः सङ्ख्याया इति समुदायस्यैवानुवर्तनात् ।एकदेशानुवृत्तौ मानाभावात् । चतुर इति कालापसूत्रे तु प्रियचतुरामित्यत्रातिप्रसङ्गः त्रेस्त्रयस्येवाष्टन आत्वस्यैव च गौणस्यापि प्रवृत्तेर्दुर्वारत्वात्। उत्तरसूत्रे कृतस्य संख्याया इत्यस्यात्रैव कर्तुमुचितत्वात् । रः संख्याया इत्येव न्यासो युक्तः "ष्णः संख्यायाः" इति वर्तते ष्ण इति तस्या विशेषणं विशेषणेन तदन्तविधिः श्रुव आहश्च पञ्चानामिति लिङ्गात्। ततश्च षकारान्तनकारान्तसंख्यायाः परस्यामो नुडित्यर्थः । षण्णाम्, पञ्चानाम्, अत्र च नस्य सत्यपि टुत्वनिर्देशे णान्तस्य संख्यावाचिनोऽभावान्नान्तमेव गृह्यते इत्याह माधवः । संख्याया इति किम्। त्विषाम्,यज्वनाम्,प्रियषषाम्, ष्ण इति किम्।त्रिंशताम्,पंचाशताम्, संख्यायाः ष्णान्ताया इति कालापसूत्रे ष्ण इति युक्तं संख्याया इति हि पूर्वसूत्रे पाठ्यं रः संख्याया इति अन्तग्रहणं तूक्तन्यायलभ्यम्।यत्तु अन्तग्रहणद्भूतपूर्वन्तान्ताया अपि अष्टानामित्युक्तम्।तत्त्वात्वविधानेनैववक्ष्यते। ष्णांता षट् इत्यत्रापि नित्यमंतग्रहणम् । यत्तूक्तं सम्बन्धार्थमिति । सम्बन्धस्तु इष्टानुरोधाद्भवति विनापि यत्नविशेषात् ष्णः षडिति पाठ्यम्। त्रे रयङ्।आम इत्यनुवृत्तं सप्तम्या विपरिणम्यते त्रिशब्दस्यायङादेश आमि । त्रयाणाम्।ननु त्रेरित्येकत्वनिर्देशो युक्तस्त्रिशब्दस्य बहुवचनान्तत्वादितिचेन्न ।त्रिशब्दोहि त्रित्वविशिष्टस्य वाचकाद्बहुवचनान्तः तस्यानुकरणं तु सूत्रे कृतं न तु स एवायं अनुकार्यानुकरणयोर्भेदस्य विवक्षणात् । अनुकार्येणैवार्थवत्त्वान्नामत्वाद्विभक्तिः । अनुकार्यकार्यमनुकरणेन भवति । अत एवेदमोयमित्यत्रेदं शब्दस्य क्रियमाणं स्म्य इत्यत्वमनुकरणस्य न कृतम । स्यादेतत् । अनुकार्यानुकरणयोर्भेदपक्षेप्यनुकार्यकार्यमनुकरणे दुर्वारं प्रकृतिवदनुकरण भवतीति वचनात् । इदं च ज्ञापकसिद्धम् । तत्तु पश्चाटः । अञ्चास्थाभि तिनिर्देशः । कथमन्यथा पथ्यास्थिशब्दानुकरणयोः पथ्यस्थिशब्दकार्यं लभ्यते । तस्य फलं तु अग्नी इत्याहेत्यादौ स्वे द्वित्वे इति सन्धिनिषेधः नह्यग्नी इति द्वित्वे वर्तते किंत्वस्यानुकार्यमित्यस्य सन्धिनिषेधो न स्यात् । प्रकृतिवदनुकरणमिति वचनाद्भवति । उच्यते

प्रकृतिवदित्यव्ययम् । नित्यम । अदस आसौ आभ्वोरित्यादिलिङ्गात् । तस्य नित्यत्वे तु अमुष्येति स्यात् । सेश्च विभक्तित्वान्नामसंज्ञा न स्यात् । भूशब्दस्य तु धातुत्वादुव् स्यात् । नन्वेवं स्थिते प्रकृतिवदनुकरणमित्यत्र कुतो नाश्रितम् । उच्यते । त्रयाणामयङित्युक्ते रेफषकारनकारान्तानां सङ्ख्याशब्दानामाम्ययङादेश इत्यर्थः स्यात् न तु त्रिशब्दप्रतीतिः । रुदादेश्चतुर्णामित्यत्र चतुर्णामित्यनेन यथा।अथ नामिनोऽचतुर्णाम्।विदो नवा नामितिलिङ्गान्नोक्तदोष इति चेत्तर्हि त्रयाणां समानानामयाङित्यर्थः स्यात्।तत्रादिजबानामितिलिंगान्नाकारस्य लकारस्य त्वप्रसिद्धेः । ननु त्यादीनामितिलिङ्गान्नायमर्थो भविष्यति । तर्हि त्रयाणामम् शसामामयङित्यर्थः स्यात् । ननु चपानाम्। त्यादीनाम् । इनाम् । संप्रसारणम् । पमित्यादिलिङ्गान्नायमप्यर्थः । तर्हि मात्रागौरवमेव दोषः। अत एव त्रीणामयङित्यपि न कृतम् । किंच प्रियत्रयाणामित्यत्र न स्यात् । बहुवचननिर्देशसंख्यापरस्यैवायङित्यर्थात् यथा न्यासे त्वष्टन आत्वत्ववद्गौणत्वेप्ययङ् लभ्यते । कश्चित्तु संख्याया इत्यनुवर्तनाद्गौणत्वेन प्रियत्रीणामित्याहुः । तन्न सम्यगिति प्रामाणिकाः । तथाहि तस्मादित्यनुवर्त्तते । तस्य विशेषणं त्रिशब्दः । विशेषणेन तदन्तविधिः। ततस्त्रिशब्दान्तस्य नाम्नोऽयङित्यर्थः । स च निर्दिश्यमानस्यादेशा भवन्तीति परिभाषया त्रिशब्दस्यैव । तेन परमत्रयाणां प्रियत्रयाणामिति सिद्धम् । त्रयाणामिति तु व्यपदेशिवद्भावात् । माधवस्तु प्रियत्रीणामित्यत्रापि प्राप्नोति । शब्दस्वरूपस्य सत्त्वात् । मैवम् । त्रेरिति षष्ठ्या नामीत्यनेनापि संबन्धादित्याह । तदुक्तरीत्या अपास्तम् । नन्वयङादेश इति कथं निर्णीतमागम एव किं न स्यादिति चेन्न । प्रायपाठात् । पूर्वत्रोत्तरत्र चादेशा एव पठ्यन्ते नुट्त्वागमः यवराणां चतुर्णां नवानामिति लिङ्गात् । टित्कितावागमाविति निर्णीतत्वाच्च । अथ ङकारः किमर्थः। ङकारो ङिदन्त्यस्येत्यनेनान्त्यस्य यथा स्यात् । नचात्रेदंवचनं नास्तीति वाच्यम् । ङकारग्रहणेनैवैतस्य ज्ञापितत्वात् । ननु सिद्धायां ङकारस्येत्संज्ञायामिदं प्रयोजनं सिद्धे चास्मिन्प्रयोजने इत्संज्ञासिद्धिरित्यन्योन्याश्रय इति चेन्न । व्याख्यानादेवेत्संज्ञासिद्धेः । क्रियायामिति लिङ्गाच्च । तथाहि । कृञो

भिदाद्यङ्प्रत्यये ऋतो रिङिति रिङादेशः सपद्यन्तस्य न स्यात् तर्हि क्रिया-शब्दो न सिध्येत् । अतः क्रियायामिति निर्देशेन ङिदन्तस्य भवतीति ज्ञापितम् । त्रेस्त्रय इति गौरवादपेक्षितम् । त्रेश्च त्रय इति कालापसूत्रं त्वति-गौरवात् । ष्णः । संख्यायाः षकारो णो भवति नुटि षण्णां परमषण्णां डिति षकारो जबभावेन निर्दिष्टः । नुडिति सप्तम्या विपरिणम्यते । नुट्परत्वेन षकारे विशेषणान्नाद्यषकारेऽतिप्रसङ्गः । संख्यायां इति षष्ठीनिर्देशाच्च । माधवस्त्वाह । डकारस्य च येष्वनन्तर्भूतत्वादपदान्तत्वाच्च ञमे ञमा वेति न प्राप्नोतीत्यारम्भ इति । तन्न । उक्तरीत्या षस्यैव णत्वविधानात् । यदपि केचित्तु ड्ण इत्यत्र द्वौ डकारौ निर्दिश्यणत्ववत् डत्वमपि विधाय ड्णामित्युदाहरन्तीत्युक्तम् । तदपि न । षण्णामित्येकस्यैवात्र रूपस्येष्टत्वात् । परैरपि परिभाषायां प्रत्ययानुनासिकस्वीकारात् । नुटीति किम् । षड्भिः । ष इति किम् । चतुर्णाम् । अत्राऽपरे णो विधीयते इति पक्षे सख्याया इत्यस्या-नुवृत्तिरावश्यकी । सजुषामिति व्यावृत्यालाभात् । नुटि परे तद्विधाने तु संख्याया इत्यनावश्यकं व्यावृत्त्या असत्वात् । **जश्शसोर्लुक् ॥** ष्णः संख्याया इति चानुवर्तते । षकारनकारान्तसंख्याया जश्शसोर्लुक् । षट् । पंच । ष्ण इति किम्। चत्वारः । विंशतयः । संख्याया इति किम्। प्रावृषः। पामानः । ननु शतानि सहस्राणीत्यत्र नुमो नामभक्तत्वादतिव्याप्तिरिति चेन्न । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया सिद्धत्वात् । न्यायमूला चेयम् । संनिपतनं संनिपात आन्तर्य्यमिति यावत् । स लक्षणं कारणं यस्य स सन्निपातलक्षणो विधिः । तद्विघातस्य कारणविघातस्या-निमित्तं न प्रयोजकः । यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोधं न करोतीति परिभाषार्थः । शिमाश्रित्य प्रवृत्तो नुम् शेर्विघा-तको न भवति । नन्विकारमाश्रित्य जातो ङेरौकार इकारस्य विघातको न स्यात् । मैवम् । डिदित्युक्तेः परिभाषाया बाधनात् । यद्यप्युत्तरार्थं डिद्वचनं तथापीह पाठस्य सामर्थ्यमस्ति । इनां शौ साविति लिङ्गाच्च । अथ लोप इत्यनुवर्त्तमाने लुग्ग्रहणं किमर्थम् । ज्ञापनार्थम् । षष्ठीनिर्दिष्टस्या-

देशस्तदन्तस्य भवतीति परिभाषां ज्ञापयति । अथ ज्ञापिता सा ङसिभ्यसोः श्तुरिति शित्करणेन तर्हि तयैवान्त्यलोपे प्राप्ते सर्वलोपार्थमिदम् ॥ अथ कृतेपि लुग्ग्रहणे कथं सर्वलोपो लभ्यते । यावता षष्ठीनिर्देशोऽत्राप्यस्त्येव सत्यम । प्रत्ययादर्शनलुक्संज्ञा भवति । प्रत्ययादर्शनं च यावति प्रत्ययत्वं पर्याप्तं तस्य सर्वस्यादर्शनं ग्राह्यम् । नत्वेकदेशस्य । अत्रार्थे चेदं लुग्ग्रहणं मानम । अन्यथा लोपग्रहणानुवृत्त्यैव सिद्धे किं लुग्ग्रहणेन । ननु सतो हि संज्ञिनः संज्ञया भवितव्यं न त्वसतः। अत्र च लुक्संज्ञया प्रत्ययादर्शनं भाव्यते । सिद्धस्य च प्रत्ययादर्शनस्य लुक्संज्ञया भवितव्यमित्यन्योन्याश्रयः प्राप्नोति । उच्यते । सूत्रशाटकन्यायेन भाविनी संज्ञा विज्ञायते । तद्यथा । कश्चित्तंतुवायं प्रति वदति एतस्य सूत्रस्य शाटकं वयेति स । पश्यति यदि शाटकस्तर्हि न वातव्यः। अथ वातव्यो न शाटक इति मन्ये सुवातव्यो यस्मिन्नुते शाटक इति संज्ञा भवति । एवमत्रापि संभवति । यस्य जातस्य लुक्संज्ञा भवति तादृशं तु प्रत्ययादर्शनमेव । अथ लोपापवादोऽत्र लुक्शब्द एवादेशः किं न भवति । मैवम । पच्चिनंदिग्रहादेरयुणिनि नवपमित्यादिलिंगात् । नहि लुक्छब्दोत्र श्रूयते । स्यादेतत् । प्रत्ययादर्शने सति तदाश्रितं कार्यं भवत्येव क्विपः क्वित्त्वादेर्लिंगात् । यदि हि प्रत्ययस्यादर्शने सति तदाश्रितं कार्यं न भवेत्तर्हि परत्वान्नित्यत्वाच्च क्विपो लोपे तन्निमित्तकगुणादेरप्राप्तत्वात् किं क्वित्त्वादिना । एवंस्थिते पंचेत्यादौ जसोऽदर्शने तन्निमित्तो नोपधाया इति दीर्घः प्राप्नोति । उच्यते । नवपमिति लिंगात् लुकि सति तन्निमित्तं कार्यं नेति ज्ञायते । एतदर्थमेव शब्दभेदेन व्यवहारः । अन्यथा लुग्लोपयोरन्यतरेणैव सर्वत्र व्यवहरेत् । ननु लुग्ग्रहणमन्तरेणेष्टसिद्धिर्यदि लभ्येत भवेत्तदा ज्ञापकम् । लुग्ग्रहणं नामेव न पश्यामः । अनन्तरस्येति न्यायेन णकारायङोरनुवृत्तिः प्राप्नोति । मैवम्।नवपमिति लिंगेनैव तदनुवृत्तेर्वारणात्।डतेः॥ डत्यंतान्नाम्नः परयोर्जश्शसोर्लुग्भवति । कति । ननु नात्र डतिप्रत्ययो विहितः कथमनूद्यत इति चेत् । सत्यम्।अनुवादसामर्थ्याद्विधिरनुमीयते । यद्वा लोकाच्छेषस्य सिद्धिरि-

त्यभ्यनुज्ञानाद्व्याकरणान्तरे किमः संख्यापरिमाणे डति चेत्यनेन विहित इहाप्याश्रीयते । "शेषा निपात्याः कत्यादयः" इति वा विहितः । अत्र च संख्याया इत्यनुवृत्तेः संख्यासम्बन्धी यो डतिः संख्यापरिमाणे विहितः स इह गृह्यते न पातेर्डतिः पतिरिति । कतेरिति वक्तव्ये डतेरित्युक्तिरन्यतोपि डतिरस्तीति ज्ञापयति । तेन याति ताति इति सिध्यतीति कश्चित् । वस्तुतस्तु कतेरित्येव युक्तम् । यति ततीति लोके न सम्मतम् । कतीत्यत्र यदादेशस्तद्वदिति समाश्रित्य ए ओ जसीत्येत्वं स्यात् । न ज्ञापकात् । यदयं शीङ इति गुणं शास्ति तज्ज्ञापयति । लुकि न तन्निमित्तं भवतीति । अन्यथा शेते इत्यादावदादेर्लुगिति लुकस्यापस्तद्भावेन गुणस्य सिद्धत्वाद्व्यर्थमेव तत्स्यादिति माधवः । कतेश्च जश्शसोर्लुगिति कालापसूत्रे चकारो व्यर्थः । समुच्चेतव्याभावात् । ह्रस्वान्तत्वादेव नोः सिद्धत्वात् । ष्णान्तायाँ इत्यस्यानुवर्तनात् । **अष्टनो डौ** ॥ अष्टशब्दाज्जश्शसोर्डौ भवति । एकवचनं तु त्रेरितिवत् । अल्लोपः स्वर इत्यस्याप्रवृत्तिस्तु चिन्त्या । संख्याया इत्यनुवृत्तेर्न गौणे । प्रियाष्टानः । वास्विति वा शब्दः काकाक्षिवदुभयत्र सम्बध्यतेऽतोडौ वा भवति । कश्चित्त्वत्रापि शब्दं पठति तद्गौरवादुपेक्ष्यम् । अन्येत्वत्रैव वाशब्दं पठित्वोत्तरत्रानुवर्तयन्ति तत्रापि गौरवं दोषः । आकारस्यपृथगुच्चारणात् । उत्तरत्रैव काकाक्षिन्यायेनात्रापि संबंधे लाघवं डस्येत्संज्ञाव्याख्यानात् । तच्च टिलोपार्थम् । न चौत्वस्य वास्वित्यात्वस्य च युगपत्प्रवृत्त्याश्रयणेनाष्टाविति सिध्यति । हसादावात्वविधानात् । ननु षष्ठीनिर्दिष्टत्वादन्त्यस्य डौ प्राप्नोति । नचानेकवर्णत्वात्सर्वादेशः । अनुबन्धैरनेकवर्णत्वस्यासंभवात् । तथाहि । उच्चरितप्रध्वंसिनोऽनुबन्धा आदेशविधिसमयेन सत्येव स्मर्य्यमाणाश्च काकाक्षिवद्व्यावर्तका भवन्ति । अनेकान्ता इति पक्षे त्वेकवर्ण एवादेश उच्यते । षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्येत्यस्यानित्यत्वात्सर्वादेशः । यद्वा डित्करणसामर्थ्यात् । तथाहि । अन्त्यादेशे सति तु जस्यष्टाराविति शस्यष्टाविति प्राप्नोति । तच्चोत्तरेण डित्वं सिद्धम् । अतो डित्वसामर्थ्यात्सर्वादेशः लुकोपवादोयमिति सर्वादेश इति माधवः । डौ तस्माज्जश्शसोरिति कालापसूत्रे तस्मादिति व्यर्थम् । यत्तु तस्माद्ग्रहणमात्वस्यानित्यत्वा-

र्थमिति । तन्न । आत्वविधावेव वाग्रहणस्यौचित्यात् । वाष्टन इति । न चानात्वपक्षे तु प्यौ स्यात् । आकारमष्टन्शब्दं चानुवर्त्याष्टन आकारान्तादिति व्याख्यानसंभवात् । जश्शसोर्डौ इति सूत्रं युक्तम् । तत्रानपेक्षणात्।वस्तुतस्तु कतेर्जश्शसोर्लुगित्यस्याग्रे अष्टनो डाविति सूत्रयितुं युक्तं।संख्याया इत्यनुवृत्तिलाभे गौणत्ववारणात् । अन्यथात्ववद्गौणत्वेपि स्यात् । **वासु** । वा आ आसु इति छेदः। अष्टनो वा आत्वं स्यादिषु । अष्टाभिः । अष्टभिः । इत आरभ्य संख्याया इति निवृत्तं व्याख्यानात् । तेन गौणत्वेप्यात्वं भवति । प्रियाष्टाः प्रियाष्टा । अथास्विति व्यर्थम् । स्यादीनां त्वधिकारादेव लाभात् । नाम्नः स्यादीनां चाधिकारः प्राग्धात्वधिकारात् । एवं तर्हि योगविभागार्थं तत् । तथाहि । आस्विति सूत्रं पृथक् क्रियते निमित्तसप्तमी चेयम् । स्त्रीनिर्देशः शब्दव्यक्त्यपेक्षया बुद्धिसन्निधानादिदंशब्दप्रयोगः । तथा च बुद्धिसन्निहितशब्दस्य व्यक्तिसिद्ध्यर्थमाकारो भवतीत्यर्थः । एवं च गवादेरवर्णागमोऽक्षादौ वक्तव्य इति सिद्धम् । अस्याक्षरार्थस्तु गवादेरिति पञ्चमीनिर्देशादक्षादाविति च सप्तमीनिर्देशाच्च । पूर्वोत्तरावधिलाभान्मध्ये आकारो भवति स चागम एव फलित इत्यत आगम इत्युक्तम्।आकारागम इति वक्तव्ये वर्णग्रहणं तु ङेरगित्यागमेनाप्येतत्सिध्यतीति सूचनार्थम्। यद्वा गवादेरिति षष्ठी । आनन्तर्य्यं च षष्ठ्यर्थः । आदेशत्वं तु आगमशब्दादेव वारितम् । अक्षादिपरत्वं चागमस्यैव विशेषणम् । तथाच गवादेरक्षादिपरोऽवर्णागमः । अत्र चोत्तरसूत्रात् स्भीत्यपकृष्यते । तस्यादयो विशेष्यन्ते।सप्तमीनिर्दिष्टोऽवर्णो यत्र विशेषणं भवति तत्र तदादौ कार्यं विज्ञायते न तु तदन्ते स्त्रीभ्रुवोरित्यादिलिङ्गात् । स्वरादौ स्यादावियुवाविति पक्षेऽयंनिर्देश उपपद्यते न तु स्वरान्त इति पक्षे।अतः सकारभकारादौ स्यादौ परेऽष्टनो वाऽऽत्वं भवतीति फलितोऽर्थः "प्रियाष्टनो राजवत्सर्वं हाहावच्चापरं हसे" स्यादाविति किम् । अष्टभार्य्यः । अष्टसेवकः । स्भीति किम्। प्रियाष्टानौ।प्रियाष्टानः । केचित्तु स्भीत्यननुवर्त्य सर्वविभक्तावष्टन आत्वविकल्पमाहुः। कश्चित्तु प्रियाष्टशब्दाच्छस्यल्लोपे कृते ष्टुभिः ष्टुरिति णत्वे कृते प्रियाष्ण इति भवतीत्याहुस्तन्न । असिद्धं बहिरंगमन्तरंग इति परिभाषया शस्निमित्तकत्वेन बहिरंगस्याल्लोपस्यासिद्धत्वात् ।

पूर्वं पूर्वमन्तरंग इति स्वीकारात् । अष्टनः सर्वास्विति कालापसूत्रे सर्वास्विति व्यर्थम् । व्यञ्जनादावित्यनुवृत्तेः सामान्यत आत्वमिति मतेऽपि विभक्तावित्यनुवृत्तेः । तच्च त्वयाप्यनुवर्त्यं अप्रयोगे माम्वित्यस्य विशेषालाभार्थम्। वस्तुतस्त्वात्वं व्यंजनादावेव पतंजलिना हलीत्यस्य सम्बद्धत्वात् । यथा लक्षणमप्रयुक्ते इत्यनेन स्वरादावात्वाभावस्याङ्गीकृतत्वात् । माधान्ये तु सर्वासु इत्यस्य न प्रयोजनं सर्वासां व्यञ्जनादित्वादाप्तोऽपि । ननु जश्शसोरष्टन आत्वं तस्माज्जश्शसोराविति व्याख्यानान्न दोषः । औ पक्षे तु न चाशंका । **रैस्भि।** रै इत्यविभक्तिको निर्देशः । राय आत्वं सभादौ स्यादौ । राः । स्भीति किम्। रायौ । स्यादौ किम्। रैभारः । रैसहायः।ननु ऐस्भीत्येव सूत्रणीयम् । ऐकारेण च नाम्नो विशेषितत्वादैकारान्तस्य नाम्न इति लभ्यते । तादृशश्च रैशब्द एवेति किमर्थं रेफोच्चारणं नैष दोषः । गौणार्थमिदम् तथाहि । रायमतिक्रान्तमतिरि कुलम् । नपुंसकस्येति ह्रस्वः । ततो भ्यामि अतिराभ्याम् । अत्रैकदेशविकृतमनन्यवद्भवतीत्यात्वम् भवति । ह्रस्वे कृतेपि रैशब्दस्यानपायात् । न्यायसिद्धा चेयं परिभाषा । छिन्नेपि शुनः कर्णादौ श्वव्यवहारदर्शनात् । ऐकारे गृहीते त्विदं न सिध्येत् । ह्रस्वे कृते ऐकारान्तस्याभावात् । नच यदादेशस्तद्वदिति वर्णमात्रविधौ तद्भावनिषेधात् । अन्यथा रासु इत्यत्र षत्वप्रसङ्गात् । किंच "ऐकार उच्यते विष्णुरैकारः स्यान्महेश्वरः" इत्येकाक्षरकोशादौ ऐकारोप्यस्ति । तत्रातिव्याप्तिर्दुर्वारा । रायो हलीति पाणिनीयसूत्रस्थाने रायः स्भीति कर्तुं युक्तं लाघवात् । **अद्भि** । अकार आ स्याद्भादौ स्यादौ । रामाभ्याम् । अदिति तपरकरणं न स्वरूपग्रहणम् । आद्यन्ताभ्यामिति लिङ्गात् । तेन।अद्भ्यां भवद्भ्यामित्यादौ नात्वम् । अस्मादेव लिङ्गात्तदादिविधिः। भ्यामो मस्य नेत्वम् । आत्वविधिवैयर्थ्यप्रसङ्गात् । तथाहि । सति मित्वे मिदन्त्यादिति अन्त्यस्वरात्परे भ्यामागमे आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते। नाम्नोऽवयवे सति भकारेऽकारान्तं नामैव नास्तीति कस्यात्वं स्यादिति माधवः । तन्न । अवयवत्वेपि परत्वानापायात्स्यादित्वसत्त्वाच्च।अन्यथानाम्नोपि प्रत्ययत्वं न स्यात्।ततश्चाप्स्यात् । नह्यागमोऽडादिरयोबाधकोदृष्टः।तस्मादिदुद्भ्यामिति निर्देशोऽत्र प्रमाणम्।

अदिति किम्। हरिभ्यां तपरत्वमुत्तरार्थम्।हाहाभ्यामित्यादौ विशेषाभावात्। भीति किम्।देवस्य। बहुत्वे तु परत्वादेत्वम्।देवेभ्यः। स्यादौ किम्।देवभाग्यम्। स्भीति प्रकृतेति ग्रहणं सकारनिवृत्यर्थम्।यद्यपि नपुंसकस्येति लिंगेन सन्निपातपरिभाषया च समाधानं संभवति देव इत्यत्रापि परत्वान्नित्यत्वाच्च विसर्गः संभवति। तथापि तस्य यदादेशस्तद्वदिति सकारत्वमाश्रित्यात्वं स्यात्। नच वर्णमात्रविधौ यदादेशन्यायाभावः तस्यानित्यत्वमनेन ज्ञाप्यते तेन गणयतीत्यादि सिद्धम्। अकारो दीर्घं घोषवतीति कालापसूत्रस्य स्थाने अ आभ्यि इत्युचितम्। देवानामिति तु हरीणामिव भविष्यति। यद्वा मकारोऽत्रलुप्तनिर्दिष्टः।यद्वा अ आनयीति सूत्रं पाठ्यम्।अकारे लोपमिति कालापसूत्रस्यस्थानेऽति लोपमिति अमि लोपमिति वा पाठ्यम्। यद्वा आल्लोपमिति सूत्रणीयम्। अतः परो विभक्तिस्थोऽकारो लोपमाप्नोतीति व्याख्येयम्। जश्शसोरलोपेप्येकदेशविकृतन्यायेन दीर्घे कृते सिद्धमिष्टम्। यद्वा प्रतिपदोक्तत्वाज्जश्शसोर्दीर्घे कृते अतः परत्वाभावाल्लोपाभावः। **भ्यः**। भ् भि अ इति छेदः। अतो भिसो भस्याकारः। देवैः। स्यादेतत्। भ्य इति चतुर्थीपञ्चम्योर्बहुवचनस्य ग्रहणम्। अद्भि इत्यस्मादिकारात्परत्वात्। हसेर्ह्हस इति द्वित्वम्।झभे जबा इति भस्य बः। तथा चातः परस्य भ्यस आकारादेश इत्यर्थो लभ्यते। यद्वा भ् भ्य इति छेदः। अकारात्परस्य भिसो भस्याकार इत्यर्थोस्तु। आकारो वास्त्वित्यतोऽनुवर्तते। उच्यते। एवं भ्यसो ग्रहणे व्याख्यायमाने भिस्भिसिति सूत्रं व्यर्थं स्यात्।नहि भिसः कश्चिदादेशः यद्वा धनार्थमिदं भवेत्। ननु तर्हि भि अ इति छित्वा भकारे परे पूर्वः अत् अ एव भवति तस्यादेशान्तरं न भवतीति व्याख्यानमस्तु। अत्रापि पक्षे द्वित्वं तूक्तरीत्या सन्धिजमेव। यदा भि इत्येकदेशद्वारेण भिस एवानुकरणं ततश्च भिसि परे अत् अ एवेत्यर्थोस्तु। मैवम्। आद्ये भीति व्यर्थं स्यात्। पूर्वसूत्रादनुवृत्तेः सत्त्वात्। आद्यन्ताभ्यामिति निर्देशविरोधात्। द्वितीयेतु भागैरिति निर्देशो नोपपद्येत।ननु भकारे परे भिसि परे वा अकारभिन्नस्य वर्णस्याकारादेश इत्यस्तु। मैवम्। इदुद्भ्यां गुब्भ्यां निर्द्धारणस्वाम्यादिभिरित्यादिलिङ्गात्।

नन्वेवमपिकृतेप्यकारे तस्य पूर्वेण सह सवर्णे दीर्घ इति दीर्घत्वं प्राप्नोति। प्रकृतिप्रत्ययाश्रयत्वादन्तरङ्गं तत् । अन्तरङ्गबहिरङ्गयोरन्तरङ्गो विधिर्बलवान् । नच परत्वान्नित्यत्वाच्च एत्वे न बाधः । परादिनान्तरङ्गस्य बाधायोगात्। उक्तंहि " परं विदुः पूर्वपरोपपत्तौ परस्यनित्यस्य च नित्यमेव। नित्यान्तरंगोपगमेन्तरङ्गं तस्माद्विधिः प्रातिपदो बलीयान्" ॥ इति । उच्यते । अवर्णविधानसामर्थ्यादन्तरङ्गमपि बाध्यते । अन्यथा समानाद्धेरित्यतो लोपमनुवर्त्य लोपमेव व्यधास्यत् । भागेरिति लिङ्गाद्वा । यत्तु जश्शसोर्लुकमनुवर्त्य भस्य लुकमेव व्यधास्यदित्युक्तम् तन्न।अवर्णस्य लुकोऽप्रसिद्धत्वात् । प्रत्ययादर्शनस्यैव लुक्छब्दाभिधेयत्वात् । स्यादेतत् । भ्भि इत्यस्तु सूत्रम् । नामैकदेशग्रहणे नामग्रहणम् । यथा भीमो भीमसेनः सत्यभामा भामेति । आकारस्तु वास्वित्यतोऽनुवर्तते । एवं भिसा भस्य आकारे कृतेऽपीष्टं सिध्यति।यद्वाभ इति सूत्रमस्तु।भि इति तुपूर्वसूत्रादनुवर्तनीयम् । तच्च स्वरूपंपरं शब्दाधिकारात्।इत्थं च भि इति समुदायो भः स आकारो भवतीत्यर्थः। अत्रार्थे भागेरिति लिङ्गदर्शनम् । उच्यते।इमौ यकाराकारौ योगविभागेन स्यादिकरणं भित्वान्यस्माद्विधीयेते।अतः प्रौहः।स्वैरी।अक्षौहिणी।यापयति।शाययति।छाययतीत्यादि सिद्धम्।पादेर्युक्।गवादेरिति च न वक्तव्यं भवति ए एस्भीत्यस्यपवादोयम्।प्राप्ते एत्वेऽस्यारम्भात्। स्याद्यधिकारात्स्यादिसम्बधी भिस् गृह्यते। तेन ब्राह्मणभिस्सा ओदनं भिस्सटेत्यादौ नातिप्रसङ्गः । स्थाल्यादिष्वधोभागे दग्धान्नम् । अतो भिस ऐसिति पाणिनीयसूत्रस्थाने अतो भिसेस इति अतोभ्य इति आतो भेरिति वा सूत्रयितुमुचितम् । भिसैस्वेवेति कालापसूत्रस्थाने भ्य इत्येवोचितम् । यत्तु वाग्रहणं पक्षान्तरं सूचयति । एसुऐस्वेति । तन्न । एसैसोर्मात्रालाघवाभावात् । निर्जरसैरिति रूपस्यासाधुत्वात्। चक्रिणा निर्जरैरित्येव सन्निपातपरिभाषाविरोधादित्युक्तत्वात्॥**एस्भिबहुत्वे॥** अकार एकारो भवति बहुत्वे वर्तमानेषु सकारभकारादिषु स्यादिषुपरतः । देवेभ्यः । अकार इति किम्। हाहाभ्यः।बहुत्वे किम्।देवस्य । ननु सन्निपातपरिभाषयात्रैत्वं न स्यात्।नैवम् । द्वयोरिति लिंगेन।तस्या अनित्यत्वोपगमात् ।

अत्रेदमवधेयम् । स्मिग्रहणं मास्तु । देवानामित्यत्र परत्वान्नामीति दीर्घो बाधकः । देवानित्यत्र तु शसीति । एत्वस्यावकाशः । देवेभ्यः । देवेषु । दीर्घस्यावकाशः हरीणां भानूनां देवानां देवानित्यत्रोभयप्रसङ्गे परत्वाद्दीर्घः । देवा इत्यत्रातिप्रसङ्गोऽवशिष्टः तद्वारणार्थं रैस्भीत्यनुवर्तनीयम् । नचानन्तरत्वादद्भीत्यतो भीत्यनुवर्ततेति वाच्यम् । इच्छार्थेष्विति ज्ञापकात् । यद्वा मास्त्वनुवृत्तिः । देवा इत्यत्र सवर्णे दीर्घ इति दीर्घो भविष्यति । नच परत्वादेत्वं बाधकं प्रायशो दृश्यतामिहेत्यनेन क्वचित्पूर्वेण परबाधस्याप्युपगतत्वात्। अत्रार्थे जबा जमा इति निर्देशः प्रमाणम् । ननु च यद्यपि त्रिकं नामार्थ इति पक्षे स्याद्यनुवृत्तेर्न प्रयोजनमस्ति । अदन्ताद्धातोः सीष्टादौ परत्वादिडल्लोपयोः प्रवर्तनात् । तथापि चतुष्कं पंचकं वा नामार्थ इति पक्षे संख्यायां नाम्नो वृत्तेः सत्त्वात् । देवभासः देवसेवका इत्यादावतिप्रसङ्गभङ्गार्था स्याद्यनुवृत्तिरपेक्षिता यथा तथा देवनम्रा देवमान्याःरामकथका इत्याद्यतिव्याप्तिवारणार्थं स्भीत्यावश्यकमिति चेत् । मैवम् । विहितविशेषणाश्रयणात् । नाम्नो विहिते बहुत्वे वर्तमाने परे एत्वमित्यभ्युपगमात् । समासादौ पूर्वोत्तरभागयोरनर्थकत्वाच्च।तस्माद्द्व्यर्थमिदम् । अन्ये तु विहितविशेषणाश्रयणे तात्पर्यग्राहकं स्भीति पुनर्ग्रहणसामर्थ्यात् । माधवस्तु बहुत्वविशेषणार्थं पुनः स्भीत्युक्तं तेन बहुत्वे वाच्ये सति विहितो यः सकारो भकारश्च तस्मिन्परतो नाम्नोऽत एत्वम् । तेन सोमं सुनोतीति सोमसुत्।तमाचक्षते सोमसयंति ते सोमसय इत्यत्र नेत्याह । तन्न । स्याद्यनुवृत्त्यैतद्वारणात् । समुदायस्य विहितत्वेपि सकारभकारयोरतथात्वाच्च । अपरे तु रैस्भि इत्यत्र स्भीत्यस्मिन्तृतीयो नकारोपि मध्ये निर्दिश्यते । तेन प्रराणामित्यत्र नुटि कृते नादौ स्यादौ परे आत्वं सिद्ध्यति । अत्रार्थे इदं स्भिग्रहणमेव लिङ्गं तस्यात्रानुवृत्तौ देवानामित्यत्राप्यात्वं स्यात् । नामीति तु हरीणामित्यादिविषयं स्यात् । अतस्तन्निवृत्त्यर्थं पुनः स्भिग्रहणमित्याहुः । भिसि त्वत्वस्य निरवकाशत्वादेवास्याप्रवृत्तिः नित्यान्तरङ्गनिरवकाशानि हि बलवन्तीति माधवः । अन्ये तु नित्यत्वादेत्वं भवति

एत्वे कृते भूतपूर्वमकारमाश्रित्यात्वप्रवृत्तिः स्यादित्याहुः । बहुवचने झल्येदिति पाणिनीयसूत्रस्थाने बहुत्वे स्भेदित्युचितम् । धुटि बहुत्वे त्वे इति कालापसूत्रस्थाने बहुत्वे स्भे इत्युचितम् । यत्तु शब्दो वा निवृत्त्यर्थ इति । तन्न । अन्यत्र वा निवृत्त्यर्थं यत्नानारम्भात् ॥ **ओसि** ॥ अकार एकारो भवत्योसि दिवयोः । अत्र स्याद्योस् गृह्यते । तेन आ उस्रः ओस्रः । देव ओस्र इत्यादौ नातिप्रसङ्गः । लक्षणप्रतिपदोक्तपरिभाषयाप्येतत्समाधातुं शक्यम् । न्यायमूला चेयं परिभाषेत्युक्तम् । अदिति किम् । हर्योः । तपरः किम् । हाहौः । ओसीति किम् । देवस्य ओसिचेति सूत्रे चकारो व्यर्थः ॥ **ङसिरत्** ॥ अदन्तान्नाम्नो ङसिरद्भवति ॥ देवात् । अतः किम् । वातप्रम्यः । ग्लावः । तपरः किम् । हाहाः । अथङकारः किमर्थः । इकारस्तु ङसो भेदकः स्याद्यधिकारात्तत्संबंध्यसिर्ग्रहीष्यते । सत्यम् । शक्यमेवं कर्तुम् । ननु ङसेरदादेशे कृते यस्य लोप इत्यल्लोपः प्राप्नोति । मैवम् । अकारविधानेन स्यादौ यस्य लोपाभावस्य ज्ञापितत्वात् । अन्यथा ङसेस्तङसिस्त इति वावक्ष्यत् । कार्ये ह्रत्योः सिस्योः शेषा इत्यादिनिर्देशाद्वा स्यादौ न यस्य लोपः । यद्वा तद्धितप्रकरणादीपीति सूत्रारम्भाच्च । नात्र यस्य लोपः तर्हि ङसेस्त इति कुतो न सूत्रितमिति चेत् लाघवे विशेषाभावात् । यद्वा ज्ञापनार्थमिदमेकवर्णोऽप्यादेशः । क्वचित्षष्ठीनिर्दिष्टस्य सर्वस्य भवतीति । यदि तु पूर्वोक्तज्ञापकैरेवास्यार्थस्य सिद्धिः स्वीक्रियते तदा शक्यमेव कर्तुम् । टाङसिङसामिनात्स्या इति सूत्रे आदिति छेदो व्यर्थः । निर्जरसादिति रूपस्याप्यसाधुतेत्याह । फणी नः । ङसिरादिति कालापसूत्रे असिरदित्युचितं स्याद्यनुवृत्त्या स्याद्यसेरद्विधानात् । सरस्वत्या तदुपहासार्थं ङकार उपात्तः । अतिजरसादिति रूपमप्यसाधु । पाणिनीयसूत्रेऽपि ङसेर्ङकारस्त्यक्तुं शक्यः । पूर्वोत्तरसाहचर्याच्च नातिप्रसङ्गः । **ङस्स्य** ॥ अदन्तान्नाम्नो ङस् स्यो भवति । देवस्य । अदन्तादिति किम् । वातप्रम्यः । मरुतः । तपरः किम् । हाहाः । पूर्वस्य स्वरात् ह्रस्वादिति लिङ्गात्तदन्तविधिः । आदिति लिङ्गात्तस्यापि । अः वासुदेवः आत् अस्य कश्चिदित्यत्र समानादित्यनुवर्त्य ह्रस्वपरतां तस्याऽऽश्रित्य व्याचष्टे । ह्रस्वात्समानादिति

इदितोस्तु ङितीति बाधकम् । ऋतस्तु ऋतो ङ उः लकारस्त्वप्रसिद्ध एवेति परिशेषाददेव लभ्यते यद्यपि तथापि बकबन्धनप्रयासोयं सन्निहिताकारानुवृत्त्यैवेष्टसिद्धेः । ङकारस्तु जस्यतिप्रसङ्गवारणाय स्वरा इत्यादिनिर्देशाश्रयणे तु स्पष्टार्थः शस्यतिव्याप्तिवारणार्थो वा । न च लोपनकारौ बाधकौ स्याताकमिति वाच्यम् । समानांतरे चरितार्थयोस्तयोः परत्वादनेन ङसिचरितार्थेन बाधप्रसङ्गात् । **टेन** ॥ अतः परष्टा इनो भवति । देवेन । अतः किम् । कर्त्रा । भवता । तपरः । किम् हाहा । टा किम् । देवौ । ननु टानेत्येव सूत्र्यताम् । ए इत्यनुवर्तनीयम् । तथा चातः टा नो भवत्यतश्चैकार इत्यर्थो लभ्यते । मैवम् । लाघवाविशेषाभावात् । अतिजरसिनेति रूपस्यासाधुत्वात् । अथ टकारः किमर्थः । एनेत्येव सूत्र्यताम् । आ इनेति छेदः स्याद्यधिकाराच्च नातिप्रसङ्गः । आमि नुटा बाधादानर्थक्यादप्रत्ययत्वाच्चाकारस्य नातिप्रसङ्गः । एवं तर्हि स्पष्टार्थः । अर्थवत्परिभाषाया अनित्यत्वज्ञापनार्थो वा । तेन वाग्मि तेजस्वीत्यादिषु इनामिति दीर्घः सिध्यति । माधवस्तु टाङसिङसामिनात्स्या इति वाच्ये पृथग्योगकरणं बालावबोधार्थं लाघवार्थं चेत्याह । पाणिनीयसूत्रे आसिङसां नात्स्या इति पठितुं युक्तम् । साहचर्याच्च नातिप्रसङ्गः । आङिचाप इत्यत्र योगविभागादेत्वम् । अनाप्यक इत्यत्र नकारप्रश्लेषादिकं पतञ्जलिनैव कृतमेव । इन टा इति कालापसूत्रं टेन इति वा एन इति वा पठितुं युक्तम् । **ङे अक्** ॥ ङे इत्यविभक्तिको निर्देशोऽसंदेहार्थोनुकार्य्यानुकरणयोरभेदाश्रयणात् । ङेरित्युक्तौ तु चतुर्थ्येकवचनस्येदं ग्रहणं सप्तम्येकवचनस्य वेति सन्देहः स्यात् । कार्याय स्वरे इति लिङ्गानुसरणे तु नास्ति सन्देहः । अदित्यनुवृत्तेर्नेह । वातप्रम्ये । तपरत्वात् । ङेहाहै । इति किम् । देवौ देवे । अथाक्किकृते तस्यैदोतोत इति लोपशू प्राप्तो विधानसामर्थ्यान्न भवति एतोऽपदान्तत्वाद्वा । नह्यकि कृते एतः पदान्तत्वं संभवति । अविभक्तिकपक्षे ङकारः सुत्यजः स्याद्यधिकारान्नातिप्रसङ्गः । एरगिति पक्षे तु ङौ सन्देह उक्तलिङ्गान्निरस्यः । कश्चित्त्वत्राकूङे इति पठित्वा अगिति योगविभागेन आवृत्त्या वा प्रकरणभेदेनान्यत्रापि क्वचिदग्विधेयः । तेन गवादेरक्षादा-

वगिति सिध्यतीत्याह । ङेर्य इत्यत्र तु अर्द्धमात्रागौरवं दोषः ॥ सर्वादेः स्मट् ॥ अदन्तात्सर्वादेर्ङे इत्यस्य स्मडागमः । सर्वस्मै । अदन्तादिति किम् । भवते । त्वते । तपरत्वं स्पष्टार्थं आबन्तात्तु परत्वाद्यडादि ना बाधात् । सर्वादेरिति किम् । रामाय । येननाप्राप्तन्यायेनाकोपवादोऽयम् । यद्यपि देशभेदेनोभयमपि सम्भवति तथापि सत्यपि संभवे बाधनं भवतीत्युपगम्यते । सर्वआदिर्यस्य स सर्वादिः । तद्गुणसंविज्ञानोयं बहुव्रीहिः । तस्यान्यपदार्थस्य गुणानां विशेषणानां वृत्तिपदार्थरूपाणां कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञानः । तच्छब्दप्रयोगेणान्यपदार्थप्राधान्यं लभ्यते । एवं चित्रा गावो यस्य स इत्यादावपि । अन्यथा हि यस्य गावश्चित्रा इति गोशब्दार्थप्राधान्यं स्यात् । नचैवंविधेर्थे बहुव्रीहिरिष्यते । आदिशब्दस्यावयववाचित्वादनुद्भूतावयवभेदः समुदायः समासार्थः । तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादानर्थक्यात्तदंतेष्विति न्यायेन तदवयवेषु प्रवर्तमानं कार्यमविशेषात्सर्वशब्देपि प्रवर्त्तेत इति युक्तं तद्गुणसंविज्ञानत्वम् स्यादेतत् । संज्ञोपसर्जनीभूतेष्वतिप्रसङ्गः । सर्वो नाम कश्चित्तस्मैसर्वाय । अतिक्रान्तः सर्वमतिसर्वस्तस्मै अतिसर्वायेत्यादिषु स्मडादिः प्राप्नोति । तन्नामकश्चित् अतिक्रांतस्तमतितत् इत्यादिषु सर्वाद्यंतर्गणत्यदादिकार्यं त्यदादेष्टेर इत्यादि प्राप्नोति । अन्यमतिक्रान्तमत्यन्यम् । अतिकतरमित्यादिषु श्त्वन्यादेरिति प्राप्नोति । ननु गणे सर्वतदित्यादय एव पठिता न त्वतिसर्वातितदित्यादिसमुदायास्तत्कथन्तेष्वतिप्रसङ्ग इति चेत् । तदन्तग्रहणस्यात्रेष्टत्वादन्यथा परमसर्वस्मै इत्यादिकमपि न सिध्येदिति । उच्यते । सर्वादेरित्यावर्त्यते तत्र चादिशब्दः प्रकारे । प्रकारश्च सादृश्यं तच्च सर्वार्थाभिधानसामर्थ्यम् । तथाच सर्वार्थाभिधानसामर्थ्यविशिष्टानामेव गणे पाठस्यावश्यकतया प्रकारान्तरजुषां च पाठे प्रमाणाभावादेव विशेषेऽवस्थितानां संज्ञानामुपसर्जनानां च सर्वादित्वमेव नास्ति । तेन तेषां सर्वादिकार्यमन्तर्गणकार्यं च न भवति । यद्धि स्वरूपमात्राश्रयं कार्यं तन्न तु गणपाठ-

मपेक्षते यथा युष्मदस्मदोस्त्वमहमित्यादि । तदुपसर्जनत्वेपि भवत्येव । न चैवं युष्मदिन्वास्मदि चेत्यत्र त्वन्मदादिप्रसङ्गः । लोकप्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः । 'अभिव्यक्ते पदार्था ये लोके वेदे च विश्रुताः । शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिष्विति' न्यायात् । यद्वा अनुकार्यानुकरणयोर्भेदात्तत्कार्यस्य वैकल्पिकातिदेशाभ्युपगमादप्रवृत्तिः । स्यादेतत् ॥ अतः ॥ अनास्मिन्ननन्या अनेष इत्यादावप्यत्वसत्वास्मिन्नादीनि न स्युः । अतिसर्व इत्यत्रैवोपसर्जनत्वात् । तथा च अब्राह्मण इत्यादेर्ब्राह्मणभिन्न इत्यादिक्रमेण पूर्वपदार्थप्राधान्येन विवरणं कुर्वंति । नैवम् । वैयाकरणमते नञ्समासस्योत्तरपदार्थप्राधान्यमेव । तथाहि । आरोपितत्वं नञर्थः । तथा च मायामनुष्यमायामृगव्याजनिशाकरकपटब्राह्मणादिशब्देभ्य इवारोपितो मिथ्याभूतोयं ब्राह्मण इत्येवं शब्दबोधपर्यवसाने ब्राह्मणभिन्न इत्यादिकमार्थिकार्थविवरणं न तु शाब्दोऽयमर्थः । अत एव चौत्सर्गिकी तत्पुरुषस्योत्तरपदार्थप्रधानतापि निर्वहति । अत्र चतुर्णामिति निर्देशोप्यनुकूलः । यद्वा सर्वादेरिति नावर्तते । नायमादिशब्दोऽवयववाची । किंतु प्रकारवाची । तथा चायमर्थः । सर्वाभिधानसमर्थादकारांतान्नाम्नः परस्य ङे स्माडिति । नन्वेवं त्यदादेष्टेर इत्याद्यन्तर्गणकार्य्यं सिध्यतु । सर्वादेः स्मडित्यादिकं तु कृत्स्नसकलादिशब्देष्वातिव्याप्तं स्यादिति चेन्न । गणपाठसामर्थ्यात्तत्र पठितानामेव ग्रहणात् । एवं हि संज्ञोपसर्जनीभूतेषु नातिव्याप्तिः । मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्ययो नामुख्ये इति न्यायेन वा मुख्यो हि लोकप्रसिद्धोऽर्थो विपरीतस्त्वन्योऽभिव्यक्तपदार्था ये इति न्यायात् । न चासौ न्यायः पदकार्येष्विति वाच्यम् । विशिष्टरूपोपादाने सर्वत्र तत्प्रवृत्त्यभ्युपगमात् । यद्वा अर्थद्वारकं विभक्तिविशेषणमाश्रयणीयम् । सर्वादेरिति न पञ्चमी किं तु षष्ठी । सर्वाभिधानसमर्थसर्वाद्यर्थसमवेतसंख्याकारकाद्यभिधायिनां ङे प्रभृतीनां स्मडादयः । यद्वा विहित विशेषणमाश्रयिष्यामहे । सर्वाभिधानसमर्थसर्वादेर्विहितानां ङेप्रभृतीनां स्मडादयः । एवं हि संज्ञोपसर्जनीभूतेषु नातिव्याप्तिः । तत्र विशेषेऽवस्थि-

तिर्न सर्वार्थाभिधानसामर्थ्यम् । इत्थं च सर्वादीनि सर्वनामानीति सूत्रं न कर्तव्यम् । उक्तरीत्या निर्वाहात् । न बहुव्रीहाविति पाणिनीयसूत्रं बहुव्रीहाविति कालापसूत्रमपि नारम्भणीयम् । अतिसर्वातितदित्यादिगौणवारकं यत्तेनैव गतार्थत्वात् । बहुव्रीहिसमर्थालौकिकवाक्ये निषेधार्थेनोपयुज्यते। अकृतव्यूहपरिभाषया निमित्तापायन्यायेन वा गतार्थत्वात् । उक्तन्याययोरनित्यत्वेन नत्वकात्पितृक इत्यादिरूपस्येष्टत्वे तु सुतरां व्यर्थं न तृतीयासमासे द्वंद्वे इत्युभयमारम्भणीयमेव । सर्वाद्यर्थस्य प्राधान्यात् । विभाषा दिक्समासे बहुव्रीहावित्यत्र बहुव्रीहिग्रहणं व्यर्थम् प्रतिपदोक्तस्य दिङ्नामान्यन्तराल इति विहितस्य ग्रहणाद्द्वन्द्वस्य निवारणात् । सर्वनाम्नः स्मै इत्यस्य सर्वनाम्नः स्माडिति सूत्रणीयम् । सर्वेषां नाम सर्वनामेति योगाश्रयणान्न संज्ञोपसर्जनयोरतिप्रसङ्गः । गणपाठसामर्थ्याच्च । निःशेषसकलकृत्स्नादिष्वपि । एवं च स्मै सर्वनाम्न इति कालापसूत्रस्थाने स्मट्सर्वनाम्न इति सूत्रं पाठ्यम् । सर्वादयश्च पंचत्रिंशत् । तत्र सर्वविश्वशब्दौ कृत्स्नपर्यायौ । उभशब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः। तर्हि किमर्थमसौ सर्वादिषु पठ्यते । न ह्यस्मात्स्मडादयः संभवंति । उच्यते । उभकाविति रूपसिद्ध्यर्थं गणेस्मिन्पठ्यते । तथाहि । उभशब्दस्तावद्द्विवचनमात्रविषयः ञित्स्वरितेत उभे इति लिङ्गात् । समासतद्धितादौ तु द्विवचनलोपान्नासौ प्रयुज्यतेऽनभिधानात् । किंतु उभयशब्दः । उभाभ्यां पक्षाभ्यां विनीता निद्रा इति विग्रहे उभयपक्षेत्यादिप्रयोगदर्शनात् । एवं स्थिते उभयत उभयत्रेत्यादाविवाकप्रत्ययेऽप्युभय एव प्राप्तः । अके तु उभकाविति सिद्ध्यति तद्धितस्य मध्यपतितत्वेन द्विवचनपरत्वान पायात् । यद्वा अकार्थ एवास्य सर्वादिषु पाठस्तत्सामर्थ्यादुभकाविति सिध्यति । अन्यथा पाठवैयर्थ्यापत्तेः । अव्ययसर्वादीनां टेः प्रागक इत्यस्य वचनस्य सत्त्वे उभशब्दस्य सर्वादिषु पाठ एव लिङ्गम् । उभयशब्दस्तु अवयवद्वयारब्धेऽवयविनि वर्तते।उभयो मणिरिति यथा श्यामलोहिताभ्यामवयवाभ्यामारब्ध इत्यर्थः । तिरोहितावयवभेदत्वादेकवचनम् । 'उभयमेव वदंति मनीषिणं इत्यादौ समुदायघटितः समुदायोऽर्थः तिरोहितावयवभेदत्वं तुल्य-

मेव। यदा तु वर्गद्वयारब्धे महासमुदाये वर्त्तते तदा वर्ग्यभिन्नेन वर्गद्वयेन-सहाभेदविवक्षया उद्भूतावयवभेदत्वात् बहुवचनान्त एव!! उभये देवमनुष्याः॥ 'तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपा' इति। यथा तु यदा भागुक्तरीत्या उभयो मणिरिति व्युत्पाद्य तादृशमेव मणिद्वयं सह विवक्ष्यते तदा द्विवचनं प्राप्नोति। अनभिधानान्न भवतीत्येके। अनभिधाने प्रमाणाऽभावाद्भवत्येवेत्यन्ये। अत्र कश्चित् उभयेत्यर्थपरो निर्देशः तेन 'द्वयेषामपि मेदिनीभृताम्' इति माघप्रयोगः समर्थितो भवतीत्याह। तन्न। अर्थपरतायां प्रमाणाभावात्। महाकविप्रयोग एव मूलमिति चेन्न। तैरेव तद्विपरीतस्य बहुशः प्रयोगात्। तथा च माघः। 'गुरुद्वयाय गुरुणोरिति'। कालिदासोपि। 'अस्मिन्द्वये रूपविधानयत्न इति'। श्रीहर्षश्च। 'अये ममोदासितमेवजिह्वया द्वयेऽप्येतस्मिन्ननतिप्रयोजन' इति। तस्मात् द्वयं द्वैधमिषंति गच्छन्तीति द्वयेषः तेषां द्वयेषामिति इषेः क्विबन्तस्य रूपं बोध्यम्। कश्चित्तु चाक्रवर्मणव्याकरणे द्वयशब्दस्यापि सर्वनामताभ्युपगमात्तद्रीत्याऽयंप्रयोग इत्याह। अन्यो भिन्नार्थः। अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्विबहुविषये निर्द्धारणे वर्तेते। तत्रान्यतमशब्दस्य गणपाठाभावान्न सर्वादिकार्यं नापि स्त्वन्यादेरित्याद्यंतर्गणकार्यम्। शाकटायनस्तु अन्यतरान्यतमौ डतरडतमांतौ व्युत्पादितवान्। तन्मतेऽप्यन्यतरशब्दपाठस्य नियमार्थत्वादन्यतमशब्दोन्तर्गणकार्यं सर्वकार्यं च न लभते। इतरस्त्वन्यनीचयोः। डतरडतमौ प्रत्ययौ तद्ग्रहणात्तदन्तानां सर्वादिषु ग्रहणम्। केवलयोः प्रयोजनाभावात्। कतरकतमयतरयतमादयस्ते। त्वत् त्व इत्यन्यपर्यायौ आद्यस्तांन्तः। त्वदधरमधुरमधूनि पिबंतामिति तस्य प्रयोगः। त्वत अन्यस्या अधर इति षष्ठीतत्पुरुषः। न तु तवाधरस्त्वदधर इति। 'पश्यति दिशिदिशि रहसि भवन्तमि'ति पूर्ववाक्येन सहान्वयापत्तेः। एतस्यापि पाठोकार्थ एव। नेम इत्यर्द्धे। समः सर्वपर्यायः तुल्यपर्यायस्तु नेह गृह्यते। 'समः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः'। पूर्वपरावरोत्तरापराः पञ्च दिक्कालयोस्तदवच्छिन्ने च दक्षिणाधरशब्दौ दिशि तदवच्छिन्ने च न दक्षिणः प्रवीणः। अधरे ताम्बूलरागः। उत्तरे प्रत्युत्तरे वा शक्त इत्येते गृह्यन्ते। कथं तर्हि। 'तथा परेषां

युधि चेति पार्थिवः'। अपरे प्रत्यवतिष्ठन्ते इत्यादि च। अत्राहुः। देशवाचिनोरेवपरापरशब्दयोरुपचाराच्छत्रौ वादिनि च प्रयोगः । नन्वेवमुपसर्जनता न हि लाक्षणिकत्वमुपसर्जनत्वम् । किंतु स्वार्थविशिष्टार्थान्तरसंक्रमः । स तु न समासादिप्रविष्टस्यापि प्रधानस्य न वा लाक्षणिकस्यापि समासादिकमप्रविष्टस्य । तद्वयोर्हं सोऽसौ योऽसौ सोहमित्यत्र भागत्यागप्रविष्टस्य अत एव तस्माद्वह्निमानित्यादौ ज्ञानलक्षणपक्षेपि सर्वादिकार्यप्रवृत्तिरिति । वस्तुतस्तु । अत्र शत्रुत्वादिप्रकारको बोधोऽनश्वादिशब्देभ्यो भिन्नत्वादिरिवार्थिकः । परेषां अपरे इत्यादेः शब्दात्तु देशान्तरनिष्ठत्वादिप्रकारक एवेति । 'दिशः सपत्नी भव दक्षिणस्या' इत्यादावपि सर्वादिकार्य्यं भवत्येव । न च संज्ञात्वान्निषेधः । आधुनिकसंकेतो हि संज्ञा न च दिक्षु सास्ति कुरुषु तु सास्ति तेनोत्तराः कुरवः । अन्येतु दिक्षु चिरन्तनः संकेतः कुरुषु त्वाधुनिक इत्यत्र प्रमाणं मृग्यम् । सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दप्रवृत्तेरित्याहुः । 'स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति चत्वारोर्थाः स्वशब्दस्य । तत्रात्मात्मीययोरेव सर्वादित्वम् । 'अंतरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये' छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि च' त्यन्तरशब्दस्यार्थाः । तत्र बहिर्योगपरिधानयोरेव सर्वादित्वम् । बहिरित्यनावृतोऽनाच्छादितः बाह्यं चोच्यते । तत्राद्ये अंतरे अंतरा वा गृहा नगरबाह्याश्चाण्डालादिगृहा इत्यर्थः।द्वितीये नगराभ्यन्तरगृहा इत्यर्थः।सत्यपि बहिर्योगे पुरीविषयतायां न सर्वादित्वम्।अंतरायां पुरिप्राकाराद्बाह्यायां तदन्तवर्तिन्यां वेत्यर्थः। सलिंगः संबोधनव्यभिचारी च भवत्यर्थः । "भातेर्डवतुः" इत्युणादौ व्युत्पादितोऽयमुकारानुबन्धः 'आसर्वादेः' इत्यात्वमकश्च प्रयोजनम्।भवादृक् भवकान्।त्यदतदौ पूर्वोक्तपरामर्शकौ।तत्राद्यश्छांदस इति केचित् । यत् उद्देश्यसमर्पकः । एतदिमौ प्रत्यक्षोपस्थिते।अदस व्यवहिते । "एकोऽन्यार्थे प्रधानेऽल्पे प्रथमे केवले तथा । साधारणे समाने च संख्यायां च प्रयुज्यते"।संख्यायामेकवचनान्त एव द्विशब्दो द्वित्वविशिष्टोऽलिंगः संबोधनैकविषयश्च युष्मदर्थः । अस्मच्छब्दस्तूच्चारयित्रर्थः । किं शब्दः प्रश्ने आक्षेपे च।माधवस्तु।नन्वस्मिन्ग्रंथे नान्यत्र गणः पठ्यते।तथा॥गर्गादेर्यः।

नडादेरायनणित्यादि। ननु पठ्यंतपि चवाहेति। नचैवं सर्वःपठ्यते सर्वोपि पठ्यंत प्रपराअपेत्यादिः अस्ति तत्र पाठे प्रयोजनं किमुपसर्गसंज्ञाविधानं नहि अज्ञाते संज्ञिनि संज्ञा शक्यते कर्तुं तर्हि इहापि प्रयोजनं भविष्यति किं विशिष्टार्थानां पाठः। पठितानामेव सर्वादिकार्यम्। तदुक्तम्। "सर्वादिः सर्वनामाख्यो नचेद्गौणो थवाभिधा। पूर्वादिश्च व्यवस्थायां समो तुल्येऽन्तरोऽपुरि। परिधाने बहिर्योगे स्वोऽर्थज्ञात्यन्यवाच्यपि" इत्याह। एते सर्वादयस्त्रिलिङ्गाः। तृतीयासमासे तृतीयासमासार्थवाक्ये द्वंद्वे च सर्वादिकार्यं नेति वाच्यम्। अन्यथा तदन्तग्रहणस्योक्तत्वेनातिप्रसङ्गः स्यात्। तीयप्रत्ययान्तस्य ङित्सु सर्वादिकार्यं वेति वक्तव्यम्। उभयं न वक्तव्यम्। योगविभागात्सिद्धम्। सर्वादेः परस्यामो नुट्। ङसिरत्। ङेअक् च भवति। मासपूर्वाय मासेन पूर्वाय पूर्वपराय। अवरोत्तराय। वर्णाश्रमेतराणां ततः स्मट्। अदन्तान्नाम्नः परस्य ङेः स्मडागमो वा। द्वितीयस्मै-द्वितीयाय। तृतीयस्मै-तृतीयाय। सर्वादेः स्मडित्येकयोगश्च। तस्योक्त एवार्थः। तन्त्रादिना चोक्तार्थसङ्ग्रहः कार्यः। चेत्यनुवर्त्य व्यवस्थितविकल्पं चाश्रित्य वा समाधेयम्। उक्तकल्पनाया इष्टसिद्ध्यर्थत्वादतिप्रसङ्गो नोद्भाव्यः। स्मै सर्वनाम्न इति कालापसूत्रम्। स्मट् सर्वादेरिति कर्तुं युक्तम्। अत्र सूत्रे लाघवाभावेप्युत्तरसूत्रे तस्य सत्त्वात्। सकलायेत्यादावतिव्याप्तिवारणाय गणपाठोऽवश्याश्रयणीयः। सर्वादेः सर्वनाम्न इति। इत्थं च सर्वादेरित्येव युक्तम्। न तु सर्वनाम्न इति। अतिसर्वाय। प्रियविश्वायेत्यादावतिप्रसङ्गस्तूक्तरीत्या वारणीयः। 'सर्वनाम्नः स्मै' इति पाणिनीयसूत्रस्थाने सर्वादेः स्मडित्येव युक्तम्। संज्ञोपसर्जनयोस्तु पाठात्पर्युदासः। **अतः**। अदन्तात्सर्वादेः परस्य ङसेरादेशस्यातः स्मडागमः। विकल्पस्य व्यवस्थितत्वेन पूर्वादिनवभ्यस्तीयप्रत्ययान्ताच्च विकल्पोऽन्यस्मात्सर्वादेर्नित्यम्। ननु ङसेरादेशस्यातो ग्रहणमित्युक्तम्। तत्र किंमानम्। तपरस्यैवेदं ग्रहणं किं न स्यात् तथा च सर्वादेः परस्याकारस्य स्मडागम इति लभ्यते मैवम्। ङसिरादित्यतो ङसिरित्यनुवर्त्य विपरिणामेन ङसेरतः स्मडिति व्याख्यानमेव मानम्। नचैवमपि ङसेरकारस्येत्यर्थोस्तु स्वरूपग्रहणे प्रमाणाभावात्। तथाच। नित्यत्वात्परत्वाच्च अदादेशात्पूर्वं स्मडागमे कृतेऽदादेशो

न स्यात् । अदंतान्नाम्नोङसे परत्वाऽभावात् । जायमानो वा अत् स्मट्स-हितस्यैव ङसः स्यादितिवाच्यम् । तस्मादिति लिंगाददादेशस्यैवातो ग्रहणं न तपरस्याऽकारस्येति निर्णयात् । संपूर्णं सूत्रमेवानुवर्त्य ङसेरदादेशस्या-कारस्य स्मडितिव्याख्येयम । अन्ये तु ङसिरदिति विहितस्यादेशस्यैवाय-मनुवादो न तु तस्य सूत्रस्यात्रानुवृत्तिः । नचाकारमात्रस्य ग्रहणम् । अत्रार्थे लिंगं तस्मात् । पूर्वस्य । उभये इति । तपरस्य ग्रहणे ह्येते निर्देशा नोपपद्येरन्नित्याहुः । अस्मिन्पक्षेऽदन्तादित्यपि नापेक्षितम् । अदा-देशस्य तत एव संभवात् । माधवस्तु इहात इति । नाकारस्य ग्रहणम् । अद्दीत्यतोऽनुवृत्त्यैव सिद्धेः । न च वाच्यं तत्सर्वादिसंबद्धमिति विभक्ति-विशेषणायेदं स्यात् । सर्वादेरकारान्तात्परस्य विभक्तेरकास्येति । एवमपि तपरत्वस्यानुपपत्तेः । न च षष्ठीबहुवचनव्यावृत्त्यर्थं तत्स्यात् । तत्र परत्वात्सुटिकृते न हि द्वयोरादिलिङ्गयोः समुच्चयो घटत इतिस्मटः प्राप्त्यभावात् सुटा व्यवधानाच्च । अतः सामर्थ्याल्लाक्षणिकस्यापि ङसे-रत एव ग्रहणमित्याह । यद्यपि प्रथमं ङसेरतं कृत्वा तस्य स्थानिव-द्भावेन ङसित्वमाश्रित्य सर्वादेः स्मडित्यत्र ङसिग्रहणमनुवर्त्य तच्च वाक्यभेदेन सम्बन्ध्य अदंतात्सर्वादेः परस्य ङसः स्मडिति वर्णयि-तुं शक्यम् । अत्रार्थे तस्मादिति लिङ्गं चास्ति । तथापि स्पष्टार्थमिदं सूत्रमिति दिक् ङसिरादित्यस्य स्थाने अत इति सूत्रं पूर्वसूत्रात्स्मडनुवर्त्त-नात् । अच्चङ्सेरादेशो ग्राह्यः । तस्मात्परा इति लिङ्गात् । ङसिङ्योः स्मा-त्स्मिनाविति पाणिनीय सूत्रस्थानेऽपि अतः ङिस्मिन् इति योगद्वयं कर्त-व्यम् । अतइत्यत्रपूर्वसूत्रात्स्मडनुवर्तनीयः। तस्माच्छस इतिलिङ्गात् ङसेरादे-शोऽद्ग्रहीष्यते ॥ **ङिस्मिन्** ॥ अदन्तात्सर्वादेः ङिस्मिन्वा।सर्वस्मिन्पूर्व-स्मिन् पूर्वे । द्वितीयस्मिन् । द्वितीये । व्यवस्थितविकल्पत्वात्पूर्वादिनव-भ्यस्तीयप्रत्ययान्ताच्च वाऽन्यतोनित्यम् । अत्रार्थे पूर्वेऽव्यये इत्यत्र पूर्व इति निर्देशोऽनुकूलः । स्यादेतत् । इस्मिन्नित्येव सूच्यताम् । न च जश्शसोरिति शौ कृते सर्वाणीत्यादावतिप्रसङ्ग इतिवाच्यम् । तत्र परत्वान्नुमा बाधात् । नुमोऽवकाशः कुलानि । स्मिनः पुँल्लिङ्गे सर्वाणीत्यत्रोभयप्रसङ्गे परत्वान्नुम् ।

नच ङकारं विना इ इत्युच्चारिते इत्वजातिनिर्देशोयमित्यापद्येत । ततश्च ईमौ जसीति कृतेष्वतिप्रसङ्ग इति वाच्यम् । ञित्स्वरितेतउभे उभयेस्वरा इत्यादिलिङ्गात् । इत्वव्यक्तिप्रधानोयं निर्देश इत्यर्थस्य लाभात् । न च सर्वेष्टमित्यादावतिव्याप्तिः । स्यादिभिरिवर्णस्य विशेषणात् । स्यादीनां य इवर्ण इति । एवं तर्हि स्पष्टार्थं ङकारग्रहणम् । माधवोपि । ङकारो जसीत्वक्ष्वीत्वव्यावृत्त्यर्थः । न च विधिसामर्थ्यात्तद्व्यावृत्तिः । विधेः स्मिन्नर्थत्वादौ जसोर्हि स्मिन्निति गौरवप्रसङ्गः । इतः स्मिन्निति कृते कृत्रिमत्वादिसंज्ञस्यैव ग्रहणं स्यात् । अस्तु कृतस्यापि स्मिनस्तद्भावेन लोपः स्यादिति विधिसामर्थ्यात्सप्तम्येकवचनस्यैव ग्रहणं भविष्यति। एवं तर्हि स्पष्टार्थोऽयमित्याह ।ङिस्मिन्निति कालापसूत्रेप्येवं बोध्यं विभाष्येते पूर्वादेरिति कालापसूत्रे वा पूर्वादेरित्युचितं ङसि स्मात् ङिस्मिन्नित्यनयोरनुवर्तनात्।तौ पूर्वादेर्वेति वा कर्त्तव्यम्।ङसिङ्योः स्मात्स्मिनौ इत्यस्य पाणिनीयसूत्रस्य स्थाने अतः ङि स्मिन्निति सूत्रयितुमुचितम् लाघवात् । पूर्वादिभ्यो नवभ्यो वेत्यत्र स्थाने पूर्वादेर्वेत्युचितं गणपाठे एषां नवानामंते वृत्करणस्योचितत्वात् ॥**जसी** ॥ अदन्तात्सर्वादेः परो जस् ईर्वा व्यवस्थितविकल्पितत्वात्पूर्वादेर्नेमाच्च वा । ननु अन्त्यस्यैवायमादेशः कुतो नेति चेन्न विधायकाभावात् । षष्ठीनिर्दिष्टस्यादेशस्यान्त्ये विधानात् । उभये इति लिङ्गाच्च । अथ दीर्घग्रहणं किमर्थं ह्रस्वेप्यादेशे इष्टरूपसिद्धिर्निर्बाधैव । सत्यं इकारान्तरप्रश्लेषार्थं दीर्घनिर्देशः । स च भिन्नो योगः । अदन्तान्नाम्नः परो जस् ईर्वा भवतीति तदर्थः । तेन प्रथमचरमतयडयडल्पार्द्धकतिपयानां वेति सिद्धम् । अत्र तयडयटौ प्रत्ययौ ततश्च तदन्ता ग्राह्याः । द्वितये-द्वितयाः । द्वये- द्वयाः । वर्णाश्रमेतरे वर्णाश्रमेतराः । उभयशब्दस्यायडन्तत्वेपि न विकल्पः । यद्वा । 'उभये स्वराः' इत्यत्रोभयग्रहणं व्यर्थमित्युक्तम् । तन्मण्डूकप्लुत्येहानुवर्तनीम् । तच्च नियमार्थतया व्याख्येयम् । उभये इत्येवरूपं नोभया इत्यपीति । कश्चित्तूभयशब्दोऽव्युत्पन्न एव उभयीत्यत्र नदादित्वादीबित्याह । माधवस्तु । सप्तमीभ्रमव्यावृत्त्यर्थं दीर्घविधिः । ननु तदर्थमिरिति निर्देक्ष्यामः ।

मैवम्।एवमपि हि सूत्रे लाघवं किञ्चिदेव आदेशस्य सान्तनाभ्रमोऽपि स्यात्। यद्वा। विभक्त्यन्तरनिर्दिष्टोऽप्यादेशस्तदन्तस्य स्यादिति ज्ञापकार्थं वा उदात्तार्थं वा दीर्घग्रहणमिति वयमित्याह । तन्न । उभये इति निर्देशेन सर्वभ्रमनिवृत्तिसम्भवात् । यदपि विभक्त्यन्तरनिर्दिष्टोऽपीत्यादि तदपि प्रयोजनाभावान्न ज्ञाप्यम् । उदात्तार्थं वेत्यादियदुक्तं तदपि उदात्तादीनामिहाविधानाद्धेयमेव । यदपि ननु सन्निपातलक्षणपरिभाषयाऽदन्तत्वं सन्निपातेन जातं ईत्त्वं प्रवर्तयति । मैवम् । सत्येव हि सन्निपातलक्षणो विधिरनिमित्तम् । इह तु समकालमेव पूर्वपरयोरेत्वं विधीयत इति नायमस्याविषय इति।तदपि न अकारमाश्रित्य जातो वर्णः कथं तस्य विघातकः स्यादित्यस्याविषयत्वसम्भवात् । विशेषस्त्वेतावान् । यत्स्वयमपि नश्यतीति । अस्तु तस्याकिंचित्करत्वात् । उभय इति निर्देशेन तस्यानित्यत्वाभ्युपगमात् । 'जस्सर्व इ' इति कालापसूत्रे सर्व इति व्यर्थम्।जस इत्युक्ते सर्वस्यैव भविष्यति।निर्दिश्यमानस्यादेशा भवन्तीति न्यायात्।द्वन्द्वस्थाच्चेत्यत्रद्वंद्वादित्युचितम् । निषेधस्य प्राप्तिपूर्वकत्वेन तत्रस्थत्वं लभ्यते यद्वा तृतीयासमासे बहुव्रीहाविति वत्।द्वन्द्व इति सूत्रं युक्तम्।नान्यत्सार्वनामिकमित्यत्र नान्यदित्येवोचितम्।अनन्तरस्येतिन्यायेन नान्यदिति सर्वनाम्न।तस्यैव परामर्शसम्भवात्।वस्तुतस्तु नेत्येव युक्तम्।द्वन्द्वस्थात्सर्वादेः परस्य सर्वनामसम्बन्धिकार्यं नेति व्याख्याने बाधकाभावात् । जस इस्तु पूर्वेण विकल्पित एव । अन्यथा तद्वैयर्थ्यात् । उत्तरसूत्रे एवं व्याख्येयम्। जसः शी इति पाणिनीयसूत्रस्थाने जस ई इति सूत्रयितव्यम्। इ इ इति प्रश्लेषणानेकाल्त्वात्सर्वादेशः।परस्मैपदानामित्यत्र थस्याकारो यथा न च विभाषाङिश्योरिति विशेषणार्थः । वेङ्योरित्युक्तौ ङिसाहचर्यात्सुप ईकारस्य ग्रहणात् । 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अंतरं बहिर्योगोपसंव्यानयोः' इति त्रिसूत्री न कर्तव्या । जसः शीत्यत्र पूर्वादिभ्यो वेत्यनुवर्त्य वाक्यभेदे संबंधनीयम् । यद्वा जसङसिङीनां शीस्मात्स्मिनः । पूर्वादिभ्यो वा औङ आपः शी नपुंसकाच्चेति सूत्रयितव्यम् । सुडामः । सर्वादेः परस्यामः सुडित्युक्ते त्वनाम् । भवतामित्यत्रापि प्राप्नोति । अथ तद्वारणायाद्धीत्यतोऽदित्यनुवर्तते तदावन्तान्न प्राप्नोति।उच्यते अस्शासो-

रस्येत्यतो मंडूकप्लुत्याऽस्येत्यनुवर्तते अतोऽवर्णान्तात्सर्वादेः परस्यामः सुडित्यर्थः। एतदर्थमेव तत्रास्येत्युक्तम्। अन्यथा अत इत्युक्तेऽपि तत्र निर्वाहात्। केचित्तु समानाद्धेरित्यतः समानादित्यनुवर्त्याबन्तस्यापि संग्रहमाहुः। न च सर्वमिच्छन्ति सर्वियस्तासां सर्वियामित्यत्रातिप्रसङ्गः। परत्वादियाबाधात्। अधातोरित्यनुवृत्तेर्वा गौणत्वाद्वा। ऋजवस्तु सुडाम इत्यनन्तरमाप इति सूत्रं पठन्ति। एके तु आप इत्यत्र सुडाम इत्यनुवर्त्य वाक्यभेदेन च संबंध्य च आबन्तात्सेर्लोप आबन्तात्सर्वादेः परस्यामः सुडिति व्याचक्षते। अपरे त्वाहुः। आप इति सूत्रमत्रानुकृष्य वाक्यभेदेन सम्बधनीयम्। अकारांतात्सर्वादेः परस्यामः सुट्। आबन्ताच्च सर्वादेःसुडिति। अन्ये तु त्वद्वच्छब्दौ सर्वादिष्वपठित्वैव कस्याप्यनुवृत्तिमकृत्वा सर्वादेः परस्येत्येतावतैव सर्वासामित्यादि साधयन्ति। अत्र पक्षे भवादृश इत्यादावासर्वादेरित्यात्वं त्वकत् भवकान् इत्यकश्च न सिध्यति। माधवस्तु इहात इत्यनुवर्त्तते तेन सर्वं कुर्वतीति सर्वयन्ति ञिर्डित् इति ञिः टिलोपः। सर्वयन्तीति सर्वक्किप् ञेरिति ञिलोपः। तेषां सर्वामित्यत्र सुड् न भवति। यद्येवं सर्वासामित्यत्रापि न स्यात्। माभूदमुना परेण त्वाप इति सूत्रेण भविष्यति। ननु चात्रात इति मानुवर्त्यतां मारभ्यतां चाप इति सूत्रम्। अविशेषाच्च सुडागम इत्येव सर्वासामित्यत्रापि सुट् भविष्यति। सर्वं कुर्वतां सर्वामित्यत्र तु गौणत्वान्न भविष्यति। सत्यम्। उत्तरार्थं चाप इत्यवश्यं कर्त्तव्यम्। यटोञ्चेत्याबन्ताद्यथा स्यादन्यत्र माभूदिति। मैवम्। यय इति हि तत्र वर्तते यट् चाबन्तादेव विधीयत इति सुडपि तत एव भविष्यति। एवं तर्हि अञ्चेत्यत्वमाप एव यथा स्यादन्यस्य माभूत। एवमेतदर्थं कर्तव्यमिहैव क्रियते सुडाम इत्यत्रात इत्यनुवृत्तिर्दुर्वारेत्याह। तन्न। आपोन्यत्राञ्चेत्यस्य प्राप्त्यभावात्। अस्येत्यनुवृत्त्या सर्वासामिति सिद्धिप्रयोजनाभावादाप इत्यस्य। सुडामि सर्वत इति कालापसूत्रे सर्वत इत्यधिकं उक्तरीत्या निर्वाहात्। नन्वदित्यनुवर्त्यादंतात्सर्वादेर्विहितस्यामः सुडिति व्याख्यायताम्। तथा चाबंतान्नाव्याप्तिरिति चेन्न। तेषां येषामित्यादावव्याप्तेः। आमः सुडिति वक्तव्ये विपरीतोच्चारणं ज्ञापकम्। सुडयं विपरीतादपि तेनोत्तरपूर्वासाम्। उत्तरपूर्वाणामित्यादि सिद्धम्।

यद्वा । सुटः पूर्वोच्चारणं योगविभागार्थं तेन सुडिति योगं विभज्य क्वचिदन्यस्मादपि सुड्भवतीति व्याख्यायोक्तरूपं निर्बाह्यम्।एवं हि अतियुष्माकमत्यस्माकमित्यत्रानेन सुटि सामाकमित्यस्य प्रवृत्तिः सुलभा । अन्ये तु वेत्यनुवर्त्य व्यवस्थितविकल्पं चाश्रित्य दक्षिणपूर्वासामित्यादौ वा सुडन्यत्र नित्यमिति समाधेयम् । सुडिति तु योगं विभज्य तत्सामर्थ्यात्स्यादिप्रकरणं भित्वाऽन्यत्रापि सुड्विधातव्यः । तेन पारस्करः मस्करः हरिश्चंद्रः प्रायश्चित्तमित्यादि सिद्धमित्याहुः । नुडाम इत्यत आम इत्यनुवर्त्य आमेव य आम् तस्य सुडिति व्याख्येयम् । तेनामौ आम्ङेरित्यादिना विहितस्यामो न सुट् युवाम् सर्वस्यामित्यादौ परत्वात्ङितां यडित्यपि समाधानमस्ति।सुडामि सर्वत इत्यस्य स्थाने सुडाम्यादित्येवं सूत्रं युक्तम्।अशब्दस्य पञ्चम्यन्तस्य रूपमादिति।अजादिग्रहणात्केवलग्रहणे सवर्णग्रहणमिति परिभाषणाद्वा सवर्णस्य ग्रहणम् । यद्वा सुडामीत्येतावदेव सूत्रं कार्यम् । आ आमीति छेदः अकारग्रहणं प्रथमांतमनुवर्तते आकारः स्त्रियामाप इति सूत्रविहितो गृह्यते तद्द्वयं पञ्चम्याविपरिणम्यते ॥

'हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ।

रघुनाथाभिधो व्याख्यां स्याद्याद्यंघ्रेर्यथामति'॥ इति विभक्तौप्रथमःपादः ॥

**यटोच्च** ॥ सर्वादेः परस्य यटः सुडागमः सर्वादेश्चाकारादेशः । सर्वस्यै । सर्वादेरिति किम् गंगायै । यट इति किम् । सर्वाभ्याम् । ननु यटः सर्वादेः परत्वं नास्ति आपा व्यवधानादिति चेत्सत्यम् । वचनसामर्थ्यात्तेन व्यवधानं सह्यते आपं विना हि यट एव दुर्लभत्वात्। अड्विधावपि सर्वादेरिति पंचमीति पक्षे सवर्णदीर्घे कृते एकदेशविकृतन्यायेन सर्वादेः परस्य विधीयमानादाप एव भवति अन्यस्यासम्भवात् । षष्ठीपक्षे एकदेशविकृतात्सर्वादेरकारो भवति ऊनाधिकभावेन विकारस्य द्वैविध्यात् । ननु दक्षिणपूर्वस्यै द्वितीयस्यै इत्यादौ सुट् न प्राप्नोति । सत्यम् । वाग्रहणमनुवर्त्य व्यवस्थितविकल्पाश्रयणेन समाधेयम् । यद्वा योगविभागः कार्य्यः यटोत् इत्येको योगः।चेत्यपरः । आद्यस्योक्त एवार्थः । द्वितीये तु यटोदित्यनुवर्तते । यटा त्वाक्षिप्त आप । तथा चाबंतात्परस्य यटः सुड्वापश्चाकारो भवतीत्यर्थः । असार्वत्रिकश्चायम् । पूर्वसूत्रारम्भात् । तेन दिङ्नाम्नां बहुव्रीहेस्तीयप्रत्ययान्ताच्च परस्य यटः सुड्वा ।

दक्षिणपूर्वस्यै-दक्षिणपूर्वायै । उत्तरपूर्वस्यै उत्तरपूर्वायै । द्वितीयस्याम् द्वितीयायाम् । अत्सुटोश्च सहैव प्रवृत्त्यप्रवृत्तीभवतः सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरितिन्यायात् । सुडभावे अत् अदभावे वा सुट् स्यादिति न शङ्कनीयम् । केचित्तु सुडित्यनुवर्त्तते अदिति च सूत्रे उपात्तं विधानसामर्थ्यादेव तयोः समुच्चयः सिद्धः चकारस्त्वधिकः सोऽनुक्तसमुच्चयार्थः तेन दक्षिणपूर्वस्या इत्यादि सिध्यतीत्याहुः । ' सर्वनाम्नः स्याड्ढ्रस्वश्च, इति पाणिनीयसूत्रस्थाने यटोऽच्चेति सूत्रयितुमुचितम् । तथा हि । इदमस्ति 'आमि सर्वानाम्नः सुट्' इति। ततोऽनन्तरं यटोऽच्चेति कर्तव्यम् । 'याडाप' इत्यत्र यडाप इति कर्तव्यम् । अकारोच्चारणसामर्थ्यात्सङ्ख्याया इति लिङ्गाच्चातो गुण इति न भविष्यति यटा चाप आक्षेपः । ततश्च सर्वनाम्नः आबन्तस्य अच्चेति । यत्तु सर्वनाम्नोऽसुङ्क्त्येव सूत्र्यताम् । एवं याटि परं ङित्वादन्त्यादेशेऽसुङि सर्वस्यामित्यादि च सिद्धं स्याहरणे ह्रस्वविधाने च प्रयोजनं चिंत्यमिति । इयमपि कल्पना यत्तेन प्रत्युक्ता । किंच असुङ्च्चेत्युक्तेऽमुष्यै इत्यादि न सिध्येत् आदेशप्रत्यययोरिति षत्वाप्रसङ्गात् । सस्यादेशावयवत्वात् अदसः सान्तत्वेन मुत्त्वाप्रसङ्गाच्च । यदपि सर्वनाम्न इति पञ्चम्याश्रयणादाप एव स्थानित्वात्स्थानिवद्भावेन प्रत्ययत्वादमुष्यै इत्यादि सिध्यतीति कल्पनम् । तत्रेदं प्रष्टव्यम् किमिदं त्वद्बुद्ध्योक्तमसुङ्समाधानं स्वातन्त्र्येण वा । नाद्यः ङित्वस्य वैयर्थ्यात् । आप एव स्थानित्वेनान्त्यादेशे प्रयोजनाभावात् । अकारविधानं च व्यर्थं सर्वनाम्नः सुङिवक्तुं शक्यत्वात् । न द्वितीयः । अस्मदुक्तलाघवेनैवास्य पक्षस्योक्तिसम्भवात् । यदपि सर्वनाम्न इति षष्ठी टावेकादेशस्य पूर्वान्तत्वादसुङः परादित्वेन प्रत्ययत्वात् षत्वेना मुष्यै इत्याद्यपि सिध्यतीति कल्पनम् । तदपि न उभयत आश्रये अन्तादिवदिति वचनं ज्ञापकं न्यायो वास्ति अत एव यटोयुगपदुभयोरवयविनोरवयव इति । न च एकस्मिन्कार्ये नान्तादिवदिति वचनं ज्ञापकं न्यायो वास्ति । अत एव यटो ह्रस्वश्चेति सूत्रयितुं युक्त नचैव याट एव ह्रस्वापत्तिः दीर्घोच्चारणसामर्थ्यात् । ह्रस्वोच्चारणेप्यकारसामर्थ्यादेवातो गुणस्य वारयितुं शक्यत्वादित्यपि समाहितम् । सर्वनाम्नस्तु ससुवो ह्रस्वपूर्वाश्चेतिकालापसूत्रस्था-

ने योरश्चेति सूत्रयितव्यम् । तथाहि । ङवंतियैयास्यास्याम इत्यस्य स्थाने निं-
तांयोरितिसूत्रणीयं य ङ इति छेदः ङदित्वादिः तदनुवादेन सुरीमिसर्वलवृत्त्यातु-
नतरंयोरश्चेतिसूत्रं कर्त्तव्यं श्रद्धाया इत्यातेय लभ्यं सर्वनाम्नः श्रद्धायाः परे-
षां ङितां यो य उरागमस्तस्यसुरागमः श्रद्धायाअकारश्चेति अर्थः विभाषाद्विती
यातृतीयाभ्यांवेति पाणिनीयं सूत्रं द्वितीयातृतीयाभ्यां वेति कालापसूत्रं च व्यर्थं-
द्वितीयस्मै द्वितीयायेत्यादिसिद्ध्यर्थेन तीयस्य ङिमुवेतिवचनेनावश्यककरणी-
येन गतार्थत्वात् ॥ **हसेपः सेर्लोपः** ॥ हसान्तादीबंताच्च नाम्नः परस्य सेर्लोपः।ननु
हसग्रहण किमर्थम् । ततः सेः संयोगांतलोपसंभवात् । न च वेधा इत्यत्र संयोगांतलो
पंबाधित्वादपवादपरत्वाद्वा स्कोराद्योरिति प्रवर्त्तेत तथाच्चावसोःसाविति दीर्घो
नस्यादिति वाच्यम् । परं नित्यं च बाधित्वान्निरवकाशत्वादत्वसोरित्यस्यैव
प्रवृत्तेः । न हि स्यौपरे विधीयमानस्यासन्तत्वप्रयुक्तदीर्घस्य स्कोराद्यो-
श्चेत्यनेनाक्रान्तो विषयः सम्भवति । मैवम् । शक्नोतीति शक इत्यस्यासिद्धेः।
संयोगान्तलोपं बाधित्वा स्कोराद्योरिति कलोप प्राप्तेः । तथा उखास्रदित्यादौ
परत्वात् दत्वं च बाधित्वा स्कोरिति सलोपः स्यात् । न च दत्वनिर-
वकाशम् । उखास्रद्भ्यामित्यवकाशस्य सत्वात् । किं च काष्ठं तक्षतीति
काष्ठतडित्यादौ स्कोरिति कलोपे कृते सिलोपो न स्यात् । अपवादवि-
षये उत्सर्गस्य प्रवृत्त्यभावात् । पदान्ते संयोगादिलोपस्य संयोगान्तलोपाप-
वादत्वात् । तस्माद्धसग्रहणं कृतम् । ननु हस्वात्सेर्लोप इत्यस्तु सूत्रमास्त्वी-
प्ग्रहणं जसीत्यत ईग्रहणमनुवर्त्य ईकारान्तान्नाम्नः सेर्लोप इति
व्याख्यानमस्तु । न च धातोरतिप्रसङ्गः । अधातोरित्यनुवृत्तेः । न च वातप्र-
मीशब्देतिप्रसङ्गः । तस्यापि क्विबन्तत्वेन धातुत्वसत्वात् । मैवम् । लक्ष्मी-
रित्यादावतिव्याप्तिः।औणादिके वातप्रमीशब्दे च। ननु कृतेऽपीप्ग्रहणे प्रयो-
गे कुत्रापि पकारस्यादर्शनात्कथं विशेषावसायः । सत्यम् । सूत्रोपात्तं
विशिष्टं रूपं शब्दस्य प्रयोगे यत्र न लभ्यते तत्रोपदेशिकं तद्गृह्यते।अतोलक्ष्मी
रित्यादौ प्रयोगे उपदेशे च ईप्रूपाभावात् । दंडिनीत्यादौ प्रयोगे ईप्रू-
पाभावेऽपि ' न्रण ईबित्यादौ, औपदेशिकस्येप्रूपस्य सत्वाद्विशेषावसायः
संभवति । अत एव गंगीयते क्विप् गंगीरित्यत्र नातिव्याप्तिः । नाम्नो य ई
चास्येतीकारे कृते भूतपूर्वमापः पकारमाश्रित्य ईप्त्वे संभवत्यपिविशिष्टरू-

पस्योपदेशाभावात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् । यत्तु अर्थ विशेष एव निश्चायकः ।यथा काकवन्तो देवदत्तगृहा इति केनचिद्गृहव्यावर्तकत्वेनोक्तेऽपि काके तस्यास्थिरत्वात्। इतर काकादिनाऽपि वेदिकापुंडरीकादिकं स्थिरं किंचित्परिचायकं गृह्णाति । तथात्रापि यकारे इकारस्य व्यावर्तकत्वेनोपात्तेऽपि स्त्रीरूपोर्थः परिचायकत्वेन ग्राह्यः।एवं चेपः सेर्लोप इत्यस्य स्त्रीवाचकादीकारात्सेर्लोप इत्यर्थः । तथा च लक्ष्म्यादौ नाऽतिव्याप्तिरीकारमात्रस्य स्त्रीवाचकत्वाभावादिति । तन्न । गंगीरित्यत्र स्त्रीवाचकस्याकारस्य स्थाने विहित ईकार इति। तस्य स्थान्यर्थवाचकत्वेन दोषतादवस्थ्यात् स्यादेतत्। कौशांब्या निर्गतो निःकौशांबिरित्यत्रातिव्याप्तिः ह्रस्वे कृतेऽप्येकदेश विकृतन्यायेनेबंतत्वानपायात् । नन्विह ईबिति प्रत्ययग्रहणम् । प्रत्ययेन च प्रकृतिराक्षिप्यते।ततस्तदंतग्रहणं प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदंतस्यग्रहणम् । इति परिभाषया वा । ततश्चेबंतात्परस्य सेर्लोप इत्यर्थोलभ्यते निष्कौशांबिरिति तु नेबंतं किं तु कौशांबीशब्दः। कौशांबशब्दादेवेब्विधानात् तत्कथमिहातिप्रसंगः।प्रत्ययग्रहणपरिभाषा तु कर्तृकार्ययोरक्तादौ कृति षष्ठीत्यत्र ज्ञापिता । तथाहि । कृद्ग्रहणेन तदंतस्याग्रहणे कृदर्थं प्रति कर्तृकार्ययोरसम्भवः । कृतो द्रव्याभिधायकत्वात् कर्तृकार्ययोश्च क्रियानिरूप्यत्वात् । क्रियायाश्च धातुवाच्यत्वात् स्वार्थविशेषणीभूतक्रियान्वितकर्तृकार्ययोः कृदर्थेन सम्बन्धमंतरेण तद्योगषष्ठीविधानं नोपपद्यते । उक्तपरिभाषया तु तदन्तग्रहणे षष्ठीविधानमुपपद्यते इति चेत्सत्यम् । तथाऽपि उत्तरपदस्य ईबन्तत्वेन सेः ततः परत्वानपायात्। न हि ईबन्ताद्विहितस्य सेरिति विहितविशेषणत्वमाश्रयितुं शक्यम् । बह्व्यः श्रेयस्यो यस्येति बहुश्रेयसी । पिप्पल्या अर्द्धमर्द्धपिप्पलीत्यादौ लोपाप्रसङ्गात् । अत्रोच्यते । जसीत्यत ईकारोऽनुवर्तते तेन ई ईबिति ईकारान्तरप्रश्लेषेण वा ईकाररूपादीपः सेर्लोपो विधीयते । ह्रस्वे कृते त्वीबन्तत्वेऽपीकारान्तत्वं नास्ति । छिन्नकर्णस्य शुनः श्वत्वेपि कर्णवत्त्वं नास्ति । सेरिति किम् । मरुतौ । मरुतः । नद्यौ । नद्यः । अत्र तस्मादित्यनुवृत्त्या स्याद्यऽनुवृत्त्या वा अभैत्सीदित्यादौ नातिप्रसङ्गः।अधातोरित्यनुवृत्तिस्तु न शंक्या कुमारी-

त्यादावव्याप्तेः।कुमारीवाचरति कुमारीमिच्छति वा आचारक्विबंताद्यांताद्वा कर्तरि क्विप्।ननु जश्शशोर्लुगिति प्रकृते लोपग्रहणं किमर्थम् । मैवम् । राजेत्यादौ सेर्लुकि कृते नोपधाया इति दीर्घाभावापत्तेः । लुकि न तन्निमित्तम् । इति प्रत्ययलक्षणनिषेधात् । न च परत्वात्प्रथमं दीर्घे कृते पश्चाल्लुक् प्रवर्त्तिष्यत इति वाच्यम् । दीर्घे कृतेऽकृते च प्राप्तत्वेन लुको नित्यत्वात् । दीर्घस्य तु लुकि कृते लुकि नेति बाधादनित्यत्वात् । अन्यथा पञ्च सप्तेत्यादावपि परत्वान्नोपधाया इति दीर्घे कृते पश्चाज्जश्शसोर्लुगिति लुकि कृते पंचा।सप्ता इत्यनिष्टं रूपं प्रसज्येत । तस्माल्लोपग्रहणं सम्यगेवेति। "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इतिपाणिनीयसूत्रस्थाने ङ्यापः सोरित्येव सूत्रमुचितम् । न च सुराः । सुरासौ इत्यादौ धातोः सकारेऽतिप्रसङ्गः। ङ्याब्भ्यां साहचर्य्यात् प्रत्ययाप्रत्यययोरिति परिभाषया च प्रत्ययस्यैव सोर्ग्रहणात् । राजेत्यादौ नलोपस्तु ' न ङिसंबुद्ध्योः ' इति संबुद्धिग्रहणात्। न चैवं गोमान् इत्यादावपि नलोपापत्तिः । ज्ञापकस्य विशेषणविषयत्वात्।यत्र हि नकारविभक्त्योरानंतर्यं तत्रैव सिद्धत्वं व्याख्यानात् । अभिन्नोत्रे त्युत्वमपि मूपपादं संयोगांतलोपो रोरुत्व इति सिद्धकांडे पाठात् । रोरुत्व इति कर्तव्ये कृते च संयोगान्तलोपता सिद्धिः। यथा'नमुने' ने कर्तव्ये कृते च मुभावो नासिद्धः । अत्रार्थे अभिन्नोऽत्रेति भाष्योदाहरणमेव मानम् । एङः पदान्तादति भवति हरिवोमेदिनं त्वेति । यथा अविभर्भवान् इत्यत्रापि न दोषः। रात्सस्येत्यत्र तकारस्यापि प्रश्लेषेण त्सस्येति छेदात् । ननु उखास्रदित्यादौ संयोगादिलोपः स्यादितिचेन्न । दत्वे कृते तदप्राप्तेः । असिद्धं दत्वमिति चेन्न।सिद्धकांडे वस्वादिषु दत्वमिति पाठात् । नन्वपदान्तत्वाद्दत्वं न स्यादिति चेन्न।सावपि पदं भवति इति पक्षाश्रणात् । नचैवं राजेत्यादौ न लोपे कृते सोरुत्वविसर्गौ स्यातामिति इतोदिति सिद्धे पथिमथीत्याकारविधानेन प्रथमसुलोपस्य ज्ञापनात् । ननु नैतज्ज्ञापकं संबुद्धौ चरितार्थत्वात् । तत्र हि दीर्घोऽसंबुद्धाविति पर्युदासः।नलोपश्च निषिद्ध इति चेत् । एवं तर्हि नलोपात् प्राक् संयोगान्तलोप इत्यर्थे नङिसंबुद्ध्योरिति सूत्रमेव ज्ञापकमस्तु । तथाहि । ङिसंबुद्ध्योरिति षष्ठी ननु सप्तमी ङेर्लुका लुप्ततया

प्रत्ययलक्षणाभावात् । अन्तस्य संबुद्ध्यन्तस्य च प्रातिपदिकस्येति सामाधिकरण्येनान्वयः । न च प्रथमं संयोगांतलोपं विना संबुद्ध्यांत प्रातिपदिकम् । तस्मात् । ङ्याप्सोरितिन्यासेन किंचिद्बाधकम् । यदि तु वस्वादिषु दत्वमिति वार्तिकं प्रत्याख्यायते अधातुग्रहणेनैवोखास्रदित्यादौ दीर्घाभावसिद्धेः । तर्हि हलङ्यापः सोरिति सूत्रमस्तु । ईकारान्तात्सिः व्यंजनाच्चेति कालापसूत्रस्थाने ईपः सिः । व्यंजनादिति व्यंजने यः सिरिति वा कहे पः सिरिति वा सूत्रमुचितम् । कहशब्देन ककारादिर्हकारांतसमुदाय आक्षिप्यते संदंशन्यायेन । तेन व्यंजनं सर्वं लब्धं नदादिभ्यः स्त्रियामीप्प्रत्ययो विधेयः । एवं हि नद्या इत्यस्यानुवृत्तिरपि नापेक्षितेत्यनुकूलम् । यद्वा दंशावित्यस्यानंतरं व्यंजने यः सिर्लोपमिति सूत्रयित्वा श्रद्धाया इति सूत्रणीयमिति दिक्॥**आपः॥** आबंतान्नाम्नः परस्य सेर्लोपः । गंगा । ननु गंगामितिक्रांतोऽतिगंग इत्यत्र सिलोपः प्राप्नोति । सत्यम् । आ आप इत्याकारप्रश्लेषेणाकारन्तादाबन्तादिति व्याख्यानान्न भवति । उत्तरसूत्रेष्वप्येवं प्रश्लेषादतिप्रसङ्गः परिहरणीयः । गंगीयते क्विप् गंगीरित्यत्र स्थानिवत्त्वेनाप्त्वेपि आकारान्तत्वाभावान्नातिव्याप्तिः । अमाल इत्यादौ त्वधातोरित्यनुवर्त्तनात्स्याद्यधिकारात्परत्वेनआप्प्रवृत्तेर्वा दोषाभावः । एतत्सूत्रारम्भाच्च यटोच्चेत्यतः प्रागाप इति सूत्रं नास्तीति ज्ञायते । अन्यथा हसेपः सेरित्यत्र तदनुवर्त्य वाक्यभेदेन व्याख्यानात्सिद्धेः किमनेन । नचास्योत्तरार्थता तस्यैवोत्तरत्राप्यनुवृत्तिसम्भवात् । ननु निःकौशांबिः । अतिगंग इत्यादौ गौणत्वादेव सिलोपो न स्यात् किमीकाराकारयोः प्रश्लेषेणेति चेन्न । विशिष्टरूपोपादाने गौणमुख्यन्यायावतारात् । तस्यार्थवद्ग्रहणेनानर्थकस्येत्येतन्मूलकत्वात् । अर्थोपस्थितेश्च रूपविशेषग्रहसापेक्षत्वात् । इहत्वाबिति प्रत्ययस्योपादानम् । ननु कस्यचिद्विशिष्टरूपस्य नत्वाप इत्यनुबन्धनिर्देशात्किमिति चेत् । सोमपा हाहा इत्यादौ प्रसङ्गवारणाय लुप्तानुबन्धस्य परिनिष्ठितस्य यत्र सारूप्यं तत्र क्वानुबन्धकार्यं क्व नेति कथं निश्चय इति चेन्न । अर्थविशेषस्यैव निश्चायकत्वात् । यथा लूनः शालिरिति केनचित्प्रयुक्ते लक्षणज्ञेन कर्मभूतकालबलात् क्तप्रत्ययोऽयमिति निर्णीयते । लोतमालभेतेति प्रयुक्ते तु पक्षिवाची लोतशब्द औ-

णादिकतप्रत्ययान्तः । प्राभित्त कटं स इत्यत्र कर्त्रैकत्वाद्यवगम्य भूते स्यंतस्यायं प्रयोगो न तु क्तान्तस्येति । स्यादेतत् । मास्तु आप इति सूत्रम्। हसेप इत्यत्र हस आ इप् इति छंदोऽस्तु । पकारस्तूभयानुबन्धो विज्ञास्यते । न संधिय्वोर्युट्चेत्यत्रेवर्णोवर्णयोरनुबन्ध एको यथा । न चैवमुत्तरत्रोभयोरनुवृत्तिः स्यादितिवाच्यम् । स्त्रीभ्रुवोरित्यत्र समासनिर्देशेपि वाम्शसीत्यत्र स्त्रीशब्दमात्रस्यैवाम्मात्रस्यानुवृत्तिर्भविष्यति । मैवम् । अकारेकारयोर्द्वंद्वे सति पश्चात्पकारसंबंधे अन्तरङ्गत्वात् 'अइए' इत्ये त्वे हसैप इति स्यात् । त्रिपदे द्वंद्वे तु पकारस्याकारेण सम्बन्धो न लभ्येत उत्तरत्र वाऽऽविति विशिष्टरूपं न लभ्येत । अनुमेयत्वात्तस्य । स्त्रीभ्रुवोरित्यत्र तु स्त्रीशब्दस्य साक्षात् पाठात्संभवत्यनुवृत्तिः । अतः स्पष्टार्थः सूत्रारम्भ एवाश्रितः । श्रद्धायाः सिलोपम्। इति कालापसूत्रस्थाने आपः सिलोपमित्युचितम्।ह्रस्वनदीश्रद्धाभ्यः।इत्यस्यह्रस्वनद्यापः। स्त्रियामादेत्यत्र।दावित्युचितम्। आश्रद्धेति सूत्रं च न कर्त्तव्यम् । अप्शब्देनैवासाधारणव्यवहारसम्भवात् । पूर्वसूत्रोक्तरीत्या न्यासे तु आप इत्येव सूत्रं युक्तम् ।।सिलोपमिति पूर्वसूत्रानुवर्तनात् । **टौसोरेः** । टाश्च ओश्चटौसौ तयोः एवं तस्य एत्वम् । गंगया । आपः किम् । हाहा । हाहौ । अत्राप्याकारं प्रश्लिष्य पूर्ववदादन्तस्याबन्तस्येति व्याख्यानादतिगंगेन गंगिया । इत्यादौ नातिप्रसङ्गः आङि चाप इति टे चाप इति पाठ्यम् ॥ **धिरी** ॥ आदन्तादाबन्तात धिरीर्भवति । हे गंगे ।आपः किम् ।हे हाहाः।आदन्तादितिकिम् ।हे अतिगंग हे गंगीः । दीर्घविधानमुत्तरार्थम् । ननु जराशब्दात् धेरीकारे जराशब्दस्य जरसि कृते हे जरसी इति रूपसिद्ध्यर्थं दीर्घविधानं किं न स्यादिति चेन्न । सन्निपातपरिभाषाविरोधात् । नह्यापमुपजीव्यजात ईकारस्तं विहन्ति ननु धेरीकारे कृते तस्य स्थानिवत्त्वेन समानाद्धेरिति लोपोऽस्तीतिचेन्न । ह्रस्वात्समानाद्धेर्लोपविधानात् । धिरीति सूत्रारम्भसामर्थ्याच्च । अत एवाप इत्यनेनापि न लोपः ।यटोच्चेति सूत्रादनुक्तसमुच्चयार्थश्चकारोनुवर्त्यः । अतोंबार्थानां द्विस्वराणां धौ ह्रस्वः सिध्यति । अद्धाऽनुवर्त्य विधेयः।हे अंब। अ संबुद्धौ च इति सूत्रस्थाने धाविति सूत्रणीयम्।आमंत्रिते सिः संबुद्धिः इत्यस्य

स्थाने आमंत्रिते सिर्धिरिति सूत्रयितुमुचितं लाघवात् । यद्वा संबुद्धौ चेति त्यक्त्वा औरीम्।इत्यस्यानंतरं धिरिति सूत्रयितुमुचितम् । ह्रस्वोम्बार्थानामिति त्यक्त्वा संबुद्धौ ह्रस्वइत्यस्यानंतरमंबार्थानामिति सूत्रणीयम्।आ । आदन्तादाबन्तात्पर औरी भवति। गंगे।आप इति किम्। सोमपौ। आदंतात्किम्।गंगियौ । अतिगंगौ।नचेकारे जरसि च कृते जरसी इति वाच्यम् । सन्निपातपरिभाषाविरोधात् । तर्हि दीर्घविधानं किमर्थम् । य्वे द्वित्व इत्यनेन सन्धिनिषेधार्थमित्युक्तम्।वस्तुतस्तु ह्रस्व एव युक्तः । औरीमिति कालापसूत्रे ध्यौरिमिति युक्तम्। औङ आप इति पाणिनीयसूत्रमाव आप इति पाठ्यम् ङित्कार्यशङ्काभावः।फलं ङकारयोजना क्लेशाभावश्च । नचैवं द्वितीयाद्विवचनस्य ग्रहणं न स्यादिति वाच्यम् । टकारस्य समुदायानुबन्धत्वेन औ शब्दस्य निरनुबन्धकत्वात्।महिङितिङोयथा।**ङितांयट्**।ङ्इ्येषां तानिङितितेषामिति। वचनापेक्षया क्लीबत्वम् । विभक्तेरन्यपदार्थत्वेनाश्रयणात्। स्त्रीत्वं वा ङ् इद्यासामिति ङ् इद्येषां प्रत्ययान्यपदार्थत्वात् पुंस्त्वमिति वा । आदन्तादाबन्तात् ङितां यडागमः । गंगायै।गंगायाम्।आप इति किम्।हाहै आदन्तादिति किम्। गंगिये । अतिगंगाय।ङिति किम्। गंगाः।नन्वतिगंगायेत्यादौ यडस्तु आकारस्य श्रूयमाणत्वात् स्थानित्वेनाबन्तत्वान्न । लाक्षणिकत्वात् अवयवशो व्युत्पादितत्वं तत्वमिति स्वीकारात् अयादेशपक्षेपि यांतस्यात्वेऽपि आकारान्तत्वाभावात्।आपि त्वस्य स्थानिवत्त्वेन ङित्वादागमित्वे आकारान्तत्वाभावात्।अगागमात्पूर्वमप्यादन्तत्वस्यैवाभावात्।ङवंतियैयास्यास् यामः इत्यत्र ङितोयेरिति सूत्रयितुमुचितम्।यडरिति वा याडरिति वा छेदः उदित्त्वात्परादित्वम् । यथा न्यासेऽनुक्रमाभावः । ङवच्छब्दस्य ङितां चतुर्णामुपस्थापकत्वेऽपि क्रमोपस्थापकत्वं नास्ति।क्रमाभावे हि सर्वे सर्वस्य प्राप्नुवन्ति शब्दसाम्ये यथाक्रमं भवति न त्वर्थसाम्ये।अन्यथा"अम्शसोरादिर्लोपम्"इत्यत्र नद्या इत्यनुवृत्तेर्यथाक्रमं स्यात्। ईकारादयः । उकारात्तु शस इति एकशब्देनोपस्थापिते सिङ्सोरुम इत्यत्र सखिपत्योरित्यनुवृत्तेरपि यथाक्रमं न सखिशब्दात् ङसि पतिशब्दात् ङस इति । एकशब्देनोपस्थापिते यथाक्रमप्रवृत्तेरुक्तसम्भव एव दुर्लभः । न हि

धनवतां पूजनवंदननमनदर्शनतर्पणानि कार्याणीत्युक्तावत्र त्रिचतुरादीनामुप- स्थितावपि यथाक्रमं भवति नापि घटौ दृष्टस्पृष्टावित्यत्र।एवं सर्वनाम्नस्तु सपूर्वी ह्रस्वपूर्वाश्चेत्यत्रापि नद्या ऐ आसासाम इत्यपि च ज्ञेयम् । याडाप इत्यत्र यडाप इत्युचितम्।"अतो गुण" इति तु न भवति अकारोच्चारणसामर्थ्यात्।सङ्ख्याया इति निर्देशाच्च॥**आम् ङेः**॥आदन्तादाबंतात्परस्य ङे रामादेशः । गंगायाम्। स्यादेतत् । चतुर्थ्येकवचनस्य ङेर्ग्रहणमस्तु। तस्य हि ङे इति रूपं प्रतिपदो- क्तम्।सप्तम्येकवचनस्य तु ङितीति गुणेन लाक्षणिकम् । यद्यपि ङेरिति वि- भक्त्यन्तमुपात्तं तच्चोभयोरपि लाक्षणिकत्वं तथापि प्रत्ययात्पूर्वस्य भागस्य ला क्षणिकत्वमप्रतिपदोक्तत्वापेक्षया परिभाषाप्रवृत्तिः।उच्यते । "तिसृविक्रियायाम्" तुमृतदर्थायां स्त्रियामित्यादिनिर्देशात्सप्तम्येकवचनस्यैव ग्रहणम् । ङेरगित्य- त्र तु कार्यायेति लिंगाच्च चतुर्थ्येकवचनस्य । ननु गंगायामित्यादौ ङेरामादेशे कृते नुडाम इतिनुट् प्राप्नोतीति चेन्न।परत्वात् ङितां यडिति यटा बाधनात्। ननु ङितां यडागमो विधीयते अमादेशस्तु न ङिदिति कथं तस्य याडिति चेन्न । आदेशः स्थानिकार्य्यं लभत इति स्वीकारात् । अस्य च क्रियायामिति निर्दे- शेन ज्ञापनात् ।यद्वा ङेरामिति वक्तव्ये विपरीतोच्चारणमन्यदपि किंचिद्विपरी- तं भवतीति ज्ञापनार्थम् । तेन तु नुड्न।नन्वेवमपि नित्यत्वात्पूर्वं यट् स्यात्। स हि कृतेप्यामि प्राप्नोत्यकृतेऽपि । आम् तु कृते यटि व्यवधानान्न भवति यटस्तद्भक्तत्वेनाऽव्यवधायकत्वे तु यटा सहितस्य ङेरामिति शब्दांतरप्रा प्त्या अनित्य इति चेन्न । यटोऽपि शब्दान्तरप्राप्त्या अनित्यत्वात् । कृते आमि तस्य प्राप्नोत्यकृते ङेरित्यऽस्ति शब्दान्तरप्राप्तिः। उभयोरनित्ययोः परत्वाद्य वस्था । यत्तु विधिसामर्थ्यादपि पूर्वमामेव भवत्यऽन्यथा कथंचिदपि पूर्वं कृते न यटा व्यवधानादामोप्रवृत्तेराबंतादाम्विधानंव्यर्थंस्यादिति माधवेनोक्तं तन्न। येन नव्यवधानं तेन व्यवहितेपि वचनप्रमाण्यादिति न्यायेन यटा व्यवधाने ङेरामादेशप्रवृत्तेः सुवचत्वात् । 'नियोङ्किराम्' इत्यस्यानंतरं नद्याप इति सूत्र यितुमुचितम्।'द्वितीयात्तृतीयाभ्यां वा' इत्यस्य स्थाने तीयोद्वेति सूत्रणीयम् । यद्वा 'नांतात्सार्वनामिकम्' इत्यस्यानन्तरं तीयादिति सूत्रं कर्त्तव्यम्।तत्र सुः इवान्यत्सार्वनामिकमित्यनुवर्तते। ततश्च स्विभ्यामन्यत्सार्वनामिकं तीयान्तस्य

वेत्यर्थो लभ्यते । अतः पुंनपुंसकयोरपि सङ्ग्रहः सिध्यति । 'विभाषा द्वितीया तृतीयाभ्याम् ।' इति पाणिनीयसूत्रस्थाने तीयाद्वेत्युचितम् । वस्तुतस्तु विभाषा प्रकरणे तीयस्य ङित्सु इति सूत्रयित्वा सर्वनामसंज्ञैव विकल्पनीया तेन त्रिलिङ्ग्यां सर्वनामविकल्पलाभाद्विभाषा द्वितीयातृतीयाभ्यामिति त्यक्तुं शक्यमिति दिक् ॥ **नियः** ॥ नीधातोः परस्य ङेरामादेशः । नियाम् । णीञ् प्रापणे । इति धातुरत्र गृह्यते इया निर्देशात् योगविभागसामर्थ्यात् । लक्षणप्रतिपदोक्तेतिन्यायात् अर्थवद्ग्रहणेनानर्थकस्येतिन्यायाच्च । अतो लूनमिच्छति लूनीः । लूनीत्यत्र नातिव्याप्तिः । नीशब्देन नाम्नो विशेषणात्तदन्तादपि । ग्रामण्याम् । सेनान्याम् । नियश्चेति क्वचित्पाठः । तत्र चकारश्चिन्त्यप्रयोजनः ॥ **स्त्रियांयोः** ॥ इश्च उश्चानयोः समाहारो युः तस्मात् योः।समाहारे नपुंसकत्वस्यानित्यत्वात् । पुँल्लिंगनिर्देशः । आगमशास्त्रस्यानित्यत्वान्न नुम् । स्त्रियां वर्तमानादिवर्णान्तादुवर्णान्ताच्च परस्य ङेरामादेशः । नद्याम्। वध्वाम् । स्त्रियामितिकिम् । वातप्रमी । हूह्वि । हरौ भानावित्यादौ तु परत्वादनवकाशत्वाच्च ङेरौडिदित्यनेन भाव्यमित्यपि समाधिः संभवति । सुधियि स्वयंभुवीत्यादौ परत्वान्नित्यत्वाच्च युवावित्यपि समाधानं स्यात् । योरिति किम् । गवि । त्वचि । मातरीत्यादौ तु परत्वात् ङावित्यरित्यपि संभवति । धेन्वाम्—धेनौ ।मत्याम्--मतावित्यादौ ।नित्येनानेन।मिकृते विकल्पेनाट् । अडभावे तु स्थानिवत्त्वेनामो ङित्त्वात् ङेरौडिदित्यौत्व।टिलोपौ । अट्पक्षे तु तेन व्यवधानादौत्वाभावः । अत्र स्याद।विति निर्देशो मानम् । अडभावे आमोऽप्यभाव इति यद्वृद्धैः पठ्यते तस्याप्ययमेवाशयः । नन्वट्पक्षेऽटोङिभक्तत्वेन ङेरिदुदंतात् परत्वानपायादौत्वं स्यात् । न चाम्विधानं व्यर्थं नद्यामित्यादौ सावकाशत्वात् । न च वर्णनिर्देशो निरवकाशः तस्य लाघवार्थत्वात् । अन्यथा स्त्रियामीदूद्भ्यामितिनिर्देशो गौरवादिति चेन्मैवम् । निर्दिश्यमानस्यादेशा भवन्ती।ति न्यायात् । ङेरेव स्थानित्वेन्तस्य त्वटाव्यवधानादिदुदन्तात्परत्वाऽभावात् । वेयुवइत्यत्र श्रियां योरित्यन्तानुवर्त्यं । वाक्यभेदेन व्याख्येयम् । इयुवन्तात् ङितामट् । स्त्रियां ङेराम् वेति । एकयोगविहितत्वादडामोः सहैवप्रवृत्तिः । तेन श्रियां श्रियीत्यादि सिद्धम् । व्यव-

स्थितविकल्पाश्रयणात् स्त्रिया नित्यम् । स्त्रियामिति निर्देशाद्वा अन्यथा लाघवात् स्त्रियीत्येवावक्ष्यत् । माधवस्तु किमिदं योरिति यकारोकारयोर्ग्रहणमिकारोकारयोर्वा । नाद्यः । रायीत्यत्रातिप्रसंगात् न च वाच्यं लाक्षणिकत्वान्तस्यादिति । स्त्रियामित्यादावपि यस्य लाक्षणिकत्वात् । एवं तर्हि असंदेहार्थं उप इति निर्दिश्येत योरिति निर्देश्ये नाद्यः । परिशेषाद्द्वितीय आश्रीयते सूत्रे तु योरिति छान्दसं पुंस्त्वम् । अनित्यत्वाद्वा नुम्न अत्र च नियश्चेत्यतश्चानुवर्तते । सचावधारणार्थः सन् स्त्रियामित्यनेन सम्बध्यते योरिति सामर्थ्यात्तदंतग्रहणम । तेन यदिवर्णान्तं स्त्रियामेव प्रवर्तते तस्मान्नित्यस्त्रीलिङ्गादित्यर्थः । अत एव खलप्वि स्त्रियामित्यादौ पदान्तरद्योत्यस्त्रीत्ववृत्तेर्नाम् इष्वशन्यादीनां तु शब्दार्थस्यैव स्त्रीत्वादिष्वप्रशन्यामितिस्यादेवाम् भावः । एवमडागमादिकार्यमपि नित्यस्त्रीलिङ्गादेवज्ञेयम एतदेव स्त्रियां ग्रहणं तत्राप्यऽनुर्वतते इति बुद्ध्यामित्यत्र ङेरामभावोऽडागम औत्वं च प्राप्नोति । तत्र यदि परत्वादौत्वं स्यात् तत्र कृतेन टिलोपेन उदन्तत्वाभावादस्याऽप्रवृत्तेङ्याश्रयस्याम्रविधानस्यानवकाशत्वादादेशागमयोर्भिन्नदेशत्वेना विरोधादपि पूर्वकृतेनाटा व्यवधानादौत्वाप्रवृत्तेरामादेशे च यत्वदीर्घौ । अथ यथाऽटा व्यवधानादौत्वाप्रवृत्तिः । एवमामपि यदि न प्रवर्त्तेतदा नद्यामित्यादावपि ङितामडित्यटाव्यवधानादामोऽप्रवृत्तेः स्त्रियां योरिति व्यर्थं स्यात् । तस्मात् येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेनाटा व्यवधानेपि स्यादेवाम्भावः । अडभावपक्षे तु प्रवृत्तेप्यामादेशः परत्वादौत्वेन बाध्यते । ततश्चाडागमादेशयोरेकविषयत्वमेव । अडागमाभावपक्षेऽटोव्यवधानाभावात्परेणौत्वेनबाधितत्वादामोप्यप्रवृत्तिरित्याह । अत्रेदं वक्तव्यम । छांदसं पुंस्त्वमिति समाधानमयुक्तम छान्दस्त्वमस्येति प्रागेवावेदितम् ।नियश्चेति चो व्यर्थमित्यप्युक्तम यटोच्चेत्यत इति सूचितम् । नित्य स्त्रीलिङ्गान्तरानभिधायकादिति विवक्षितम् । पदान्तरंविना स्त्रियां वर्तमानादिति वा । नाद्यः । प्रधीबर्षाभूप्रभृतीनामिष्वशन्यादीनां चासंग्रहप्रसङ्गात् । एषां लिङ्गान्तराभिधायकत्वात् न द्वितीयः । स्त्रियां वर्तमानादित्यनेनैवेष्टसिद्धौ पदान्तरं विनेत्यस्य वैयर्थ्यात् । न च ग्रामणीखलपूप्रभृतिष्वपि प्रसङ्गः।ग्रामनयन-

खलपवनादेरुत्सर्गतः पुंधर्मतया स्त्रियामप्रवृत्तेः ग्रामण्यौ स्त्रियौ इत्यादौ तु पदान्तरसम्बन्धात्स्त्रीत्वं द्योत्यते न तु स्त्रियां वृत्तिरस्ति । स्वार्थे व्युत्पादितस्य हि पदान्तरयोगोभवति तत्रान्तरङ्गतया प्रवृत्तो यः संस्कारः स पश्चात्प्राप्तेन स्त्रीत्वेन बाधितुं न शक्यतेतदुपहंतुंशक्यं मुखनासिकावचन इत्यादौ यथा । एवं चाकारानुवृत्तिस्तस्यावधारणार्थत्वमित्यादि कल्पनं परास्तम्।नित्यस्त्रीलिङ्गादित्यत्रापि स्त्रीलिङ्गादित्येव युक्तमिति दिक् । ङेराम्नद्याम्नीभ्यः । इदुद्भ्याम् औत् । अच्च घे इति चतुःसूत्र्याः स्थाने ङेरित औत् । अच्च घेः । आम्नद्याम्नीभ्यः । इति त्रिसूत्री कर्तव्या मात्राचतुष्टयस्य लाघवात् । आङो ना स्त्रियामित्यत्र घेरित्यनुवर्तनीयम्। घेर्ङितीत्यस्यानन्तरं वेदं पठनीयम् । 'ईदूत्स्त्र्याख्यौ नदी' इत्यत्र यूग्रहणमेवोचितं लाघवात् न च सवर्णग्रहणापत्तिः दीर्घग्रहणात् ।ह्रस्वश्च ङ्वतीति ज्ञापकाच्च प्राप्तविकल्पे पक्षेनुवादो दोषः । अप्राप्तविकल्पे तु पक्षे विधानमात्रं तच्च लघु । स्त्री नदीवत् । स्त्र्याख्याविति युवौ । वामि ह्रस्वश्च ङ्वतीतित्रिसूत्रीहैव पाठ्या । तत्र प्रथमसूत्रे स्त्रीत्वे इत्येव सूत्रणीयम् । इयुस्थानप्रयुक्तविकल्पवाधनार्थम् । संबुद्धौ तु ईदूतौ स्त्र्याख्याविति सिद्धैव नदीवदिति तु व्यर्थं पूर्वसूत्रादनुवृत्तेः सत्वात् । ततस्तु इयुवृह्रस्वा वा स्वरे इति सूत्रणीयं स्त्र्याख्याविति व्यर्थं अनुवृत्त्या लब्धत्वात् । आमि ङ्वतीति च स्वरे इत्यनेन संगृहीतत्वात् किं च लक्ष्मीशब्दो नदीसंज्ञां न प्राप्नोति स्त्रीदूतोः स्त्रीवाचकयोः संज्ञाविधानात् । लक्ष्मीशब्देकारस्य स्त्रीवाचकत्वाभावात् समुदायस्यैव तथात्वात् । यत्तु समुदायस्य स्त्र्याख्यत्वे च युवोः स्त्र्याख्य इत्युपचारादित्युक्तम् । तन्न, मुख्ये चरितार्थस्य शास्त्रस्य गौणे प्रवृत्त्यसम्भवात् । मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्यय इतिन्यायात् । गौणस्यापि ग्रहणे इष्टे । ईदूत्स्त्र्याख्यस्य नदी । ईदूदन्तं स्त्र्याख्यं नदीति वा वक्ष्यत् । अर्थलाघवस्य तव संमतत्वात् । मात्रालाघवस्यासंमतत्वात् । किं च इत्थं श्रीभ्रादिष्वतिप्रसङ्गः । हेश्रीः । हेभ्रूः । इत्यत्र ह्रस्वः स्यात् । न हि संबुद्धौ तेषां नदीसंज्ञा ह्रस्वो वा निषिद्धः । स्त्र्याख्यावियवौ वामीत्यस्य विकल्पविधायकत्वेन नियमार्थत्वायोगात् । किमर्थक्यान्नियमो भवतीति वृद्धव्यवहारात् । यदपि यथा ग्रामो दग्धः पटोदग्ध इति ग्रामा-

द्येकदेशे ग्रामादिशब्द इत्युक्तम् । तदपि न । तत्र मुख्यस्यावयविनो दाहाभावस्य प्रमाणान्तरसिद्धत्वेन शब्दप्रयोगस्य गौणार्थकरत्वस्यौचित्यात् । प्रकृते तथात्वाभावात् । परेषां तु वर्णस्य संज्ञित्वेऽपि नेयङुवङिति सूत्रं गौणस्यापि ग्रहणं ज्ञापयति । तेन विना वैयर्थ्यापातात् । ज्ञापनफलं तु लक्ष्मीवधूशब्दौ नदी संज्ञौ । 'यूस्त्र्याख्यौ नदी' इति सूत्रमस्ति । तस्याग्रे स्त्रीति सूत्रं कर्त्तव्यमियङ्स्थानयुक्तनिषेधविकल्पबाधनार्थम् । न च पुरस्तादपवादन्यायेन निषेधस्यैव बाधकमिदं स्वादिप्रयुक्तविकल्पेन तु परत्वाद्बाध्येतेति वाच्यम् । बाध्यसामान्यचिंतायामुक्तन्यायस्याप्रवर्तनात् । बाध्यविशेषचिन्तापक्षे तु स्त्रीति सूत्रमुत्तरत्राप्यनुवर्त्य वाक्यभेदेन नित्यं नदीसंज्ञाविधानात् । ततो नेयुवाविति सूत्रं कर्त्तव्यं तत्र चेयुवोःसंज्ञाप्राप्तिविरहात्तत्स्थानिनो रीदूतोर्निषेधः सिध्यति । तत ईदूतौ वाचि इति सूत्रं कर्तव्यम् । तत्र चेयुवावित्यनुवर्तनीयम् । तत्र पूर्वसूत्रे यादृशं दृष्टं स्थानिपरं तादृशमेव अर्थाधिकाराश्रयणात्।यद्वा इयुवोः कृतयोः सतोस्तयोरेव नदीविकल्पः।न चैवं श्रियां भुवामित्याद्यनिष्टप्रसङ्गः । 'लोपो य्वोः' इति य्वोर्लोपे कृते नामीति दीर्घसम्भवात् । यत्तु नदीवदिति वत्करणं हि सादृश्यार्थम् । तच्च सादृश्यमीकारोकाराभ्यामेव संभवतीति कुतोऽन्यत्र प्रसङ्ग इति त्रिलोचनेनोक्तम् । तन्न, नदीशास्त्रस्य नदीकार्यस्य वातिदेशाश्रयणात् । रूपातिदेशस्यानाश्रयणाच्च । इयुवादेशयोः कृतयोर्नदीवद्भावे त्वागमे कृते सतीति तेनैवोक्तत्वात् । पूर्वोक्तास्मद्रीत्या सूत्रभङ्गे वत्करणस्याभावाच्च । वत्करणाद्धि इयुवोर्नदीसादृश्यस्याधात्वादिप्रवृत्तिनिमित्तस्यैवाश्रयणस्य युक्तत्वाच्च । यत्तूक्तं इयङुवङोः स्थानं स्थितिर्ययोस्तौ नदीसंज्ञौ । यत्र तु यणादेशेन बाधितौ न तौ नदीसंज्ञाविति । तन्न । स्थानिलक्षणापक्षे फलोपहितः स्थानीति लभ्यते स्वरूपयोग्य इत्याश्रयणात् । इयुवोरेव संज्ञेति पक्षे तु यणादेशे कृते प्राप्तेरेव विरहात् । इत्थं हि पाणिनीयसूत्रे ङद्वयं स्थानग्रहणं अस्त्रीत्यत्र नञ्ग्रहणं च न कर्तव्यम् । ह्रस्वग्रहान्मात्रे इत्यादावतिव्याप्तिवारणाय यू इत्यनुवर्त्त्य विभक्तिपरिणामादिक्लेशोऽपि न कर्तव्य इति लाघवमिति सुधियो विदांकुर्वन्तु । **धौ ह्रस्वः ॥** स्त्रियां वर्तमानयोरिवर्णोवर्णान्तयोर्ह्रस्वः स्याद्धौ । हे नदि । हेवधु । दीर्घा-

तयोरेवायं ह्रस्वः, ह्रस्वान्ते न, परत्वाद्धावित्यनेन बाधात् । ह्रस्वे कृते धाविति न प्रवर्तते ह्रस्वग्रहणसामर्थ्यात् । अन्यथा प्रक्रियालाघवार्थं धावेय्वौ गुण इति वाऽवक्ष्यत् । अत्रापः अच्चेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन हेअंब हेअक्केत्यादि सिध्यतीति । अत्र वेयुव इत्यपकृष्य तत्र वेदमनुवर्त्य व्यवस्थितविकल्पं चाश्रित्य वाक्यभेदेन व्याख्येयम्। तेन स्त्रीशब्दस्य नित्यंह्रस्वः अन्येषामियुवूस्थानिनांनेति ज्ञेयम् । अधातोर्वेत्यनुवर्त्योक्तव्यवस्था बोध्येति माधवः । ग्रामणीखलप्वादीनामनियुवूस्थानित्वेपि न ह्रस्वः । अन्येषां धातूनां यवस्थानिनां ह्रस्वो वेति तु केचित्।सुभ्रूशब्दस्य कश्चिद्वा ह्रस्वमाह । ननु हे अतिलक्ष्मि राजन् हेअतिचमु योध । इत्यादावव्याप्तिः। समासस्य स्त्रियां वृत्त्यभावादिति चेन्न । अवयवस्य स्त्रियां वर्तमानत्वेनैवेष्टसिद्धेः स्त्रियामितिकिम् । हेवातप्रमीः । हेहूहूः । योरिति किम् । हेद्यौः । हेनौः । ह्रस्वोम्बार्थानाम् । संबुद्धौ ह्रस्व इति द्विसूत्र्याः स्थाने संबुद्धौ ह्रस्वोऽम्बार्थस्य चेति । धौ ह्रस्वोऽम्बार्थस्येति वा सूत्रयितुं युक्तम् । **ङितामट्** ॥ स्त्रियां वर्तमानादिवर्णोवर्णातात्परेषामडागमः । नद्यै । नद्याः । वध्वै । वध्वाः । 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यंते' इतिपरिभाषया स्याद्यवयवोभवेति।तेन स्वरादौ स्यादौ विधीयमानावियुवौ य्वौ च भवतः। प्रध्यै । वर्षाभ्वै । परिभाषा चेयं स्त्रियामिति निर्देशेन ज्ञापिता । अन्यथा स्वरादौ स्यादौ विधीयमानः स्त्रीशब्दस्येय् अटि परे कथं लभ्यते । सन्ध्यक्षराणि सख्युः नवानामित्यादिनिर्देशाश्चात्र मानम् । अत्र योरित्यनुवृत्तं दीर्घपरं बोध्यम् । इदुद्भ्यां परत्वाद्विकल्पेन बाधनात् । अत्राप्यवयवलिंगग्रहणादतिलक्ष्म्यै ब्राह्मणाय । अतिचम्वै योधायेत्यादि ज्ञेयम् । यद्वा ङितामित्यनुवर्तमाने पुनर्ङिग्रहणं योगविभागेनान्यतो विधानार्थम् । तेन पुँल्लिंगादपि ईदूदन्तात्कचिद्भवति । यद्वा ङितोऽडिति कर्त्तव्ये ङितामिति बहुचननिर्देशो बहुङिद्ग्रहणार्थः । तेन क्वचित्पुँल्लिंगादप्यट् । स्त्रियां किम् । वातप्रम्ये । हूह्वे । योः किम् । मात्रे । नद्याराम्वासासीम इत्यस्य स्थाने नद्या ओरिति सूत्रयितव्यम् । अउरिति छेदः । उकारानुबंधत्वान्ङितामाङिता योरिति सूत्रान्ङितामिति वर्तते । आम् नद्या इत्यत्र अण्नद्या इति पठितुं शक्यम् । **वेयुवः** । इयूच उवूचान-

योः समाहारः इयुव् तस्मादियुवः तयोरभेदस्य बाधितत्वादियुक्स्थानिनोरि-त्यर्थो लभ्यते । स्त्रियामियुव्स्थानीवर्णोवर्णातात्परेषां ङितामङ्वा । श्रियै । श्रिये । भुव भुवे । पूर्वेण नित्यं प्राप्ते विकल्पोऽयं स च व्यवस्थातो बोध्यः । तेन स्त्रिया नित्यम् । स्त्रियै।अत्राम्ङेरित्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । तेने-युव्स्थानात्स्त्रियां ङेराम्वा भवति । यद्वा एकवाक्यतैवास्तु । इयुवोर्ङितामङ् ङेरामादेशश्च वा । अडामोः सहैव प्रवृत्त्यप्रवृत्ती भवतः।सन्नियोगशिष्टानां सह-वा प्रवृत्तिः सहवा निवृत्तिरिति न्यायात् । परिभाषा चेयं ज्ञापिता स्त्रियांभुवीति निर्देशाभ्यां।स्त्रियास्तु ङेर्नित्यमामादेशो व्यवस्थितविकल्पत्वात् । स्त्रियामिति लिंगाद्वा।संमते तु विकल्पे क्वचित्स्त्रियीत्यपि निरदेक्ष्यत्।यथा प्रवृत्तिवदनुकरणं भवतीत्यस्य विकल्पं स्वीकृत्याभ्वोरिति भुवा उगिति च प्रयुक्तम् ।'रूयाख्यावि-युवौ वामि' इत्यत्र रूयाख्याविति व्यर्थमित्युक्तम्। 'नेयङुवङ्स्थानावस्त्री'इत्यत्र नञ्द्वयं ङ्द्वयं स्थानग्रहणं च व्यर्थम्।स्त्रियामिति किम्।सुधिये। स्वयंभुवे ।इ-युव इति किम् । प्रध्यै । वर्षाभ्वै । ङितामिति किम् । श्रियः । भुवः । इदु-द्भ्याम्।स्त्रियां ङितां वाट् ङेरामादेशश्च वा । मत्यै। मतये । मत्याः । मतेः। मत्याम् । मतौ । संनियोगशिष्टन्यायादडामोः सहैव प्रवृत्त्यप्रवृत्ती यद्वा आ मोऽभावे परत्वान्ङेरौडिदित्यौकारः । न च नित्यत्वाट्ट् औकारे टिलोपे च कृते इकारान्तत्वाभावात् जाते वाटि तस्य ङिना सह संधौ कृते तस्य ङि-ग्रहणेन ग्रहणादौकारे कृते इष्टरूपासिद्धेः नन्वत्रामि कृते तस्य नुडस्त्विति चेन्न । परत्वादटा बाधात् । ननु वेयुव इत्यत्र ह्रस्व इत्यनुवर्त्य ह्रस्वाच्चेति व्याख्यायतां किमिदुद्भ्यामिति सूत्रेणेति चेन्न । मात्रे म्नम्ने इत्यादावति प्रसङ्गात् । तपरत्वं तु नित्यविकल्पयोर्व्यवस्थार्थम् । अन्यथा संकरो विपर्ययो वा स्यात् । स्त्रियामिति किम्। सख्ये। पत्ये। ङितामिति किम । मतिभ्याम्। इदुद्भ्यामिति किम् । मात्रे । तपरत्वं किम् नद्यै ।'ह्रस्वश्च ङवति'इत्यत्र ङि तीत्युचितम् । इदुदग्निरिति सूत्रं न कर्तव्यम्।'अग्नेरम'इत्यादाविदुद्भ्यामिति इदोरिति वा इदुत इति वा सूत्रणीयम् । शेषोघ्यसखिइति सूत्रे शेषग्रहणं व्यर्थम् । एकसंज्ञाधिकारादेव सिद्धेः । घ्यसखिपतीति पठित्वा 'पतिरसमास एव' इति सूत्रं त्यक्तुं शक्यम् । न च पूर्वनिपातार्थं समासे तदिति वाच्यम्।

पूर्वनिपातप्रकरणस्याऽनित्यत्वात् ॥**औयू**॥इदुद्भ्यां औ यू भवति।हरी।विष्णू। इदूतोर्दीर्घयोर्ग्रहणे ई ऊ इति पदद्वयम्।द्वंद्वे तु य्वौ इति यु इति वा स्यात्। ह्रस्वयोर्ग्रहणमिति पक्षे तु यूइति इतरेतरद्वन्द्वः।य्वे द्वित्वे इति तूभयथापि प्रवर्ततेइत्युक्तम्।माधवस्तु औकारस्य स्थानिनो द्विमात्रत्वादादेशयोरपि ह्रस्वयोः सावर्ण्याद्गृहीतदीर्घयोरेव सिद्धत्वात् 'प्राप्यसमानः स्वरः सवर्णान्न गृण्हाति'। इतिज्ञापनार्थं दीर्घयोर्विधानम्। तेन धिरिरित्यादौ दीर्घस्याग्रहणमित्याह। तन्न। सवर्णग्राहकवचनाभावेन सवर्णग्रहणस्यासिद्धत्वात् । धिरिरित्यत्रानिष्टादर्शनादुक्तज्ञापनस्य व्यर्थत्वात् । यदपि ह्रस्वावेव यू भवतः।अत्र पक्षे प्राप्यमानस्य सवर्णग्रहणे मादू इत्युभयोरुकारोकारयोर्निर्देशो ज्ञापक इति । तदपि न । सवर्णग्राहकसूत्राभावादुक्तज्ञापनस्य वैयर्थ्यात् । व्याप्यव्यापकजातिनिर्देशेनैव तत्र तत्र निर्वाहस्योक्तत्वाच्च 'औकारः पूर्वम्' । इत्यस्य स्थाने औयू इत्युचितम् । अग्नेरित्यनुवर्त्तते । 'प्रथमयोः पूर्वसवर्णः''नादिचि''दीर्घाज्जसिच' इति त्रिसूत्री त्यक्तव्या।इदुद्भ्यामित्यस्यानन्तरमौयू इति सूत्रणीयम्।न चातिस्त्रियाविति न सिध्येत् परत्वादियङः प्रसङ्गादिति वाच्यम्।परशब्दस्येष्टार्थत्वात्। 'अकः सवर्णे दीर्घः'इत्यस्य स्थाने जस्यतो दीर्घः।अकोऽकि इतिद्विसूत्री कर्तव्या- 'तस्माच्छसो नः पुंसि' इत्यस्य स्थाने शस इति नश्च पुंसीति द्विसूत्री कर्तव्या। 'अकोऽकि दीर्घ' इति चानुवर्त्य आद्ये अकः शसोऽकि परे दीर्घैकादेशः द्वितीयेप्यकः शसोकि दीर्घैकादेशः शसोऽवयवस्य सस्य पुंसि न श्चेति सन्नियोगशिष्टं द्वयं विधेयम् । तेन गा इत्यत्र नातिप्रसङ्गः । इदुद्भ्यामिति किम् । देवौ। तपरत्वं किम् । वातप्रम्यौ। हूह्वौ । औ इतिकिम् । हरिभ्याम् । **टानास्त्रियाम्** ॥ इदुद्भ्यां परष्टा ना भवति । हरिणा । अत्र व्याख्यानान्नञ्प्रश्लेषः कार्यः । अस्त्रियामिति । माधवस्तु सिनेति निर्देशादित्याह । तन्न । सिशब्दस्य पुंस्त्वस्यानिर्णीतत्वात् । सिना विभक्त्या प्रत्ययेन वेत्युभयथापि संभवात् स्यादेतत् । टा ना पुंसीति सूत्रयितव्यं लाघवात् । वारिणा मधुनेत्यादि नुमाऽपि सिध्यति । अमुनेत्यपि क्लीबे मुभावे नुमि च कृते सिध्यत्येव । अत्र माधवः । अमुनेत्यदसष्टाप्रत्यये त्यदाद्यत्वे मत्वे च अमटेति स्थिते परत्वान्नित्यत्वाच्च मादू इत्युत्वं प्राप्नोति, प्रकृतिप्रत्ययाश्रित-

त्वेनान्तरङ्गत्वादिनादेशश्च।तत्र बलीयस्त्वादिनादेश एव स्यात्।यत्तूक्तम् । 'परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव। नित्यान्तरंगोपगमेन्तरंगं तस्माद्विधिः प्रातिपदो बलीयान्' इति तदेवमिनादेशे एत्वे पश्चादूत्वे चामूनेति स्यात्। सति त्वस्त्रियां ग्रहणे तत्सामर्थ्याद्दुर्बलमप्युत्वं प्रवर्त्य नाभावः प्रवर्त्तते इत्याह । तन्न । इनादेशतोऽप्युत्वस्यैवान्तरङ्गत्वात् । उत्वविधौ ह्यदसूशब्दो मकारस्तत्परो वर्णश्चेति त्रयमपेक्षितम्। इनविधौ तु नाम अकारः स्यादिः टेति चतुष्टयमिति ।एवं ह्युक्तमेवाल्पापेक्षत्वादन्तरङ्गम् ।किं च अकृतव्यूहपारिभाषया नादेशस्याप्रवृत्तेः । इनविधौ ह्यदन्तत्वमाश्रितं तच्चोत्वेनापहरिष्यते ।अपि च प्रकृतिमात्राश्रितत्वेनोत्वस्य ततोऽप्यन्तरङ्गत्वात् । त्वदुक्तान्तरङ्गत्वं कुत्राश्रीयते । यत्र प्रत्ययस्य प्रकृत्या अन्येन च सह युगपत्कार्यंप्राप्नोति । यथा सर्वाई इहेत्यत्र जस ईकारस्य प्रकृत्यासहैत्वं परेण दीर्घत्वं च प्राप्नोति । यथा च गाते इत्यत्र गाअआते इति स्थितेऽयोऽकारस्य प्रकृत्या सह सवर्णदीर्घत्वं तस्मादेव परस्याते इत्यस्याकारस्य च इत्वं प्राप्नोति । तत्र प्रकृतिप्रत्ययाश्रित मन्तरङ्गमन्यद्बहिरङ्गमित्याश्रीयते । प्रकृते त्वेवं नास्ति । किं तु प्रकृतिप्रत्ययाश्रितत्वापेक्षया प्रकृतिमात्राश्रितस्योत्वस्य चाल्पापेक्षत्वेनान्तरंगमुत्वमस्ति । तथाचोत्वे कृते । 'नामिनः स्वर' इति नुमि च सिद्धममुनेति । किं च कृतेपीनेऽमइनेति स्थिते एकारो भवतूत्वं वा परत्वादन्तरङ्गत्वाच्चोत्वं स्यात् । सत्युत्वे इनस्य स्थानिवद्भावेन टात्वान्नादेशे सति सिद्धममुनेति अत्रोच्यते । उत्तरार्थमस्त्रियामित्युक्तं सूत्रकृता।तथा हि अमु शब्दात्परष्टा ना भवति। अमुना । अत्रादस एव मुशब्दो गृह्यते। अन्यत्र तु पूर्वेण सिद्धम् । नन्वमुनेत्यत्रापि पूर्वेण सिद्धम्। सत्यम्। इदमेव सूत्रं ज्ञापयति । क्वचिदादेशोऽसिद्धो भवति अतो मुभावस्यासिद्धत्वात्पूर्वेण न सिध्यति । मु इत्यस्मिन्नारब्धे तु आरंभसामर्थ्यान्नासिद्धत्वम् । तत्र पुंसीत्यनुवृत्तौ पुल्लिंगे सिद्धममुनेति क्लीबे तु न सिध्यति ।नुमि कर्तव्ये उत्वस्यासिद्धत्वात् ।अस्त्रियामित्यनुवृत्तौ तु नपुंसकेऽप्यस्य व्यापारः । तत्र चाश्रयात्सिद्धमेव । अतः क्वचिदादेशस्यासिद्धत्वज्ञानफलकमिदं सूत्रम्। तत्फलं तु दिधक् । विवक् । विविदित्यादौ कतयोरसिद्धत्वा 'त्स्कोराद्योश्चेति' लोपो न भवति । और्णुनावेत्यादौ णत्वस्यासिद्धत्वात्स्व-

रादेः पर इति नुशब्दस्य द्वित्वम् । औजढादित्यत्र ढत्वधत्वादेरसिद्धत्वात् हशब्दस्य द्वित्वम्। प्रशानित्यादौ 'मो नो धातोः'इति नत्वस्यासिद्धत्वान्नलोपो न । उपेत्येत्यादौ एकादेशस्यासिद्धत्वात्तुग्भवति । कोसिश्चदित्यादौ षत्वं न भवति । एवं प्रयोग वशादन्यत्राप्यसिद्धत्वमुन्नेयम् । अदो मुश्चेत्यस्य स्थाने मोरित्येवोचितम् । 'दोदेर्मः' 'उत्वमादि'ति सूत्राभ्यां मत्वोत्वयोः सिद्धत्वात् । नमुनेति त्यक्त्वा 'आङो ना स्त्रियाम्' इत्यस्यानन्तरं मोरिति सूत्रणीयम् । रोरुत्वं वाश्रयासिद्धत्वं भविष्यति । इदुद्भ्यां किम् । गवा । तपरत्वं किम्।वातप्रम्या।हूह्वा । टाकिम्।हरिभ्याम् ।**ए ओ जसि**॥इदुदन्तस्य नाम्न ए ओ जसि परे । हरयः । शंभवः । इदुद्भ्यामित्यनुवृत्तं षष्ठ्या विपरिणम्यते तच्च नाम्नो विशेषणं विशेषणेन तदन्तविधिरादेर्धातोरित्यादिर्लिंगादित्युक्तम् । इदुदन्तस्य किम्।रायः। ग्लावः। तपरत्वं किम् । वातप्रम्यः । हूहूः। जसि किम् । हरिभ्यः । ननु यणोजसीति सूत्रितमिति चेन्न । मात्रालाघवे विशेषाभावात् । यद्यपि जसि गुण इति सूत्रणेऽर्द्धमात्रा लाघवमस्ति तथापि प्रतिपत्तिलाघवायैवकृतम् । इरेदुरो जसीत्यत्र एओ जसीत्युचितम् । अग्नेरिरित्यनुवृत्तमत्र षष्ठ्यन्तमर्थवशात्।अग्निशब्देनेदुतोः क्रमेणोपस्थितत्वात् क्रमेणैतावादेशौ स्यातम् । **धौ**॥इदुदंतस्य ए ओ धौ परे।हेहरे।हेभानो। नन्वयं पूर्वेण सहैकयोगः क्रियताम् ए ओ धिजसोरितिजध्योरिति वा । किमर्थो योग विभाग इति चेच्छृणु । यथाक्रमनिवृत्त्यर्थो योगविभागः । एदोतोरिदुद्भ्यां सहैव धिजोभ्यामपि क्रमः स्यात् । ततश्चेदन्तस्य धावेकारः स्यात् । उदन्तस्य जस्योकारः स्यात्।धौ न स्यात्। पृथग्योगे तु नायं दोषः । समसंबंधी विधिर्यथाक्रमं स्यादित्यस्य वचनस्य सत्त्वे इदमपि ज्ञापकम्।यत्तु धिजसोरित्युच्यमाने जसीव धौ परे ए ओ स्यातां पश्चाच्चासमानत्वान्न धिलोप इति श्रवणप्रसङ्ग इति ।तन्न।यदादेशस्तद्वदित्यनेन धिलोपसम्भवात्।न च वर्णमात्रविधावतिदेशोऽयं न प्रवर्तत इति वाच्यम्।तदनित्यत्वस्य प्रागेवोक्तत्वात् । क्वचिदादेशाऽसिद्धत्वस्यापि ज्ञापितत्वाच्च । यदपि पृथग्योगे तु विषयसप्तमीयमिति लुप्तेऽपि धौ तद्विषयस्य सत्वादेओस्त इति । तदपि न । विषयार्थे सप्तम्या अविधानात् प्रत्ययलक्षणेन धिपरत्वानपायाच्च। यद्युच्यते प्रत्ययलक्षणमस्मिम्

ग्रन्थे न स्वीकृतमिति । तन्न। कतिशब्दाज्जश्शसोर्लुकि प्रत्ययाभावादेव एओ जसीत्यस्यामवृत्तौ सिद्धायां 'लुकि न तन्निमित्तम्' इत्यस्य वैयर्थ्यापातात् ।किंच प्रत्ययोत्पत्तेः पूर्वमेव यत्र कार्यं क्रियते तत्र विषयसप्तमीति व्यवहारः प्राचाम् । यथार्द्धधातुके ब्रूञोवचः चक्षिङः ख्यात्रादयो विधीयन्ते एवं च व्युत्पत्तेः पूर्वमेव ए ओ स्याताम् । यदपि अनन्यभावो विषय इति तदपि न। एतद्वचनस्य निर्मूलत्वान्निःप्रयोजनत्वाच्च । 'आसौ' 'दिव औ' इत्यादौ प्रथमं सिलोपापादकत्वेनानिष्टावहत्वाच्च । यदपि । ननु कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वमत्वं स्यात् । मैवम् । विषयसप्तम्या इदमेव फलं यत्प्राग्लोपो भवतीति ।तन्न । विषयसप्तम्याश्रयणस्य निर्बीजत्वान्निष्प्रयोजनत्वाच्च तदाश्रयणं विनापि निर्वाहस्योक्तत्वाच्चेति दिक् । इदुदन्तस्य किम् । हे देव । हेग्लौः । तपरत्वं किम् । हेवातप्रमीः । हे हूहूः । घौ किम् । हरिभ्याम् । 'संबुद्धौ च' इत्यत्र घौ इत्येव सूत्रयितुमुचितम् । संबुद्धिसंज्ञास्थले घिसंज्ञैव विधातव्या ।'ह्रस्वस्य गुणः' इत्यत्र घेर्गुण इति सूत्रणीयम् । 'घेर्ङिति' इत्यत्र घिग्रहणं न कर्तव्यं भवति । न च ऋत इत्यनुवर्तेत । 'ङिसर्वनामस्थानयोः' इत्यत्र ङिग्रहणवैयर्थ्यात् ङितीत्यनेन तत्संग्रहस्यापि सिद्धत्वात्। ननु हेसखे हेपते । इत्यत्राव्याप्तिरिति चेत्तर्हि गुण इत्येव सूत्रणीयम् । अम्बार्थनद्योर्ह्रस्व इत्यतो ह्रस्व इत्यनुवर्त्य विभक्तिविपरिणामेन ह्रस्वस्येतिव्याख्येयम्। न चैवं हे गौरीत्यादौ गुणः स्यात् ह्रस्वग्रहणस्य सामर्थ्याभावात् । उत्तरत्र चरितार्थत्वादिति वाच्यम् । तथासत्यम्बार्थनद्योर्गुणः ह्रस्वस्येत्येव न्यासस्यौचित्यात् । **ङिति ॥** इदुदन्तस्य नाम्न एओङिति स्यादौ । हरये । विष्णवे । ङ्इद्यस्य ङित् तस्मिन् । ङिति किम् । हरिभ्याम् । स्यादौ किम्। कवीयते । नन्वत्र ये इति दीर्घत्वं परत्वाद्बाधकं स्यात्तर्हि अधिशेते इत्यत्र स्यात् । नन्वत्र प्रत्ययाप्रत्यययोः प्रत्ययस्यैवेति चेत्तर्हि हरिरिवाचरतीति हरयति ततः'षिद्भिदामङ्' हर्यः । नाम्नः किम् नुतः चिनुतः।न न्वत्र 'क्ङित्यघुसि' इत्यनेन गुणो निषिध्यत इति चेद्गुण इत्यनेन प्राप्तस्यैव तत्र ग्रहणात्। अस्य तु व्यवहितत्वान्निषेधाविषय एवारंभाद्गुणशब्देनाविधानाच्च न निषेधः । न च गुणनिषेधो व्यर्थः इदुक्किने तस्य सार्थक्यात् । ङ्चासाविच्च ङित्

तस्मिन्निति कर्मधारये तु इत्संज्ञकङकारादावित्यर्थो भवति सप्तमीनिर्दिष्टे वर्णे यो विधिर्विधीयते स तदादौ ज्ञेयः 'भुवोवुक्' 'स्त्रीभुवोः' इत्यादिनिर्देशात्। अन्यथा 'य्वोर्धातोरियुवौस्वरे' इति विधीयमान उव् स्वरांते स्यान्न स्वरादौ। अस्मिंस्तु पक्षे नाम्नः स्यादावित्येतयोरनुवृत्तिरनावश्यकी। इत्संज्ञकङकारादेरन्यस्य प्रत्ययस्याभावात्। न च 'लित्पुषादेर्ङः' 'इरितोवा' इत्यनेन ङप्रत्यये इत्संज्ञकङकारादि संभवतीति वाच्यम्। तत्र परत्वादि युवृभ्यांभाव्यम्। अशिश्वियत्। अदुद्रुवदित्यादि। 'ङ'इति स्थाने ङितीति सूत्रणीयम्। 'ङसिङसोरल्लोपश्च' गोश्चेति द्विसूत्रीं त्यक्त्वा एदोत्परः पदांते लोपमकार इत्यस्यानंतरं ङस्येति सूत्रणीयम्। घेर्ङितीति सूत्रे ङितीत्येवोचितम्। ह्रस्वस्येत्यनुवृत्तिसम्भवात्। न च ऋकारेपि प्रसङ्गः। अतो ङीत्यत्र ङिग्रहणज्ञापकात्। ङसिङसोस्तु ऋतउदित्यनेन बाधसंभवात्। ङय्यतिप्रसङ्गो वक्तव्यः।तत्र ङिग्रहणं नियमार्थमित्यपि सुवचम्।ङिति पक्षे ऋतश्चेद्गुणस्तर्हि ङावेव। न च सखिपत्योरतिव्याप्तिः। ख्यत्यादिति लिंगात्। यदि ङितीति गुणः स्यात्तर्हि कृतयणादेशोऽनुपपन्नः। न च दीर्घविषये चरितार्थः सः। तथा सति खीतेरिति वा खीति न इति वाऽवक्ष्यत्। दीर्घसाहचर्यात् दीर्घेती ग्रहीष्यते। 'सख्युरसंबुद्धौ' 'पत्युर्न' इति निर्देशाच्च। **ङे रौ डित्** ॥ इदुद्भ्यां परस्य ङेर्डिदौ स्यात्। हरौ। विष्णौ। इदुद्भ्यां किम्। देवे। दायि। तपरत्वं किम्। वातप्रमी। हूह्वि। ङेः किम्। हरिभ्याम्। औडिदित्ययं। शब्द एवादेशः किं न स्यादिति चेन्न। अमादावित्यादिलिंगात्। न ह्यस्मिन्समुदाये आदेशे कृते निर्देशोऽयं समंजसः। अत एव ङेरिति।चतुर्थ्येकवचनस्यात्र न ग्रहः। स्यादावित्यादौ चतुर्थ्यर्थस्यासंभवात्। अत्र चौकारस्य डित्संज्ञा क्रियते। न च डिति टेरित्यादौ कृत्रिमत्वादस्य ग्रहणं स्यान्न तु यौगिकस्याकृत्रिमत्वात्। तथा च 'सेर्डा धेः' इत्यादौ डकारस्य श्रवणप्रसङ्गः। प्रयोजनाभावादित्संज्ञाया अप्रवृत्तेरिति वाच्यम्। स्त्रियामिति निर्देशादुक्तपरिभाषाग्रहणात् स्त्यायतेर्हि ड्रट्प्रत्यये टिलोपे च स्त्रीति व्युत्पादितम्। यौगिकस्य यदि ग्रहणं न स्यात्ततश्च स्त्रीति न सिध्येत्। यद्वा डितोविधिःक्रियते ङेरौड् स्यात् औडोड्इत्स्यादिति। न च संज्ञा वैयर्थ्यं कार्यायेदिति सिद्धत्वादिति

वाच्यम । तस्यानित्यत्वज्ञापनाय पुनर्विधानात् । दंडा मंड इत्यादौ नेत्संज्ञा । माधवस्तु अनेनेत्संज्ञा यथा स्यात्तेन माभूदित्येवमर्थमिद्ग्रहणं स्यात् । को न्वत्र विशेषस्तेन सत्यामनेन वा । अयमस्ति विशेषस्तेन सत्यां लोपः स्यात् । अनेन तु यस्येत्संज्ञेत्यत्र प्रकृतपरामर्शादित्याह।तन्न । इतो लोपविधायकसूत्रानारंभात् इदित्यन्वर्थसंज्ञयैव निर्वाहात् यस्येत्संज्ञेत्यस्य इत्पदव्याख्यानपरत्वाच्च अत एव ततश्च श्रूयमाण एव ङकारैर्ङित्कार्यं स्यात् तत् स्यादाविति निर्देशादित्यपि निरस्तम्।यद्वाऽतिदेशोयं ङित् ङितवत् ङित्कार्यकृदित्यर्थः परत्र प्रयुज्यमानः परशब्दो विनापि वत्प्रत्ययमतिदेशं गमयति । यथा वसिष्ठोयं ब्राह्मण इत्युक्ते वसिष्ठवदिति गम्यते एवं ङिदित्युक्ते ङिद्वदिति गम्यते ननु ङेर्ङावित्येव चास्तु कार्यायेदितीत्संज्ञा सिद्धा दंडादयस्त्वव्युत्पन्ना एव व्यर्थमिद्ग्रहणमिति चेत्सत्यम्।उत्तरार्थं ङिद्ग्रहणम्।'ऋतो ङ उः' इत्यादौ ङिदित्यपेक्षितम् । 'ऋतो ङउः सर्डोधिः' इति प्रत्येकं प्रत्येकमिह च ङकारोपादाने तु गौरवं स्यात।किञ्च ङावित्यत्र ङितोऽनुवृत्तौ टिलोपः स्यात।अप् कर्तरीति निर्देशान्न टिलोप इति ब्रूपे तर्हि पंचस्वित्यत्र दोषः । न हि तत्र ज्ञापकमस्ति । यदि तु ङिति प्रत्यये टिलोपो विधीयते तदा न क्षतिः। 'ङेरौसपूर्वः' इत्यस्य स्थाने रौवचेति ङिरञ्चाविति वा सूत्रणीयम्।अग्नेरित्यनुवर्तते।अग्नेः परस्य ङेरौ स्यादग्नेरच्चेति ।अञ्च घेरित्यस्य स्थाने घेर्ङिदिति वक्तव्यम । **ऋतो ङ उः॥** ऋदंतान्नाम्नः स्यादेर्ङे उः स्यात् स च ङिद्वत्। नाम्नः किम् । आरत्। स्यादेः किम् । कर्तृ ङवते ङोपलक्षितः अः ङः इति ङसिङसोर्ङकारो गृह्यते । सख्युः शतुरित्यादिलिंगाच्च । अस्मादेव ज्ञापकात्तदन्तविधिः।उरिति लिंगात्केवलादपि। ननु चतुर्थ्येकवचनस्यैवापि यलोपे कृते निर्देशोयमिति किन्न स्यादिति चेन्न । सख्युः बुःस इत्यादिलिंगात्।न हि चतुर्थ्यर्थोऽत्र सम्भवति। ऋतः किम्। रायः ।स्यादेतत । ऋतोऽरुरिति सूत्रमस्तु। ऋतः अः उरिति छेदः।तत्र जसमोः परत्वाद्गुणेन भाव्यम् । एकमात्रावर्णनिष्ठा च जातेरग्रहणात् टेनातिव्याप्तिः । शसेकोऽवशिष्यते तत्र शसीति परत्वाद्दीर्घेण भाव्यम्।भवतु दीर्घे कृतेऽपि यदादेशस्तद्वदित्यनेन उत्वेन भाव्यम् । अस्तु । उत्वे कृते यदादेशस्तद्वदित्यम् । शसोरस्येत्यकारलोपो भविष्यति । यस्य सूत्रान्तरेण निमित्तं विहन्यते तस्य

नित्यत्वस्वीकारात् । न ह्युत जात एवालोपस्य निमित्तं विहंति किंतु सूत्र-मपेक्षते।न हि सात्यकिभूरिश्रवसोर्युध्यमानयोरर्जुनेन भूरिश्रवसो भुजच्छेदेपि । इत्थ हि अलोपः कृताकृतप्रसंगित्वेन नित्यत्वादुतः पूर्वमेव प्रवर्त्तते । ननु शब्दान्तरप्राप्त्या लोपो न नित्यः । कृते उदकृतेऽदित्यस्ति शब्दान्तर-प्राप्तिः । मैवम् । कृताकृतप्रसङ्गित्वमात्रेणापि क्वचिन्नित्यत्वाभ्युपगमात् । यथा 'भुवोवुक्' सत्यां वृद्धौ गुणे च भौ भो शब्दे वुक् प्राप्नोति तदभावे तु भूशब्दस्येति सत्यामपि शब्दान्तरप्राप्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वाद्गुण-वृद्ध्योर्बाधको वुक् स्वीकृतः । ननु नास्त्यलोपस्य नित्यत्वं कृते ङकारे तस्य ङित्वेन टिलोपे सति समानात्परत्वाभावादिति चेन्न । तद्व्यर्थो ङकार इति । उच्यते । वर्णमात्रविधौ यदादेशस्तद्वदिति न प्रवर्तते । तत्रेदं 'ङकारग्रहणं' ज्ञापकम्।तेन रासु इत्यत्रैकारमाश्रित्य किलादिति षत्वं न प्रवर्त्तते ङसिङसोश्च इत्यस्य स्थाने ङस्येति सूत्रणीयमित्युक्तम् । तदेवोत्तरत्रानुवर्त्तते । " ख्य-त्यात्परस्येत्यत्र ख्यत्यादित्येव सूत्रणीयम् । न च पूर्वपरयोरित्यनुवर्तेत । सख्युः पत्युरिति लिङ्गात् । 'ङसिङसोरुमः' इत्यस्य स्थाने ङउमिति सूत्रणीयम् । ऋदंतात्सपूर्व इत्यस्य स्थाने ऋतोलोप इति सूत्रयितव्यम् । ऋकारात् ङ उं प्राप्नोति ऋतो लोपो न भवतीति व्याख्येयम् । उत्तरसूत्रे लोपग्रहणं न कर्तव्यमित एवानुवर्तनात् । **सेरा** । ऋदंतान्नाम्नः सेरा स्यात् सच ङिद्वत् । पिता । पितृ सि इति स्थिते पंचसु इत्यरप्राप्तः । सेरेत्यात्वं च । तत्रार् ऋतो विषयो नास्त्याकारस्येति । येन नाप्राप्तन्यायेनारो बाधकोयमित्याकारः प्रथमं प्रवर्तते । एकयोगनिर्दिष्टत्वात् ङित्वमपि सहैव प्रवर्तते ततस्तु स्थानिवत्वेन तस्य सिद्धत्वात्तस्मिन्नर् टिलोपश्चेति द्वयं प्रा-प्तम् । तत्र परत्वान्नित्यत्वाच्च टिलोपे कृतेऽर् भवति । वस्तुतस्त्वत्र अन्साविति सूत्रयितुमुचितं ऋत इत्यनुवर्तते । ततश्च नाम्न ऋतोऽन्सावित्यर्थः । अ-नि सति नोपधाया इति दीर्घे हसे प इति लोपे सिद्ध्यतीष्टम् । सेः किम् । पितृभ्याम् । ऋदन्तात्किम् । हूहूः । तपरत्वं किम् । तॄः । कॄः । प्रकृतिवदनु-करणं भवतीत्यस्य पाक्षिकत्वात् । ऋत इरित्यस्य पक्षे प्रवर्तते। तदभावे प्रत्यु-दाहरणं संभवति । एवं पूर्वसूत्रे त्रः ग्रः इत्यादि प्रत्युदाहार्य्यम्। इत्थं हि तप-

रत्वं मुखसुखार्थमिति प्रत्युक्तम् । नाम्नः किम् । अकार्षीत् । यदि त्वत्र परत्वान्नित्यत्वाच्च धातोर्नामिन इति वृद्धिर्बाधिका अपितरीदित्यादौ च गुणो बाधक इत्युच्यते तर्हि नाम्न इति नापेक्षितम् । असौ सिलोपश्चेत्यस्य स्थाने सेरेति सूत्रयितुमुचितम् । ऋतोलोप इत्यनुवर्तते । यद्वा ऋउशनसपुरुदंशसनेहसां सावनन्त इत्येकयोगोऽस्तु तस्मिन्सति नांतस्य चोपधाया दीर्घो भविष्यति । आसौ सिलोपश्चेति नारम्भणीयम् ।
**धेरर् ।** ऋदन्तात्परो धेरर् स च डित् । हे पितः । ऋदंतात्किम् । हे हूहूः । धेः किम् । पितृभ्याम् । स्यादेतत् । मास्त्विदं सूत्रं पंचास्वित्ति अरिकृते हसेप इति संयोगान्तलोप इति वा सिलोपे सिद्धं हेपितरिति । नन्वेवं पूर्वेण सेरास्यादिति चेत्तर्हि सेराधेरिति पूर्वमस्तु ननूत्तरत्रारित्यपेक्षितमितिचेत् तर्हि तत्रैवाकारग्रहणं क्रियताम् । अर्ङौविति । तर्हि लाघवे को विशेष इति चेन्न मात्रालाघवाभावेऽपि वाक्यमेकसूत्रं भवतीत्यर्थलाघवसद्भावात् । नन्वेवं सति पूर्ववत्कर्तृशब्दस्यारित्यनिष्टं प्रसज्येतेति वाच्यम् । सेराधेरित्यनुवर्त्य विभक्तिविपरिणामं कृत्वाऽधाविति । तत्रारः प्रतिषेधात् । यत्तु न हि स्तुरारित्यत्राधेरिति शक्यते कर्तुं गौरवादिति माधवेनोक्तम् । तन्न । स्तुरारित्यत्राधेरित्यस्याकरणात् सेराधेरित्यतोनुवर्तनात् । यदपि न च सेर्डाधेरतो मण्डूकप्लुत्यानुवर्त्य मध्येऽरिति प्रतिपत्तिगौरवादित्युक्तम् तन्न । सूत्रेष्वनुवृत्तिकृतप्रतिपत्तिगौरव स्यालङ्कारत्वात् मात्रागौरवस्यैव व्याकरणेऽनभिमतत्वात् । बहुव्यवहितोत्तरसूत्रान्मंडूकप्लुतिर्नदृष्टचरीति दूषणस्य वक्तुमुचितत्वाच्चेति । तस्माद्योगविभागो व्यर्थ इति उच्यते।सूत्रं विना हे कर्तरिति न सिध्येत् । अत्र हि प्रथमं पञ्चस्वित्यर् प्राप्तस्तदपवादः स्तुरारित्यार् प्राप्तिः स चाधाविति प्रतिषिद्धः देवदत्तस्य हंतरि हते नहि देवदत्तस्योज्जीवनं भवतीति न्यायेनारि निषिद्धेऽप्यर् न स्यात् । सूत्रारंभे तु धेरारिति टिलोपे च सिद्धं हेकर्तरिति । यदि त्वपवादापवादे पुनरुत्सर्गस्य स्थितिरिति न्याय आश्रीयते।यथा वासिङ इत्यत्रापि त्येणित्यण् प्राप्तः । इञि तीत्रा बाधितोऽनृषेरितीञि प्रतिषिद्धे पुनरणेव भवति। यदि ए ओ जसीत्यत्र जसि गुण इति सूत्र्यते गुण इत्यादाविव स्थानसादृश्यं चाश्रीयते तदेदं सूत्रं नारंभणीयम् । न च तत्र ऋत इत्यस्याप्रकृतत्व

त्कथं गुण इति वाच्यम् । ऋतोङ्उरित्यतः सिंहावलोकितन्यायेन ऋत इत्यस्यानुवृत्तिसम्भवात् ।यद्वा तत्र ऋत इति योगं विभज्य तत्र सौ धौ गुण इति चानुवर्त्य ऋतो धौ गुण इति व्याख्यानादुक्तार्थलाभः । यद्वा " जसिगुणः " इत्यस्मिन्सूत्रे किमपि नानुवर्तितव्यम् । किंतु यत्र गुणवृद्धिशब्दाभ्यां गुणवृद्धी विधीयेते तत्र नामिन इति षष्ठ्यन्तमुपतिष्ठते । कश्चित्तु हेमियतिसरित्यत्र ऋवद्भावेपि धेरर्यथा स्यादित्येतदर्थमिदं सूत्रमित्याह । **ङौ** ॥ नाम्न ऋतोऽर् ङौ परे पितरि ङिदिति निवृत्तं ङिति टेरित्यस्य ङित्कार्यस्यासंभवात् । ऋत इति पञ्चम्यन्तं प्रकृतमप्यादेशापेक्षया षष्ठ्या विपरिणम्यते तत्र विशेष्यं नाम्न इति तु विशेषणम् । एवं च ऋत एव स्थानित्वात्तस्यैवार् न तु सर्वस्य नाम्नः कर्तरीति निर्देशोत्र मानं ङिपरत्वमप्यृत एव विशेषणम्, न नाम्नः।अतः शास्त्रकृतीत्यादौ नातिप्रसङ्गः । तकारेण व्यवधानात् । ऋतः किम् । वातप्रमी । तपरत्वं किम् । त्रि ग्रि । ङौ किम् । पित्रे। ऋतो ङिसर्वनामस्थानयोरित्यस्य स्थाने ऋतो ङिसुटोरिति ङि सुटीति वा सूत्रणीयम् । अर्ङौ घुटि वेत्यस्य स्थाने ङि घुघुरिति वा अर्ङिघुटोरिति वा सूत्रणीयम् । **पंचसु** । नाम्न ऋतोऽर् स्यादिषु पंचसु । पितरौ।पितरः । निर्दिश्यमानस्यादेशा भवंतीत्यृतोर् न तु तदंतस्य न्यायमूलकं चेदम् । निर्दिश्यमानस्य साक्षान्निर्देशात् दीर्घोपस्थितिः । तदन्तस्य तु विशेष्यविशेषणभावेन कल्प्यमानत्वाद्विलम्बितोपस्थितिः । अनुवर्त्यमानमपि निर्दिश्यमानमेव । शब्दानुवृत्तिपक्ष इदम् । अर्थानुवृत्तिपक्षे तु पूर्वोक्तमेवानुसंधेयम् । अत्र लाघवात् ङिपंचस्वित्येकयोग एवोचितः । पृथग्योगकरणफलं मृग्यं कश्चित्त्वरोऽनित्यत्वज्ञापनार्थमिदम् । तेन प्रियतिस्रि प्रियतिस्रौ प्रियतिस्र इत्यादावर्नेत्याह । ऋतः किम् । हूह्वौ । तपरत्वं किम् । त्रौ त्रः ग्रौ ग्रःपञ्चसु किम् पितृभ्याम् । स्यादौ किम् । विभृतः । ब्रुव आहश्च पञ्चानामितिवत् । अत्राप्यार् स्यात् । **स्तुरार्** ॥ सात्परस्य तृप्रत्ययावयवस्य च ऋत आरयं पञ्चसु । स्वसारौ कर्तारौ स् च ता चानयोस्समाहारः स्तृ तस्य स्तुः । स्तोरिति वक्तव्यम् । सकारसहितस्ता तस्य स्तुरिति वा । स्तुरिति किम् । ना । नरौ । पंचसु किम् । कर्तृभ्याम् । स्यादेतत् तृग्रहणे तृनो ग्रहणं न प्राप्नोति । निर-

नुबन्धकग्रहणे तु सानुबंधकस्येति न्यायात । नन्वास्मादेव मतिबंधात्तृनो नका-
रस्त्याज्य इति वाच्यम । व्यावर्तकस्य तस्यावश्यकत्वात । कर्तृकार्ययोर-
क्तादावित्यत्र क्तादियोगे षष्ठी पर्युदस्यते । तत्र तृनो ग्रहणमिष्टं न तु तृवुणा-
विति तृप्रत्ययस्य । कर्ता कटान् द्वितीयस्य तु कटानां कर्तेति उच्यते ।
अनित्यक्तपरिभाषेति वार्दापोरित्यत्र वक्ष्यते । अथवा तृनो नकारो न
कर्तव्यः।तदुक्तोदाहरणमत्यन्तभेदः कथम्। अर्थ एव भेदकोस्ति शीलार्थकस्य
क्तादौ ग्रहणं नान्यस्य । यद्वा तृवुणावित्ययमपि तृप्रत्ययः सानुबंधक एव
णकारस्योभयत्रान्वयात्। न संधिस्वयोर्युट् नेत्यत्र टकारस्य यथा । नचैवं कर्ते-
त्यत्र वृद्धिप्रसङ्गः, कर्तरि पंचेत्यादिनिर्देशेन तदभावज्ञापनात् । णकारस्य
सामान्यग्रहणमात्रफलकत्वात् । यद्वा तृन् च वुण् चेति द्वंद्वः । नाम्न इति
नस्य लोपश्च । ननु स्तृशब्देन नाम्नो विशेषणात स्तृशब्दांतनाम्नो ग्रहणं
स्यात् । तथाच प्रशास्तृशब्दस्यैवारित्यर्थः स्यादिति चेन्न । नाग्रहणानुवर्त-
नात् । व्याकरणांतरानुसारात् । लक्ष्यानुरोधाच्च । पूर्वोक्तार्थस्यैव ग्रहणात् ।
उभयविधार्थसंभवेऽप्युक्तहेतुभिस्त्वदुक्तार्थस्यापास्तत्वात । स्यादेतत् । नप्तृने-
ष्ट्रत्वष्ट्रक्षत्तृहोतृपोतृप्रशास्तृउद्गातृशब्दानःमारिष्टः पितृमातृभ्रातृजामातृपातृ-
दुहितृशब्दानां नेष्टः । यदि नप्त्रादय उणादौ त्रंता व्युत्पादितास्तर्हि
पित्रादयोऽपि तथा अत्रपित्रादयोऽव्युत्पन्नास्तर्हि नप्त्रादयोपि तथा । नन्व-
र्द्धजरतीये प्रमाणमस्ति । नन्वैवमर्विधिर्निरवकाशः । नृंदवृननांदृषु तस्य
सावकाशत्वात् । अत्रोच्यते । स्तुरिति योगो विभजनीयः । तत्र अरनुवर्त-
नीयः । तथाच स्तुः पश्चस्वरित्यर्थः संपन्नः । अनित्यश्चायम् । उत्तरसूत्रार-
म्भात् । ततश्च पित्रादीनामरः लक्ष्यानुसारात् न नप्त्रादीनामिति व्यवस्थाव्युत्प-
त्तिपक्षे सिद्धा । अव्युत्पत्तिपक्षे तु नप्त्रादीनां ग्रहणमार्विधौ विशेष्यकर्तव्यमिति
दिक् । तिसृचतस्रोरारनेति तत्रैव वक्ष्यते । यत्तु माधवः । संबंधश्च सकारेण
संयोगः तृप्रत्ययेन समवायः । तदयमर्थः । सकारसंयुक्तो य ऋकारस्तृ-
प्रत्ययस्यावयव इत्याह । तन्न । वर्णानां परस्परेणान्येन संयोगासंभवात् ।
संयोगस्य च द्रव्यमात्रधर्मत्वात् । वर्णानां च गुणत्वात् । तृप्रत्ययेन सं-
मवायोपि न वर्णानामाकाशे समवेतत्वात् । प्रसंगानंतर्याातिरिक्तसम्बन्धा-

भावात् । तृप्रत्ययस्य वृक्षाणां वनमिव वर्णसमुदायरूपत्वात्। तंतुभिः पटस्यैवा-रम्भानभ्युपगमात् । एतेन सकारेण संयोगसम्बन्धवतः तृप्रत्ययेन समवायस-म्बन्धवत ऋकारस्येत्युक्तम । यदपि कर्तृसिरित्यत्र विशिष्टत्वात् पूर्वमारि सति कर्त्तारसीति स्थिते यदादेशस्तद्वदित्यनेनादेशस्यार् ऋकारवत्त्वात्सेरेत्यात्व-मिति। तदपि न । इत्थं ह्यारोऽनित्यत्वात् सेरेत्यस्यैव प्रथमं प्रवर्तते स्यौचि-त्यात् कृताकृतप्रसाङ्गित्वेन नित्य आ आर् तु न नित्यः । आकारे कृते तस्य डित्त्वेन टिलोपेन ऋकारस्यैवापहारात्। वस्तुतस्तु वर्णमात्रविधौ यदादेश इत्य-स्याभावात् । आरं प्रति तु ऋकारस्यैव स्थानित्वात् । धातोस्तृशब्दस्यारि-त्यस्य स्थाने तुरारिति सूत्रयितुमुचितम् । अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृ-होतृपोतृप्रशास्तॄणामित्यत्र तृ इति पठितुमुचितम् । सामान्येनोभयोर्ग्रहणसम्भ-वात । तुरिष्ठेमेयःस्वित्यत्र यथा । 'पञ्चस्वधिषु स्त्रियां च क्रोष्टुस्तृवत् ' टादौ स्वरे वेति वक्तव्यम् । क्रुश आह्वानेऽस्मात् सितनोत्यौणादिकतुप्रत्यये क्रोष्टु-शब्दः तृवुणाविति तृप्रत्यये तु क्रोष्टृशब्दः द्वावपि शृगालवाचिनौ।तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते पञ्चस्वधिषु स्त्रियां च तृप्रत्ययान्त एव तृतीयादौ स्वरे उभयम् । अन्यत्र तु प्रत्ययान्ततेति नियमार्थमिदमारंभणीयं तृप्रत्ययांतनि-मित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयत्वेनातिदेशस्य षड्विधत्वेपि प्राधा-न्यादिह रूपमेवातिदिश्यते । नच न पचादेर्यस्य कस्यचित् किंतु क्रुशेरे-व उपस्थितत्वादर्थतः सादृश्याच्च तेन क्रोष्टुशब्दस्थाने क्रोष्टृशब्दः प्रयोक्तव्यमि-ति फलितम् । इदं चानुवृत्तिसिद्धं कथितम्।तत्वपूर्वं वचनं स्तुरारित्यत्र वेयुव इत्यादिभ्यः वा आ धौ उ इति पदान्यनुवर्त्तन्ते तेषां वाक्यभेदेनातिसम्ब-न्धः कर्तव्यः ततश्चायमर्थः।उकारस्यार् पञ्चसु धौ तु औ इति ।ऋतो ङ उरि-त्यत्रेदुद्भ्यामित्यत्र उद्ग्रहणमनुवर्त्य वाक्यभेदेन व्याख्येयम् ।तथाच उदंताद-पि क्वचित् ङ उरित्यर्थः। सेरेत्यत्राप्युद्ग्रहणमनुवर्तते ततश्च उदन्तात् क्वचिदधेः सेरेत्यर्थः।इदं च त्रितयं क्रोष्टुशब्दमात्रविषयं लक्ष्यानुरोधात्।ऋउरणीति मातृश-ब्दविषयं यथा ऋ रमित्यत्र उ इत्यनुवर्त्य क्वचिदुवर्णस्य ऋवर्णस्य र इति व्या-ख्येयं इदमपि क्रोष्टुशब्दाविषयम्।इतरे तु वदंति ।नेदं वचनमारंभणीयं नाप्यनु वृत्तिक्लेशः।तृतुप्रत्ययांतं शब्दद्वयमस्ति तत्र क्वचित् किंचित्प्रयुज्यते क्वचिन्नाना

भिधानादिति॥**पुंसोऽसुङ्**॥पुँल्लिंगस्य पुंसशब्दस्यासुङ् स्यादिषुपञ्चसु शौ च। पुमान् । अत्र न्सम्महत इत्यतः सिंहावलोकितन्यायेन शौ चेत्यपकृष्यते । सोनः पुंस इत्यतो मण्डूकप्लुत्या पुंस इत्यनुवर्तते । तेन शौचेतीदं सामर्थ्यान्न पुंसकविषयम् । प्रियपुमांसि । स्त्रियां तु प्रियपुंसी । ष्ट्रितइतीप् । पूञो डुम्सुरित्यौणादिकडुम्सुप्रत्ययस्य उदित्वात् । तेनैव नुमोपि सिद्धत्वादसुङुड-च्चारणार्थः । अत्र वदन्ति । पुंसः पुमसिति सूत्रणीयं स्पष्टार्थः । पुंसः सोट् इति वा । पुंसः सस्याडागम इत्यर्थः । यद्वा पुंसः स इत्यस्तु अडिति तु ङितामडित्यतोनुवर्त्तनीयम् । यद्वा ङसिरदितिवत् पुंसः पुमसिति वा सूत्रमस्तु । एवं सिद्धे असुङ्विधानमन्यतोविधानार्थम् । तेनासुङिति छित्वा आवृत्य वा तत्राल्लोपः स्वर इत्यतस्स्वर इत्यपकृष्य स्वरादौ स्यादौ नाम्नो ऽसुङिति व्याख्येयम् । इदं च लक्ष्यानुरोधाज्जराशब्दविषयम । उकार उच्चा-रणार्थः । असुङिति वा पठनीयम् । अतो न नुम् वेत्यनुवृत्त्या वैकल्पिकं चेदम् । तेन जरसौ जरस इत्यादि सिध्यतीति । पुंसोऽन्शब्दलोप इत्यत्र शब्देति व्यर्थम् । पुंसोऽन्लोप इत्येतावतैव तदर्थलाभात् । **असम्भवे पुंसः कक्सौ**।संभवः प्रयोगोऽल्पः संभवोऽसंभव ईषदर्थे नञ् । तस्मिन्नल्पे क्वचि-त्क्वचिदित्यर्थः । सौ सुपीति माधवः । वार्तिकमिदं सूत्रपाठदर्शनात् पुनः पुंसीति ग्रहणाच्च संयोगान्तत्वात्सलोपे एकदेशविकृतस्यानन्यत्वात्कक् इति प्रांचः । एवं हि नित्यत्वात्पूर्वमेव कगुचितः। सति तस्मिन्द्वयोर्या संयोगसंज्ञा तामादाय सलोपः व्याकरणान्तरेऽदर्शनादप्रमाणमिदं वचनमिति प्रामाणिकाः। **त्रितोनुम्** ॥ उश्च आ च वरौ ताविती यस्य स त्रित् तस्य अव्याप्यजाति परोऽयं निर्देशः । व्यापकजातिनिर्देशे प्रयोजनादर्शनात् । उदित ऋदित-श्च नुम् पञ्चसु । भवान् । पचन् । ननु स्त्रियामपि प्राप्नोति न चास्त्रियामि-त्यनुवर्तनात् ष्ट्रित इतीपाव्यवधानाद्वा न स्यादिति वाच्यम् । तथापि नपुंस-केति व्याप्तेः । न च नुमयम इति नियमार्थं स्यात् । शावेव नपुंसकस्येति नामिनः स्वरे वादीपोरिति नुम् तु विधिसामर्थ्याद्भविष्यतीति वाच्यम् । नुमय म इत्यस्यात्रितां शसः शौच विध्यर्थस्य सम्भवात् । ततश्च भवतीत्यादौ नुम् स्यादिति चेन्न।सोनः पुंस इत्यतो मण्डूकप्लुत्या पुंस इत्यस्यानुवृत्तेः पूर्वसूत्रा-

द्वानुवृत्तिः । तत् तत्र स्वरूपपरमपि ञित इत्यनेन सम्बन्धसामर्थ्यादर्थपरं भवतीति । नाहिपुंसः स्वरूपं ञित्संभवति । ततश्च पुँल्लिङ्गस्य ञित इत्यर्थः । एवमपि धातोरपि ञितः प्राप्नोति । स्रत् स्रसौ । सत्यम् । अंचेर्दीर्घश्चेत्यतोऽ जित्यपकृष्यते । तत्रैव वाचेरिति विभज्य पञ्चस्विति नुमिति चानुवर्तते । अचेरिति निर्देशान्नलोपिनो ग्रहणं ततश्च नलोपिनोऽञ्चतेः पञ्चसु नुमित्यर्थो भवति । इदं च नियमार्थं धातोश्चेद्भित्कार्यं तर्हि अंचतेरेव । तेन स्रंसादीना-मीब्नुमौ न स्रत् । एवं तर्ह्यधातुभूतपूर्वस्यापि न स्यात् । गोमतमात्मन इच्छ-तीति गोमत्यति नाम्नो य इति यः स धातुरिति धातुत्वं गोमत्यतेः क्विपि अल्लोपयलोपयोर्गोमान् इति भवति तन्न सिध्यतीति चेन्न । समानाद्धेरि-त्यतो मण्डूकप्लुत्याधातोरित्यनुवर्त्याधातुभूतपूर्वस्यापि नुमिति व्याख्यानात् । माधवस्तु ञितो नुमित्यतः परमचश्चेति सूत्रमस्ति । अचेर्नुम् भवति पञ्चसु परेष्विति तस्यार्थः । नन्वेवमपि योगान्तरं व्यर्थं ञिदचेर्नुमित्येकयोगेनैव सिद्धेः । न केवलांचतिप्रत्ययेन धातुरेव यो धातुस्तस्यैव नियमेन व्यावृत्ति-र्यथा स्यादधातुभूतपूर्वस्य माभूदित्याह । तत्सूत्रपाठे नोपलभ्यते अचेपञ्चसु नुम्वक्तव्य इति वार्तिकं च वृत्तौ पठ्यते इति चिन्त्यमेतत् । आगमशासन स्यानित्यत्वात् । वाग्रहणापकर्षणाद्वाऽयं नुम् कचिन्न प्रवर्तते । तेन द्विरु क्तानांजक्षादीनां च नुम्नेति शौचेति च सिद्धम् । उगिदचांसर्वनामस्थाने धातोरित्यत्र ञिदचामिति पाठेऽर्द्धमात्रालाघवम् । **वादीपोःशतुः** । वा आत् ईपोरिति च्छेदः अवर्णात्परस्य शतुर्नुम् वा ईकारे ईपि च परे । तुदंती तुदती । भांती–भाती । आदिति किम् । रुंधती । ईपोरिति किम् । तुदती शतुरिति किम् । पचमानं पचमाने । ईश्च ईप्‌च ईपौ तयोः । अत्र जबस्याकरणे न ज्ञापितं समासे उत्तरपदस्यांतर्वर्तिविभक्त्यापदत्वं नेति । अन्यथा वादी-पोरिति निर्दिशेत् । तेन प्रियवाचौ । परमगोदुहावित्यादौ कुत्वघत्वादिकं न । आदिति पंचमी न तु तपरत्वं ननु वा अदीपोः आदीपोरिति वा पञ्चतां सप्तमी चेयम् । शतुर्वानुम् स्यादेतयोः परत इति व्याख्यायतामितिचेन्न । उत्तरसूत्रे नित्यग्रहणवैयर्थ्यप्रसङ्गात् । अप्याभ्यामनेन विकल्पाप्राप्तेः अत्र पंचम्यंतस्यानुपादानात् सामान्यत्तः प्राप्तस्य विकल्पस्याप्याभ्यां

नित्यविधानमिति चेत् तर्हि आदिति व्यर्थम् । अप्ययोर्नित्यमिति वक्तुं शक्यत्वात् । स्यादेतत् । तुदतीत्यत्र शिति चतुर्वदित्यनेन कृतस्यादे इत्यनेननान्तरङ्गत्वाल्लोपे कृतेऽवर्णात्परत्वं नास्ति । ननु तत्र भूतपूर्व गतिराश्रीयतामिति चेन्न । भ्रतीत्यादावतिप्रसङ्गात् । तत्राप्यदादेर्लुगित्यपो लुप्तत्वात् । भांतीत्यादेरवकाशस्य सत्त्वाच्च ।न चात्राप्यन्तरङ्गत्वात्सवर्णे दीर्घेण भाव्यम् । आरम्भसामर्थ्यादन्तरङ्गस्यापि बाधस्वीकरात् । एवंचेत्तर्हि भ्रतीत्यादावप्यदादेर्लुगित्यस्यापिबाधप्रसङ्गः । अत्र माधवः । एवं तर्हि यद्वि कल्पाभावार्थमप्ययोरित्यत्र नित्यग्रहणं करोति तज्ज्ञापयति प्रागलोपान्नुमिति । अन्यथा अप्ययोर्लोपादनेनाप्राप्ते तद्यर्थं स्यात् नचारम्भसामर्थ्यादेव नित्यत्वम् । अनेनाप्राप्तेरारम्भादिति । न चैवमपि भांतीत्यादौ सवर्णदीर्घे शतुरवर्णात् परत्वं नास्तीति वाच्यम् । एकदेशविकृतस्यानन्यत्वेन तकारस्यैव शतृग्रहणेन ग्रहणात् अन्ये त्वेवमाहुः । शतुरिति न स्थानषष्ठी किंत्ववयवषष्ठी । धातोरिति विहितेन शत्रा धातोरित्याक्षिप्यते । सा च न पञ्चमी किं तु सम्बन्धसामान्ये षष्ठी। तथा च धातुसंबंधिनोऽवर्णात्परस्य शतुरवयवस्येति फलितं संबंधश्चावर्णस्य धातुना सह क्वचिदवयवावयविभावः क्वचित्त्वानंतर्य्यम् । न च तुदन्तीत्यादावकारस्यलुप्तत्वेनावर्णपरत्वानुपपत्तिः । प्रत्ययलक्षणेन तत्परत्वानपायात् । न चैवं भ्रतीत्यादावपि प्रसङ्गः । लुकि न तन्निमित्तमित्यनेन प्रत्ययलक्षणप्रतिषेधात् । यद्वा धातोरिति नाक्षिप्यते अवर्णात्परत्वं शतुरवश्यविशेषणमुपात्तं शतुरित्यवयवषष्ठीस्वीकारात्तच्चाव्यभिचरितमितिसामर्थ्यात् शतुरवयवभिन्नोऽवर्णो ग्रहीष्यते स च क्वचिद्धातो क्वचित्प्रत्ययस्य । यदि तु वर्णाश्रितत्वेन वर्णाश्रये नास्ति प्रत्ययलक्षणमिति तुदन्तीत्यत्र दोषतादवस्थ्यमित्युच्यते । तर्हि दानेत्यत्र ज्ञापितेन क्वचिदादेशोऽसिद्ध इत्यनेनासिद्धत्वं भविष्यति यदादेश इति स्थानिवत्त्वं वा भविष्यति क्वचिद्वर्णमात्रविधावपि स्थानिवत्त्वस्योक्तत्वात् । न च निरनुबन्धकग्रहणे न साबंधकस्येति अर्थवद्ग्रहणेनानर्थकस्येति प्रत्यया प्रत्यययोः प्रत्ययस्येति च तुदादेर इत्यस्यैव ग्रहणस्यावर्णस्येति वाच्यम् । अप्ययोरित्यनेनापोयाश्च वित्यविधानेनात्र न्यायत्रयस्याप्रवृत्तिज्ञापनात् । नह्यन्यथा अप्याभ्यामनेन

विकल्पः प्राप्तो येन नित्यमित्यर्थवद्भवेत् । ननु ईब्ग्रहणमनर्थमीग्रहणेनैव गतार्थत्वात् । पकारस्य इत्संज्ञकत्वेन ईकारस्यैवावस्थानादिति चेन्न । ईब्ग्रहणेन निरनुबन्धकस्येति परिभाषाया ज्ञापनात् । तत्फलं तु अयकीत्यत्र अग्रहणेऽपो ग्रहणं न भवति । दिवआवित्यत्र दिवुधातोर्ग्रहणं न अक्षद्यूः । नु धातोरितिनुग्रहणे क्नुग्रहणं न गृध्नु तुदभादिभ्य ईकारे इत्यत्र तुदभादिभ्य इति वक्तुमुचितं कारग्रहणं व्यर्थम् । आच्छीनद्योर्नुम् इत्यस्य स्थाने आदीपोरि आन्ङ्योरिति वा सूत्रयितव्यं शकारस्य प्रयोजनं नास्ति ई इत्यनेनापि इतरव्यावृत्तिसम्भवात् । अंगाधिकारात् प्रत्ययस्य ईकार—ईकारस्य ग्रहणात् । नदीग्रहणस्यापि प्रयोजनं नदीमात्रस्यापेक्षितत्वात् । अप्ययोरान्नित्यं अप् च यश्चाप्यौ तयोरात्परस्य शतुर्नित्यं नुम् स्यादीपोः । पचन्ती दीव्यन्ती ननु समासेऽन्तर्वर्तिनीविभक्तिमाश्रित्य चपा अबे इति जबादेशेऽव्ययोरिति वक्तुं तत्कथमप्ययोरिति निर्देश इति चेत्सत्यम् । ज्ञापनार्थमेवं निर्देशः । प्रत्ययपरतोन्तर्वर्तिनीविभक्त्या क्वचित्पदत्वं नेति तेन मरुत्वान् देवतास्य मरुत्वतीयमित्यत्र जबादेशो न विदुषो भावो वैदुष्यमित्यत्र वसां रस इति दत्वं न । केचित्तु सामान्यापेक्षमिदं ज्ञापकमाश्रित्य प्रत्यये परतः क्वचित्पदत्वं नेत्याहुः । तेन मरुत्वतीयम् । आरातीयः । ताडित्वानित्यादिसिद्धम् । अप्ययोरिति किम् । नित्यविकल्पविध्योर्विषयविभागेप्या स्यात् आग्रहणं तु चिंत्यमप्रयोजनम् । अनुवृत्ते सत्वात् । वस्तुतस्तु अप्ययादिति कर्तुमुचितम् । नन्वारम्भसामाथ्यदिव नित्यत्वे लब्धे नित्यग्रहणं किमिति चेत् । न । तत्फलस्य पूर्वसूत्र एवोक्तत्वात् शप्श्यनोर्नित्यामित्यत्र अव्ययोरिति सूत्रयितुं युक्तम् । अप्ग्रहणेन शपो ग्रहणं यन्ग्रहणेन श्यनोग्रहणं संभवत्यन्यस्माच्छतुरसम्भवात् ॥ **न्सम्महतोधौ दीर्घः शौ च** ॥ न्संतस्य अपो महतश्च दीर्घः स्यादधौ पंचसु शौ च । विद्वान् । विद्वांसौ । आपः । महान् महांतौ अधौ किम् । हे विद्वन् । हेमहन् । न्स् च अप् च महच्च एषां समाहारो न्सम्महत् तस्य जमे जमा वेति पस्य मादेशं कृत्वाऽप्शब्दोऽत्र निर्दिश्यत्ते अत्राधिकाराल्लब्धस्य नाम्नो विशेषणमिदं विशेषणेन च तदन्तविधिरिति तदन्तस्यापि दीर्घः सिध्यति । न्सित्यस्य तु केवलस्यासम्भवात्तदन्तस्यैव ग्रहणम् । यत्तु माधवः । न्समात्रप्रयो-

गाभावात् सामर्थ्यात्तदर्थात्तदन्तग्रहणमित्याह तन्न । अम्महतोः केवलयोः संभवेन तदंतस्याप्रसंगात् इत्थं न्संतस्यापोवंतस्यामहतो महदंतस्य च नाम्न इति लब्ध अत्राधाविति छेदो न तु धाविति पंचस्विति चानुवर्तते । तद्विशेषणं चेदं तेन धिवर्जितेषु पंचस्वित्यर्थो लभ्यते न तु धावित्येव छेदोऽस्तु ननु पंचस्वित्यनुवृत्त्या सिद्धं व्यर्थं धाविति अस्मादेव ज्ञापकात्तस्यानुवर्तनादिति चेन्न धावित्यस्मादनुवृत्तिसत्वेन धावित्यस्य वैयर्थ्यप्रसङ्गात् । सिध्योरिति पाठप्रसंगाच्च । माधवस्तु पंचस्वित्यनुवृत्तिसार्थक्यायाधाविति पदछेदो न तु धावितीत्याह । ननु धाविति छेदस्तदनुवृत्तेरिष्टत्वात् । यदपि अधिस्विति वक्तव्येऽधावित्येकमुत्तरार्थमिति माधवेनोक्तं तन्न । एकवचन निर्देशस्य लाघवार्थत्वात् । सूत्रे लिंगवचनयोरविवक्षायाऔत्सर्गिकत्वेन यथायोगमन्वयसंभवाच्च स्यादेतत् । दीर्घ इति मास्तु नच प्रकरणप्राप्तो नुमेवानुवर्तेतेतिवाच्यम् । न्सितिकृतनुम्कस्यैवानुकृतं तेन त्रितो नुमित्यनेन सिद्धत्वात् । नच द्वितीयो न विधेयः हसपरस्य हसस्य एकस्यानेकस्य वोच्चारणे विशेषानुपलंभात् । हसेर्हस इति द्वित्वेन नकारद्वयसंभवात् । नश्चापदान्ते इत्यत्र नत्व जात्याश्रयणेन द्वयोः स्थाने एकानुस्वारविधानाच्च। किं तु पूर्वसूत्रादादित्यनुवर्त्य विधीयते नच तत्र पंचम्यंतं कथमत्र विधेयं तस्य तत्राफलत्वेनेहार्थमेवोपात्तं तेनात्र च पञ्चम्यन्तस्यानुपयुक्तत्वेन प्रथमान्तस्यापेक्षितत्वेन चाकारस्यैव विधानात् । ननु षष्ठीनिर्दिष्टस्येत्यनेनांत्यस्य स्यादिति वाच्यम् । द्वितीयमाग्रहणमनुवर्त्य षष्ठ्या विपरिणमय्य न्संतादीनामवर्णस्य आभवतीति व्याख्यानात्। उच्यते । उत्तरार्थं दीर्घग्रहणं नोपधाया इत्यनेनाद्विधाने कुलानीत्यादिसिद्धावपि वारीणि मधूनि कर्तॄणीति न सिध्यति । नन्वेवमपि तत्रैवद्यृ इति पठनीयमादिति चानुवर्तते । आ इति पाठ्यम्। ईकार ऊकार ऋकार आकारश्चेति तदर्थः । एवं च दीर्घग्रहणं व्यर्थमिति चेत् । सत्यम् । दीर्घग्रहणं ज्ञापयाति । ह्रस्वादिशब्दैर्विधीयमानः स्वरः स्वरस्यैव भवतीति तेन शसीति दीर्घः देवानित्यादावेव भवति । ननु भवतः । दुहः । लिहः। इत्यादौ तथा नामि दीर्घो देवानामित्यादौ भवाति । नचतुर्णामित्यादौ । ननूक्तरीत्या स्वरस्यैव दीर्घ इति स्थिते विद्वान् । महानित्या

दौ सर्वस्य दीर्घः प्राप्नोति । सत्यम् । अनंत्यविकारेंत्यसदेशस्येति परिभाषया अनंत्यस्य न भवति । यद्वा पंचवचनपरत्वं स्वरस्यैव विशेषणं न न्संतादीनाम् । तथा पंचवचनपरस्य न्संतादीनां स्वरस्य दीर्घः । येन नाव्यधानं तेन व्यवहितेपि वचनप्रमाण्यादित्येकेन व्यवहितस्य भवति नानेकव्यवहितस्य माधवस्त्वाह । इह यदि सिंहावलोकितन्यायेन वक्ष्यमाणनोपधायाइति संबध्येत तदा न्संतस्य महतश्च नोपधायादीर्घः सिद्ध्येदिष्टम् । अशब्दस्य तु नोपधाया अभावादाप इत्यत्रादीर्घो न स्यात् न च वाच्यमसंभवादप्शब्देन नोपधाया न संभत्स्यते इति स्वांपीत्यादौ तत्संभवात् । अथ न संबध्येत न्संतमहतोः प्रत्येकं स्वरस्य दीर्घः प्राप्नोति अविशेषात् । एवं तर्हि संबध्यते । ननु चोक्तमाप इत्यत्र दीर्घो न स्यात्स्वांपीत्यादावेव स्यात् नैष दोषः । तदंतप्राप्ते केवलप्राप्तिपूर्वकत्वात् ततश्च स्वांपीत्यादावपि दीर्घत्वसिद्धिरिति । अत्र वक्तव्यम् । न्संते केवले दीर्घाभावात्कथं तदंते दीर्घः । किं च नोपधाया इत्यस्य नान्तस्य नाम्न उपधाया इत्यर्थो वक्तव्यो न तु नाम्नो यो नकारस्तस्योपधाया इति । सुमनाः सुमनसौ सुमनस इत्यादावतिप्रसङ्गात् । तथाच कथमत्र संभवः । किंच अंत्यात्पूर्व उपधेत्युपधात्वं नकारस्यांत्यत्वाभावेन तत्पूर्वस्य कथं संभवति । किं च विद्वस् सि महत् सि इति स्थिते त्रितो नुमिनि नुम् प्राप्तो दीर्घश्च तत्र परत्वाद्दीर्घः पश्चादेकदेशविकृतस्यानन्यत्वेन नुम् । तथाच दीर्घविधौ कथं नोपधात्वं स्वांपीत्यत्र । यद्यपि परत्वान्नुमयम इति नुम् प्राप्नोति तथापि प्रतिपदोक्तत्वाद्दीर्घ एव प्रथमं प्रवर्तते यदि तु निरवकाशत्वं प्रतिपदोक्तत्वं प्रकृते च तदभावाद्दीर्घो न प्रथमं प्रवर्तते किंतु नुमेवेत्युच्यते तद स्वांपीत्येव रूपमिष्टं न तु दीर्घ इति । यदि तु नेतित्यक्त्वा उपधामात्रमनुवर्तते परत्वात्प्रतिपदोक्तत्वाद्वा । आदौ दीर्घः ततो नुमित्युच्यते तदा न कश्चिद्दोषः । शाविति शसः पंचस्वनंतर्भावादव्याप्तौ तत्संग्रहार्थम् । ननु स्वपीत्यादावपि दीर्घः प्राप्नोति । औकारस्य पञ्चस्वन्तर्भावादिति चेत्सत्यम् । चकारोऽनुक्तसमुच्चयार्थः निषेधार्थो वा ईपोरित्यनुवर्तते तेन ईकारे परे एषां न दीर्घ इत्यर्थः । यदि तु पुंस इत्यनुवर्त्य सप्तम्या विपरिणम्यते तदा क्लीबेऽतिप्रसङ्गाभावेऽपि स्त्रियामव्याप्तिदोषः । शोभना आपो यस्यां सा स्वाप् स्वापा स्वापः ।

अधावित्यत्र प्रसज्य प्रतिषेधेपि न क्षतिस्तथाप्येकवाक्यत्वानुरोधेनान्वितशा-स्त्रानुरोधेन च पर्युदास एवाश्रयणीयः । न्सम्महत इत्यत्र अम्महत्साहचर्याद्धा तोः न्संतस्य न दीर्घः । अधातोरित्यनुवर्तनाद्वा । तेन सुहिन् । सुहिंसौ । सांतमहतः संयोगस्य स्थाने न्सम्महत इति सूत्रयितव्यं नोपधाया इत्यनुव-र्त्तते । यद्वाऽनुवृत्तिर्नापेक्षितान्यस्य अचश्चेति परिभाषाबलादच इत्युपतिष्ठते । अनंत्यविकार इति परिभाषया इति नातिप्रसंग । सांतमहतोर्नोपधा इत्यस्य स्थाने न्सम्महतोरिति सूत्रयितव्यं नोपधाया इति वर्तते ॥ **नोपधायाः**। नेत्याविभक्तिको निर्देशः । अधिकृतस्य नाम्नो विशेषणं नकारः तेन नान्त-स्य नाम्न उपधाया दीर्घः पंचस्वधौ सौ च । राजा । राजानौ । अत्रापि ईकारं चकारं चानुवर्त्य ईकारे निषेधः । पूर्ववद्व्याख्येयम् । ब्रह्मणी । अत्र नामीत्य-स्यापकर्षणात्तत्र वास्यानुवर्त्तनान्नाम्न्यपि नोपधाया दीर्घः सिध्यति । अत्र च विदो नवानामिति निर्देशो लिंगम् । यदि तु ज्ञापकसिद्धस्यासार्वत्रिकत्वा-त् पञ्चानामिति निर्देशाद्वा नलोपश्यपि दीर्घः सिध्यतीत्युच्यते तर्ह्यनुवृत्त्यप-कर्षक्लेशो मास्तु अत्र नित्यमित्यनुवर्तनान्नित्यं नांत्यस्य नाम्न इति व्याख्याना-त्संयोगान्तलोपस्यासिद्धत्वाद्वा न दीर्घः । भवन् । खन् । नेति किम् । देवः। पंचसु किम् । राजभ्याम् । राजनि । अधौ किम् । हेराजन् । शौ किम् । वर्मणा । सर्वनामस्थाने चासंबुद्धावित्यस्य स्थाने शौ चाधाविति सूत्रणीयम् । शि सर्वनामस्थानमित्यत्र शिसुटूसिरिति सूत्रयितव्यम् । सुडनपुंसकस्येत्यत्र शिरिति सूत्रयितव्यम् । शिना च नपुंसकमाक्षिप्यते । तेन नियम्येत । नपुं-सके सुडसिसंज्ञश्चेत् शिरेव संबुद्धिसंज्ञास्थाने घिसंज्ञा कर्त्तव्या । घुटि चा-संबुद्धावित्यत्र घुटि चाधावित्युचितम् ॥ **अत्वसोःसौ** ॥ अतुश्च असू च अत्वसौ तयोः । अत्वंतस्यासंतस्य च नाम्न उपधाया दीर्घोऽधौ सौ । धीमान् । वेधाः। अतोः प्रत्ययस्याभावात् मतुवतुक्तवत्वादीनामवयवस्य ग्रहणम् । असत्व-र्थकोपि गृह्यते । ननु धीमत् सीत्यत्र परमपि दीर्घं बाधित्वा नित्यत्वान्नुम् स्यात्तथा च दीर्घभाज उपधाया अभावात् व्यर्थमतुब्ग्रहणं स्यादितिचेन्न । नुमो-नित्यत्वासिद्धेः । शब्दांतरस्याप्राप्नुवन्विधिरनित्यो भवतीति नुमनित्यः अकृते दीर्घे धीमत् शब्दस्य नुम् प्राप्नोति कृते तु धीमत् शब्दस्य यदि पुनः प्रसङ्गमात्रे-

णैव नित्यो नुमित्युच्यते तथापि न दोषः भूतपूर्वा उपधा ग्रहीष्यते सांप्रतिकाभावे भूतपूर्वगतिरिति न्यायात् । यद्वा उपधाया इति नानुवर्तिष्यते ह्रस्वादिशब्देन विधीयमानः स्वरस्यैवेति व्यवस्थापितस्यादन्तस्य न भविष्यति किं तु अनंत्यस्यापि स्वरस्यैव तत्राप्यनन्त्यविकारेन्त्यादेशेप्राप्तेंत्यसदेशस्येति परिभाषयान्त्यस्वरस्यैव नान्यस्य । न्यायसिद्धा चेयं परिभाषा । षष्ठीनिर्दिष्टस्येत्युपस्थितानामंत्यस्य प्राप्तः स्वरस्यैवेति ततो व्यावर्त्तितो दीर्घः स्वराणामन्त्यस्य प्रवर्तते । एवं ह्युभयनियमसंरक्षणं भविष्यति । यद्वा दीर्घश्रुत्योपास्थितस्य स्वरस्यैव सिपरत्वं विशेषणं तेन धिवर्जितसिपरस्य दीर्घो नान्यस्य । यद्वा अतोः श्रुत्या तस्यैव स्वरस्य दीर्घः । निदिश्यमानस्यादेशाभवंतीति न्यायात् । इयमपिपरिभाषा न्यायमूलैव । अतुः प्रत्यक्षनिर्दिष्टः । तदंतस्य दीर्घ त्वनुमेयम् अतः प्रत्यक्षस्यातोरेव स्वरो ग्राह्यो न तदंतस्य । माधवस्तु इहापि नोपधाया इत्यनुवर्तते । तेनात्वं तस्य नोपधाया दीर्घे सिद्धमिष्टम् । असंते तु नोपधा नास्तीत्युपधैव संबध्यते । ननु चेयमस्ति ।विद्वानिति। न्सम्महत् इति तु विद्वांसावित्यादौ सावकाशः सत्यम्। एवं हि विद्वानित्यत्रापि तेनैव सिद्धत्वादत्रासग्रहणवैयर्थ्यमापद्येत। न नियमार्थत्वादसंतस्य नोपधायाः सावेवेति । एवमपि तत्र न्सग्रहणं व्यर्थं न असंते चरितार्थत्वात् । सर्पींषि । धनूंषीति । भवति ह्येतदपि बहिरङ्गवत्त्वस्यासिद्धत्वान्संतम् । एवं तर्हीहोपधैवानुवर्तते न नकारः । एवमप्यत्वंते नित्यत्वादादौ नुम्युपधानकार इति दीर्घो न स्यात् । नपरत्वादादौ दीर्घो भविष्यति । मैवम् । परस्य नित्यस्य च नित्यमेवेति नुमेव स्यात् । एवमप्यत्वंतस्य साक्षाच्छष्टौदीर्घइत्यादौ स्यात् । तस्माद्द्विषि प्रतिपदो बलीयानिति । नुम्न निरनुबन्धत्वादनुमितः । अथवात्रातुग्रहणसामर्थ्यादेव नुमं बाधित्वा दीर्घः स्यात् । अन्यथाऽतुग्रहो व्यर्थः स्यादित्याह । अत्वंतस्य धातोरपि दीर्घ इष्यते गोमन्तमिच्छति गोमत्याति ततः क्विप् । अल्लोपयलोपौ गोमान्।असन्तस्य तु नेष्यते सुवः अतोऽत्राधातोरित्यनुवर्त्य असंशे योज्यम्। असंतस्याधातोरिति । अत एव चानर्थकस्याप्यसो ग्रहणं । तेन अधाधाः सुप्रजा इत्यादि सिद्धं ननूकारस्येत्वेनान्तरंगो लोपः स्यात्तथा चानुपाभावात्कथं दीर्घ इति

चेत् । मैवम् ॥ अतु इति रूपमिहाश्रीयते । तच्च लौकिकं कुत्रापि नलभ्यत इति कृत्वा औपदेशिकं ग्रहीष्यते । तथा चोपदेशे योऽतुस्तदन्तस्येत्यर्थः केवलस्यातोरभावादतुशब्देन तदन्तोपस्थितिः । तेन च नाम्नो विशेषणात्तदन्तविधिः शत्रंतस्य त्वत्वंतत्वाभावान्न दीर्घः । भवन् । अत्वसन्तस्य चाधातोरित्यस्य स्थाने अत्वसोरधातोरिति वा सूत्रणीयम् । प्रत्ययग्रहणे यस्मात्स विहित इति परिभाषया तदन्तविधिः। अङ्गस्येत्यधिकृतस्य विशेषणत्वात्तदन्तविधिरिति वा । **शसि** । पूर्वस्य स्वरांतस्य नाम्नो दीर्घः । देवान् दीर्घश्रुत्योपस्थितेन स्वरेण नाम्नो विशेषणात्तदन्तविधिः पूर्वं दीर्घः । पश्चादल्लोपः । वैपरीत्यं वा उभयथापि फले वैलक्षण्यं नास्ति । एवं सोनः पुंसि इति नत्वेपि ज्ञेयम् । शसि किम्। हरिभिः।स्वरस्य किम्।लिहः । ननु सेइत्येव सूत्र्यतां स्याद्यधिकाराच्च स्यादिसंबंधी ग्रहीष्यते।स च शसोऽवयवः संभवतीतिचेन्न। लोपादेश इति प्रत्ययस्यैव ग्रहणं स्याद्यधिकारस्य तु बाध एव स्यात्तत्रशस्यप्रत्ययस्यासंभवात् । तर्हिसीति सूत्र्यतां स्याद्यधिकारात् शस एव ग्रहणं ङसिरत्, ङस्स्य, एओजसि, ङिति, ङस्येत्यादिभिरन्यत्र बाधनात् । शसात् पूर्वस्य आदेः ओरावित्यादिनिर्देशाश्चात्रानुकूलाः । मैवम् । अधिकारं बाधित्वा निरनुबंध ग्रहणे न सानुबन्धकस्येति परिभाषया अस औणादिकस्यैव ग्रहणप्रसंगात् । शसोऽकारः सश्चनोऽस्त्रियाम्, अग्निवच्छसि, शसि सस्य न, इति त्रिसूत्र्याः स्थाने शसि समानः सोनोऽस्त्रियामिति सूत्रणीयम् । शसि परे समो दीर्घमापद्यते सश्च नो भवत्यस्त्रियाम्।अकारे लोपामित्यस्य स्थाने लोपम् ।अत इति द्विसूत्री कर्तव्या । समानाच्छसोऽकारो लोपमापद्यते अकारे । लोपमकारेविभक्तौ इति तदर्थः । प्रथमयोः पूर्वसवर्ण इत्याह षितमौ यू इत्यत्र । **नामि** । पूर्वस्य स्वरान्तस्य नाम्नो दीर्घः । देवानाम् । हरीणाम् । अत्र स्याद्यधिकारात् नाम्नश्च तत्राभावात् कृतनुट्षष्ठीबहुवचनं गृह्यते । जबानामिति चात्र लिंगम् । ननु न ग्रहणं किमर्थम् । आमि दीर्घ इत्येवोच्यताम् । नच हरीणामित्यादौ परत्वाच्च नित्यत्वाच्च प्रथमं दीर्घे कृते पश्चान्नुट् न स्यात् । पुँल्लिङ्गाद्ध्रस्वादेव नुट् इष्यमाणत्वादिति वाच्यम् । भूतपूर्वह्रस्वाश्रयणात् । झसानामिति हि मानम् अस्तु वा निरवकाशत्वात्प्रथमं नुट् तस्याम्भक्तत्वादाम् ग्रहणेन

ग्रहणादामीति दीर्घः सिध्यति । मैवम् । वर्मणामित्याद्यसिद्ध्यापत्तेः । तथाहि । नोपधाया इत्यस्यात्रानुवर्तनादस्य च तत्रापकर्षणान्नोपधाया अपि दीर्घ इष्यते तत्रामीत्युक्तौ वर्मणामित्यादावपि स्यात् । तद्वारणाय नामीत्युक्तम् तेन पञ्चानामित्यादावेव भवति । नन्वेवमपि नुटीत्येवोच्यतां किं गुरुन्यासेनेति चेत् सत्यम् । नुड्भिन्नस्यापि मकारस्य ग्रहणार्थमेव निर्देशः । तेन वारीणामिति सिद्धम् । नामिनः स्वर इति नुमोपि नामिग्रहणेन ग्रहणात् । नन्वेवं नुमो नामभक्तस्य ग्रहणे यज्वनामित्यादावतिप्रसङ्गस्तदवस्थ एवेति चेन्न । इनामिति निर्देशेनानागमजस्यात्राग्रहणात् । अन्ये तु नुटीत्येव सिद्धे नामीति निर्देशस्तन्त्रेणार्थद्वयलाभार्थः। तत्रैक उक्त एव अपरस्त्वामि न दीर्घ इति । तेन तिसृणाम् । चतसृणामिति सिद्धमित्याहुः। पश्यत्यंगनामित्यादौ लाक्षणिकत्वात्स्याद्यभावादानर्थक्यादप्रत्ययत्वाद्वा न दीर्घः । अत एव थोनुडित्यत्र नातिप्रसङ्गः । दीर्घनाम्नि समावित्यस्य स्थाने दीर्घनामीति सूत्रणीयम् । नान्तस्य चोपधाया इत्यस्य स्थाने नोपधाया इति सूत्रं युक्तम् । नामीति पाणिनीयसूत्रस्थाने नुटीत्येव सूत्र्यतां लाघवात् । नच तस्मान्नुट्चीत्यादावतिप्रसङ्गः । अङ्गस्येत्यधिकारात् । प्रत्ययसम्बन्धिनो नुटोग्रहात् । नचैवमप्यनो नुडित्यत्रातिव्याप्तिरेव दीर्घत्वं प्रति तस्यासिद्धत्वात् । नच भृञः किन्नुड्वेत्यनेन गप्रत्ययस्य विहिते नुड्यदीर्घप्रसङ्गेन भृंग इत्याद्यासिद्धिप्रसंग इति वाच्यम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति वचनात् । वस्तुतस्तु नि इत्येव सूत्रयितुमुचितम् । न चागपिकाराबलेन प्रत्ययस्याक्षेपान्नकारादौ प्रत्यये दीर्घ इत्यर्थलाभात् । पामनः । हरिण इत्यादावति प्रसंगो यस्मिन् विधिरिति न्यायादिति वाच्यम् । विहितविशेषणाश्रयणात् । अंगाद्विहिते नकारे दीर्घ इति पामन इत्यादौ तु समुदायो विहितो न तु नकारमात्रं नुम् त्वङ्गस्य विधीयते न त्वङ्गात्परस्य । न च परादिपक्षे तत्रातिप्रसंगः । बलंलिह इत्यादावनुस्वाराप्रसङ्गादस्य पक्षस्यास्थितत्वाज्ज्ञापकाच्च नुमचिरतृज्वद्भावेभ्यो नुडिति हि ज्ञापकम् । यदि हि नुम्यपि दीर्घः स्यात्तर्हि नुमं बाधित्वा नुड्विधानमनर्थकं स्यात् । अस्य वचनस्य त्वयाप्यभ्युपगमादिति दिक् ॥ **इनां शौ सौ** ॥ इन्हन्-

पूषार्यम्णां शौ सौ चाधावेवोपधाया दीर्घो नान्यत्र दण्डी । दण्डिनौ । वृत्रहा। वृत्रहणौ । अर्यमा । अर्यमणौ । पूषा । पूषणौ । बहुवचननिर्देशादाद्यर्थावगतिः । इन्नानिन् समुदाये इन्त्वमारोप्यते । छत्रिणो गच्छन्तीत्यत्र छत्र्यच्छत्रिसमुदाये छत्रित्वं यथा तेन इन्पूषार्यमणः । अर्थवत्परिभाषाया अनित्यत्वादर्थवतोऽनर्थस्यापीनोत्र ग्रहणम् । तेन च तदंतं गृह्यते । इतरेभ्योपि न केवलेभ्यः शिः संभवति । हन्निति क्विबंतस्य हंतेरिह ग्रहणम्। न च हंतेः केवलात् क्विप् दृश्यते । इतरौ तु पुँल्लिंगौ । नपुंसकात्तु जश्शसोः शिर्विधीयते । तस्मात्समर्थात्तदन्तविधिर्विज्ञायते । दंडोस्यास्तीति दंडी । मांतोपधादितीन् । बहवो दण्डिनः संत्येषां बहुदंडीनि । ननु चेन्निति प्रत्ययग्रहणं तत्र प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति दंडिनीत्यत्रैव दीर्घः स्यान्न तु बहुदंडीनीत्यत्र नैष दोषः । यत्र प्रत्ययस्यैव ग्रहणं तत्रय परिभाषोपतिष्ठते । नचेह प्रत्ययग्रहणमपि तु प्रत्ययाप्रत्यययोः । अन्यथा वाच एषां सन्तीति वाग्मीनि स्रज एषां संतीति स्रग्वीणीत्यादौ ग्मिन्नन्तस्य न स्यात् । ननु नोपधाया इत्यनेनैवात्र दीर्घः सिद्ध इति चेत्सत्यम् , सिद्धे सत्यारम्भो नियमार्थः इन्नादीनामुपधायाः शावेव दीर्घो भवति नान्यत्रेति । विपरीतस्तु नियमो न भवति । इन्नादीनामेव शाविति सन्ध्यक्षराणीति निर्देशात् । स्यादेतत् । आरभ्यमाणेऽप्यस्मिन्नियमार्थे वृत्रहनीत्यत्र ञमांतस्य क्विति झसे इति दीर्घत्वं प्राप्नोत्येव । अनन्तरस्य विधिर्वा प्रतिषेधो वेति न्यायेन नोपधाया इत्यस्या एव प्राप्तेर्नियमात् । किंच यथा विशिष्टायाः प्रकृतेर्नियम आरभ्यते तुल्यजातीयापेक्षत्वान्नियमस्य । ततश्च वृत्रहणीत्यत्र नैव दीर्घ इति । उच्यते। योगविभागोत्र कर्तव्यः । इनामिति पंचसु शाविति चानुवर्तते । अनेन दीर्घत्वं नोपधाया इत्यनेन ञमस्य क्वितिझसे इत्यनेन च प्राप्तं नियम्यते । इन्नादीनां शौ पञ्चस्वेव दीर्घो नान्यत्रेति । योगविभागसामर्थ्यादनन्तरस्योति न्यायबाधः । नोपधाया इत्यस्य नियमस्य योगविभागं विनापि सिद्धेः । तेन वृत्रहणीत्यत्र न दीर्घः । शावित्यनेन तु इन्नादीनां यः शौ पञ्चसु दीर्घः स शावेव नान्यत्रेति । तेन बहुवृत्रहणीत्यत्र न भवति । वृत्रहणौ ।

वृत्रहण इत्यत्र न भवति साविति तु विध्यर्थं पूर्वेण नियमात्साव-प्राप्तेः योगविभागाभिप्रायेणैव शौ साविति निर्देशः। अन्यथा शिस्यो-रित्येवावक्ष्यत्। अधावित्यनुवृत्तेर्धौ न दीर्घः। हेदंडिन्। अत्र पक्षे यदि शाविति योगे अत्वसोः सावित्यतः सावित्यनुवर्त्य शौ सावित्युभयत्र नियम इत्युच्यते। तदाऽस्मिन्सूत्रे साविति न कर्तव्यम्। यद्वा पञ्चसु शाविति निवृत्तं योगविभागश्च न कर्तव्यः। पञ्चस्विति विशेषमनाश्रित्य प्रत्ययमात्रे नियमोऽयम्। इन्नादीनां प्रत्यये यदि दीर्घस्तर्हि शौ सावेव नान्य-त्रेति प्रत्ययमात्रं निवर्तयति। न तुल्यजातीयं वचनमेव। एवं तर्हि वृत्रहे-वाचरति कर्तुर्यङ् वृत्रहायते इत्यत्र य इति दीर्घोऽपि न स्यात्। मैवम्। उपधाया इत्यनुवर्त्तते तेन न सर्वस्य दीर्घविधेरयं नियमः। किन्तूपधादीर्घ-विधेः। ये इति तु नोपधादीर्घविधिः। एवं च्वौ दीर्घ ईचास्येति दीर्घोऽपि भवत्येव। दण्डीभूतः।अस्मिन्पक्षे तु शौ सावित्युभयं न कर्तव्यम्। न्सम्महतः अत्वसोः सावित्यतोऽनुवृत्तिसत्त्वात्॥**अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ॥** अदित्यविभक्तिकं पृथक्पदम्। नोपधाया इति नांतस्य नाम्न उपधाया अतो लोपः स्याच्छसादौ स्वरे ईकारे ईपि च। राज्ञः। राज्ञा। राज्ञी। उप-धाया अत इति किम्। तपस्विनः। नान्तस्य किम्। भवतः। अतः किम्। दंडिनः। स्वरे किम्। राजभ्याम्। तपरत्वं नञ्समासोऽयमिति भ्रमवारणा-र्थमिति प्राञ्चः। तन्न निषेधस्य प्राप्तिपूर्वकत्वात्। लोपप्राप्तेश्चात्रान्येनादर्शना-दुक्तभ्रमासंभवात्। प्रतनोतीतिप्रतान्। ध्वान्। मानयतीति मान् इत्यादौ नांतस्योपधाया आकारस्य सम्भवेन तद्वारणार्थं तपरत्वम्। क्वचित्तु नान्तेभ्यो-ऽनभिधानात्क्विन्नास्तीति व्यर्थं तपरत्वमित्याह। तन्न। नांतात्क्विप्युक्तो-दाहरणस्य सत्त्वात्। शसादौ किम्। मघोन इदं माघवनं देवतेदमर्थ इत्यण्। माघवस्तु स्वरे किम्। चर्मभ्याम्। शसादौ किम्। चर्मणी। इत्युदाहारः। तन्न। अम्वयुक्तादिति निषेधात्। बहुवृत्रहणी इत्यपि न प्रत्युदाहरणं वेङ्चो-रिति बोधात्। म् च वश्च म्वौ अयोजीति युक्तः। कर्मणिक्तः। म्वाभ्यां युक्तो म्वयुक्तो वर्णः कर्तरि तृतीयांतेन समासः। ततो नञिति नञ्समासः। तस्मात् म्वाभ्यां युक्ताद्वर्णात्परस्यालोपो नेत्यर्थः। प्रसज्यप्रतिषेधोयम्।पर्युदासो

वा अम्वयुक्तभिन्नवर्णात् परस्यातो लोप इत्यर्थः । यद्वा योजनं युक्तं भावे क्तः । म्वाभ्यां युक्तं म्वयुक्तं सह योगे तृतीया । तस्मादन्यदम्वयुक्तं तस्मात् । यद्वा म्वयोर्युक्तं योगो यस्य म्वाभ्यांयुक्तं योगो यस्य तस्मादन्यत् अम्वयुक्तं मवावय वकसंयोगभिन्नात्परस्यातो लोप इत्यर्थः । यज्वनः । ब्रह्मणः । यत्तु म्वाभ्या-माद्याभ्यां संयोगे वर्णांतरव्यवधानादल्लोपाप्राप्तेः प्रतिषेधानुपपत्तेरंताभ्यामेव संयोगो गृह्यत इति माधवोऽवोचत् । तन्न । मवाभ्यां संयोगस्यादर्शनात् दर्शने वा वर्णांतरव्यवधानादल्लोपाप्राप्तेरित्ययुक्तं समुदायस्यैव संयोगसंज्ञकत्वात् संयोगात्परत्वस्यैव विवक्षितत्वात् । मध्ये चावर्णान्तराभावात् । म्वेति किम् । तक्ष्णः । युक्तात्किम् । अर्यम्णः । नाम्ना न संयोगाद्वमन्तात् इत्यस्य स्थाने-न म्वयुक्तादिति सूत्रणीयम् । यद्वाल्लोपो नो म्वयुक्तादिति सूत्रयितव्यम् । अवमसंयोगादनो लोपो अलुप्तवच्च पूर्वविधावित्यस्यस्थाने आम्वयुक्तादनो-लोप इसि सूत्रणीयम् । अलुप्तवच्च पूर्वविधावित्यलुप्तवद्भावे प्रतिदीव्न इत्यत्र दीर्घो न स्यात् । राज्ञ इत्यत्र नकारस्य ञकारो न स्यात् नत्र प्रश्लेषाभावे लुप्तसालुप्तवद्भावविधानमनर्थकंस्यात् । वेङ्योः । इश्च ङिश्च ईङी तयोरीङ्योः ई इति ईमौ इत्यनेन विहितो गृह्यते न जश्शसोः शिरित्यनेन।व्या ख्यानात् । निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया वा । अत एव ईपोपि न ग्रहणम् । ङिसाहचर्याद्वा अत्र ङेरिदन्तत्वेप्यसंदेहार्थं परनिपात इति माधवः । तन्न । वाङ्योरित्युक्तेपि द्विवचनबलेन द्वयोरत्र निर्देश इति ज्ञातुं सुशकत्वात् । वादीपोरिति यथा । इवर्णाशह्रस्वदीर्घकोटिकसंदेहः स्यादिति चेत् । पितत्तुल्यं पूर्वेण नित्ये प्राप्ते विकल्पोऽयं तेन चर्मणी बहुयज्वनी इ-त्यादौ च विभाषा वेङ्योरिति वक्तुं युक्तं ङिसाहचर्यात्तु सुप ईकारे ग्रहीष्यते । **अंचेर्दीर्घश्च** । लुप्तनकारस्यांचतेरतो लोपः शसादौ स्वरे ईपि ईकारे च । प्र-तीचः । अत्र माधवः । अंचेरिति लुप्तनकारांचतिनिर्देशो यत्रास्य नलोपस्त त्रैव यथा स्यादिति ज्ञापनार्थः । तेन पूजार्थांचतेर्भजादिविण्णंतस्य नस्य लोपाभावेऽल्लोपदीर्घाभावात् । प्रत्यञ्चः । प्रत्यञ्चेत्यादिः स्यादित्यर्थ इति । तन्न । इकृश्तिपौ धातुनिर्देश इतीकूप्रत्ययः कित्त्वान्न्याय्य एव नलोप इति तेनोक्तार्थस्याज्ञापनात् । तस्मादचो दीर्घश्चेति पठनीयम् । अर्द्धमात्रालाघवं चैव लभ्यते उक्तार्थज्ञापनम् । अन्ये तु वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसंभवान्ना

यमिति दिक् । किंतु उच्चारणार्थोयमिकार इति नलोपिनिर्देशो ज्ञापक एवेत्याहुः । ननु पूर्वस्येति कस्माल्लभ्यते स्थानिनोऽत्रानिर्देशात् परस्यापि संभवात् । अंचतिव्यवधानादपि पूर्वस्य न स्यादिति चेत् । अत्र माधवः। निमित्ते परेऽव्यवहितस्याञ्चतेरल्लोपस्तस्मिंश्चानकारांचतौ परेऽव्यवहितस्य पूवस्य स्वरस्य दीर्घ इति । वस्तुतस्तु दीर्घश्रुत्योपस्थितः स्वरः एवात्र स्थानी । शसादाविति लोपे दीर्घे च निमित्तं सप्तमीनिर्देशात् । शसादौ परे पूर्वस्य स्वरस्य दीर्घ इति स्थितेऽव्यवहितस्य स्वरस्यासम्भवादेकेन चकारेण व्यवहितस्य दीर्घः प्रवर्तते । येन नाव्यवधाने तेन व्यवहितेपि वचनप्रामाण्यात् । ननु अल्लोपदीर्घयोरुभयोर्विधानादेव समुच्चये सिद्धे किं चकारेणेति चेत्सत्यम् । अनुक्तसमुच्चयार्थश्चकारः । तेन तद्धितेपि प्रतीचीनः समीचीनः । माधवस्तु समासांतो महाशसादिर्गृह्यते इति तद्धित ईश्च निमित्तं भवतीत्याह । प्रतीच्य इत्यादौ तु क्वचित्स्वरवद्यकार इति निर्वाहः । वेञ्चोरित्यत ईकारे चेति वर्तत इति वा निर्बाहः। ननु प्रतीच इत्यत्र वर्णाश्रयत्वेनान्तरङ्गत्वात् शसुत्पत्तेः पूर्वमेवेकारस्य यकारो भवतीति दीर्घभाजो भावात्कथं दीघः शसि लोपो विधीयते इति बहिरंगः तत्सन्नियोगशिष्टत्वाद्दीर्घोपि बहिरंगः । नच दीर्घ इति वचनसामर्थ्याद्यकारः पूर्वं नेति वाच्यम् । प्राचः प्राचेत्यादौ वचनस्य चरितार्थत्वात् । अत्र समाधिमाह माधवः । विभज्यान्वाख्यानपक्षे प्रति अच् असित्यत्रानेनाचोऽकारलोपं प्रतीकारदीर्घौ अविभज्यान्वाख्यानपक्षेऽप्यलोपे निमित्ताभावे नैमित्तिकस्याप्यभाव इति नास्ति यत्वमितीकारदीर्घो न दुष्यतीति।तदुक्तम् "द्विधा कैश्चित्पदं भिन्नं चतुर्द्धा पंचधापि वा। अपोद्धृत्यैववाक्येभ्यः प्रकृतिप्रत्ययादिवत्" इति। यद्वा अकृतव्यूहाः पाणिनीया इति परिभाषया अंतरंगपरिभाषया स्वाधिकास्ति । तदर्थस्तु निमित्तस्य विनाशं पर्यालोच्य तत्प्रयुक्तं कार्यमादौ न कुर्वंतीति न्यायसिद्धाचेयम् । लोके हि विवाहादिकार्ये स्वामिभृत्यभावादौ पथिकानां छायावस्थानादौ च प्रथमोपस्थितस्यापि विनाशोन्मुखस्य परित्यागो दृश्यते तथा शास्त्रे अंतरङ्गत्वेन प्रथमोपस्थितमपि भाविनं निमि[illegible]स्य विनाशं ज्ञात्वा न कुर्वंति । अन्ये तु दीर्घवचनसामर्थ्यान्न यकारः । प्राच इत्या-

दावप्यन्तरङ्गत्वात्पूर्वं सवर्णदीर्घो भविष्यति । तथा च दीर्घविधानं व्यर्थं स्यात् । अतो दीर्घवचनसामर्थ्यादन्तरंगं बाध्यते इत्याहुः । अचेचर्ची ति वक्तव्ये इश्च उश्च ऋश्च आ चैषां समाहारः । संज्ञापूर्वको विधिरनित्यो भवत्येतदर्थं तेन कर्तृचः पितृच इत्यादौ न दीर्घः । स्वरे किम् । मत्यग्भ्यां शसादौ किम् । मत्यंचौ । अचेरलोपः पूर्वस्य च दीर्घ इत्यादि च त्रिसूत्रीयं पुंसोऽनुशब्द इत्यनंतरं पठनीया । तत्र प्रथमसूत्रस्थानेऽचोदीर्घश्चेति पाठ्यम् । अचोऽकारो लोपमापद्यतेऽघुट् स्वरे पूर्वस्य च दीर्घो भवत्यघुट्स्वरे परे विधीयमानो दीर्घः पूर्वस्यैव भविष्यति निमित्तस्य कार्यित्वायोगात् । **तिरश्चाद्यः** । एते निपात्यंते स्वरे तद्धिते ईपीकारे च । तिरश्चः । उदीचः । तिरश्चीनः । उदीच्यः । सिद्धरूपनिर्देशो निपातनं तच्चात्रालाक्षणिककार्यर्थं न कृतं पूर्वेणाल्लोपेतिरसस्तिर्यभावो निपात्यते । ननु मास्तु निपातनं सहादेरित्यनेन अश्चतेरकारे परे तिरसस्तिर्यादेशो विहितः । लुप्ते त्वकारे निमित्ताभावन्यायेन तिर्यादेशस्यापि निवृत्तिः स्यादिति चेन्न । अंचतेरेव निमित्तत्वेनाश्रयणात् । लुप्तेप्यकारे एकदेशविकृतन्यायेनांचतेः सत्वादादेशनिवृत्तिर्न स्यात् । सध्रीचः । समीच इत्यादाविवेति निपातनस्याश्रयणं तिरश्चादिरिति सूत्रयितव्यम् । आदिशब्दादुदीच इत्यत्राचेरकारस्येकारो निपात्यते । बहुवचनं तु व्यर्थं तृतीयस्यादर्शनात् ॥ **ष्रृनोंणोनन्ते** ॥ ष् च र् च आ च एषां समाहारः । ष्रृ तस्मात् । षरऋवर्णेभ्यः परस्य नस्य णः स्यात् । पुष्णाति । चतुर्णाम् धातॄणाम् । तिसॄणाम् । अनंते किम् । पितॄन् । ष्रृरिति किम् । देवेन । न इति किम् । वर्त्म । ननु अग्नेर्नेता वायोर्नामनमित्यत्रापि प्राप्नोति । नैष दोषः । एकपद एवास्य प्रवृत्त्यभ्युपगमात् । अत्रार्थे ष्रृनः धातोर्नामिन इत्यादिनिर्देशो मानम् । ननु चैवं रामनामेत्यादावपि स्यात्समासे सत्येकपदत्वादिति चेन्न । गर्गनडेत्यादिनिर्देशात् । ज्ञापकसिद्धं न सर्वत्रेति हरिकामेणेत्यादौ णत्वं न भवति । एतदेवाभिप्रेत्य पठ्यते समासे क्वचिदेकपद्यं णत्वहेतुरिति । अत्र माधवः । णत्वस्य हेतुर्निमित्तं ष्रृनोंणोनंते । अवकुप्वंतरेपीत्याभ्यां णत्वनिमित्ते सति प्रापयतीत्यर्थः । अंतर्वर्तिन्या विभक्त्या भिन्नपदत्वं तु द ष्यनाश्रयणान्न णत्वं विदंतीति । अथ षकारग्रहणं किमर्थम् । पुष्णातीत्यादौ

ष्टुत्वेनेष्टसिद्धेः । न च पुषाणेत्यादौ व्यवहितेपि णत्वार्थं षग्रहणम् । ष्रुरिति पञ्चमीनिर्देशे व्यवहितेऽस्य प्रवृत्तिविरहात् । एवं तर्ह्युत्तरार्थं षग्रहणमिहैव कृतम् । यद्वा षग्रहणसामर्थ्यात् व्यवहितेऽप्यस्य प्रवृत्तिः स्वीक्रियते । नचोत्तरार्थता । तथा सत्युत्तरत्रैव षग्रहणं कुर्यात् षोवकुप्वंतरेपीति । नचैवमत्र रेफऋवर्णयोरनुवृत्तिर्न स्यात् । यवराणामिति लिङ्गेन हारित्यस्यानुवृत्तिसम्भवात् । अवकुप्विति नियमार्थमेव । नचैवं मात्रागौरवं स्पष्टप्रतीत्यर्थं तत्स्वीकारात् । अवकुप्वंतरेपीति न पाठ्यम् । न्न षिति लुप्तपंचमीकम् । ज्ञापकसिद्धं न सर्वत्रेति न्यायेनास्य व्यवधानेपि प्रवृत्तिस्स्वीक्रियते । अत्र वेङ्योरित्यतो वेत्यनुवर्तते । स च व्यवस्थितविकल्पो विज्ञेयः । तेन क्षुभ्नादिषु णत्वं न । माधवस्तु ष् च र् च आच ष्रुरिति द्वंद्वैकत्वे छांदसं पुंस्त्वम् । आगमशासनस्यानित्यत्वाद्वा नुमभावः । षरेफवर्णनिध्याच्च ऋरपि वर्णो गृह्यते न धातुः । यद्येवं मातॄणामित्यादावपि ऋकारैकदेशरेफमाश्रित्य रइत्येव सिद्धं णत्व किमृग्रहणेन । नच वाच्यं परेण स्वरांशेन व्यवधानान्न स्यादिति। अवकुप्वन्तरे पीत्यत्रांतरेपीति विभज्य तद्व्यवधानेपि व्यवधानात् । अवकुप्वित्यस्य च योगस्याक्षरसमाम्नायिकैस्तत्प्रत्यायितैश्चेदेभिरेव स्यान्नान्यैरिति नियमार्थत्वादर्थेनेत्यादावप्रसंगः । ऋकारांशस्य त्वक्षरसमाम्नायिकत्वान्न नियमेन व्यावृत्तिः । तदेवं व्यर्थमृग्रहणमिति चेन्न ज्ञापकार्थं इहाक्षरसमाम्नायिकवर्णेष्ववयवस्य वर्णकार्यं न स्यादिति तेन निपीयेत्यत्र ह्रस्वाश्रयस्तुक् न भवति ज्ञापकात्सिद्धं यदयं दीर्घाच्छस्य द्वित्वं शास्ति तज्ज्ञापयति न दीर्घे ह्रस्वकार्यं स्यादिति । अन्यथा छ इत्येव सिद्धत्वाद्व्यर्थं तत्स्यात् । इह तर्हि याता इत्यादौ यत इत्यलोपो न स्यात् । नच तपरत्वसामर्थ्यान्न भविष्यतीति वाच्यम् । तपरत्वस्य सर्वाकारलोपनिरासार्थत्वात्तन्निरासश्च परस्य लोपे कृते तस्य तद्भावात् पूर्वलोपाभावाद्वारणात्तथा पुनर्ऋषभः रिलोपो दीर्घश्चेति न स्यात् । तथा हरे इदं अंतरंगत्वं चावयवाश्रयस्य दीर्घस्यैव न समुदायाश्रययोरवयवयोः अवयवप्रतिपत्तिपूर्वकत्वात्समुदायप्रतिपत्तेः । तथाचोक्तं काशिकायाम् । वर्णेषु ये वर्णैकदेशा वर्णांतरसमानाकृतयस्तेषु तत्कार्यं नेति।अथवा अन्यथानुपपन्नैकबुद्धेरेकवर्णोच्चारणे-

च्छापूर्वकैकप्रयत्ननिर्वर्त्यत्वाच्चाकारादीनामेव एषामप्येकवर्णत्वमिति नरसिंहव-ज्जात्यंतरत्वादवयवाभावादकारेऽप्येकदेशरेफाभावासत्वाप्राप्तेर्विद्ध्यर्थमृकारग्र-हणम्।इहानन्त इति तत्र प्रसज्यप्रतिषेध एव संभवति । अंते स्थितस्य न भवती ति।तत्र व्याकरणस्य पदसंस्कारात्मकत्वात्पदस्यैवांतो गृह्यते न वाक्यस्य।उत्त-रत्र सूत्रेप्यनंत इत्यस्ति।ननुचैवमपि धातर्नमस्त इत्यादौ पदे नस्य णत्वं स्यात्। अनंत इत्यस्य काकाक्षिगोलकन्यायेनावृत्त्या वा ष्रुरित्यनेनापि संबंधात् । पदांतेभ्यः षकाररेफऋवर्णेभ्योपि प्रतिषेधात्।तदुक्तं 'हेतौ पदादेर्णत्वं स्यादनन्ते स्थानिनैव चेत् । स्थानिनापि निमित्तेन पूज्यते तन्निवृत्तये' इति। इत्याह । तत्र ऋश्चेत्यसंगतमृरपीति च सेरेत्यस्य प्राप्तेः क्लीबलुक्प्राप्तेः छांदसं पुंस्त्वमि-त्यसंगतमस्य छंदस्त्वाभावात् नपुंसकत्वस्यानित्यत्वात्। **अवकुप्वंतरेपि** । अवप्रत्याहारेण कवर्गेणानुस्वारविसर्ग ᳲक ᳲपैश्च व्यवधानेपि भवति नान्येन सर्वेण बृंहणं उर ᳲकेण ᳲउर ᳲपेण । ष्रुरिति पञ्चमीनिर्देशाद्व्यवाये न प्राप्नोतीदमारभ्यते विध्यर्थम्। नन्वेवमवव्यवायेऽन्यव्यवायेच प्राप्नोति आदर्शेन अर्थेन यद्यप्यत्रानेनापि व्यवायः यस्त्ववेन व्यवायः तदा श्रयणत्वं प्राप्नोति यत्र त्वनुद्दिष्टैरेव व्यवायस्तत्रैव न स्यात् कृत्स्नं मृत्स्नेति।नैष दोषः। ष्रुरित्यत्र पंचमीनिर्दिष्टपरिभाषोपस्थानाद्व्यवाये णत्वाप्रसंगात् । सूत्रमिदमारभ्यमाण-मवादिव्यवाय एव णत्वमभ्यनुजानाति । नान्यव्यवाये तस्याव्यवहित-ग्रहणेन निवर्तितत्वात् । यद्वा पूर्वसूत्रोक्तरीत्या योगविभागाश्रयणादुभय-मनुक्रियते व्यवहितेविधिः। अवादिभिन्नव्यवायनिषेधश्च। यदा तु पूर्वसूत्रस्य व्यवहितेपि प्रवृत्तिरभ्युपगम्यते तदेदं नियमार्थमेवेत्यर्थे नेत्यादावतिप्रसंग एव-नास्ति इह समुदाये वाक्यसमाप्तिर्दृष्टा।यथा गर्गाः।शतं दंडचंतामिति अर्थिनश्च राजानो हिरण्यं न भवति । न च प्रत्येकं दंडयन्ति प्रत्येकमपि दृष्टा। यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः तत्रेदं यदि पूर्वः कल्प आश्रीयते न क्वचित्स्यात्। नहि समस्तैरवादिभिः क्वचिदपि व्यवायः संभवति। द्वितीये तु अर्वेणेत्यादौ न स्यात् । अवेन कवर्गेणात्र व्यवायात् । अतो व्यवायोपलक्षणत्वमवादीना-मुपगम्यते । तेन व्यस्तैर्यथासंभवं समस्तैश्च व्यवाये णत्वं भवति। इह ये यदुपलक्षणायोपादीयंते तेषामेकेन द्वाभ्यां बहुभिरप्युपलक्षितः स गृह्यते।

तद्यथा गर्गैः सह भोक्तव्यमिति । प्रत्येकं च न सह भुज्यते समुदितैरपि । तथेहापि शकुर्वंत्यवादयः समस्ता व्यस्ताश्च व्यवायमुपलक्षयितुमिति सर्वत्र भवति।माधवस्तु तत्रैव च अनन्त इत्यस्य ष्रुरित्यमुनापि संबद्धस्य ष्रुरित्यस्येहानुवृत्तेः पदांतर इति निषेधादवादयः प्रत्याहारवर्गवर्णा एव गृह्यन्ते न धातवः । नाप्यवकु अव्ययेनापि कुशब्दः कृत्रिमत्वाच्च वर्णपरा ह्यवादयः कृत्रिमाः शब्दाः अकृत्रिमाश्च धात्वादिपरा अंतरशब्दो मध्यवाची । षकाररेफऋवर्णेभ्यः पदांतेभ्यः परस्य नकारस्य णकारादेशः । अत्र सर्वं वाक्यं सावधारणं भवतीत्येभिरेवांतरेस्यान्नान्यैरत्राद्यनंतर्भूतैः । यद्येवं कथं प्रेंखणं प्रोंभणमिति ! यावता अवाद्यनंतर्भूतोऽनुस्वारः । नन्वंतरभूतेप्यमुष्मिन्नत्र न स्यात् । भिन्नपदत्वात् । तथाहि । अत्र सूत्रेऽनन्त इत्यनुवर्तते । अवकुष्विति लुप्तषष्ठीकं पृथगेव पदम् । तेनायमर्थः । अनंते स्थितानामवादीनामंतर इति । ततश्च भिन्नपदे हरे नमस्ते इत्यादौ न भवति । एवमिहापि न स्यात् । प्रेंखणं प्रोंभणमिति नैष दोषः । इदं ह्येकमेव पदं तथाहि । प्रकृष्टमिंखनं प्रेंखणम् । प्रकृष्टमुंभणं प्रोंभणमिति । नाम्नश्च कृतेति समासे तज्जाया विभक्त्या णत्वं प्रति समासापेक्ष्यमैकपद्यमेवाश्रीयते । अंतर्वर्तिन्या विभक्त्या पदान्तरत्वं तु सदप्यनाश्रितत्वादकिंचित्करं यथा गृहं संमार्ष्टीत्यत्र कर्मत्वमाश्रितम् ।एकवचनं तु सदप्यनाश्रितत्वादकिंचित्करम् । तदेवमनुस्वारस्यावादिष्वंतर्भावादेवात्र णत्वं न स्यात् । यथा प्रेंखनमित्यत्र नकारस्येति चेदुच्यते माभूदनुस्वारस्य । तस्य तु यमा यपेस्येति ङकारे मकारे च यमादेशे कृते कुप्वन्तरे इत्येव भविष्यति । नच वाच्यं कुर्वंतीतिवदसिद्धपरिभाषया यमादेशस्य णत्वं प्रत्यसिद्धत्वं तस्य समासात्प्राक् जत्वेनांतरंगत्वाद्बहिरंगत्वाच्च समासोत्तरकालजत्वे णत्वस्य । अवकुष्विति किम् । मृत्स्ना । ष्रुरिति किम् । भानुना । अंनत इति किम् । सर्वान् इत्याह।अपिशब्दोऽनुक्तसमुच्चयार्थः । तेनानुस्वारविसर्जनीयजिह्वामूलीयोपध्मानीयैर्व्यवधानेपि णो भवति।उरः कायति पाति वा उरः केण उर ≍ केण उर ≍ पेण बृंहणम् । **किलात्षः सः कृतस्य** ॥ कुश्च इळश्चानयोः समाहारः किलं तस्मात् । कवर्गादिळाच्च प्रत्याहारात्परस्य कृतस्य सस्यानंते स्थितस्य षो भवति।एषः।

अकार्षीत्। कृतस्य स इति समानाधिकरणे षष्ठ्यौ। कृतो यः सकारस्तस्य ष इत्यर्थः । इत्थं सति देवेषु हरिष्यतीत्यादौ न प्राप्नोति । समुदायस्य विहितत्वेन सस्य तथात्वविरहात् । मैवम् । रोरात्रिषु ईषद्दुःसुषु इत्यादौ भविष्यतीत्यादिनिर्देशाः प्रत्ययावयवस्य सस्य षो भवतीति ज्ञापनात् । यद्वा कृतस्य इति व्यधिकरणे षष्ठ्यौ तत्र कृतस्येत्यवयवषष्ठी । तेन प्रत्ययादेरवयवो यः सकारस्तस्य स्थाने इत्यर्थः । एष इत्यादौ तु अवयव एवाभेदोपचारादवयविव्यपदेशः । राहोः शिर इति यथा सैषादिति निर्देशोप्यत्रानुकूलः । नचैव तिस्र इत्यादौ प्रसंगः । तिसृचतास्रिति सत्वनिर्देशेन षत्वबाधनात् । अन्यथा तिषृ इति षकारमेव निर्दिशेत् । अत्र माधवः । नन्वत्र कुइति शब्द इति धातोर्ग्रहणं कुत्सितार्थाव्ययस्य वा कवर्गस्य वा । नाद्यः । इत्यादित्येव सिद्धत्वात् । ननु यदा कुर्द्धातुस्तदेलोपिगत्यर्थो धातुरेव साहचर्यात् । मैवम्। अकारोच्चारणवैयर्थ्यप्रसङ्गात् । ननु प्रत्याहार इवोच्चारणार्थ एवाकारोस्तु । न । शास्त्रे तथा धातुनिर्देशस्याप्रसिद्धत्वात् । ईषद्दुःसुष्विति निर्देशाच्च । इलसीत्यत्राकारांताद्विध्यर्थोऽपि नाकारः । किंच धातुतः प्रसिद्धतरत्वादपि प्रत्याहार एव गृह्यते । अत एवारात्रिष्विति षत्वनिर्देशः । एवं तर्हि कोरेव यथा स्यात् ! ब्रूषे इत्यादावन्यस्माद्धातोर्माभूदिति नियमार्थं कुधातुग्रहणं स्यान्न इलेन संज्ञाशब्देन साहचर्यात्संज्ञाशब्दस्यैव कोर्ग्रहणात् । प्रसिद्धतराच्च । चोः कुरित्यादौ कवर्गवाच्ये च शास्त्रे कुप्रसिद्धो न तथा धातुरिति । अतः परोक्ष एव निर्देशः । अन्यथाश्नोतेरौणादिके सिप्रत्यये शस्य षत्वे कत्वे च कृते ककारात्सस्य षत्वाभावादाक्षिशब्दानुपपत्तेः । परोक्षशब्दोऽनुपपन्नः स्यात् । नापि द्वितीयः । तस्य प्रथमपक्षवन्निरस्तत्वात् । अतस्तृतीयपक्षे एव प्रमाणम् । अत्र च सतो हि कार्यिणः कार्येण भवितव्यमिति । सः ष इति निर्देष्टव्ये विपरीतनिर्देशः षस् स इति द्विसकारकनिर्देशेन षत्ववत्सत्वस्यापि क्वचिद्विध्यर्थः। ततश्च सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति । सेसिच्यते इत्यादौ सत्वमपि भवति। तद्विधिसामर्थ्याच्च पुनः षत्व न षकारेऽकारोऽप्येवमुच्चारणार्थं उपपद्यते।त्रिहसीदुरुच्चारेति ष्टुत्वं तु निर्देशस्य

सौत्रत्वादपि वार्यते।स्थानी चात्र स एव न षः द्वितियसविधिवैयर्थ्यप्रसङ्गात्। कृतस्येत्यनेनाव्यवहितसंबंधाच्च । किंच सकारस्यात्र विधाने उत्तरत्रापि तदनुवृत्तौ मादेश्चेति सूत्रं न संगच्छेत तस्मात्स एव स्थानी ष एवादेशः । उभेऽपि व्यंजने । अस्तूच्चारणार्थः। अत एव विपरीतविध्यसम्भवादीष्टसत्वाभावः। कृतस्येति कर्मणि क्तः । क्रियते विधीयते स्मेति कृतः । विधानं च शास्त्रे लक्षणमंतरेण न भवतीति शास्त्रेण विहितस्येति लभ्यते । किलात्किम् । देवस्य । कृतस्येति किम् । बिसम् । अत्र च ष्रुर्नोणोनन्ते इत्यतोऽनन्त इत्यनुवृत्ते पदान्ते न षत्वं हरिस्तत्र। अनंत इत्यस्य चावृत्त्या किलादित्यनेनापि सम्बन्धात् । दधिसिचौ दधिसादित्यादौ पदान्तान्न षत्वं बहुसेचावित्यत्रापदान्तत्वेऽपि शेषा निपात्याः कत्यादय इति निपातनात्षत्वाभावः । किलादित्यनेनैव सत्वस्यापि विधानाद्वा । पदांते विधेरनित्यज्ञापनाच्च । यजुष्टं मातृष्वसा इत्यादावनंत इति प्रतिषेधोपि न भवति सर्पींषि इत्यत्र बहिरंगत्वेनासिद्धत्वात् । षत्वे नुमो व्यवधायकत्वं यजुष्षु इत्यत्रापि पूर्वस्य षत्वे परस्य ष्टुत्वं विसर्गपक्षेऽप्यनन्त इत्यनुवृत्तेः सिद्धं षत्वं यजुःषु अनुवृत्तेश्चेष्टसिद्ध्यर्थत्वान्नातिप्रसंग इत्याह । अन्येतु विपरीतनिर्देशः सर्वोपाधिविपरीतत्वसूचनार्थः । ततश्च कचिदकृतस्यापि सस्य षत्वं भवति । शिष्टः । ऊषतुः । उषुः । जक्षतुः । जक्षुः । कचिदिलादन्यस्मादपि षत्वं भवति । अवष्टम्भः । प्रष्ठः । अवष्ठः । कचित्पदान्तरस्यापि भवति । अंगुलिषंगः । भीरुष्ठानम् । अग्निष्टोमः । ज्योतिःष्टोमः । मातृष्वसा । मातुःष्वसा । नदीष्णः । पितृष्वस्रादिरिति निर्देशोप्यनुकूलः । कर्तृसाधनयोरिति निर्देशेन पदान्तरस्थात् किलात्परस्य पदान्तरस्थस्य सस्य षत्वविरहो विज्ञापितः । अग्नौ स्थापितः । अपदान्तस्य मूर्द्धन्यग्रहणं मास्तु।अपदान्तस्येति सूत्रयितव्यम् । इणः ष इत्यतः सोऽनुवर्तनीयः । इणः षीध्वमित्यत्र धोढोऽगादिति पाठ्यम्।इणः कोरिति सूत्र विध्यर्थमस्तु।शासिवसिघसीनां चेति लिंगात् धातुसकारे नातिप्रसंगः।एवं सत्यादेशप्रत्यययोरिति सूत्रं नारम्भणीयम्।नम् विसर्जनीयशर्व्यवायेपीत्यत्र नुम्शरंतरेपीति सत्रायितुं युक्तम्, विसर्जनीयादेः शर्षूपसंख्यानत्वात् । मादेश्च तथा तौ

सुनमाम्'अत्र वाक्यत्रयं प्रादेश्चैकः तथाताविल्यपरं सुनमामित्यपरं तत्र प्रादेश्चेत्यत्र ष्रुनों ण इति किलात्षः स इति चानुवर्तते । अनन्तरस्य विधिर्वेति न्यायेन किलात् षः स इत्यस्यैवानुवृत्तिः प्राप्ता। चकारबलेन ष्रुनोंण इत्यनुवर्ततेऽन्यथाऽनन्तरत्वादेव किलादित्याद्यनुवृत्तौ सिद्धायां किं चकारेण प्रादिसंबंधिनः ष्रुः किलाच्च नस्य णः सस्य च षो भवति। प्रगता नासिका यस्य स प्रणसः। प्रवणम् । निर्वणम् । प्रणिगदति प्रणिनदति । प्रणिददाति । शोभनं साम यस्यासौ सुषामा । निष्पामा । दुष्कामा । सुषेधः । निषेधः । सुषंधिः । निष्षंधिः । सुष्ठु । दुष्ठु । प्रतिष्णिका । प्रतिष्णशब्दादिकूप्रत्ययः । तथाताविल्यस्यायमर्थः । तथा तेन प्रकारेण तौ स्तः षकाररेफऋवर्णेभ्यो नस्य णः किलात्परस्य सस्य ष अप्राद्यर्थोयमारम्भः । अवकुप्वन्तरेपीति तु सर्वत्रानुवर्तत एव । शरवणम् । इक्षुवणम् । प्लक्षवणम् । आम्रवणम् । पूर्वाह्णः । क्षीरपाणम् । क्षीरपेण । हरिकायेण । क्वचिद्वा । दूर्वावणम् । दूर्वावनम् । शिरीषवनम् । शिरीषवणम् । माषवापिणौ माषवापिनौ । गोष्ठः । भूमिष्ठः । सव्येष्ठा । सव्येष्ठारा । द्विष्ठः । कशेष्ठः । कष्ठम्।अंगुष्ठ'।मंजिष्ठा।परमेष्ठी । हरिषेणः।रोहिणीषेणः।गविष्ठिरः। युधिष्ठिरः । तमामिति वा तृतीयं वाक्यम् । अत्र प्रादेश्चेत्यनुवर्तते । बहुवचनमाद्यर्थं प्रादिसंबंधिनः ष्रुः किलाच्च स्वादीनां सस्य षो नमादीनां नस्य णो भवति । अत्रान्तरेपीत्यनुवृत्तेरड्व्द्वित्वव्यवायेपीति । अभिषुणोति । परिषुणोति अभ्यषुणोत् । पर्यषुणोत् । अभिषुवति । पर्यषुवत् । अभ्यषुवत् । परिष्यति । पर्यष्टौत् । अभिष्टोभते । अभिष्ठास्यति । अभिषेणयति । परिषेणयति । परिषेधयति । अभिष्टुभ्नाति । अभिषंति । प्रादुःषंति । क्वचिद्वा पर्यषीव्यत्—पर्यसीव्यत् । न्यषहत—न्यसहत । व्यष्टौत्—व्यस्तौत् । अनुस्यंदते—अनुष्यंदते । माधवस्तु चकारबलेनाड्व्द्वित्वाऽव्यवधाने विकल्पमाह । एकवाक्यतापक्षे तथा ताविति व्यर्थम् । अनुवृत्त्यैव सिद्धत्वात् । हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ॥ रघुनाथाभिधो व्याख्यां द्वितीयांघ्रे यथामति ॥ १ ॥

## इति विभक्तौ द्वितीयः पादः ॥

# अथ विभक्तौ तृतीयः पादः ॥ ३ ॥

## नपुंसकात्स्यमोर्लुक् ।

वारि मधु तत् कुलमित्यत्र लुका त्यदाद्यत्वं बाध्यते।क्वचित्पूर्वेणापि परबाधस्यांगीकारात् नित्यत्वाद्वा कृताकृतप्रसङ्गित्वाल्लुङ्नित्यः । त्यदाद्यत्वं तु विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न प्राप्नोति । प्रत्ययलोपलक्षणे नाप्यप्रसक्त्यप्राप्तिः लुकि तन्निमित्तमिति प्रत्ययलोपलक्षणप्रतिषेधात् । लुक् तु त्यदाद्यत्वे कृतेपि प्राप्नोत्यकृतेऽपि । ननु च त्यदाद्यत्वे कृते लुक् न प्राप्नोति । अतोमित्यपवादविधानात् । तस्मात्सोप्यनित्य एवेति चेन्नैवम् । लुको निमित्तस्य लक्षणान्तरेण बाधात् । न पुनस्त्यदाद्यत्वेनैव तस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यं भवति । यदि हि अतोम् इति लक्षणं न भवेत् तर्हि अकारान्तमपि नामलुको निमित्तं भवेत् । तदनेन लक्षणेनोपजायमानेनापवादविधानाल्लुकं प्रत्यनिमित्तभावमापद्यते । लुकोऽनिमित्तभावापादनमेव विघातः । तस्मादतोमित्यनेनैव लक्षणांतरेण लुको निमित्तं विहन्यते नतु त्यदाद्यत्वेन । नपुंसकात्किम् । देवः । मरुतम् । स्यमोः किम् । कुलेन । कुलाभ्याम् । लोप इत्यनुवर्तमाने लुग्ग्रहणं तन्निमित्तवारणाय । पय इत्यत्रात्वसोः साविति माभूत् । स्वमोर्नपुंसकादित्यत्र तु संदेहः । प्रथमैकवचनग्रहणं सप्तमीबहुवचनस्य वेति स्यमोरिति कृते तु संदेहो नोदेत्येव । नपुंसकात्स्यमोर्लोपो न च तदुक्तमित्यत्र नपुंसकात्स्यमोर्लुगिति सूत्रयितुमुचितम् । कतेश्च जश्शसोर्लुकीव।तदुक्तं न भविष्यति ॥ **अतोऽम्** ॥ अदन्तान्नपुंसकान्नाम्नः परयोस्स्यमोरमादेशो भवति । लुकोपवादः । ज्ञानम् । अतः किम् । पयः । स्यमोः किम् । ज्ञानाभ्याम् । तपरकरणं सुखार्थं व्यावृत्त्यस्य दीर्घस्याभावात् । नपुंसकस्येति ह्रस्वविधानात् । अथ किमर्थममादेश उच्यते । मकरादेश एव कुतो नोच्यते द्वितीयैकवचनेपि मस्यैव लुको निवृत्तये मादेशेऽमृशसोरल्लोपे चेष्टं सिध्यति । न चाजरसमिति रूपसिद्ध्यर्थममादेशः इति वाच्यम् । सन्निपातपरिभाषयाऽमि जरसादेशस्याप्रवृत्तेः।अकारस-

न्निपातलक्षणो ह्ययममादेशः स कथमकारविघाते निमित्तं स्यात् । एवं तर्हि मादेश एव कर्तव्येऽमादेशो ज्ञापयत्यनित्यैषा परिभाषा सन्निपातलक्षणो विधिरिति । तेनाजरसमिति सिध्यति।अन्यथा हि लाघवार्थमत इत्येव ब्रूयात्। अन्ये तु म् इत्येव पदच्छेदो लाघवात् । तत्र सेर्मकृते ज्ञानमिति सिद्धम्। द्वितीयैकवचनेपि मस्य मे कृतेऽम्शसोरित्यल्लोपे सिद्धमिष्टम् ॥ यत्त्वाहुः । अतिजरसमिति न सिध्येदिति । तन्न । द्वितीयैकवचने लुकोपवादेऽतोमि कृतेऽम्शसोरिति बाधित्वा जरसि कृते सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिः स्पष्टैव । प्रथमैकवचने तु अतिजरमित्येवेष्यते सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तेः । यदप्युक्तं मत इत्येव ब्रूयादिति । तदपि न। निष्कारण मुद्देश्यक्रमबाधापत्तेः । माधवस्तु ननु किमर्थममादेशः क्रियते कुतो न ममात्रमेव क्रियेत । द्वितीयैकवचने मकारस्य मकारे प्रयोजनाभावादन्त्याभावेत्यसदेशस्येत्यकारस्य प्रसङ्गः स्यात् । अस्तु । एकस्य संयोगांतलोपादेरदोषः । नाप्यजरं कुलमस्तीत्यत्र स्वरे जरसादेशो यथा स्यादित्यपि वाच्यम् । सन्निपातलक्षणपरिभाषया तस्याप्रवृत्तेः । एवं तर्हि द्वितीयैकवचने सन्नेवाम्लुकोऽप्रवृत्तेरवतिष्ठते इति सूचनार्थम् । तथा चैवं वचनव्यक्तिः । सेरमादेशो भवति । अतोमि सन्नेवाम् भवति । अम् न लुका निवर्त्यते इति । तेनाजरसं कुलं पश्येत्यत्र पूर्वविध्यसंभवात्संनिपातपरिभाषाया अप्रवृत्तेर्जरसादेशः सिध्यतीत्याह । केचित्तु अत्रामिति पदच्छेदः न तु मिति । तथा सति लाघवाय मत इत्येवावक्ष्यदिति व्याख्यत । तदयुक्तम् । अनेकविधसंशयसंभवात् । तथाहि । म् च अश्चेति समासे सति मान्तादन्ताच्च स्यमोर्लुगित्यर्थः स्यात् । क्लीबे पूर्वेण सिद्धत्वादक्लीबार्थमेतत्स्यात् । तथा च किरामशब्दयोर्दोषः । यद्वा म् च अश्चेति द्वंद्वः स्यात् । तथा च भवद्दीव्यदादिषु दीर्घनुमौ न स्याताम् । रामादिषु च दोषः । यद्वा नपुंसकादित्यनुवर्तनीयम्।तस्मादुक्तद्वंद्वविषयाज्जश्शसोर्लुगित्यर्थः स्यात्।तथा च रामजगदादिषु दोषः । यद्वा उत्सृष्टानुबंधस्य मतोरेवेदं ग्रहणं तदन्तात्क्लीबात्स्यमोः क्लीबाद्वा जश्शसोर्लुगित्यर्थः स्यात् । ज्ञापकेन तत्र तत्र समाधाने तु लाघवम् । यद्वा मत इति षष्ठ्या क्लीबान्मतोर्लुगित्यर्थः स्यात्।तथा च धनवान् आयुष्मा-

नित्यादिषु प्रसंगात् । एतत्संशयवारणार्थमेवातोमिति कृतम् । लाघव एवा-
दश्चेत्तदाम्म इत्येवावक्ष्यदिति वक्तुमुचितम्।हे कुलेत्यत्र धेरमि अल्लो पे च कृते
समानाद्धेरिति मलोपः । केचित्तु न्सम्महत इत्यतो मंडूकप्लुत्याऽधावित्यनुवर्त-
यंतो धेर्लोपमेव विदधति अकारादसंबुद्धौ।मश्चेत्यत्रातोमिति सूत्रं युक्तम्।मकार
एव येन नाप्राप्तिन्यायेन लोपापवादो विज्ञास्यते।संबुद्धौ तु मादेशस्य ह्रस्वनदी
श्रद्धाभ्य इति लोपो भविष्यति ॥**शृत्वन्यादेः**॥ नपुंसकादन्यादेर्नाम्नः परयोः
स्यमोःश्त्वा देशो भवत्यमोपवादः । अन्य अन्यतर इतर डतर डतमेति पंचा-
त्मको गणः सर्वाद्यन्तर्गतो गृह्यते । आदिशब्दस्य व्यवस्थावाचित्वात्।अन्यत्।
डतरडतमौ प्रत्ययौ।ततस्तदंताः कतरकतमादयो ग्राह्याः।कतरत् । नपुंसका
त्किम्।अन्यः अन्यम् स्यमोः किम्।अन्याभ्याम् । अथ शकारः किमर्थं क्रियते।
सेरेकवर्णत्वादेव सर्वादेशः सिद्धः । द्वितीयैकवचने तु मस्य तादेशे कृते
एकदेशन्यायेनाम्शसोरस्येत्यलोपे कृते सिद्धमिष्टम् । एवं तर्हि सर्वादेशार्थः
शः।स्वविषये प्राप्तस्य सर्वस्य स्थाने तुर्यथा स्यात् । धिलोपबाधनार्थोयं शकार
इति फलितम् । हे अन्यत् । श्त्वन्यादेरिति विपरीतोच्चारणं विपरीतत्त्व-
बोधनार्थम्।तेन धिलोपो न।यद्वा परत्वात्त्वादेशः धिलोपस्यावकाशः । हे देव ।
त्वादेशस्यावकाशः।अन्यत् । हे अन्यदित्यत्रोभयप्रसङ्गे परत्वात्तुः सकृद्गतौ वि-
प्रतिषेधे यद्बाधितं तद्बाधितमेवेति धिलोपो न। अनयोस्तु पक्षयोः शकारोप्य-
नावश्यकः । अत्र पक्षे विपरीतोच्चारणात् श्तुर्न । माधवस्तु धिलोपे व्यवधा-
नार्थं शकार इत्याह । तन्न । शकारस्य धेरवयवत्वेन व्यवधायकायोगाद्यदा-
देशन्यायेन शसहितस्यैव धित्वाच्च। अनेकान्तपक्षे तु तत्संभवति यत्त्वेकदेश-
विकृतन्यायस्यानित्यत्वज्ञापनार्थं वेत्याह । तन्न । तदनित्यत्वज्ञापने प्रयोजना-
भावात्।यदपि अत एव हे सोमपेत्यधातुत्वाद्धिलोप इत्युक्तम्।तदपि न।ह्रस्वा-
देव धिलोपविधानस्योचितत्वेनाधातोरित्यस्याकिंचित्करत्वात् आदेशे उकार
उच्चारणार्थः । केचित्तु शकारं न पठन्ति । धिलोपं तु संज्ञापूर्वको विधि-
रिति समादधति । अन्यादेस्तु तु इत्यस्य स्थाने श्त्वन्यादेरित्येवोचितम् ।
उक्तरीत्या सर्वनिर्वाहात्॥**ईम्औ**॥अत इति नानुवर्तते।नपुंसकात्परऔ ईमाप-
द्यत कुले । दाघोच्चारण त वारिणी मधुनी इत्यादौ श्रवणार्थम् । नन्वत्र

परत्वाच्च प्रथमं नुम् प्राप्नोति।न च शब्दान्तरप्राप्त्या नुमनित्यः । कृताकृतप्रसंगित्वेनापि क्वचिन्नित्यत्वोपगमादिति चेन्न । ईमाविति विपरीतोच्चारणात् पूर्वमीकारस्यैव विधानात् सत्यपि वा प्रथमं नुमि क्षत्यभावात् ॥ **जश्शसोः शिः** ॥ नपुंसकान्नाम्नः परयोर्जश्शसोः शिः स्यात् । ज्ञानानि । वारीणि । मधूनि । पयांसि। नपुंसकात्किम् । देवाः।जश्शसोः किम्।ज्ञानाभ्याम् । जसा सहचरितस्य शसो ग्रहणान्नेह । शतशो ददाति । शकारः सर्वादेशार्थो न तु श्रवणार्थः । पराणीति निर्देशात् । जश्शसोरित्यत्रापि असोरिति वक्तुं शक्यं संध्यक्षराणि पराणीति निर्देशात्स्याद्यधिकाराच्च जश्शसोरेव ग्रहणम् । न तु ङसि ङसोः।नपुंसकात् नपुंसकस्येति निर्देशात्।न च वैपरीत्यं शङ्क्यम्।अर्थस्य नियामकत्वात्॥ **नुमयमः** ॥अयमो नपुंसकस्य नुमागमो भवति शौ परे। नपुंसकादिति षष्ठ्या विपरिणम्यते । शिरिति सप्तम्या । मिदागमोंत्यात्स्वरात्परो भवति।संध्यक्षराणि नंदिग्रहादेरिति लिंगात् । अयम इति षष्ठ्यर्थे प्रथमा । यद्वा अयम इति षष्ठी मकाराकारस्योच्चारणार्थत्वात्। अयम इति पर्युदास आश्रीयते एकवाक्यतानुरोधात्।माधवस्तु प्रसज्यप्रतिषेधमाह । अनान्वितसमासो वाक्यभेदश्च तत्र दोषो बोध्यः।विमलद्यु।विमलदिवी।विमलदिवि।चत्वारि।वारि।फल् । फली।फलि । सुगण् । सुगणी । सुगणि।ब्रह्माणि । प्रशाम् ।प्रशामी।प्रशामि।अस्य नपुंसकनुमोऽवकाशो यदन्विन्नपुंसकम् । हवींषि । वपूंषि । न्विल्लक्षणस्य नुमोवकाशो यद्न्विद्नपुंसकम्।गोमान् । भवन् । न्वितो नपुंसकस्योभयप्रसंगेन परत्वादनेनैव नुम्। अस्मिंस्तु कृते पुनरन्त्यस्वरमपेक्ष्यानेकस्य परत्वं संभवति । मानामसंभूतप्रयोगे विधानकाले तु संभवति । यथा पचतीत्यत्रापस्तिपश्च । तत्र तुदन्तीत्यत्र परस्य नकारस्यानुस्वारपरसवर्णयोः कृतयोर्द्वयोर्नकारयोः श्रवणप्रसङ्गः । ननु नहि व्यंजनपरस्यैकस्यानेकस्य वा तुल्यजातीयस्य व्यंजनस्य श्रवणं प्रति विशेषोस्ति।एवं तर्हि कृषंतीत्यत्र परस्य नुमोऽनुस्वारपरसवर्णयोः कृतस्याझसपरत्वादनुस्वारपरसवर्णौ न स्त इत्यवकुप्वन्तरेऽपीति णत्वं प्राप्नोति । तस्मात् न्वितोझसांतस्य सकृद्गतौ विप्रतिषेधेन यद्बाधित तद्बाधितमेवेति न्यायेनायमेव नुम् भवति । न न्विल्लक्षण इत्याश्रीयते ॥ **नामिनः स्वरे** । नाम्यन्तस्य नपुंसकस्य नाम्नो नुम् भवति स्वरादौ स्यादौ ॥

वारिणे । वारिणः । मधुने । मधुनः । नाम्यन्तस्य किम् । जगता । जगते नपुंसकस्य किम् । वातमम्ये । स्वरादौ किम् । वारिभ्याम् । स्यादौ किम् । दध्यत्र । मध्वत्र । स्यादेतत् । स्वरे इति मास्तु । तर्हि वारिभ्यामित्यत्रापि स्यात् । अस्तु नाम्नोनोलोपशधाविति लोपश्च स्यात् । तर्हि सुराभ्याम् अति राभ्यामिति न स्यात् । अत्रातिरिभ्यामिति स्थिते नुमि कृते तेन व्यवधा नाद्रैस्भीत्यात्वं न । नलोपे कृते विभक्तिविधौ तस्यासिद्धत्वाद्व्यवधानमेव । संघातभक्तौ तु नुम् तमेव न व्यवदध्यात् रैशब्दं तु व्यवदधात्येव । अथापि तस्मादित्यधिकारात्तस्य च रैशब्देन विशेषणाद्रैशब्दांतस्याप्यात्वविधानान्ना- स्ति नमा नाम्नो व्यवधानम् । तथापि निर्दिश्यमानस्यादेशा भवन्तीति रै शब्दस्य व्यवधानमेव । अथापि नाम्ना आत्वमाप्नोति तत्र पूर्वस्य ये कृते अतिर्याभ्यामिति स्यात् । तथा प्रियतिसृभ्यां ब्राह्मणकुलाभ्यामित्यत्र प्रियत्रिभ्यामिति स्थिते तिसृभावो न स्यात् । नुमा व्यवधानात् । नलोपेपि कृते तस्य विभक्तिविधावसिद्धत्वादि पूर्ववत् । मैवम् । राय आत्वं तिसृभावश्च नुमा व्यवधानं प्राप्यापि भवतः। विभक्तिविधानदशायां यदानंतर्यं तस्य तत्रा- श्रयणात् । नत्वादेशविधानदशायाम् । एवं तर्हि नम्नुटोर्निषेधार्थं स्वरग्रहणं कृतम्। नुडाम इत्यस्यावकाशः। अग्नीनां वायूनाम्। नुमोवकाशो वारिणे मधुने । वारीणां मधूनामित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन नुडिष्यते । नामीति दीर्घो यथा स्यात् । सच विप्रतिषेधः स्वरग्रहणे सत्युपपद्यते । द्वयोरप्यनित्यत्वेन तुल्यत्वात् । असति तु स्वरग्रहणे कृताकृतप्रसंगित्वान्नित्यत्वान्नुमेव स्यात् । एतदपि नास्ति प्रयोजनम् । क्रियमाणेपि स्वरग्रहणे नुट् तत्र यत्नेनैव साध्यः। अन्यथा परत्वान्नुमेव स्यात्। ततश्च स्वरग्रहणं कर्तव्यम् नुडर्थो यत्न इति यत्न द्वयमाश्रयणीयम् । तत्र स्वरग्रहणमकृत्वैक एव नुडर्थो यत्न आश्रयणीयः । इदं तर्हि प्रयोजनं तेनैव यत्नेन नुटि तत्रैव हसादौ नुम् माभूत् । अस्तु लोपश्च भविष्यति नलोपस्यासिद्धत्वादस्वरान्तत्वान्नामीति दीर्घत्वं न स्यात्। माभूदेवं नोपधाया इत्यनेन भविष्यति इह तर्हि शुचीनाम् । इनां शौ साविति दीर्घो न स्यात् प्रतिपदोक्तस्येनस्तत्र ग्रहणम्। लाक्षणिकश्चायं तस्मादस्तु स्वरग्रहणम्

अत्रोच्यते उत्तरार्थं स्वरग्रहणम् । अच्चास्थ्नां शसादावित्यत्र यद्युत्तरत्रास्य प्रयोजनं तर्हि तत्रैव कर्तव्यम्।इह करणं तु ज्ञापयति नागमस्य नस्य लोपश् भवतीति तेन भवान्।अनड्वान्।विद्वानित्यादौ लोपश् न भवति यद्वा टा नाऽस्त्रियामित्यत्र ज्ञापितेनादेशस्यासिद्धत्वं न संयोगान्तलोपस्यासिद्धत्वादेषु नस्य लोपश् न भवति वारिभ्यामित्यादौ तु भविष्यति धौ तु लुका लुप्ते लुकि न तन्निमित्तमिति नुम् न भविष्यति एवं तर्हि लुकिनेत्यस्यानित्यत्वात् धावपि नुम् स्यात् तस्य लोपश् न स्यादधाविति निषेधात् अतस्तत्र नुमभावार्थं स्वरग्रहणम्।तथाच प्रत्ययलक्षणस्यानित्यत्वमनेन ज्ञाप्यते न त्वस्मिन्विषये सर्वथैवाभावः तेन हे वारे हे वारि इत्यादि सिध्यति एतदर्थं य्वॄणां नपुंसके धौ गुणो वेति न वक्तव्यं भवति॥ **अच्चास्थ्नां शसादौ**॥ अस्थिदधिसक्थ्यक्षिशब्दानां नुमागमो भवतीकारस्य चाकारः शसादौ स्वरे । अस्थ्ना अस्थ्ने शस् आदिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणात् शसि न भवति अस्थीनि नन्वेवं सति शसादावित्यत्र व्यर्थं टादावित्येवात्र कर्तव्यम् । उत्तरसूत्रे च न कर्तव्यं भवति मैवम् वसोर्वडरित्यादावित्यपेक्षितत्वात् अस्थ्नामिति बहुवचनमाद्यर्थं तेनास्थिदधिसक्थ्यक्षिशब्दा लभ्यन्ते अच्च इकारस्य भवति न नुमः विधान सामर्थ्यात् । नच नुम्विधिरकारार्थ इति वाच्यम् । अग्विधानेनापि तत्सिद्धेः। तस्मादन्त्याभावेंत्यसदेशस्येतीकारस्यैव भवति पूर्वसूत्रान्नामिन इत्यनुवृत्तेर्वा अच्चेति तपरकरणं व्यर्थं त्यदादेरिव तेन विनैवोपपत्तेः विपरीतोच्चारणं व्यर्थं अस्थ्नामच्चेति पठितुं युक्तत्वात् । अस्थ्नामनङ्टादाविति सूत्रयितुमुचितं विधेयस्यैकत्वेन लाघवात्।शसादौ किम्।अस्थिनी। स्वरे किम्।अस्थिभ्याम्।अत्राधिकृतस्य नाम्नोऽस्थ्यादिभिर्विशेषणादस्थ्याद्यंतस्याप्यनपुसंकस्यापि ग्रहणं भवति । प्रियास्थ्ना शुना । प्रियदध्ना ब्राह्मणेन । अत्रोत्तरार्थमनुवृत्तं नपुंसकग्रहणं तेनास्थ्यादयो विशेषणीयाः यदृच्छाशब्दानां पुँल्लिंगादीनां वारणार्थं दधिर्नाम कश्चित् तेन दधिनेत्यत्र माभूत् नैतदस्ति प्रयोजनम् । "अभिव्यक्तपदार्था ये स्वतंत्रा लोकविश्रुताः॥ शास्त्रार्थस्तेषु कर्त्तव्यः

शब्देषु न तदुक्तिषु " अस्थिदधिसक्थ्यक्ष्णामनन्तष्टादावित्यत्रांतग्रहणं व्यर्थम् । अस्थ्यादीनां नामिनष्टादावितीष्टसिद्धेः । **टादावुक्तपुंस्कं पुंवद्वा** ॥ उक्त पुंस्कं नाम्यंतं नपुंसकं टादौ स्वरे पुंवद्वा भवति । ग्रामण्या-ग्रामणिना।ग्रामण्ये ग्रामणिने । नपुंसकादिति पंचम्यंतं प्रकृतं तदिह उक्तपुंस्कमित्यनेन संबंधा त्प्रथमांतं संपद्यते पुंवदिति पुंशब्देन तुल्यमित्यर्थः केन प्रकारेण पुंशब्देन तुल्यं वर्तते । नुम्ह्रस्वयोरभावेन नुम्ह्रस्वयोरभावः पुंशब्दे दृष्टः तद्वारेण यत्सादृश्यं तदिहातिदिश्यते अन्यस्य कस्यचित्तृतीयादिषु पुंशब्देन सादृश्य स्यासंभवात् तेनार्थान्नुम् ह्रस्वयोः प्रतिषेधोऽयं संपद्यते। नन्वेवमपि प्रकृतत्वा न्नुम एवाभावातिदेशो युक्तो न ह्रस्वस्य।ततश्च ह्रस्वस्यावस्थितत्वात् तदा श्रयाणामेओनाभावनुडौत्वानां प्रतिषेधो वाच्यः।एओङिति । ग्रामण्ये कुलाय नाभावाट्टानास्त्रियाम् ग्रामण्या कुलेन। नुट् नुडामः।ग्रामण्याम । कुलानाम् । औत्वे ङौरौ डित्।ग्रामण्यां ब्राह्मणकुले। नैष दोषः।अतिदेशसामर्थ्याद्ध्रस्वाभा वेतिदिश्यते अन्यथा प्रतिषेधमेव विदध्यात् उक्तपुंस्कामिति । यदि उक्तः पुमान् येन शब्देनेति शब्देऽन्यपदार्थे तृतीयार्थे बहुव्रीहिराश्रीयते ततः पुंसि नपुंसके च वर्तमामस्य प्रवृत्तिनिमित्तं भिद्यते तस्यापि प्राप्नोति मधुशब्दो म द्यादौ नपुंसकं चैत्रदैत्ययोः पुँल्लिंगः सर्वत्राप्यत्र प्रवृत्तिनिमित्तभेदेपि य एव प्रयोगांतरे पुमांसमाख्यत्स एव संप्रति नपुंसके वर्तते इति स्यादेव पुंवद्भावः एवं तर्हि प्रवृत्तिनिमित्तलक्षणेऽन्यपदार्थे सप्तम्यर्थे बहुव्रीहिः यस्मि न्प्रवृत्तिनिमित्ते पुमान्भाषितः पुमांसमाचक्षाणस्य यत्प्रवृत्तिनिमित्तं तेन युक्तं नपुंसकमाचक्षाणो भाषितपुंस्केन प्रवृत्तिनिमित्तेन युज्यते तत्र चार्थशब्दस्य प्रवृत्तिनिमित्तमर्थ्यमानत्वं मध्वादौ सदा सन्निहितामिति तत्र वर्तमानो मधुशब्दः स्वयं तत्प्रवृत्तिनिमित्तमनभिदधानोपि वस्तुतस्तद्युक्तमाह नैत दस्ति एवं उक्तपुंस्कग्रहणमनर्थकं स्यात् सर्वत्र सुलभत्वात् अतो यः शब्द उक्तपुंस्केन प्रवृत्तिनिमित्तेन युक्तो नपुंसकं तेनैव रूपेणाह न रूपान्तरेण स उक्तपुंस्को गृह्यते मधुशब्दस्तु मद्यत्वादिजातियुक्तेन रूपेण मद्यादो वर्तते नार्थमाणतया एवमपि वारिणेत्यत्र वारिशब्दस्य नपुंसकस्य घनरस इति पुँल्लिंगः प्राप्नोति येनैव रूपेण घनरसशब्देनोच्यते नैवरूपेण वारिश

ब्देनापीति कृत्वा एवं तर्हि प्रत्यासत्तेर्यस्य पुंवद्भावो विधीयते तेनैव यत्र पुमानुक्त इति विज्ञायते । आत्मनः प्रयोगांतरे पुमांसमाचक्षाणस्य यत्प्रवृत्तिनिमितं तद्युक्तं नपुंसकं संप्रत्याचक्षाणस्य नपुंसकशब्दस्य पुंभाषणदशायां यद्रूपं तदेवाद्यापि भवति तदयं निर्गलितोर्थः उक्तः पुमान्यस्मिन्नर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति मत्वर्थीयाकारेणाभिधेयमुक्तपुंस्क तदस्यास्तीति नामापि क्लीबमुक्तपुंस्कम् । उक्तं हि शब्दप्रवृत्तेर्निमित्तं यत् क्लीबे तच्च पुंसि चेत् तदा भाषितपुंस्कत्वे । पटुने—पटवे । यथेति अत एव पीलुने फलायेत्यत्र न भवति । पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तं फले तु फलत्वव्याप्यजातिः । वृक्षविशेषप्रभवत्वं वा । उभयथापि पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तं यद्योगात् द्रव्ये शब्दनिवेशस्तत्प्रवृत्तिनिमित्तम् । अतिदेशिवानतिदेशिकपुंवदिति निर्देशः । तस्य चायमर्थः उक्तपुंस्कात्परौ नुम्ह्रस्वौ यथा पुंसि न भवतस्तथा टादावपि भवत इति । नन्वश्रुतक्रियापदवाक्येषु भवतीत्यध्याहारोऽन्यत्र दृष्टः अत्र तु नञ्युक्तं कस्माल्लब्धं न भवत इति उच्यते । वतिनिर्देशेषूपमाने सत्तासत्ता वा या प्रसिद्धा सोपमेयेति देश्या । यथोशीनरवन्मद्रेषु यवाः संति न संतीति ततश्च पुंसि नुम्ह्रस्वयोरभावात् नपुंसकेप्यभावोऽतिदिश्यते इति न भवत इत्येव वाक्यशेषः कल्पनीयः उक्तपुंस्कमित्यनेन पुंसः अवपरे खपे संयोगान्तस्य लोपो न भवतीतिज्ञापितम् पुंस्कोकिलः अत्र शसादावित्यनुवर्त्य तद्गुणसंविज्ञानमाश्रीयते उत्तर सूत्रे च तद्गुण आश्रीयते तदा टादाविति वक्तुं शक्यम्। **वसोर्व उः** । शसादौ स्वरे परे वसोर्वकार उकारो भवति । सेदुषः । सेदुषा माधवस्तु व इति । कर्तरि प्रथमा उमितिकर्मणि द्वितीया । वकार उत्वं प्राप्नोति वकारेकारोच्चारणं तत्सहितस्योत्वं यथा स्यात् । अच्चास्थामित्यतः शसादावित्यनुवर्तते तत्रापि च महान् शसादिर्गृह्यते तेन ओदौतोरित्यत्र यः स्वरवदिति विभज्य यकारस्यापि स्वरवत्त्वा द्वैदुष्यमित्यत्र तद्धितेपि भवति तथा ईपि विदुषीति भवति ईकारोप्यत्र वेङ्योरित्यतोऽनुवर्तते इति प्रियविदुषीत्यत्र भवतित्याह। अत्रेदं वक्तव्यम् एवमपि विदुष्मानित्यत्राव्याप्तिरेव अत इयं कल्पना न श्रेयसी पूर्वसूत्रादत्र टादावित्यनुवर्तनीयम् आदिशब्दस्यार्थत्रयं व्यवस्थाप्रकारः अव-

यवश्च तत्रादिशब्दः । मकारे शब्दाधिकाराश्रयणात् । यद्वा । अल्लोपः स्वर इत्यतः शसादाविति वादीपोरित्यत ईपोरिति चानुवर्तते । तेन शब्दाधिक्या दर्थाधिक्यमिति न्यायेन हसादावपि क्वचिद्भवति यदपि ननु कथं पेचुष इत्यत्रोत्वं यावतैकानुबन्धकपरिभाषया ह्यनुबंधकस्य वसोर्ग्रहणं न स्यादिति न वसुशब्दोऽत्रावर्तते वसोरिति तत्रैकेन वसुर्निर्दिश्यते।परेण साक्षात् क्वसुरिति अथवा विदेर्वसुरित्ययमप्युकारशकारानुबन्धत्वेन द्व्यनुबंधक इति स्यादेवोभयोरपि ग्रहणमिति। तदपि न वसोरित्युकारानुबंधस्योपादानसामर्थ्याद्द्वयोरपि ग्रहणं भवति । वसोरेव ग्रहणं यद्यपि मतमभविष्यत् तदा वस इति निरदेक्ष्यत् । उदनुबंधस्यापि तस्यात्र तद्ग्रहणं प्रयोजनाभावात् । तस्मादुदितोऽनुवादसामार्थ्याद्द्वयोर्ग्रहणम् । यद्वा । विदेर्वसुरिति न स्वतंत्रः प्रत्ययः किं तु शतुरादेशः । पूर्वसूत्रात् शतृग्रहणमनुवर्तते । तच्च विभक्तिविपरिणामेन षष्ठ्यन्तं संपद्यते । एवं हि स्थानिवत्त्वेनैव त्रित्कार्यसिद्धे उदनुबन्धकरण मन्यत्र सामान्यग्रहणार्थमतोत्रोदितोऽनुवादः सामान्यग्रहणार्थः वसोः किं भवतः शसादौ किम् विद्वान् । विद्वांसौ । स्वरे किम् विद्वद्भ्याम् । **श्वादेः** ॥ श्वयुवमघोनां वकार उकारो भवति शसादौ स्वरे ईपीकारे। शुनः शुना यूनः यूना मघोनः मघोना शसादौ किम् श्वानौ। श्वानः। स्वरे किम् श्वभ्याम्। श्वादेः किम् यज्वनः।सुत्वनः । नामग्रहणे लिंगाभिधायिस्त्रीप्रत्ययाविशिष्टस्यापि ग्रहणमिति परिभाषा विभक्तिनिमित्ते कार्ये न प्रवर्तते युवतीः पश्येत्यत्र नोरत्वं नोपधाया इत्यनुवृत्तेरनन्तत्वाद्वा अकारसहितस्य वकारस्य उत्वं यद्यपि वस्य उत्वेकृतेऽल्लोपः स्वरे इत्यल्लोपः संभवति तथापि ङौ वेङ्योरिति विकल्पः स्यात्॥ हाटकेशपुरस्थायी विनायकसुतोऽकरोत्॥ रघुनाथाभिधो व्याख्यां तृतीयांघ्रेर्यथामति ॥

**इति विभक्तौ तृतीयः पादः ॥**

# अथ विभक्तौ चतुर्थः पादः ॥ ४ ॥

## आतो धातोर्लोपः ।

धातोराकारस्य लोपो भवति शसादौ स्वरे परे सोमपः सोमपा आत इति किम् । निया । निये । धातोः किम् । खट्वाः पश्य हाहान् । ननु अस्य धातोरिति पठितं शक्यम् अच्चास्थामित्यत्र तपरत्वस्य व्यर्थत्वादग्रहणमनुवर्त्य विभक्तिविपरिणामेनास्येति व्याख्येयं अदन्तात् । क्विपि यत इति लोपेन भाव्यं अयत्यादेस्तु तु किम् । अत् । मैवं योगविभागेनाधातोरप्यलोपो वक्ष्यते अस्येति निर्देशे तु देवे इत्यादौ अस्यलोपः स्यात् किं च श्रीपेण कुलेनेत्यादौ परत्वादिनादीन् बाधित्वास्य लोपः स्यात् इनादिविधिस्त्वधातौ चरितार्थः तपरत्वं तु व्यर्थं आधातोर्लोप इति सुपठम् माधवस्तु आकारमात्रस्य धातोः शसादौ क्वचिदप्यभावादातो धातोरिति व्यधिकरणे षष्ठ्यौ तत्रात इति स्थानिषष्ठी धातोरित्यवयवषष्ठीतिनायमर्थः धातोरवयवस्यातो लोप इति अत एवार्थवद्ग्रहणपरिभाषापि तत्र न प्रवर्तते धातुसंबंधी अवयवो यस्य तस्य धातोरवयवभूतस्य धातुना समवायसंबंधवतोऽवयवस्येत्याह तन्न आकारश्च पितामह इत्यभिधानात् आ इवाचरति आतीत्याकारमात्रस्य धातोः शसादौ संभवात् वस्तुतस्तु दो दत्तीति ज्ञापकादुक्तार्थनिर्वाहः कार्यः अनुकार्यानुकरणयोर्भेदेपि प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशेन धातुत्वादातो धातोरित्यालोपः अतिदेशाप्रवृत्तिपक्षे तु आतो लोप इति योगविभागादधातोरप्याकारलोपः क्वच निगमयितव्यम् । यत्तु धातुना समवायसंबंधवत इत्युक्तं तत्तु प्रागेव दूषितम्॥ **पथां टेः**।पथिन् मथिन् ऋभुक्षां टेर्लोपः शसादौ स्वरे ईकारे च । पथः मथः ऋभुक्षः । शोभनः पंथा यस्यां सा सुपथी सुमथी अनृभुक्षी नगरी सुपथी सुमथी अनृभुक्षी वने स्तः बहुवचनमाद्यर्थम् अनुकार्यानुकरणयोर्भेदेपि प्रकृतिवदनुकरणमित्यतिदेशप्रवृत्तिरनेन ज्ञाप्यते पथामिति किम्।दंडिनः।स्वरे किम्। पथिभ्याम्। शसादौ किम् :पंथानौ।पंथानः । नन्वत्रेतोत्पश्चस्वित्यत्वविधानसामर्थ्याल्लोपो न भविष्यति लोपे ह्यत्वविधानमनर्थकम् स्यादिति चेत्तर्हि पथि आसनम्

पथ्यासनमित्यत्र मा भूत् । ननु विभक्त्यधिकारादत्र न भविष्यति । एवं तर्हि पंथानं गच्छति पथिक इत्यत्रापि न स्यात् मैवं नोवेत्यनेन भविष्यति एवं तर्हि विभक्त्यधिकारात् सिद्धे स्पष्टार्थं शसादिग्रहणम्।अथ टेरिति किमर्थम् न च टिग्रहणं विना षष्ठीनिर्दिष्टत्वादंत्यस्य लोपः स्यादिति वाच्यम्। पथामिति निर्देशेनोत्तरसूत्रादपकृष्टस्येतोदंत्यस्य च लोपविधानात् समुच्चयद्योतकं च विनापि "अहरहर्नयमाना गामश्वं पुरुषं पशुम्"इत्यादाविव समुच्चयभानाभ्युपगमे बाधकाभावात्।एवं तर्हि प्रकरणं भित्त्वा टेरितियोगविभागेनाविभक्तौ टिलोपविधानार्थम् तेन हलादेरीषादौ टेर्लोप इति सिद्धम्॥**इतोत्पंचसु॥**पथ्यादेरिकारस्याकारः पुंसि स्यादिषु पञ्चसु शौच ॥ पंथाः पंथानौ सुपंथानि । पञ्चसु किम् । पथिभ्याम् पथ्यादेः किम् । अग्निचित् अग्निचितौ । पुंसि किम् । सुपथी परत्वादत्वे कृते तत्सामर्थ्याल्लोपो न स्यात् नन्वद्वचनं मास्तु आसाविति वक्ष्यमाण आकार इहैव पठनीयः इत आपञ्चस्विति न च ह्रस्वस्य श्रवणार्थं वचनं सौ तावत्सवर्णदीर्घो भवति अन्यत्रापि नोपधाया इति दीर्घः । सत्यं तथा तव कृतमित्येव तपरत्वं तु दीर्घव्यावृत्त्यर्थम् । तथा हि पंथानमात्मन इच्छति पथीयति ततः क्विप् यत इति अकारयकारलोपः एकदेशविकृतस्यानन्यत्वादासावित्यात्वम् नुट् पंथाः इतोत्पंचस्वित्यत्वं न भवति इत इति तपरत्वात् य्वौवेति बाधित्वा नित्यत्वात् थोनुट् संयोगपूर्वकत्वान्नयकायः पंथियौ पंथियः पंथियम् पंथियौ।पथांटेः।पथः पथा पथीभ्याम् पथीभिरित्यादि एवं मंथाः मंथियौ मंथियः। ऋभुक्षाः ऋभुक्षियौ ऋभुक्षियः केचितु पथीः पथ्यौः पथ्यः मथीः मथ्यौ मथ्यः ऋभुक्षीः ऋभुक्षियाविन्त्युदाजन्हुः नचात्वादि स्यात् गौणत्वात् नचैकदेशविकृतन्यायः तस्यापि मुख्ये चरितार्थत्वेन गौणे प्रवृत्त्ययोगात् अन्यथा सर्वमिच्छतीति सर्वीरित्यस्याकच् स्यात् सर्वियमंचति सर्व्यङ्क्ङित्यादावघ्रादेशप्रसङ्गाच्च तपरत्वं मुखसुखार्थमित्याहुः । अन्येत्वाहुः पदकार्ये गौणमुख्यन्यायो न नामकार्ये अन्यथा गांवाहीकं पश्येत्यादावात्वादि न स्यात् सर्वीरित्यादौ तु नाकजादिः पाठात् पर्युदासः पठितानां संज्ञाकरणमिति स्वीकारात् इतोदिति तपरत्वस्याप्येवं सार्थक्यात् अन्यथा एरादित्येवावक्ष्यत् परे तु पथामिति निर्देशेनांतप्रकृत्यनुकरणान्नांतत्वं

विवक्षितं न चैवमपि एकदेशविकृतन्यायस्य दुर्वारत्वं नांतत्वविवक्षासामर्थ्यात्तद्बाधनात् एतेन पंथा इत्यत्रापि नित्यत्वाद्विशेषविहितत्वाच्च पूर्वमात्वे कृते नांतत्वेन न्थादेशप्रसङ्गाच्चेतिप्रत्युक्तेनांतत्वविवक्षासामर्थ्यात् प्रथमं नुटं कृत्वात्वप्रवर्तनादित्याहुः पंचस्विति निर्देशेन नस्य लोपाशि नसिप्कार्यमिति ज्ञापितम् । तेन । राजभ्यां राजभिः राजभ्य इत्यत्रात्वैत्वानि न भवन्ति पथिष्वित्यादौ षत्वं तु न सिप्कर्यं किं तु वर्णमात्रकार्यम् ! तर्हि किलादित्यत्र स्याद्ध साधारणं रूपम् किंचिदुपात्तमनुमितं वास्ति तत्सत्वेत्वष इत्यत्र षत्वं न स्यात् इतोत्सर्वनामस्थाने इतोच्छाविति सूत्रयितुमुचितम् शिः सर्वनामस्थान मिति तु न कर्त्तव्यम् सुडनपुंसकस्येत्यत्र तु सुडनपुंसकस्य शिरिति वा शिवदिति वा सूत्रयितव्यं॥**थोनुट्**॥पथ्यादेस्थस्य नुट् पञ्चसु पुंसि शौ च।पंथाः पंथानौ।मंथाः मंथानौ।पथ्यादेः किम्।अग्निमथौ।थः किम्।ऋभुक्षाः।पंचसु किम् । पथिभ्याम्। पुंसि किम् । सुपथी।ननु थस्य नुट् पंचस्विति सूत्र्यताम्। थस्येति निर्देशसामर्थ्यादेवेतोऽकारोपि भविष्यति।अकारोयं विवक्ष्यते न तूच्चारणार्थः। मैवं ऋभुक्षा इत्यादावितोऽकारस्य लाभात् अत एव थेन्थ इति सूत्रमस्तु अकारोऽपि विवक्षितोऽस्तु थिशब्दस्य न्थादेशः एवं च कृत्वातोदिति न कर्तव्यमिति परास्तम्।थोन्थ इत्यस्य स्थाने थोनुडिति सूत्रमुचितम् ॥ **आ सौ** ॥ पथ्यादीनामंतस्यात्सौ । पंथाः हेपंथाः पथ्यादीनां किम्।यज्वा सौ किम्। पथिभ्याम्। अन्तस्येति षष्ठीनिर्दिष्टस्येति परिभाषया लभ्यते । नन्वनुनासिकस्य नस्यानुनासिक आ स्यात्साद्दश्यात् जातिनिर्देशेन सर्वव्यक्त्याक्षेपात् व्यक्तिपक्षे गुणा नामभेदकत्वात् मैवम्। आ आ इति प्रश्लेषेणानुनासिकस्यैव विधानात् ननु आत्वं किमर्थं विधीयते इतोदित्यत्वेन नोपधाया इति दीर्घे सौ रसे परे नलोपशि च कृते स्रोर्विसर्गे च पंथा।इत्यादि सिद्धम्।मैवं हेपंथा इत्यस्यासिद्धिप्रसङ्गात् अधावित्युक्तत्वेन नलोपाशि दीर्घविरहात् किं च एवं राजा इत्यत्रापि विसर्गश्रवणं स्यात्॥ **दिव औ**॥दिवृशब्दस्य औ स्यात्सौ।द्यौः हेद्यौः।सौ किम्।दिवौ। ननु धातोरपि प्राप्नोति अक्षैर्दीव्यतीत्यक्षद्यूरिति परत्वाद्वकारस्योकारे कृतेऽपि एकदेशविकृतत्वेन दिवृशब्द एवायमिति चेन्न समानाद्धेर्लोप इत्यतो मण्डूक प्लुत्याऽधातोरित्यनुवर्तनात् यद्वा निरनुबंधग्रहणेन सानुबधकस्येति दिवुधातो

रुदितोऽग्रहणात्॥**ऊरसे**॥दिव उकारःस्याद्रसेपदांतेचद्युभ्यां द्युभिःद्युताद्युतरा अहर्विमलद्यु पूर्नीग इति सूत्रादन्ते इत्यनुवर्तते तत्वस्याव्यभिचारित्वात् पदांत इहाश्रीयते अधिकृतनाम्नो दिव्शब्देन विशेषणात् तदंतस्यापि दिव इति निरनुबंधकस्य ग्रहणादक्षद्यूभ्यामित्यत्र सानुबंधकस्य दीव्यतेर्न ।रसेपदांते इति किम्, दिवौ। दिवः। दिवः किम्, अग्निचिद्भ्याम्।रस उरिति वक्तव्ये ऊ इति ऊरसे इति प्रथमनिर्देशो योगविभागेन ऊ इति दीर्घप्रश्लेषणान्यविधानार्थः।तत्र व इत्यनुवर्तते तेन क्वचित् व ऊकारो भवति रसे पदांते च द्यूत्वा अक्षद्यूः तत उर्दिव इति योग उक्तार्थः॥दिव उद्व्यंजन इति कालापसूत्रं तत्र विमलद्यु-द्यापगा द्यूषभ इत्यादावव्याप्तिर्दोषः वाम्या इति सूत्रं तु व्यर्थमेव द्योशब्दा-दमि द्यामिति रूपस्य सिद्धत्वात् गौरी घुटीत्यत्र औरीघुटीति पाठ्यम् । अस्य द्यामितिरूपसाधनेर्थे वैलक्षण्यं नास्ति ॥**चतुरामूशौच**॥तुरशब्दस्यामागमो भवति शौ पंचसु च । चत्वारः नाम्नश्चतुरो विशेषणात्तदंतविधिः प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः प्रियचत्वारम् प्रियचत्वारि । शौ पंचसु चेति किम्। प्रियचतुरः।चकारेण पंचस्विति संबध्यते।चतुरित्यविभक्तिको निर्देशः लुप्तषष्ठीकं पदमिति माधवः । अन्येतु लोपशि सत्ययं संधिः क्वचिल्लोपाशि सत्यपि संधिं ज्ञापयति तेन हे सखेति सिद्धमित्याहुः । केचित्तु चतुर आम् शौ चेति पठंति चतुरो वाशब्दस्योत्वमित्यस्य स्थाने चतुरो वा उमिति पठितुं युक्तम् । **अनडुहश्च ॥** शौ पंचसु चामागमो भवति । अनड्वान् अनड्वाहौ बह्वनड्वाहि गोष्ठानि। अत्र शौ पंचस्वित्यनुवृत्त्यैव लभ्यतेऽतश्चकारो व्यर्थः । संयोगविभा-गार्थो भवति चेति योगे सौनुमिति चानुवर्तते । अनडुहः । सौपरे नुमागमो भवति। अनड्वान् हेअनड्वन् अनडुह इत्यत्र चानुवर्तते सौ अनुक्तसमुच्चयार्थः। तेन ईकारे नाम् ईपि वा बह्वनडुही अनडुही अनड्वाही नदादित्वादत्रेप् चतुर नडुहोराम् शौचेत्येकयोगे कार्ये पृथग्योगकरणं योगविभागे लिंगम् माधवमते तु नुमयम इत्यनंतरं सावनडुह इति सूत्रं नुमर्थमस्ति । यतोनुमइत्यतोनुमनु-वर्तत इत्याह।अनडुहश्चेत्याम्मात्रविधायकमित्याह। अत्रापि तदन्तविधिरिष्यते प्रियानड्वान् ननुपञ्चसुविहितस्यामः सौ विहिते न नुमाबाधः स्यात् तथा धावधौ सौ विहितस्य नुमो धौ विहितेनामा बाधः स्यादिति अप्ययो-

रादित्यतो मंडूकप्लुत्या आदित्यनुवर्त्यावर्णात्परतो नुम्विधानात्।कथं पुनरादि-त्यस्यानुवृत्तौ सत्यामप्याममोः कृतयोर्नुम् भवति। न पुनर्यप् वानडुहिनित्यस-न्निहितोकारः तत एव परः स्यात् उच्यते एवं सति मिदंत्यादिति परिभाषा बाध्येत न चाबाधेनोपपत्तौ सत्यां बाधो न्याय्यः तत्र यथा परिभाषा न बाध्येत आदित्यनुवृत्तिश्च सार्थिका भवति तथा कर्तव्यं यदि चाममोरकृतयो-र्नुम् स्यात् । नेदमुभयमनुगृहीतं स्यादिति कृतयोर्नुम् भविष्यति । अन्ये तु भवतु सामान्यविशेषयोर्बाध्यबाधकभावो संभवः इहत्वस्ति संभवो यदुभयं स्यादित्याममोर्नुमश्च समावेशः। यथा चिचीषतीत्यादौ सनामाप्ते द्विर्वचने दीर्घ आरभ्यमाणः संभवात्समाविशति । कालापे तु चत्वारनड्वाहशब्दौ परिकल्प्या पञ्चसु वा शब्दस्य उत्वं विहितं तन्मते कल्पनागौरवं दोषः।**धावम्॥** चतुरन डुहोः हे अनड्वन् चतुरो धेरसंभवाद्गौणत्वे भवति हे प्रियचत्वः । धौ किम्, अनड्वान् चत्वारः। चतुरनडुहोः किम्, हे राजन्।अम्संबुद्धावित्यत्राम् धावि-त्युचितं संबुद्धावुभयोर्ह्रस्व इत्यत्र धेइत्युचितं चतुरोनडुहश्चेत्यनुवर्तत एव **ओरौ॥**ओकारस्यौकारो भवति । ओकारांताद्विहितेषु पञ्चसु गौः गावौ गावः द्यौः द्यावौ।पंचसु किम् गवा विहितविशेषणं किं हेभानो भानवः।धौ एओजसी-त्योकारे कृते औत्वं माप्तं विहितविशेषणाद्वार्य्यते।ननु ओ रावित्यत्र उवर्णस्य ग्रहणमस्तु तथाच भानुरित्यादावेवास्य प्रवृत्तिः स्यान्नगौरित्यादाविति चेन्न । द्विगुः स्वादेर्नुरित्यादिनिर्देशात् । धौ जसि च धौ एओजसीति ओविधानात् क्तक्तवतू इत्यादि निर्देशाच्च।ननूक्तज्ञापकात् ह्रस्वस्य मास्तु दीर्घस्य हूहूरित्यादौ स्यादिति चेन्न उतऊरित्यादिलिंगाद्दीर्घस्याप्यत्राग्रहणं गोतो णिदित्यत्र ओर्णि-दितिवा ओतोणिदितिवा सूत्रणीयं तेन द्यौः द्यावौ स्मृत :उः शंभुर्येन स्मृतौः स्मृतावौ गोरौघुटीत्यत्र ओरौ घुटीति कर्तव्यम्। **आम्शसि॥**ओकारस्यात्वम मिशसि च।गांगाः विहितविशेषणाश्रयणात् शसा साहचर्य्याद्वानेह अचिनवम् अकरवम्।अत्राप्युवर्णस्य न ग्रहणं वसोर्वउमित्यादिनिर्देशाच्च पूर्वेणौत्वस्य माप्त स्यापवादोयम्।अम् च शश्चानयोः समाहारोऽम्शस् तस्मिन्।अम्शसि किम्।गावौ गवा।ओतः किम्।ग्लावम्। **ऐ सख्युः**सखिशब्दस्यऐकारादेशो भवति पञ्चसु स खायौ सखायः तस्मादित्यनुवृत्तस्य सखिशब्देन विशेषणात्तदन्तस्यापि शोभनः-

---

१ आवादौ ।

सखा सुसखा सुसखायौ।परमः सखा यस्य स परमसखा परमसखायौ।अत्र च सतो हि कार्यिणः कार्येण भवितव्यमिति सख्युरै इति निर्देश्ये विपरीत निर्देशोन्यदपि किंचिद्विपरीतं भवत्यत्रेति सूचनार्थः। तेन तदंतस्यापि परमसखायौ सोमसखायाविंत्यादिसिद्ध्यति।माधवः।पंचस्वित्युक्तेः सावपि प्राप्नोति नैवम्। परेण डादेशेन बाधितत्वात् विषम उपन्यासः प्रत्ययस्य डाप्रकृते ऐत्वमिति एवं तर्हि टिलोपे कृते विशेषाभावान्न भविष्यति अथवा सेर्डादेशंप्रति साक्षादिष्टेन कार्य्येण पंचवचनांतर्भावानुमितस्य निमित्तत्वस्य ब्राह्मणाः भोज्यंतां माठरकौंडिन्यौ परिवेविष्टामित्यत्र परिवेषणेन भुजिक्रियाया इव बाधान्न भवति।यत्र तर्हि डादेशः प्रतिषिध्यतेऽधेरिति तत्र प्राप्नोति हे सख इति कर्तव्योऽत्र यत्नः।तत्राधेरिति विभज्यते तच्चोभयोर्योगयोः शेषः ऐ सख्युः सेर्डाधेरिति ततश्चायमर्थः अधिप्रत्ययस्य सख्युरै भवति अधेः सेर्डा भवतीति यद्येवमौप्रभृतीनि पंच वचनानि ग्रहीष्यामः।नैवम्। पंचसुशब्दः प्राक् स्यादिष्वेव रूढ इति तादृग्विध एवानुवर्तत इत्याह। अन्ये तु न्सम्महत इत्यतो मण्डूकप्लुत्याऽधावित्यनुवर्त्याधिषु पंचसु ऐ इतिव्याचक्षते परे तूत्तरसूत्रादधेरित्यपकृष्य विभक्तिविपरिणामं कृत्वोक्तार्थं वर्णयंति यत्तु प्रियसखी इत्यत्र तु ऐ सख्युरिति सखिशब्दस्य पंचस्वित्यनेनापि संबंधादैत्वं न भवति सुसखायावित्यत्र भवतीति माधवेनोक्तं तन्नतदंतविधिना सुसखायावितिवत् प्रियसखायावित्येव रूपस्वीकारात् पदाङ्गाधिकारे तस्य तदन्तस्य चेति वरकविनोक्तत्वात् सखीमतिक्रांतोऽतिसखिः अत्रैडात्वेन लक्षणप्रतिपदोक्तस्यैव ग्रहणं न लाक्षणिकस्येति परिभाषणात् न्यायमूला चेयं परिभाषा प्रतिपदोक्तस्य झटिति बुद्ध्यारोहो भवति लाक्षणिकस्य तु लक्षणानुसंधानद्वारेण वितः प्रियसखिनी प्रियसखीनीत्यादौ तु पूर्वेणापि नुमा परस्याप्यैत्वस्य बाधः प्रायशो दृश्यतामिहेत्युक्तत्वात्। यद्वा पुंस इत्यनुवर्त्य पुल्लिंगात्सखिशब्दादिति व्याख्येयम्। यद्वा नपुंसकादित्यनुवर्तनीयम्। अनन्त इति बुद्ध्या समासात् पृथक् कृत्य ननानुवर्तनीयः। नादावित्यतो वापकृष्टव्यः। ततश्च नपुंसकस्य सख्युरै नेत्यर्थः। इदं च तदंतार्थं केवलस्य सख्युर्नपुंसकत्वविरहात् सख्युरसंबुद्धावित्यत्र सख्युरधावित्युचितम्। घुटित्वै इत्यत्र घुत्यै इत्युचितम्। यत्तु तुशब्द

उत्तरत्रासंबुद्धिनिवृत्त्यर्थं इति तन्न।दिव उद्यंजने इत्यत्रासंबुद्धावित्यस्य प्रयोजनाभावात् औत्वेन उतोबाधात् औसावित्यत्र सावनंत इत्यतः सावित्यनुवर्तमाने सौग्रहादसंबुद्धाविति नानुवर्तते इदुदग्नीत्यत्रासखिपतीति पठित्वा न सखिष्टादावग्निः पतिरसमासे सूत्रेत्यकुं शक्ये । अत्र तपरस्तत्कालस्येति त्वयापि स्वीकृतं तेनैव च सर्वत्र निर्वाहेकारग्रहणादि व्यर्थमेव तपरस्तत्कालस्य ग्राहकः अतः परस्तु सवर्णस्येति परिभाषणस्य लाघवाद्युक्तत्वात् कारग्रहणे सवर्णस्य वर्णग्रहणे सवर्णस्येति परिभाषणं गौरवादयुक्तम्।शास्त्रार्थस्य वैरूप्यप्रसंगाच्च।**सेर्डाधेः॥**सखिशब्दात्तदन्ताच्च नाम्नोऽधेःसेर्डा भवति।सखा प्रियसखा सख्यः किम् हरिः। सः किं सखिभ्याम्। अधेः किं हेसखे। यत्तु माधवः।अत्र च ऐ सख्युरित्यतः सख्युरिति षष्ठ्यंतमनुवर्तमानं सेरित्यनेन संबंधात् सखिशब्दार्थस्यैकत्वे वाच्ये विहितस्येत्यर्थः। तेन शोभनः सखा यस्य सुसखिरित्यत्र न भवति अन्यपदार्थस्यैकत्वे सेर्विहितत्वात् गौणमुख्यन्यायेन वा नात्र भवति। अत एव च शोभनः सखा सुसखेत्यत्र भवतीत्याह।तन्न, सुसखेत्यस्यैवेष्टत्वात्। एतदर्थमेव तदन्तविध्युपगमः सुसखेत्यस्य तु तदन्तविधिं विनापि प्राधान्यादेव सिद्धेः पदांगाधिकारे तस्य च तदंतस्येति कात्यायनेनोक्तः। अनङ्डाहावित्यत्र सेर्डाविधानं च प्रक्रियालाघवात्।यत्तु सेर्डेत्येव सिद्धेऽनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थं तेनोशनसः संबुद्धावनङ सिध्यतीति तन्न सेर्डेत्युक्ते हि ऋदुशनेत्युत्तरसूत्रेणापि डा स्यात्।ततश्चोशनेत्यत्र सर्वनामस्थाने चासंबुद्धाविति दीर्घः स्यात् । असंबुद्धौ सावनङ् विधानाच्च।अङ्गवृत्तपरिभाषया वा समाधानं सख्युश्चेत्यत्र चो व्यर्थः।**उशनसाम्॥**बहुवचनमाद्यर्थम्।उशनसपुरुदंशसनेहसां सेरधेर्डा भवति उशनेत्यत्र संज्ञापूर्वकत्वान्नोपधाया इति दीर्घो न भवति पुरुदंशाः अनेहाः। एषां किम्, वेधाः।सेः किम् उशनसौ।अधेः किम्, हे उशनः। उशनसपुरुदंशोनेहसां सावनंतः इत्यत्र साविति व्यर्थं सावित्यनुवृत्तेः न चिनंतरचानंतरत्वाद् शावित्यनुवर्तेत उशनसादीनां पुँल्लिंगत्वेन शेरभावात्॥ "संबोधने तूशनसस्त्रिरूपं सांतं तथा नांतमथाप्यदन्तम्। माध्यंदिनिर्वष्टि गुणं त्विगंते नपुंसके व्याघ्रपदांवरिष्ठः"॥ सम्बोधने धौ त्रयाणां रूपाणां समाहार स्त्रिरूपम् पात्रादित्वाद् क्लीबत्वम्। कानि पुनस्तानि रूपाणीत्यत आह । सांतं

सस्य नकारादेशे नांतं सस्य लोपेऽदंतं मध्यंदिनस्यापत्यं माध्यंदिनिराचार्यः वष्टि इच्छति। भाषायामस्य साधुत्वं चिंत्यमिति हरदत्तः। व्याघ्रपादपत्यानां मध्ये वरिष्ठो वैयाघ्रपद्य आचार्यः **य्वोर्धातोरियुवौ स्वरे** ॥धातोरिवर्णो-वर्णयोरियुवौ भवतः स्वरादौ स्यादौ परे। सुश्रियौ सुश्रियः कटप्रुवौ कटप्रुव-यत्वाद्यपवादोऽयम्।धातोः किम्।वातप्रम्यौ हूहौ।य्वौ किम्। विश्वपौ।स्वरे किं सुश्रीभ्याम्। स्यादौ किं श्र्यर्थं भ्र्वर्थम्। अत्र व्याख्यानाद्विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति य्वोरिति न दीर्घयोर्ग्रहणं नापि यवयोः। किं तर्हि इश्च उश्च यू तयोरिति ह्रस्वयोर्ग्रहणे सावर्ण्याद्दीर्घयोरपि स्यादिति माधवः। अन्ये तु न यवयोर्ग्रहणं नियो भुव इति निर्देशात् प्रत्ययान्ययातिशयेति निर्देशाच्च। अत्र हि गुणेऽपि च कृते यस्य इयू स्यात्।न चैवम्। निय इति निर्देशाद्दीर्घयो रेव ग्रहणमिति वाच्यम्, क्रियेति लिंगात्।तथाहि कृञो भिदादित्वादङि अय-कीति रिङ्।रिङ इकारस्य नुधातोरितीय्।अत्र दीर्घग्रहणमिति वाच्यम्, क्रिये ति लिङ्गात्।तथा ग्रहणे तु नुधातोरित्यत्रापि दीर्घानुवृत्तौ क्रियेति न सिध्येत्। अतोऽत्र ह्रस्वग्रहणमित्याहुः।ननु य्वौवेति लिंगाद्यवयोर्ग्रहणं नेति चेन्न, यवयो-र्ग्रहणेपि य्वौवेति सूत्रं य्वविधानायेयुव्बाधनाय प्रकृतिवदनुकरणमित्यातिदेशः पक्षे निय इत्यादावियादिः। नामिनः स्वर इति तु स्वरग्रहणमच्चास्थामिति शसादिना संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनः स्वरग्रहणम्। स्यादेतत्।धातुग्रहणं मास्तु स्त्रीभ्रुवोरिति नियमार्थं भविष्यति अधातोय्वोरि-युवौ चेत्तर्ह्येतयोरेव किं च आतोधातोरित्यतो धातुग्रहणमनुवर्तते। उच्यते। य्वोरियुवौ स्वरे इत्येको योगः। अत्र नियमादनुवृत्तेर्वा धातोरिति लभ्यते। धातोरित्यपरो योगः। अत्र स्वर इत्यनुवृत्तं लक्षणया सवर्णस्वरपरं धातोरि-त्यपि द्वित्वे कृते पूर्वो यस्तत्परमुत्तरपदस्य नुधातोरित्येव सिद्धम्। ततश्चा-यमर्थः। द्वित्वे सति पूर्वस्येवर्णोवर्णयोरियुवौ भवतोऽसवर्णे स्वरे परे इति इयेष इयेषिथ उवोष इयर्त्तीत्यादि। अथ य्वोर्ग्रहणं किमर्थं परिशेषादेव तल्ला-भात्। तथा हि ऋकारान्तस्य क्विपि तुका भाव्यं सुकृत् ऋकारान्तस्य त्विरु-र्भ्यां भाव्यं गीः पूः लवर्णांतस्तु धातुर्नास्ति एकारांतादेस्तु भविष्यति निरव-काशत्वात् आत इति नेति पञ्चस्विति चानुवर्त्य पञ्चसु नेति व्याख्यानात्।पंचसु

न दोषः अनुकरणेषु प्रकृतिवदनुकरणमित्यतिदेशाद्धातुत्वे सतीरुरालोपादीनि स्युः।धातुत्वाभावे तु तदभावादेव नातिप्रसक्तिः।हसांतेष्वप्येवं सत्यपि धातुत्वे गमां दृशां भजां मदामित्यादिलिंगान्नातिप्रसङ्गः।न च श्रीपामित्यादौ नपुंसकस्येति ह्रस्वे कृते तस्य धातुत्वादतिप्रसङ्गः स्यात्। अत इति नेति चानुवर्त्यातो नेति व्याख्यातुं शक्यत्वात् । एवं परिशेषात् य्वोरिति लब्धे किमर्थं तदिति उच्यते। उत्तरार्थं य्वोरिति स्पष्टार्थमिहैव कृतं नुधातोरित्यनेनेयुवौ विहितौ । तौ च स्वविषये पराभ्यां गुणवृद्धिभ्यां बाध्येते यद्यपि तथापि यांतु वांतु रांत्वित्यादौ निरपवादत्वादियुवौ स्यातामिति य्वोर्ग्रहणं हसांतव्यावृत्त्यर्थं च उक्तज्ञापकानां स्यादिमात्रविषयत्वात् नामधातूनामपि धातुत्वादियुवौ स्तः।पक्कमिच्छतीति पक्कीः पक्कियौ पक्कियः शुष्कियौ शुष्कियः अचिष्णुधातुभ्रुवांय्वोरियङ् वङावित्यत्रेयुवावित्येवोचितं ङित्वं व्यर्थं सूत्रस्वरसतो य्वोरेव स्थानित्वप्रतीतेः। तदन्तस्यापि स्थानित्वे य्वोरेव स्थानित्वं निर्दिश्यमानस्यादेशा भवंतीति न्यायात्।नचैवमीहते ऊहत इत्यादावतिप्रसङ्गः स्वरपरत्वेन य्वोर्विशेषणात्। नचैवं क्लिष्टता पुगंतलघूपधस्येत्यादौ स्वीकृत्य क्ङिति चेत्यादौ भाष्ये स्पष्टत्वात् ईदूतोरियुवौ स्वरे इत्यत्र तपरत्वं व्यर्थम्।य्वोरिति वक्तुं युक्तम्।स्वरे इत्यपि व्यर्थं पूर्वसूत्रात्स्वर इत्यनुवृत्तेः । नचाघुट्स्वर इति संपूर्णमनुवर्तेत अघुटि स्वर इति पाठाभ्युपगमात्। इष्टानुरोधेन स्वरे इत्यस्यानंतरस्यैव पदस्यानुवृत्तिस्वीकारात् **स्त्रीभ्रुवोः** । एतयोरिवर्णोवर्णयोरियुवौ भवतः स्वरादौ स्यादौ । स्त्रियः भ्रुवौ भ्रुवः । अधातुत्वात् पूर्वेणाप्राप्ते विधिरयं यत्ववत्वयोरपवादः । स्यादौ किम्, स्त्र्यर्थम् भ्र्वर्थम् । स्वरादौ किम् स्त्रीभ्याम् । य्वोः किम् अनेकवर्णत्वात्सर्वादेशो माभूत् । भूर्धातुवदित्यत्र धातुवदिति व्यर्थं सुधीरिति वत् भूरिति वक्तुमुचितत्वात् अधातुत्वादप्राप्ते विधिरयं स्त्रीचेति चकारो व्यर्थः **वाम्शसि**॥स्त्रीशब्दस्येवर्णस्य इय् वा अमि शसि च । स्त्रियम् स्त्रीम् स्त्रियः स्त्रीः।कचिदेकदेशोऽनुवर्तेत इति स्त्रीशब्दस्यानुवृत्तिः।अम्शसि किम् स्त्रियौ स्त्री शब्दस्य किम् भ्रुवम् भ्रुवः।पूर्वेण नित्ये प्राप्ते विकल्पोऽयं वार्तिकमेवेदं लेखकैर्भ्रमात्सूत्ररीत्या लिखितमिति माधवः । नियो भुव इति निर्देशात् यथाक्रमस्थान

---

१ इहय्वोरितीवर्णोवर्णयोरुपलक्षकः ।

सादृश्याद्वा एरियुओरुव् **य्वौवा ॥** तस्मात् य्वोर्धातोः स्वर इत्यनुवर्तते अनेकस्वरस्य नाम्नो धातोरधात्ववयवसंयोगयोरिवर्णोवर्णयोर्य्वौ स्तः । स्वरादौ स्यादौ । भूसुध्युपसर्गकारकेतरपूर्वाणां नवर्षापुनर्दृङ्करपूर्वभूशब्दस्य वकारो भवति इयुवोरपवादः यद्यत्र धातोर्य्वोर्य्वावित्यर्थः स्यात्ततः पूर्वसूत्रं निर्विषयमेव स्यात्। एवमपि विषयवैपरीत्यं स्यात्तस्मादिदं विशिष्टविषयं स्वीकर्तव्यं स च विशेष उक्त एव वाग्रहणाल्लभ्यते। ननु धातोर्य्वोः स्वरे पक्षे यवयोर्विधायकमिदमस्त्विति चेन्न।एवं हि तत्रैव वा य्वौ ग्रहणस्य कर्तव्यत्वेनास्य वैयर्थ्यापातात् न चैवमपि य्वोरीकारोकारविधानायेदमस्तु तदपि पक्षे संधिबाधनार्थमिति वाच्यम्।वाग्रहणादेव अनेकस्वरस्य किं नियौ नियः लुवौ लुवः।धातोः किं वातमम्यौ वातभमीन् हूहून् ।परत्वादम्शसोरस्येति बाधित्वा य्वौ स्याताम् य्वो किम् सोमपौ । स्वरादौ किम् सेनानीभ्यां सुलूभ्याम्।स्यादौ किम् सेनान्यर्थं सुल्वर्थम्।आतोधातोरिति धातुग्रहणमनुवर्तमानं संयोगस्य विशेषणं कृतं तेनोन्न्यौ उन्न्यः उल्ल्वौ उल्ल्वः।अत्र संयोगपूर्वकत्वेऽपि उपसर्गधात्ववयवसंयोगत्वात् । य्वौ धात्ववयवसंयोगपूर्वत्वं सुश्रियौ कटप्रुवौ। भूशब्दस्य स्वयंभुवौ सुधीशब्दस्य सुधियौ।सुकिम् प्रध्यौ।उपसर्गेति किम्। परमनियौ । शुद्धलुवौ । भूरवर्षाभुरपुनर्भूः । अनेकाक्षरयोस्त्वसंयोगाद्यवावित्यत्र प्रथमं भूरिति सूत्रणीयम् । तदनंतरं अनेकाक्षरस्यासंयुक्ताद्यौ ततो वर्षाभूः पुनर्भूरिति कर्तव्यं दृन्भूपुनर्भू इत्यनुक्तेर्न्यूनता ॥ **नुधातोः ॥** नुप्रत्ययांतस्य धातोश्चेवर्णोवर्णयोरियुवौ भवतोऽनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ धातोर्विहिते स्वरादौ परे । शक्नुवन्ति शिश्रियतुः । ब्रुवंति । असंयोगपूर्वस्य नुप्रत्ययांतस्योवर्णस्य सुन्वंति । अनेकस्वरस्य धातोः । निन्यतुः निन्युः जुहुवतुः । अनेकस्वरस्य किम् । रिपि गतौ । रियति । युवंतु । नुप्रत्ययान्तस्यानेकस्वरत्वाव्यभिचारात् प्रत्युदाहरणं नास्ति । धातोर्विहित इति विशेषणं पदादिस्वरवारणार्थं तेन सुधीशावित्यादौ य्वौ न । स्यादिस्वरे तु व्यवस्थोक्तैव । ननु कथमिदं लभ्यते धातोर्विहित इति न पुनः पादादाविति चेन्न नुप्रत्ययान्तात् पदादिस्वरस्यासम्भवात् । तत्साहचर्याद्धातोरपि तादृशस्यैव ग्रहणात् । चिन्वत्रेत्यत्र संभवेपि सूत्रस्याल्पविषयता स्यात् । ननु त्रस्नु गृध्नु इत्यादे

नुप्रत्ययान्तात्संभवत्येव पदादिस्वर इति चेन्न । निरनुबन्धकग्रहणे सानुबंधकस्येति परिभाषया नुग्रहणे स्वादिनोरेव ग्रहणं नक्नोः । न्यायसिद्धा चेयं परिभाषा निर्विशेषणग्रहणे सविशेषणस्य ग्रहणायोगात् । अन्यथा वेङ्क्योरित्यत्र पोपि ग्रहणं स्यात् । वादीपोरिति ज्ञापकसिद्धा । यद्वा धातोरित्यनुवर्तमाने धातुग्रहणं शब्दव्यापारार्थं तेन धातोरिति शब्देन विहिते पर इत्यर्थः । नोरपि तादृश एव स्वरादिरिति नाव्याप्तिः ननु नोश्चेति सूत्रयितव्यम् । आतो धातोर्य्वोर्धातोरिति सूत्राभ्यां धातुग्रहणद्वयमनुवर्तते तेनोक्तार्थसिद्धौ किं धातुग्रहणेन एवं तर्हि धातोरिति योगो विभज्यते धातोर्य्वोर्धातुविहिते स्वरादौ परे इयुवौ यवौ च भवतः । तेनेणोयंतीत्यादौ इकोधियंतीत्यादाविंयं बाधित्वा यः रुरुवतुः लुलुवतुरित्यादौ वं बाधित्वा उव् च भवति । नानप्योर्व इति न कर्तव्यं भवति अतिप्रसंगाप्रसंगौ वानुवृत्त्या इष्टानुरोधेन वा परिहर्तव्यो माधवस्तु पूर्वसूत्रयोः स्यादिस्वरादिविषयत्वादस्यारम्भः । यद्यपि तदेव स्वरे ग्रहणमत्राप्यनुवर्तते तथापि नुप्रत्ययोपादानसामर्थ्याद्योगान्तरारंभाच्च धातुविहितप्रत्यय एव विज्ञायते । तेन श्र्यर्थं भ्वर्थमित्यादावनेनापीयुवौ न अत एव च णु स्तुताविति धातुरपि न गृह्यते कृत्रिमत्वाच्च तदेवं स्वादिनोर्लुप्तषष्ठीकोयं निर्देशः । प्रत्ययग्रहणपरिभाषया तदन्तस्य इह च नोश्चेति कृतेऽपि सूत्रे य्वोर्धातोरित्यतो धातोरित्यनुवृत्तेर्धातोर्विहिते स्वरे नोर्धातोश्चेयुवौ सिद्धौ योगविभागार्थं पुनर्धातुग्रहणम् । तेन नु इत्येको योगः । तत्रानुवर्तमानेन धातुग्रहणेनोक्तार्थः सिध्यति । ततो धातोरिति द्वितीयः तत्र च नु इत्यनुवर्तते य्वौ वेति तेन नुप्रत्ययांतस्य धातोश्चानेकस्वरस्यासंयोगपूर्वयोरिवर्णोवर्णयोर्य्वौ भवत इति तस्यार्थः इत्याह वाग्रहणादब्विषये हुन्वोरेव वस्तेन बोभुवतीत्यादौ न वकारः ॥

हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ॥
रघुनाथाभिधो व्याख्यां तुरीयांघ्रेर्यथामति ॥

इति विभक्तिचतुर्थपादः ॥ ४ ॥

# अथ युष्मत्पादः ५.

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्ते मे वां नौ वस्नसौ।

अल्पस्वरत्वात्षष्ठ्याः पूर्वनिपातः तदनुरोधाच्चतुर्थ्या सह योगे तृतीयेयम्। तत्र षष्ठ्यादीनां प्रत्येकं वचनत्रयात्मकत्वात्तासां चैकत्रासम्भवात् एकैकवचन-सहितयोर्युष्मदस्मदोः स्थानित्वं तत्र च यथासंख्यपरिभाषया ते इति माधवः। तन्न। अर्थतः साम्ये यथाक्रमं शब्दतो वा नाद्यः। षष्ठ्यादीनां प्रत्येकं वचनत्र-यात्मकत्वेन न वर्तते।आदेशास्तु त्रय इति वैषम्यम्। न द्वितीयः। षष्ठ्यास्ते मे चतुर्थ्या वां नौ द्वितीयाया वस्नसाविति क्रमप्रसङ्गात्। एवमन्यत्राप्यर्थतः साम्ये यथाक्रममिति। पक्षे कुप्वोः ≍क≍पौ वा। ण्यायनणेयण्णीयाः। गर्गनडात्रिस्त्री पितृष्वस्रादेश्च पचिनंदिग्रहादेर्युणिनीत्यादिषु दोषः। शब्दतः साम्ये इति पक्षे शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ सम्बन्ध आधारभावयोः। विना सहनमस्कृतेनिर्द्धारणस्वाम्यादिभिश्च।मान्तोपधाद्वत्विनौ।झपानां जबचपा इत्यादिषु दोषः। उभाभ्यामिति साम्येऽपि शेषाः कार्य इत्यादिसूत्रे प्रकृतसूत्रे च दोषः। अतोऽत्रार्थसादृश्येन निर्वाह एकार्थस्यैकार्थो व्यर्थस्य व्यर्थो बह्वर्थस्य बह्वर्थ इति।यत्तु तेमयादयो वा। एकाद्यर्थाभिधायिनस्तादृशमेव स्थानिनमाक्षिपंतीति तन्न। अर्थसादृश्येन निर्वाहसंभवात्स्थानिनः षष्ठ्या निर्दिष्टत्वाच्च तदाक्षेपो व्यर्थः। ननु सहार्थतृतीयाग्रहणं दुष्टं गौरवात्। लाघवाद्द्वितीयासु इति निर्देश्य-मिति चेन्न। तृतीयाग्रहणं श्रूयमाणविभक्तिकयोरेव। यथादेशाः स्युर्लुप्तविभक्ति-कयोर्मा भूवन्नित्येतदर्थम्। श्रूयमाणायां हि विभक्तौ तत्साहित्यं भवति न पुनर्लुप्तायाम्। प्रत्ययलक्षणेनापि कार्यं शास्त्रं वातिदिश्यते न तत्सात्यंतेनेति युष्मत्पुत्रो ब्रवीति इत्यस्मत्पुत्रो ब्रवीतीत्यत्र प्रत्ययलक्षणेन षष्ठ्यंतयोर्यु-ष्मदस्मदोर्वस्नसौ न।अनुकार्यानुकरणयोरभेदपक्षे ते मे वां नावित्यविभक्तिकानि पदानि।भेदपक्षे तु वस्नसाविति ग्वौवेत्यतो वेत्यनुवर्तते। स च व्यवस्थितो विकल्पः। तेनैत आदेशा अनन्वादेशे वा पदात्परात्प्रथमान्तादन्वादेशेपि बाधंताम्। ते तव वाऽपत्यं तस्मै ते हरये नमः। भक्तस्त्वमप्यहं तेन हरिस्त्वा

त्रायते समा। त्वां मामिति वा । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ बहुवचनस्य वस्नसौ । तेमयावेकवचनस्येति त्रिसूत्र्याः स्थाने युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसाविति सूत्रयितुमुचितं लाघवात् । स्थानेन्तरतम इत्यनेकार्थस्यैकार्थौ द्व्यर्थस्य द्व्यर्थौ बह्वर्थस्य बह्वर्थ इति व्यवस्थायाः संभवात् । सहार्थतृतीयया च स्थशब्दार्थक्रोडीकाराच्च युष्मदस्मदोः पदं पदात् षष्ठीचतुर्थीद्वितीयासु वसनसौवांनौ।द्वित्वे त्वन्मदोरेकत्वे तेमे त्वामा तु द्वितीयायामिति त्रिसूत्र्याः स्थाने युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ त्वामामा त्वन्मदेकत्वे इति सूत्रयितव्यम् । उक्तरीत्या सर्वनिर्वाहात् । **त्वामामा** । अमासहितयोर्युष्मदस्मदोस्त्वामा इत्येतावादेशौ स्तो वा । अमोऽत्र ग्रहणं न भवति।त्वामोरेकार्थवाचित्वेन बहुवचनान्तयोरस्थानित्वाद्वेति माधवः। अन्ये तु द्वितीयाभिरिति पूर्वसूत्रात् द्वितीयानुवृत्तेरम एवात्र ग्रहणमित्याहुः। तेमयोरपवादोऽयम्।ग्रामस्ते स्वं ग्रामो मे स्वम्।एवं वां नौ।वोनः ग्रामस्ते दीयते ग्रामो मे दीयते । एवं वां नौ वसनस् ग्रामस्त्वा पश्यति ग्रामो मा पश्यति।षष्ठीत्यादि किम्।ग्रामे युवाभ्यां कृतम्।अमा किम्।ग्रामे त्वया कृतम्।युष्मदस्मदोरादेशाः समानवाक्ये भवंति आख्यातं सान्वयविशेषणं वाक्यं।तेनेह न । ओदन पच तव भविष्यति।समासश्चान्वये नाम्नामिति वा सिद्धम्।अन्वये सति पदानुवादको विधिर्भवति प्रकृते चान्वयाभावः। यद्यपि तत्र समासग्रहणमस्ति तथापि चकारेण विध्यन्तरोपसंग्रहो बोध्यः । त्वामौ द्वितीयाया इत्यस्य स्थाने त्वामा मा त्वा मावमेति सूत्रणीयम्।केचित्तु षष्ठीचतुर्थीद्वितीयेति विपरीतनिर्देशाद्विभक्त्यंतरविशिष्टयोरप्येते आदेशा भवन्तीत्याहुः। तदपरे न मन्यन्ते । व्याकरणान्तरे तददर्शनात्॥**नादौ**॥पादादौ वाक्यादौ च वर्तमानयोर्युष्मदस्मदोरेते न भवन्ति।"वेदैरशेषैः संवेद्योऽस्मान्कृष्णः सर्वदावतु"त्वां पातु मां पातु।आदावितिकिम्।"श्रीशस्त्वावतुमापीह"।आदित्वंच सत्यन्यस्मिंयस्मात्पूर्वं नास्तीति वचनात्स्वप्राग्वर्णान्तरशून्यत्वम् । सत्यन्यास्मिन्निति विशेषणविरहितमादित्वलक्षणमन्ये वर्णयंति।मध्येपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति परिभाषया ते मयादीनामेवायं निषेधो न त्वन्मदादीनाम् इयं च परिभाषा न्यायमूला । तथाहि निषेधस्य निषेध्याकांक्षायां पूर्वोपस्थितेन तत्पूरणोपपत्तौ

सम्भवत्यामनुपस्थितेन तत्पूर्तिकल्पनमनुचितम्।त्वद्गच्छति युवांपश्यतीत्यादौ त्वन्मदादयो भवन्ति।नन्वनन्तरत्वात् त्वामोरेव निषेधः स्यात्।मैवम्।तथा सति त्वामानादावित्येकयोगमेवाकरिष्यत्।पृथग्योगकरणात्तु माप्तानां प्रस्तुतानां च सर्वेषामेव निषेधः।तेन योगविभागादन्यत्रापि क्वचिन्निषेधः। तेन सम्बोधनादेते न भवंति। देवास्मान्पाहि नृहरे विष्णोस्मात्रक्षसर्वदा।विशेष्यपूर्वादसंबोधनपूर्वात्तु संबोधनात्तु परयोरेते स्युः।हरेदयालो नः पाहि। सर्वदा रक्षदेव नः। न पादादावित्यस्य स्थाने नादावित्येवोचितम्।उक्तरीत्या निर्वाहात्।पदात् अपादादावित्येतयोः स्थाने नादावित्येवोचितम्।पादादित्ववाक्यादित्वयोर्ह्येवं संग्रहसंभवात्॥ **चादिभिश्च**॥ च वा हाहैवैतैर्योगे युष्मदस्मदोस्तेमयादयो न भवंति ग्रामस्तव च स्वं ग्रामो मम च स्वम्। युवयोश्च स्वम्।आवयोश्च स्वम्।ग्रामस्तुभ्यं दीयते मह्यं च। हरिस्त्वामेव रक्षतु। यद्यप्यविशेषणचादियोगे निषेध उच्यते तथाप्यादिशब्दस्य व्यवस्थार्थत्वाच्चादिगणस्थाः पञ्चैव चादयो ग्राह्याः नत्वधिकाः लक्ष्यानुरोधात्तन्त्रानुरोधाच्च।अयं च साक्षान्मुख्ये एव योगे निषेधो न चादियुक्तयोगे गौणयोगत्वात्। हरो हरिश्च मे स्वामी।सूत्रे चस्यानुक्तसमुच्चयार्थत्वान्मनोज्ञानार्थधातुभिर्योगे तद्योगयोगेपि निषेधः। चेतसा त्वां समीक्षते। भक्तस्तव रूपं ध्यायति। चाक्षुषज्ञानार्थत्वान्मनोज्ञानेर्थः। भक्तस्त्वा पश्यति चक्षुषा। मध्येऽपवादन्यायेन तेमयादीनामेवायं निषेधो नत्वस्मदादीनाम्। ग्रामस्त्वां च पश्यति॥ **त्वन्मदेकत्वे**॥ एकत्वेवर्तमानयोर्युष्मदस्मदोस्त्वन्मदादेशौ स्तः। त्वां मां त्वया मया। सिङेङस्सु वक्ष्यमाणा विधय एव बाधका भवन्ति। यदा समाने एकार्थे युष्मदस्मदौ स्तः। समासस्यान्यसंख्यकत्वाद्द्विवचनबहुवचने स्तः।तदापि त्वमौ भवत एव।एकत्वे इत्यस्य प्रकृत्यर्थविशेषत्वात्। स्यादौ तु परत्वाद्वक्ष्यमाणा आदेशाः। अतिक्रांतस्त्वामातित्वम्। अतिक्रांतौ त्वामतित्वाम्। अतिक्रांतास्त्वामतियूयम्। एवमस्मदः। यदा तु समासार्थ एकसङ्ख्यः। युष्मदस्मदी द्वित्वबहुत्ववाचिनी स्तः। तदा त्वन्मदौ न स्तः। युष्मदस्मदोरेकत्वानाभिधायित्वात्। अतिक्रांतं युवां युष्मान् वा। अतियुवां अतियुष्माम्। तव पुत्रस्त्वत्पुत्रः।तवापत्यं त्वदपत्यम्।त्वं पुत्रो यस्य त्वत्पुत्रः। ननु स्याद्यधिकारे कथमत्र त्वन्मदौ स्याद्यभावात्। न चान्तर्वर्तिनीं विभक्ति

माश्रित्येति वाच्यम् । युवयोः पुत्रो युष्मत्पुत्र इत्यत्रादौ युवावयोरपि प्रसंगात् उच्यते । नुधातोरित्यत्रासंभवात्स्याद्यधिकारस्त्यक्तः सोऽग्रेपि न सम्बध्यते।अत एव त्यदादेष्टेरः स्यादावित्यत्र पुनः स्यादिग्रहणं कृतम् । ननु त्वं पुत्रो यस्य भवान् प्रियो यस्य वेधाः प्रधानं यस्येत्यादौ।त्वमहं सिना प्रितो नुम्।अत्वसोः सावित्यादिविधयोंतरङ्गत्वात् प्राप्नुवंति । सत्यम् । निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वतीति भवति निमित्तापाये नैमित्तिकस्याप्यपाय इति वा कृतानां निवृत्तिः सम्भवति । नच समासप्रत्यययोरिति लुकि सत्यपि प्रत्ययलक्षणे नैते भविष्यंति । लुका लुप्ते प्रत्ययलक्षणाभावात् । दान्तावेतौ । तेन त्वादयति । मादयति । त्वदीयम् । मदीयमिति सिद्धम् । सूत्रे ञमादेशस्तु वावसान इति पक्षे चपादेशे कृते प्रवर्तते । अवसान इत्यस्य पदान्तार्थत्वात्। यद्वा अनेनैव ज्ञाप्यते । झसाना।मिति पक्षे यमा भवंती।ति त्वमावेकवचन इत्यस्य त्वन्मदेकत्वे इति सूत्रयितुमुचितम्।प्रपर्यंतस्येत्यपि नारंभणीयं युवकामा वकामित्यादौ सुबंतस्यैव टेः प्रागकचः संभवात् । युवकाभ्यामित्यादौ युवाकचोर्युगपत्प्राप्तयोरादेशः परत्वाद्भवति । प्रातिपदिकस्य टेः प्रागकजित्यस्या वकाशोऽतियुष्मकाभ्यां युवावयोरवकाशो ज्ञाताद्यर्थस्याविवक्षायां तद्विवक्षायां युगपदुभयप्रसङ्गे परत्वादेशः पुनः प्रसङ्गमात्रेण नित्यत्वं शब्दान्तरप्राप्त्या ऽनित्यत्वं च समानमुभयोर्युवावौ द्विवचने व्यर्थवाचिनोर्युष्मदस्मदोर्युवावौ स्तः स्यादौ।युवाम्।आवाम्।युवाभ्याम्।आवाभ्याम्।युवां आवां वातिक्रांतमतियुवाम-त्यावाम्।युष्मानस्मान्वातिक्रांतमतियुष्मामत्यस्मा।मित्यादौ तयोरव्येकतार्थत्वा-न्नस्तः।युवामिच्छति युष्मद्यति।युवां वाकरोति युष्मयतीत्यादौ तु स्याद्यभावा-न्नस्तः।युष्मदस्मदोः किम्।उभौ।द्वौ।वक्तीति वचनं कर्तरि युः द्वयोरर्थयोर्वचने द्विवचने प्रथमाद्विवचनान्तमेतत् । द्विवचने ये युष्मदस्मदी इति हरदत्तः । कर्मणि युडित्यन्ये । अत्र पक्षे द्विवचन इति सप्तम्यन्तं द्वित्वे इति फलितम् स्यादावित्येव द्वित्वे या स्यादिर्विभक्तिस्तस्यामित्यत्र स्यादिस्त्वधिकृतो मण्डूकप्लुत्याऽत्र संबध्यते । त्यदादेष्टेर इत्यतो वापकृष्यते । युक्तं चतत् । अन्यथा युवयोः पुत्रो युष्मत्पुत्र इत्यादावपि युवावौ स्याताम्।यद्यपि । द्विवचने प्रत्यये परे इत्यर्थोऽपि सिध्यति । युवामतिक्रान्तावतियुवामित्यत्र युवावयो

रप्रसङ्गः स्यात् । अतः प्रकृत्यर्थविशेषणं कृतम् । नन्वेवमपि युवावौ द्वित्वे इतिपाठ्यम् । अत्र माधवः । द्वित्वे इति वाच्ये द्विवचनग्रहणस्यावृत्त्या संज्ञाशब्दस्यापि ग्रहणार्थत्वादित्याह । तन्न । द्विवचने परे इत्यर्थाङ्गीकारे अतियुवामित्यादावप्रसङ्गस्तदवस्थ एव । एवं तर्हि परतोपहासार्थमेतत् । द्वौ वक्तीति द्वावुच्येतेऽनेनेति वा योगेनैव सिद्धे द्विवचनादि सज्ञाविधायकं तान्येकवचनद्विवचनबहुवचनान्येकशः । सुप इति न कर्तव्यम् । युवावौ द्विवचन इत्यत्र युवावौ द्वित्वे इति कर्तव्यम् । द्वित्वे ये युष्मदस्मदी इति व्याख्यातव्यम्।युवावौ द्विवाचिषु इत्यत्रापि युवावौ द्वित्वे इति सूत्रयितव्यम् । विभक्तावित्यनुवर्तते । त्वमहमादयस्तु परत्वात्त्वन्मदौ युवावौ च बाधंते । त्वां मां वाऽतिक्रांतोऽतित्वम् । अत्यहम् । अतियूयम् । अतिवयम् । अतितुभ्यम् अतिमह्यम् । अतितव । अतिमम।एँव युवामावां वातिक्रांतोऽतित्वमित्यादि युष्मानस्मान्वातिक्रांतोऽतित्वमित्यादिष्वप्येवम् । युवावावित्यत्र व्याख्यानादावितिदीर्घाद्यदंताच्छेत्तव्यः।**आमौ**।युष्मदस्मद्भ्यां पर औ आम् भवति।युवाम्। आवाम्।अतित्वाम्।अतिमाम्।अतियुष्माम्।अत्यस्माम्।अतियुवाम्।अत्यावाम् । अत्र माधवः।ननु किमित्यामादेशः क्रियते कुतोनामेव क्रियते अम्शसोरित्यलोप प्रसंगात्।अमो लाक्षणिकत्वात्तु अम्स्भावित्यपि नात्वप्रसंगः।एवं तर्ह्यकारोपदेशसामर्थ्यादेव नालोपो भविष्यति । अन्यथा ममात्रं विधीयेत किंच।अमि सति युष्मयतेश्च क्विपि तल्लोपे औकारस्यामि युष्मामस्मामिति प्राप्नोति. युषामसामिति चेष्यते । तस्मादामावित्यस्यायमर्थः । आ अम् औ इति च्छेदः । युष्मदस्मदोराकारांतादेशो भवति औकारस्य च अमादेशः । एवं च क्विबन्तयोरपि युष्म् औ अस्म् औ इति स्थिते मकारस्यात्वे औकारस्य चामि अतियुषाम्।अत्यसामिति सिध्यति।ननु चात्रापि युवावौ प्राप्नुतः।एवं तर्ह्ययमाकारो मांतयोरादेशाः पाक्षिका भवंतीति ज्ञापनार्थः । आत्वविधौ च युवामावामित्यत्रापि न दोषो भवति । आमोऽभावात्तयोरनदंतत्वाच्च सुडाम इत्यस्यापि न प्रवृत्तिः । अन्यथा हि लक्षणप्रतिपदोक्तपरिभाषाश्रयणीया स्यादित्याह । आमो लाक्षणिकत्वादिति।यदुक्तं तन्न सूत्रकृतत्वं, लाक्षणिकत्वमिति लाक्षणिकत्वाभ्युपगमात् । किंतु अवयवविभागेन व्युत्पादितत्वं :तत् । युक्तं चैतत् ।

अन्यथा ह्यम्मात्रस्य लाक्षणिकत्वापातः । द्वितीयैकवचनस्यापि सिऔजसि ति विहितत्वात्।अमोम् अतोमनत इत्यादिविहितेभ्यो विशेषाभावाच्च । यद्यपि आ अम् औ इति च्छेद इत्यादि तदपि न,अमोऽकारस्य वैयर्थ्यापातात्।म्मा- त्रविधानेन निर्वाहात्।यदप्येवं तर्हीत्यादि तदपि न अतित्वामतिमामतियुवा मत्यावामित्यादौ चरितार्थत्वात्।गौणत्त्वे त्यदाद्यत्वाभावात् । सति प्रयोजने ज्ञापकत्वानुपपत्तेः । यदपि आत्वविधौ चेत्यादि तदपि न,अतियुष्मभ्यमत्यस्म भ्यमतियुवदत्यावदित्यादावतिप्रसङ्गात् । यदपि अनदन्तत्वाच्च सुडाम इत्यस्यापि न प्रवृत्तिरिति । तन्न । एवमपि ङेरामादेशे कृते मत्यां बुद्ध्यामि- त्यादौ नुडाम इत्यस्य दुर्वारत्वात् । यदपि अन्यथाहीत्यादि तदपि न । आमो लाक्षणिकत्वाभावो दर्शितः प्राक् । यद्यौकारस्याम्सन्नियोगेनैवात्वं विधीयते तदाम्विधानं व्यर्थम्। म्मात्रविधानेनाप्युक्तरूपसिद्धेः । एवं माधवमतं निरस्तम्। अत्रोच्यते।अ अम् आविति च्छेदः।अ इति योगो विभज्यते। अत्र लोपः। अत् युष्मदस्मदोरिति चानुवर्तते। युष्मदस्मदोरकारान्तादेशो भवति । तस्य अतः परस्य लोपो भवति। द्वितीयस्य तु युष्मदस्मद्भ्यां पर औकारोऽम् भवति।अमि कृते आम्स्भावित्यात्वम् । यद्वा सवर्णे दीर्घः।तत्रामुशसोरिति लोपः ।अकारो- च्चारणसामर्थ्यात् । अन्यथा मकारमेव विदध्यात् । योगविभागे विपरीतनिर्दे- शोऽप्यनुकूलः।अन्यथा आवामित्येवावक्ष्यत् । योगविभागस्येष्टसिद्ध्यर्थत्वादति प्रसङ्गो नोद्भाव्यः । केचित्तु औकारस्य आमं विधाय विपरीतनिर्देशान्नुट्सु- टोरभावं समर्थयन्ते।प्रथमायाश्च द्विवचने परिभाषायामित्यस्य स्थाने आवीति सूत्रयितु मुचितम्।नच निरनुबन्धग्रहणेन सानुबंधकस्येति परिभाषाया औटो न स्यादिति वाच्यम्।टकारस्य समुदायानुबन्धत्वेन औकारस्य निरनुबंधत्वानपा- यात् । छन्दसि दृष्टानुविधिरिति वा 'सर्वे विधयः छंदसि विकल्पंते' इति वा युवं वस्त्राणीत्यस्य निर्वाहासंभवात् । अन्ये तु ' रः संख्याया ' इत्यादिना यस्यामो नुट् संभाव्यते स एव नुडागम इत्यत्र गृहीतस्तादृशश्च षष्ठ्या आम्। सुडाम इत्यत्राप्याम् इत्यनुवर्त्य आमेव य आम् नान्यप्रकृतिरिति व्याचक्षते ।

**त्वमहं सिना**।सिसहितयोर्युष्मदस्मदोस्त्वमहमित्येतावादेशौ यथाक्रमं भवतः। त्वम्।अहम्।अतित्वम्।अत्यहम् । सिनेति सहयोगे तृतीया।अत्र माधवः। त्वमह-

मोर्हसान्तत्वादेव सिलोपे सिद्धे व्यर्थं सिनेति लाघवाय सावित्येव वाच्यम् ।
नच सुप्यतिव्याप्तिः । त्वन्मदेकत्व इत्यत एकत्व इत्यनुवृत्तेः । नापि वाच्यं
तदात्वे माभूदिति।मान्तत्वविधिसामर्थ्यादेव तन्निवृत्तेः । यथाऽयमित्यत्र नापि
सिलोपार्थं मांतत्वम् । अत्त्वबाधे पूर्वमेव सिलोपप्रवृत्तेः । एवं तर्हि सकारनि-
मित्तमाम्स्भावित्यात्वं माभूदिति सिनेत्युक्तम्। तदपि मान्तत्वविधिसामर्थ्यान्न
स्यादिति चेन्न । मान्तत्वस्यात्त्वबाधे चरितार्थत्वात् । किंच पुरस्तादपवाद-
न्यायेनाप्यात्वं स्यादेवेति वक्तव्यमेव । सिनेति इह च तदन्तविधेरपीष्टत्वात्।
त्वां मां युवामावां युष्मानस्मान्वातिक्रांत इत्यत्रापि अतित्वमत्यहमित्येव भवति
तथा तानेव करोतीति युष्मयते अस्मयतेश्च क्विपि तल्लोपे स्यादिषु एकदेशविकृ-
तस्यानन्यत्वाद्युष्मदस्मदोरपि त्वमहमादय आदेशाः स्युरेवेति।तत्रापित्वमहमि-
त्यादीनि रूपाणि भवन्तीत्यवोचत्।अत्रेदं वक्तव्यम् ।अत्रसुप्यतिव्याप्तिरेकत्वानु-
वृत्त्या समाहिता । तथाप्यत्वसोः सावित्यादावतिव्याप्तिस्तुनोद्धृता । तत्र यदि
उभयसाधारण्येन सि इति वाच्ये साविति वचनान्नातिप्रसङ्गस्तर्हि प्रकृतेपि
समम् । यदपि मान्तत्वविधिसामर्थ्यात्त्यदाद्यत्वं नेति । तदपि न। मान्तत्वस्या-
तित्वमिति गौणे चरितार्थत्वात् । गौणे त्यदाद्यत्वाभावात्। दृष्टान्तस्तु विषमः।
गौणेयमादेशाभावात्।यदपि सिलोपार्थमित्यादि। तदपि न । सिलोपात्परत्वात्त्य-
दाद्यत्वप्रसङ्गात् । यदपि सकारनिमित्तमित्यादि । तदपि न । सर्वविधिभ्यो
लोपविधिर्बलवानिति आत्वं बाधित्वा सिलोपप्रसंगात्। नच प्रत्ययलक्षणं वर्णा
श्रयत्वात् । यदपि मान्तत्वविधिसामर्थ्यान्नेत्यादि तदपि न । मान्तत्वस्य गौणे
चरितार्थत्वेन अत्त्वबाधे सामर्थ्याभावात् । परत्वादत्त्वेनैव मान्तत्वबाध-
सम्भवात् । यदपि पुरस्तादपवादेत्यादि तदपि न । उक्तन्यायस्यात्रा
विषयत्वात् । उक्तन्यायेन मान्तत्वेन आत्वस्य बाधः स्यान्न तु त्यदा-
द्यत्वस्य मान्तत्वेन येननाप्राप्तिन्यायेन आत्वबाधस्य प्रसङ्गात् ।
उच्यते । मान्तत्वस्य गौणेऽतित्वमित्यादौ चरितार्थत्वात् । सिलोपात्त्यदा-
द्यत्वं स्यात् । ततश्चाम्स्भावित्यात्वं स्यात् । स्त्रियां त्वात्वात्परत्वादंतरङ्ग
त्वाच्चाप् स्यात् । त इति तकारस्य सत्वं स्यात् । न च तकारोच्चारण-
सामर्थ्यात् सत्वं न स्यादिति वाच्यम्। तकारोच्चारणस्य गौणे चरितार्थत्वात्

तत्र सत्वप्रवृत्त्यनङ्गीकारात् । अतः सिनेत्युक्तम्। तथाच तेमयोरिव प्रकृतिप्रत्ययसंमोहा[1]न्नोक्तदोषः।अत्रेदमवधेयम्। पूर्वसूत्रादमित्यनुवर्त्य सिनेति तु विभक्तिविपरिणामेन सेरिति वक्तव्यम्। युष्मदस्मद्भ्यां सेरमादेशो भवतीति वाक्यभेदेन व्याख्येयम्।अथवा युष्मदस्मदोः सिना सह त्वमहमित्युक्ते युष्मदस्मदोः त्वञ्च इत्याद्यादेशौ विभक्तेरमादेशः।सच प्रकृत्यादेशसन्नियोगे विशिष्टो न भवतीति प्रकृत्यादेशं विनापि संभवति । उक्तदोषास्तु निपातनादेव न भवंति आदेशेऽकार उच्चारणार्थो विवक्षितो वा । तेन त्वायं मायमित्यादि सिद्धम्। त्वमहं सौ सविभक्त्योरित्यत्र त्वमहं सिनेत्युचितम्।सविभक्त्योरिति व्यर्थम्।न चोत्तरार्थं ङसाङयेत्यादि सिद्धं त्वमहं सौ निर्देष्टव्यत्वेन तत्प्रयोजनाविरहात्। आमृशसीत्यत्र मृशसीत्येव वाच्यम् ।यद्वा तदपि न वाच्यम्।शसि सस्य च न। इत्येवसिद्धम् । एषां विभक्तावंतलोप इति लोपे शसीति दीर्घनकारौ भविष्यतः। इदमत्र निरूप्यते।युष्मदस्मदोर्लिंगमस्ति नवेति केचिदाहुर्युष्मदस्मदोर्लिंगं नास्तीति । तदुक्तं चक्रिणा । न वा लिङ्गाभावाट्टिलोपवचनानर्थक्यं न वा वक्तव्यं लिंगाभावात् । अलिंगे युष्मदस्मदी किं वक्तव्यमेतन्नहि कथमनुच्यमानं गंस्यते।नह्यस्ति विशेषो युष्मदस्मदोः । स्त्रियां पुंसि नपुंसके वा अस्ति कारणं येनैतदेवं भवति । किं कारणम्।योसौ विशेषवाची शब्दस्तदसान्निध्यात्। अंग हि भवांस्तमुच्चारयितुं गंस्यते तु सविशेषः । ननु च नैवं भवितव्यं नहि शब्दनिमित्तकेन नामार्थेन भवितव्यम् । किं तर्हि।अर्थनिमित्तकेन नामशब्देन भवितव्यं तदेतदेवं दृश्यतामर्थरूपमेवैतदेवमिति । व्याख्यातं चेदं प्रदीपे । सत्यपि वस्तुनो लिङ्गवत्त्वयुष्मदस्मद्भ्या न तत्प्रत्यापयितुं शक्यते । युष्मदस्मदभिधेयं चार्थरूपं शब्देनोच्यते न वस्तुरूपम् तस्यैव वस्तुनो ब्राह्मण्यादिशब्दैर्लिंगयुक्तस्य प्रतिपादनात् न । चायं नियमः । सत्वभूतोऽर्थोऽवश्यं लिंगयुक्तः प्रतीयत इति पञ्च सप्तेति लिङ्गसंख्यानवगमात् । तथाच षट्संज्ञकेभ्यः स्त्रीप्रत्ययप्रतिषेधः प्रत्याख्यायते इति । केचित्तु लिंगविशेषनिषेधं मन्यमानाः स्त्रीलिंगसर्वनामनपुंसकयोगं युष्मदस्मदोरिच्छंति।तदुक्तम् । गूढपदा नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा भवंति । विप्रतिषेधेन नपुंसकादेशानामवकाशः

---

१ सम्मोहः साहचर्यम् ।

त्रपु । त्रपुणी । त्रपूणि । यूयं ब्राह्मणाः । वयं ब्राह्मणाः । इहोभयं प्राप्नोति ।
त्वं ब्राह्मणकुलम् । अहं ब्राह्मणकुलम् । युवां ब्राह्मणकुले । आवां ब्राह्मणकुले।
यूयं ब्राह्मणकुलानि । वयं ब्राह्मणकुलानि । युष्मदस्मदोर्विभक्त्यादेशा भवंति
विप्रतिषेधेन । अथेदानीं युष्मदस्मदोर्विभक्त्यादेशेषु पुनः प्रसंगादीशिलुग्नु
म्विधयः कस्मान्न भवन्ति । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति।
अन्ये तु लिंगत्रयमेवांगीकुर्वंति । तदुक्तं कुंडलिना । सिद्धमत्र नत्वं तस्मा-
च्छसो नः पुंसीति । यत्र तेन न सिध्यति तदर्थं कचित्तेन न सिध्यति स्त्रियां
नपुंसके च युष्मान्ब्राह्मणीः पश्य।अस्मान्ब्राह्मणीः पश्य। युष्मान् ब्राह्मणकुलानि
पश्य।अस्मान्ब्राह्मणकुलानि पश्येतिव्याख्यातं प्रदीपे । दर्शनभेदेन शिसीलुग्नुमां
विप्रतिषेधः । पुंसि नत्वं च लिंगत्वाभ्युपगमेन प्रदर्शितं सत्वभूतस्यार्थस्यावश्यं
लिङ्गसंख्यायोगः । तथाच । षट्संज्ञेभ्यः स्त्रीप्रत्ययनिषेधः । इह त्वलिंगत्वेन
टाप्परिहृत इति विरोधो नास्ति । अस्मिन्ग्रंथे तु युष्मदस्मदोर्नान्तसंख्यावा
चिनां चालिंगत्वमेव स्वीकृतम् अत एव आबीपोः परिहारोऽत्र न कृतः।तथाच।
वृत्तिकृत्।तयोश्चवाच्य लिंगत्वात्रिष्वपिलिङ्गेषु समानं रूपमिति।अत्र माधवः ।
उच्यतेविशेष्यते इतिवाच्यं विशेष्यं तस्यलिङ्गमिवलिंगंययोस्ते तयोर्भावस्तत्त्वं
तस्माद्विशेष्यलिंगत्वादित्यर्थः।ननु नायं हेतुःसमानरूपतां प्रयोजयति।शुक्लादि
लिंगानां विशेष्यलिंगत्वेपि भिन्नरूपत्वात् । एवं तर्ह्ययमर्थः । लिंगमाचष्टे लिंग
यतीति लिंगं पचाद्यः । वाच्यं लिंगमाचक्षाणं ययोस्तत्त्वात् । ययोर्वाच्यं
विशेष्यमेव लिंगमाचष्टे न स्वयं अलिंगत्वात् । ततश्च लिंगविशेषापेक्षस्यापः
प्रक्रियाविशेषस्य चाभावात्त्रिषु लिंगेषु समानं रूपमित्यर्थः । च वाच्यलिंगत्वा
दिति वा।समस्तं चस्य वाच्यलिंगमिव वाच्यलिंगं ययोस्तत्त्वात् । अव्ययवद्
लिंगत्वादित्यर्थः । अथवोच्यंते इति वाच्यानि तान्येव लिंगानि लक्षणानि
येषु त्रिषु लिंगेषु तानि वाच्यलिंगानि तेषां भावस्तत्त्वं तस्मात् तयोः स-
मानं रूपमित्यर्थः । वक्ष्यमाणानां लक्षणानां त्रिषु लिंगेषु प्रवृत्तेस्तेषु च वि-
शेषाभावाद्रूपाभेद इति भावः । अत्र पक्षे युष्मभ्यं ब्राह्मणीभ्य इत्यादौ सान्निपात
लक्षणपरिभाषयाप् न भवति । अस्याश्चानित्यत्वाद्द्विशब्दादिभ्यः आप् भवती
त्याह। **यूयंवयंजसा**।जसासहितयोर्युष्मदस्मदोर्यूयं वयमित्यादेशौस्तः।यूयम्

वयम्।अत्रापि जसीति न कृतम् । मांतत्वस्यातियूयमित्यादौ गौणे चरितार्थत्वेन परत्वात्त्यदाद्यत्त्वं स्यात् । तस्मिन्सति युष्मे अस्मे पुंसि जसी स्यात् स्त्रियामापूचा किंच जसो लोपोऽपि न स्यात् । अतो जसेत्युक्तम्।एवंहि प्रकृतिप्रत्ययभेदस्य संमोहान्नोक्तदोषः । अत्रापि पूर्ववद्वाक्यभेदेनाम् विधेयः । तेन त्वायमायामित्यादि सिध्यति । जसेति किम् । युष्मासु । यूयंवयंजसीत्यस्यस्थाने जसेतिपाठ्यम्॥**तुभ्यं मह्यं ङ्या**॥ङेसहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमित्येतावादेशौभवतः । तुभ्यम् । मह्यम् । तृतीया तु पूर्ववद्याख्येया । मांतत्वस्यातितुभ्यामित्यादौ कृतार्थत्वात् । परत्वात्त्यदाद्यत्त्वेसति पुंसि ङे अक् स्यात् स्त्रियां त्वापि यट् स्यादिति बोध्यम्।तुभ्यं मह्यङ्यीत्यत्र ङ्येत्युचितम्॥ **तव मम ङसा**॥ङसासहितयोर्युष्मदस्मदोस्तवममेत्यादेशौ स्तः। तव। मम। अतितव। अतिमम।अत्रेतोऽदिति पूर्वसूत्रात् शब्दाधिकारमाश्रित्य स्वरूपपराऽच्छब्दोनुवर्त्त्यो वाक्यभेदेन ङसः स्थाने विधेयः।तकारस्तु सर्वादेशार्थत्वादित्संज्ञः तपरत्वेत्वन्तस्य स्यात्।यद्वा ङसेति प्रथमान्ततया परिणमनीयम्।तथाच युष्मदस्मद्भ्यां परो ङस् अकारो भवति षष्ठ्यभावान्नान्त्यस्य । तेन त्वाय मायेत्यादि सिध्यति.। तव मम ङसीत्यत्र ङसेति पाठ्यम् ॥ **ङसिभ्यसोः श्तुः**॥ युष्मदस्मद्भ्यां परयोर्ङसिभ्यसोः श्तुरादेशः। शकारः सर्वादेशार्थः । असति हि शकारे उत्वस्योच्चारणार्थत्वात्तकारमात्रमादेशोंतादेशः स्यात् । त्वत् । मत् । युष्मत् । अस्मत् । उकार उच्चारणार्थः । अत्र धावमित्यतोऽमं नादावित्यत आदावित्यनुवर्त्य श्तोरादावम् क्वचिद्भवतीतिव्याख्येयम् तेन त्वायत् । मायदिति सिध्यति । अत्र ङसिसाहचर्य्यात्पञ्चम्या भ्यस् गृह्यते । माधवस्तु इह चासंदेहार्थं श्तुर्ङसिभ्यसोरिति निर्देशे अकारप्रश्लेषार्थमेव निर्देशः व्याख्यानविशेषो वा कर्त्तव्यः । तथाहि।ङसिभ्यसः श्तरिति ।ततश्चाभ्यां ङसिभ्यसोः श्तुर्भवति तयोरश्चान्तादेशः।तथा युष्मसोर्युषत् असदिति भवति।अयमेव चाकारो भ्यसृश्भ्यम्, सामाकमित्यत्राप्यनुवर्तत इति । तत्रापि युष्मस्मोर्युषभ्यम्। असभ्यम् ।युषाकम्।असाकमिति सिध्यतीत्याह । पंचम्या अत् एकवचनस्येति सूत्रयोः स्थाने ङसिभ्यसोरदिति सूत्रमुचितम् । अत्पंचम्यादित्वे इत्यस्यस्थाने ङसिभ्यसोदिति,वा ङसिभ्यसोरदिति सूत्रणीयम्।**भ्यसश्भ्यम्**॥

युष्मदस्मद्भ्यां परो भ्यस् श्भ्यम् भवति।युष्मभ्यम्।अस्मभ्यम् । ननु श्भ्यमः शौ न तावत् श्रुत्यर्थः । युष्मभ्यमिति प्रयोगेन श्रुतेः । नापि सर्वादेशार्थः । भ्यमोऽनेकवर्णतयैव तत्सिद्धेरिति चेन्न । भकारादित्ववारणार्थत्वात् । सति हि तस्मिन्भकारस्यादित्वाभावात् । भादिनिमित्तमेत्वमात्वं च न भवति । भादित्वव्यावृत्तेश्च । तिष्ठता कर्तुं शक्यत्वाच्छकारोनन्यार्थत्वादेत्वात्वप्रतिबन्धानन्तरमुदकाहरणान्तरमुदकार्थघटवन्नोपादीयते इति माधवः । अत्र भ्यस् चतुर्थीबहुवचनं न गृह्यते । ङसिभ्यसोरित्यत्र ङसिसाहचर्यात् पञ्चमीबहुवचनस्य ग्रहणमित्युक्तत्वात् ॥ **सामाकम्**॥युष्मदस्मद्भ्यां साम आकं भवति युष्मदस्मदोराकारश्च।युष्माकम् । अतियुष्माकम् । अस्माकम् । अत्यस्माकम्। नन्वत्र गौणत्वात्पदाद्यत्वाभावादनवर्णान्तत्वात्सुडभावात् कथं सामिति चेत्सत्यम् । तंत्रादिना सामिति द्वयं बोध्यम् । एकस्य तु सुटा सहाम् साम् द्वितीयस्य तु आमा सह साम् । ततश्च सुट्सहित आम् आम् च कं भवति तयोश्चाकार इत्यर्थो भवति । नन्वेवमपि किमर्थं ससुट्कस्य ग्रहणं क्रियते न पुनरामाकमित्येवोच्यते। मैवम्। परत्वात्त्यदाद्यत्वे कृते सुटः परत्वान्नित्यत्वाच्च कमि कृते तस्य स्थानिवद्भावेनाम्त्वात्सुट् स्यात् । तस्य च श्रवणं स्यादतः ससुट्कनिर्देशः।स्थानिद्भावे चेदमेव ससुट्कनिर्देशः प्रमाणम्।माधवस्तु सामित्यामः ससुट्कस्य ग्रहणं सुटोऽवस्थानिवृत्यर्थम् । ननु चैवमतियुष्माकमित्यादौ गौणत्वात्सुटोऽप्रवृत्तेराकम् न प्राप्नोति।उच्यते । यदयमाकम्याकारमुपदिशति तज्ज्ञापयति गौणत्वेप्याकम् भवति । आकारो हि युष्मस्मोरामि युषाकमसाकमित्यत्र श्रवणार्थं क्रियते । यदात्र गौणत्वेन सुडभावादकम् न प्रवर्तेत तर्हि व्यर्थ एवाकारः स्यात् । त्यदाद्यत्वादाकम्यपि कृते सह दीर्घेणापि युष्माकमिति सिद्धेरिति तन्न । अतियुष्माकमित्यसिद्धेः त्यदाद्यत्वाभावात् । नच पूर्वसूत्रादकारानुवृत्तिरुक्ता । अनेनाकारविधानेनोपपत्तेः ॥ **॥आम्स्भौ॥**आ अमिति च्छेदः । युष्मदस्मदोरात्वमामि सकारे भिसि च। त्वाम् ।माम्।युष्मासु।अस्मासु।युष्माभिः।अस्माभिः।भीत्येकदेशद्वारा समुदायानुकरणम् । ननु आतियुष्माभ्याम्, अतियुष्मानित्यादावात्वं केन गौणत्वात्त्यदाद्यत्वा भावात् । उच्यते । केचित्तु आमावित्यत्र योगेनेत्याहुः । अन्ये त्वाहुः।

अम्सूभावित्यविभक्तिको निर्देशः । सकारात्पूर्वोऽपरो वा लुप्तनिर्दिष्टो नकारः। ततश्च अमि नकारे भकारे औकारे च युष्मदस्मदोरात्वमित्यर्थः । ननु औग्रहणं किमर्थम् । आमावित्यनेन तस्यामि कृतेऽम्ग्रहणेनैव तद्ग्रहणस्य सिद्धत्वादिति चेन्न। स्याद्यादेशस्यामोम्ग्रहणेनात्राग्रहणमिति ज्ञापनार्थत्वात्तस्येति । माधवस्तु । अमित्यनेन द्वितीया लक्ष्यते । यथातोमनत इत्यत्रात इति पञ्चमी।तेन युष्मस्मोर्द्वितीयायां युषाम् । असाम् । युषानसानिति सर्वत्र मस्यात्वं सिध्यति । अंतादेशश्च षष्ठीनिर्दिष्टत्वात् । टेरात्वमिति क्वचित्कोऽपपाठः । टेरननुवृत्तेः प्रयोजनाभावाच्च युष्मस्मोर्युषामसामत्र प्रसक्तेश्च भाविन्येकदेशेन भिसेव लक्ष्यत इत्याह॥**ए टाङ्योः**॥युष्मदस्मदोरेत्वं भवति टाङ्योः परयोः। यद्येत्वमंतादेशस्तर्हि त्वया मयेति न सिध्येदिति दस्यैत्वे तस्यायादेशे पूर्वेण सह सवर्णदीर्घत्वे कृते त्वाया मायेति प्राप्नोति । अतष्टेरेत्वे कर्तव्ये अथ परत्वात्त्यदाद्यत्वे कृते एवमिति चेन्नाकृताकृतप्रसंगित्वेन नित्यत्वात्प्रातिपदोक्तत्वाच्चादावेत्वप्रवृत्तेरेव युक्तत्वात् । नन्वेवं युष्मदस्मदोर्मन्तयोः क्विपि युष्म्आ अस्म्आ इति स्थिते टेरेत्वे यया अया इति प्राप्नोति । युष्या अस्या इति चेष्यते । सत्यम् । यकारोप्यनेन विधीयते । लक्ष्यानुसाराच्च व्यवस्था । अत एत्वं हसस्य यत्वं यकारः सूत्रे कुतो न श्रूयते । लुप्तोत्र यः केन वचनेन । अनेनैव यवयोर्वसे लोप इति वचनं ज्ञाप्यते।तेन क्ष्मापयति क्नोपयति इत्यत्र यलोपः सिद्धः । नच यत इति यलोपः सिध्यति । अनपीत्यनुवर्तनादभिन्ने प्रत्यये यलोपविधानात् । दीव्यतेर्यङ्लुकि देदेति देदिव इत्यत्र वलोपः। टाश्च ङिश्च टाङी तयोः इदंतत्वाट्टः पूर्वनिपाते प्राप्ते तस्यानित्यत्वज्ञापनार्थं परनिपातः । आङ्योरित्यवोचताम्। व्यर्थष्टकारः । नच त्वदायत्तः त्वदासनमित्यत्रातिप्रसंगवारणार्थष्टकारः स्याद्यधिकारेणैव तद्वारणात् । आमः आकप्रश्च व्यावृत्त्यर्थष्टः । नच अर्थवत्परिभाषया तयोर्व्यावृत्तिः। वर्णग्रहणे तस्यां प्रवृत्तेरनंगीकारात् । इयङ् उवङ् इत्यत्रापि सा प्रवर्त्तेत । ई लक्ष्मीः इः कामः उः शंभुः । ऊर्ब्रह्मा तयोर्यो वोः चक्रया आसनमित्यादावेव यादयः स्युः । ननु श्वागतः भ्वोगतः । चक्रि आसनमित्यादौ । नच प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमित्यनया निर्वाहः

समुदायस्य आमः प्रत्ययत्वेपि तदवयवस्यातोऽप्रत्ययत्वादिति वाच्यम्।वर्ण ग्रहणेऽस्याअपि प्रवृत्तेरस्वीकाराच्च । अन्यथोक्तोदाहरणयोरेव ओर्यः स्यात् । ननु श्वागत इत्यादौ अथ किमर्थो ङः टापोदापोरिति वा निर्देशे त्वदयत इत्यादौ अतिप्रसङ्गः स्यादिति चेत् न । स्याद्यधिकारेणैव तद्वारणात् । स्यादौ यस्याभावेन इवर्णान्तराभावेन च ङिग्रहणमिति निर्णयसम्भवाद्यर्थो ङः । अत्र माधवः । ननु चैवम्। युष्मस्माष्टेर्गौणत्वादसति त्यदाद्यत्वे प्रस्यानेन एत्वे अपि च युषयासयेति प्राप्नोति । युष्या । अस्या इति चेष्यते । एवं तर्हि एटाङ्च्योरित्यत्र य्वौ वेत्यतो यकारोप्यनुवर्तते । टाङ्च्योरिति च टाङिओसां लुप्तसप्तमीको निर्देशः । तदयमर्थः । युष्मदस्मदोर्थकारोऽप्यंतादेशो भवतिटाङिओस्सु परतः । त्यदाद्यत्वापवादः । त्वया । मया । त्वयि । मयि अतित्वया । अतिमया । अतित्वयि । अतिमयि । युष्मस्मोरपि । युष्या । अस्या । युष्यि।अस्यि।ओसि तु पूर्वं यत्वे तेन सहैव युवावयोः कृतयोरोसीत्ये त्वेऽयादेशः । युवयोः।आवयोः । नचैवमोसि यत्वविधानं व्यर्थमिति वाच्यम्। युष्योरस्योरित्यत्र चरितार्थत्वात् । तदेवं यत्वेनापि सिद्धावेत्वविधिश्चित्यप्रयोजन इत्याह । अत्रेयं चिंता । एविधिर्भवता प्रत्याख्यातः । यमात्रविधाने अतियुवया अतियुवयीत्यादि न सिध्यति । युवावयोः कृतयोरन्त्यस्य यादेशे ऽतियुव्याऽतियुव्यीति प्राप्नोति।अथ यादेशं कृत्वा युवावौ विधातव्याविति चेत्तर्हि सकृत्प्रवृत्तस्य पुनः प्रवृत्त्यभावादतः परत्वेन टाइनादेशप्रवृत्तौ अतियुवेना तियुवे इत्यादि स्यात् । यदपि यकारोंतादेशो भवति त्यदाद्यत्वापवाद इत्युक्तं, तदपि न । यादेशस्य त्यदाद्यत्वापवादत्वापवादात्।नहि यादेशाविषये गौणत्वे त्यदाद्यत्वं प्राप्नोति । किंच युष्मस्मोर्यादेशं विधाय युवावौ विहितौ यथा तथातियुष्मदप्यस्मदोरपि यादेशसहितयोर्युवावाविधाने ऽतियुवेजेत्यादौ वःस्यान्नतु अतियुवयेत्यादि ङौ अतियुवे इति स्यान्न त्वतियुवयीति । अपिच त्वया मयेत्यत्र परत्वात्त्यदाद्यत्वे कृते यत्वं स्यात् । ततश्च त्व्याम्येति प्राप्नोति । त्यदाद्यत्वस्यावकाशः । युष्योरस्योरिति । त्वयि मयीत्यत्रोभयप्रसंगे परत्वादत्वे पश्चाद्यत्वेत्व्यि म्यीति स्यात्। य्वौ वेत्यतो यस्यानुवृत्तौत्वेकदेशानुवृत्तिक्लेशो भवति । अतोऽत्रैवैत्वयत्वयोर्निर्देशो युक्तः।लक्ष्यानुसा

राच्च व्यवस्था भ्यमभ्यमयोरिव बोध्येति दिक्॥**सखिपत्योरीक्**॥टाङसोः परयोः।सख्या।ईग्विधानान्न ना। सख्यावित्यत्र ङेरौत्वे कृते ईक् ईकोऽवकाशः सख्या।औत्वस्य तु हरौ।इहोभयप्रसङ्गे प्रायश इति वचनात्पूर्वमौत्वटिलोपौ। यद्यपि निमित्तभेदेनागमादिरपि भिद्यते तथाप्यभेदोपचारेणावकाशप्रसंजनम्। अत्रेगेवास्तु किं दीर्घेण। मैवम् सख्या सख्ये न सिध्येत्। सवर्णदीर्घावकाशः दधीह । नैत्वयोरवकाशो हरिणा हरये। सखि इ आ इत्युभयप्रसंगे परत्वान्नैत्वे सखीना सख्यये इति स्यात्। ङौ तु औत्वटिलोपयादेशेषु सख्याविति सिध्यति।ककारो मास्तु ईदिद्वा विधीयताम्। मैवम्।सख्या सख्ये इति सिद्धावपि सख्यावित्यस्यासिद्धेः । सवर्णदीर्घेण सखी इत्यापत्तेश्च। इद्विधौ सर्वासिद्धेः। न चेत् इद्विधानं व्यर्थम्। यएत्वटिलोपानां निवृत्तये वर्णग्रहणेऽर्थवत्परिभाषाया अप्रवृत्तेः।पतिशब्दः कृत्त्वात्त्रिलिङ्गः। पतिनीत्यत्र माभूत्। न चैवमपि ङौ प्राप्नोति मैवम्।प्रायशो ग्रहणान्नुमाबाधात्।घ्यसखि पतिः समास एवेति अपेक्षितामिति चेन्न। षष्ठ्याः पतिपुत्रपृष्ठेति। पुत्रपत्योस्तत्पुरुषे इति च निर्देशेन पूर्वनिपातानियमस्य लाभात्। ईक्पक्षोऽत्र स्थितः। ङे सखिपत्योरीगागमो ङयि सख्ये पत्ये। ङे इति चतुर्थ्येकवचनस्य ग्रहणं प्रतिपदोक्तत्वात्। ऋङ्ङे ॥इत्यत्र तु प्रतिपदोक्तस्यालाभाल्लाक्षिणकस्य ग्रहणम्।अनुकार्यानुकरणयोरभेदाविवक्षायां चार्थवत्वाद्यभावान्नविभक्त्युत्पत्तिः। भेदाविवक्षणे तु सा भवत्येव। तुभ्यं मह्यं ङ्येति यथा ङे इति किम्। सखिभ्याम्। पतिभ्याम्।**ऋङ्ङे**॥सखिपत्योर्ऋगागमो ङे परे। सख्युः। पत्युः । ङोपलक्षितः अः ङः तस्मिन्। ननु ङउ इत्येव सूत्रमस्तु ईगनुवर्त्यतां तेन ङितीति नैत्वम्। सत्यम्। आगमजमनित्यमिति ज्ञापनार्थमिदं गुरूकरणम्। तेन सखिना वानरेंद्रेण । अन्यत्र पतिना सह। क्लीबे प्रव्राजिते पतावित्यादिसिद्धम्। ङे किम्। सखीन्।सखिपत्योः।वातप्रम्यः।**त्रिचतुरोः स्त्रियां तिसृचतसृवत्**॥स्त्रियां वर्तमानस्य त्रिचतुर्शब्दान्तनाम्नोऽवयवभूतयोस्त्रिचतुर्शब्दयोस्तिसृचतसृइत्येतावादेशौ स्यादौ। तिस्रः। चतस्रः। आमावित्यारभ्य औ आदयः विभक्त्यर्थाः सप्तम्या विपरिणताः सप्तानुवर्तंते। फलितार्थकथनं स्यादिष्विति। यद्वा त्यदादेष्टेरितिसूत्रात्स्यादावित्यनुकृष्यते। स्त्रियामिति त्रिचतुरोर्विशेषणं श्रूय

माणत्वात् । नानुवृत्तस्य नाम्नः स्त्रियामित्यनेन विशेषितौ त्रिचतुर्शब्दौ नाम्नो विशेषणम् । स्त्र्यर्थवाचक त्रिचतुर्शब्दान्त नाम्न इति अनेकाक्षरत्वादादेशौ सम्पूर्णस्य नाम्नः प्राप्तौ निर्दिश्यमानस्यादेशा भवन्तीति वचनेन तदवयवयोस्त्रिचतुःशब्दयोरेव । केवलयोस्तु व्यपदेशिवद्भावात् । तेन प्रियास्तिस्रो यस्य यस्याः कुलस्य वा सा प्रियतिसा । स प्रियतिसा । तत्प्रियतिसृ । समासात्प्राक् स्त्र्यर्थाभिधायिनोः समासेप्यादेशौ स्तः । प्रियास्त्रयस्त्रीणि वा यस्याः सा प्रियत्रिरित्यत्र न समासस्य स्त्र्यर्थाभिधायकत्वेपि त्रिचतुरोस्तद्भावात् । नाम्नस्त्रियामिति विशेषणे तु उदाहरणयोर्वैपरीत्यं स्यात् । नन्वत्र ऋदन्तत्वादाप्प्राप्नोति । मैवम् । सन्निपातपरिभाषाविरोधात् । विभक्त्यानन्तर्येण प्रवृत्तावादेशौ तन्न विहितः । विभक्तौ किम् तिस्रो भार्या यस्य त्रिभार्य इत्यत्र न लुकि न तन्निमित्तमिति सिद्धान्तात् । त्रिचतुरोः किम् । एका । द्वे । स्त्रियां किम् । त्रयश्चत्वारि । ऋवदिति वाक्यांतरम् । ऋ ऋवदिति च्छेदः । तिसृ चतसृ इति षष्ठ्या विपरिणतमनुवर्तते । तयोर्ऋकारऋवद्भवदिति । रा तुल्यं ऋवत् । ऋकार्यं लभते इति यावत् । तच्च रत्वं तेनारारुकारा न । अम्शसोरल्लोपोऽपि न । ऋकार्यं च किंचिदेव स्वरे रत्वरूपं न सर्वम् । तेनेरुरौ न । अतिदेशोऽप्रवृत्तौ स्वाश्रयं प्रवर्तत एव । तेन सेरा धेरर् भवति । यद्वा शास्त्रातिदेशोयम् । ऋकारशास्त्रमनयोर्ऋतः प्रवर्तते तेनारादिर्न । न च ऋरमिति शास्त्रात् परत्वादरादिशास्त्रं प्रवर्त्तिष्यते । अतिदेशस्तु प्रियतिस्रेत्यादौ सावकाश इति वाच्यम् । अतिदेशवैयर्थ्यापातात् । अतिदेशो हि अरादिशास्त्रबाधनं विना नावकाशं लभते । प्रियतिस्रेत्यादावतिदेशं विनैव ऋरमित्यस्य प्रवृत्तिसम्भवात् अतिदेशसामर्थ्यात्स्वरूपादेशो न । अन्यथा तिसृ चतसृ इत्येव ब्रूयात् । आमि तु न तिसृ चतसृ इति नातिदेशो यश्च स्थानिवद्भावान्न प्रियचतुः शब्दे आमं बाधित्वा परत्वाच्चतसृभावः प्रवर्तते । चतसृभावे कृते सकृद्गतिप्रतिषेधन्यायेन पुनर्न प्रवर्तते । अचि र ऋत इति तु गौरवादुपेक्ष्यम् ननु तिस्र इत्यत्र किलात्षः स इति षत्वं प्राप्नोति । मैवम् कृतस्येति समानाधिकरणषष्ठीपक्षे तिसृ इति समुदायस्य कृतत्वेऽपि सस्याऽकृतत्वात् । सूत्रं तु एषः सिषेधेत्यत्र सावकाशम् । अत एव बिसंबिसं मुसलंमुसलम् पदं द्विश्चेति द्विर्वचनादेशे कृते

ऽपि न दोषः । ननु देवेषु एधिष्यते इत्यादावपि न स्यात् । मैवम् । चतुर्षु भविष्यतीत्यादिनिर्देशात्प्रत्ययावयवस्य षत्वं भवतीति ज्ञापनात् । व्यधिकरण षष्ठीपक्षे तु प्रत्ययावयवस्य भवत्येव । आदेशावयवस्यापि प्राप्नोति । तिसृ इति षत्वाभावप्रदर्शनेन आदेशावयवे षत्वं नेति ज्ञापितम् । अन्यथा लाघवात्तिष्ठइत्येव ब्रूयात् । सैषादिति षत्वनिर्देशेन समानादेशस्य षत्वं भवतीति ज्ञापितम् । अत्रेदं तत्त्वम् । जहत्स्वार्थैव वृत्तिरिहाभिमता लक्ष्यानुरोधात् । तेन नाम स्त्रियामिति सम्यगेव । त्रिशब्दस्य पुंनपुंसकवाचिताऽनुभूतसर्वगस्यानुत्तरपदार्थप्रधानस्तत्पुरुष इत्यादि सिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात् । एवं प्रियतिसा पुमानित्यत्र स्त्रियावृत्तिरपि पूर्वगत्यैव । अजहत्स्वार्थापक्षे तु स्त्रीनिष्ठ संख्यासमर्थकयोस्त्रिचतुरोरिति विवक्षितोर्थः । माधवस्तु न तावन्निमित्तातिदेशः । अशक्यातिदेशत्वं निमित्तस्य क्षत्रिये ब्राह्मणवत् । नापि संज्ञातिदेशो वतोरनर्थकत्वापत्तेः।अनावृत्तेश्च आवर्त्तिन्यो संज्ञा हि सम्भवन्ति । न च ऋकार आवर्तते नापि ऋकाराश्रय अरादिनिषेध ऋकारस्य भविष्यतीति बोध्यम् । उच्चारितं हि संज्ञास्वरूपं संज्ञिप्रत्यायकं नानुमितमिति ऋकारस्य संज्ञा । स्वरादिस्तु ऋकारस्याप्यस्त्येवेति नास्या अप्यतिदेशः । शास्त्रातिदेशेऽप्ययमेव परिहारः।रूपाऽतिदेशे तु आदेशे ऋकारोच्चारणं व्यर्थम् । न च सामर्थ्यात्पाक्षिकं तदपि श्रोष्यते वतोरनर्थकत्वात् ऋकारादेशविधानेनापि तथात्वस्य सिद्धत्वात्।तादात्म्यातिदेशोपि सहावस्थितयोरुभयोरन्योन्यं सम्भवति । इह तु नास्ति ऋकारः नान्यत्र स्थितस्यापि ऋकारस्य बुद्ध्या सान्निधानात्तिसृचतस्रोर्ऋकारे तादात्म्यमतिदिश्यताम् । एवं तर्हि अप्राधान्यान्न तादात्म्यातिदेशःअतः परिशेषात्प्राधान्याच्च कार्यातिदेशोऽयम् । इत्याह **॥काप्यतः॥**कापि इ अत इति च्छेदः।स्त्रियां वर्तमानस्य नाम्न अत इः कापि परे । कारिका । सांकाश्ये भवा सांकाश्यिका । क्रममधीते क्रमिका । क स हित आप् काप् तस्मिन् । कश्चात्र प्रत्ययस्यैव गृह्यते । आपा साहचर्यात् । लक्ष्यानुसाराच्च । तेन शक्नोतीति शकेत्यत्र न साहचर्यं च न नियामकमिति नरान् कायतीति कै शब्दे । आतोडः । नरिका । ममेयं मामिका । अणंतत्वेपि आबिति योगविभागादाप् । अत इकापीति वक्तव्ये विपरीतोच्चारण

ज्ञापयति अन्यदपि किंचिदत्र विपरीतं भवतीति । तथा हि । कचित्प्रत्ययस्थे केऽपि नाक्षिपका । ध्रुवका । चटका।कचिदप्रत्ययस्थेऽपि भवतीत्युक्तम् । ॥ **क्वचिद्वा** ॥ कचिद्वा । सूतका । सूतिका।आर्यका । आर्यिका । वृन्दारिका । वृन्दारका । काप्येतिनिर्देशेन परेण पूर्वबाधो वेति ज्ञाप्यते । अन्यथा कापि यत इति स्यात् । प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप इति सूत्रे प्रत्ययस्थात्कात्पूर्वस्यापीत्यपनीय कापीति वक्तुं युक्तं लाघवात् । न च शकेत्यत्रापि प्रसङ्गः । मामकनरकयोरित्यस्य नियमार्थत्वात् । कापीत्यत्र यदि अप्रत्ययः ककारस्तदा एतयोरेवेति । असुप इत्यपि त्याज्यम्।बहुपरिव्राजकादेः क्षिपकाद्यन्तर्भावस्य सुवचत्वात् । तत्रादिशब्दस्य प्रकारार्थत्वात् । यद्वा तत्र कापोर्नानं तर्व्यं स्थानिवद्भावात्सुपा व्यवधानात् । लक्ष्यानुसारेण कचिदभावातिदेशस्याप्यंगीकारस्यौचित्यात् । असुप इति वचनापेक्षया तस्य लघुत्वात् । स्त्रियां वर्तमानस्येत्यर्थोक्षिप्तमुक्तम् । काप्यन्यस्यासंभवात् । यद्वा स्त्रियामित्यनुवर्तते न त्वाक्षिप्यते । कापो व्यभिचारसंभवात् । कं प्रजापतिमाप्नोति किपि काप् अणि कापः। करस्य काप् करकाप्।कारकमाप्नोति कारकाप्। अत्रापि प्राप्नोति नच प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति निर्वाहः ।प्रत्ययसमुदायस्याप्रत्ययत्वात् । तस्मात् स्त्रियामित्यनुवर्त्य स्त्रियामेव यः काप् तस्मिन्निस्त्वमिति व्याख्येयम्।कापि किम्।करकः।क्रमकः।अतः किम्।मातृका।धेनुका।तपरःकिम्। पाका । राका । **ह्रस्वोवा** । वा आ इति च्छेदः । स्त्रियामेव वर्तमानादभाषितपुंस्कान्नाम्नः परस्याकारस्य ह्रस्व इश्च वा कापि परे । गंगाका । गंगिका भस्त्राका । भस्त्रिका । अभाषितपुंस्कादिति किम् । अम्बिका । नन्वेवं ह्रस्वग्रहणं व्यर्थम् । अवेति वक्तुं युक्तम्।सत्यम् । ह्रस्वग्रहणसामर्थ्यादपरोऽपि वाक्यार्थः क्रियते । नाम्नः परस्य स्त्रियां विहितस्य स्वरस्य ह्रस्वो वा । ब्रह्मबंधुतरा । ब्रह्मबंधूतरा । विदुषितरा। विद्वत्तरा । पचतितरा । पचत्तरा । अनयोर्ह्रस्वाभावे पुंवद्भावः । स्त्रियां विहितस्य किम्। लक्ष्मीतरा । चमूतरा । कचिदीपो नित्यं ह्रस्वः । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा। ब्राह्मणिहतेत्यादि । स्त्रीलिंगेति किम् ।तरणं तरः।स्वरादः । तरति वा तरः । नद्यास्तरो नदीतर इत्यादौ मा भूत् । संध्यक्षराणां न । गोतरा । कप्रत्यये

समानस्य ह्रस्वः । आर्यका । कालिका । जंबुका । टाडका इति कप्रत्यये न ह्रस्वः । कल्याणपंचमीकः । आपो वा बहुविद्यकः । बहुविद्याकः । व्यवस्थितविकल्पाश्रयणादिदं लभ्यते ॥**अन्यार्थे** ॥ स्त्रीप्रत्ययस्य गौणत्वे ह्रस्वः। गंगामतिक्रांतोऽतिगंगः । निष्कौशांबिः । रूपवद्भार्यः । स्त्रीप्रत्ययस्य किम् । अतिलक्ष्मीरतिचमूः । ह्रस्वविधानात्स्वरस्येति लक्ष्यते । तस्य स्त्रियामित्यनुवृत्तं विहितविशेषणं तेन स्त्रीप्रत्ययस्येति लभ्यते। अन्यस्य स्वापेक्षया अर्थः अन्यार्थः । तस्मिन् वर्तमानस्येत्यध्याहार्यम्।कारकविभक्तीनां क्रिययैवान्वय इति नियमादन्यार्थवृत्तित्वं च वृत्तिं विना नोपपद्यते इति वृतिराक्षिप्यते । अन्यार्थवृत्तित्वमेवगौणत्वं स्वार्थविशिष्टार्थान्तरालंबनत्वं गौणत्वम् । तच्च वृत्ति द्वयेऽपि संभवति।जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था तत्र हि स्वार्थपरित्यागेन पदैः समुदायार्थो विधीयते न जहति पदानि स्वार्थं यस्यां साऽजहत्स्वार्था। तत्र हि परि एकैकं पदमनेकपदार्थमभिदधाति।गौणत्वे किम् । राजकुमारी ब्रह्मविद्य । कुमारीवस्त्रं विद्याफलमित्यत्रापि ह्रस्वः प्राप्नोति।मैवम् तस्मादित्याधिकारात् यत्र गौणत्वानन्तरं नामसंज्ञा तत्र ह्रस्वः । अत्र तु पूर्वमेव नामत्वं नातो ह्रस्वः । यद्वा वृत्तिराक्षिप्यत इत्युक्तम् । वृत्तिश्च पंचधा । समासतद्धितकृन्नामधात्वेकशेषभेदात् । प्रकृते समासवृत्तिस्तद्विशेषणं स्त्रियामिति तेन स्त्रीप्रत्ययो गृह्यते।गौणं यत्स्त्रीप्रत्ययांतं तदंतो यः समासस्तस्य ह्रस्वः इति सूत्रार्थः । वेत्यस्यानुवृत्तेर्व्यवस्थितविकल्पाश्रयणात् अर्द्धपिप्पली बहुश्रेयसीत्यादौ न । अत्र च नपुंसकात्स्यमोर्लुगित्यतो लुग्ग्रहणमनुवर्त्य वाक्यभेदेन व्याख्येयम् । तथा हि । अन्यस्य तद्धितस्यार्थे वर्तमानं यत्स्त्रीप्रत्ययांतं तदवयवस्य स्त्रीप्रत्ययस्य लुक् प्रत्ययादर्शनं लुगिति परिभाषणात् । पञ्चभिर्ब्राह्मणीभिरिन्द्राणीभिर्वा क्रीतः । पंचब्राह्मणः । पञ्चयज्ञः पंचेंद्रः । पंचाग्नाय्यो वा देवता अस्य पंचाग्निः । पंचमनुः । अत्र हि संख्यापूर्वोद्विगुरित्यनेन तद्धितार्थे द्विगुर्विधीयते । तेन द्विगुना तद्धितार्थस्योक्तत्वात्तदभिधानार्थं तद्धितेनोत्पद्यते । तद्धितार्थे गौणस्य स्त्रीप्रत्ययस्य लुगनेन विधीयते । नन्वेवं द्विमित्रः द्वैमातुर इत्यादि न सिध्यति। उक्तार्थानामप्रयोग इति न्यायस्य तुल्यत्वादिति चेन्मैवम् । क्वचिदुक्तार्थस्यापि प्रयोगांगीकारात् । द्वौ ब्राह्मणौ भोजयतीत्यत्र ब्राह्मणावित्यनेनोक्तेऽप्यर्थे द्वावित्यस्य प्रयोगः । प्रत्युद्गता पार्थिवधर्मपत्न्या।

पत्न्येत्यनेनोक्तेप्यर्थे धर्मशब्दस्य प्रयोग एवमधित्यकायां द्विरदबृंहितशंकीत्यादि बोध्यम् । एकविभक्ति चापूर्वनिपाते इति सूत्रं गोस्त्रियोरुपसर्जनस्येति सूत्र उपसर्जनग्रहणं च व्यर्थं लाघवात्। गोस्त्रियोरन्यार्थ इत्येव सुवचम्। द्विगोर्लुगनपत्ये अध्यर्द्धपूर्वाद्द्विगोर्लुगसंज्ञायामिति सूत्रद्वयं व्यर्थम्। प्रक्षालनाद्धि पंकस्येति न्यायेन तद्धितानुत्पत्तेरेव ज्यायस्त्वात् । न चापत्ये दोषः समाधेरुक्तत्वात् । संख्यापूर्वस्य मातृशब्दस्याणि उर्विधानाच्चेति दिक् ॥ **गोः ॥** अन्यार्थे वर्तमानो यो गोशब्दस्तदन्तस्य नाम्नो ह्रस्वः स्यात् । चित्रा गावो यस्य स चित्रगुः । पञ्चभिर्गोभिः क्रीतः पञ्चगुः । अन्यार्थे किम् । अतिशयितो गौरतिगौः । राज्ञो गौः राजगवः । राजगवीति टाडका इति टः । गोः किम् । अतिलक्ष्मीः । तदन्तस्य किम् । गोक्षीरम् । यद्यपि गोशब्द उत्तरपदार्थे वर्तते तथापि न तदन्तं नाम । चित्रगुरित्यत्र बहुव्रीहिणान्यपदार्थस्योक्तत्वान्मत्वर्थीयो न भवति । ननु चित्रा गौः चित्रगवी । साऽस्यास्तीति मत्वर्थीयः स्यात् । मैवम् । अत्र लाघवात्कर्मधारयात्पूर्वं बहुव्रीहेरेव प्रवृत्तेः । कथंतर्हि गौरखरवान् देशः कृष्णसर्पवान्वल्मीक इति । शृणु । अत्र हि जातिविशेष लाभार्थं कर्मधारयः पूर्व प्रवर्त्तते । गौरः खरो यस्मिन्निति बहुव्रीहौ तु गौररूपवत्खरमात्रं प्रतीयते । नतु जातिविशेषः। गौरन्यार्थे इति तु नोक्तं स्त्रीप्रत्ययस्याग्रहणप्रसङ्गात् । गौश्चेत्युक्तौ तु गौरवमिति दिक् ॥ **नपुंसकस्य ह्रस्वः ॥** ग्रामणि । खलपु । अत्र ह्रस्वश्रुत्या स्वरस्येत्युपस्थितं तच्च नपुंसकस्य विशेषणं तेन तदन्तविधिः । अतः स्वरान्तस्य ह्रस्वः नार्थभाक् । सुवागित्यादौ यत्र पक्षे लिंगं शब्दाश्रितमर्थं तु गौणव्यवहारः। लिंगानुशासनेषु शब्दानामेव लिंगप्रतिपादनादिति । तत्र नपुंसकस्य नाम्न इति सामानाधिकरण्यं संगच्छते । यदात्वर्थनिष्ठं लिङ्गं स्वार्थद्रव्यलिंगानीति त्रिविधनामार्थाभ्युपगमात्तदा गौणं सा मानाधिकरण्यम् । नपुंसकात्प्रतिपादकत्वात् नाम्नो नपुंसकत्वमित्यभ्युपगमात् । लिङ्गानुशासनमप्येवम् । अथ काण्डचे कुडचे इत्यत्रापि ह्रस्वः प्राप्नोति । एकादेशस्य पूर्वांतत्वेन ग्रहणात् । मैवम् । बहुत्व इत्यादिनिर्देशात् । यद्वा नाम्न इत्यनुवृत्तिसामर्थ्यान्नपुंसकत्वं हि न धातोर्धर्मः तस्य क्रियावाचकत्वेन लिंगसंबंधाभावात् । अत एव नाख्यातांतस्य तस्य

क्रियाप्राधान्यात् । नापि सिबन्तस्य । तस्य शक्तिप्राधान्यात् । शक्तिर्हि कारक शक्तिमद्वा परिशेषान्नाम्न एव नपुंसकत्वे लब्धे नाम्न इत्यनुवृत्तिसामर्थ्याद्यन्नामैव नपुंसकं नत्वं तवद्भावेन तस्य ह्रस्व इति व्याख्यानात् ॥ **त्यदादेष्टेरः स्यादौ** ॥ त्यौ । तौ । यौ । त्यदादेः किम् । मरुतौ । समिधौ । स्यादौ किम् । तस्यापत्यं तादः । तमिच्छति तद्यति । तस्य पुत्रः तत्पुत्रः इति तु न । त्यदादेः किमित्यनेनैव गतार्थत्वात् । टेः किम् । स्यः । सः । यः । इत्यादौ दकारस्यात्वे सवर्णे दीर्घे स्याः । साः । याः इति स्यात् । अथ सधातुरिति निर्देशेन हलादित्वं ज्ञाप्यते । एवं किमोऽपि । एवं सिद्धे यद्विग्रहणमटेरपि कस्यचिदकारविधानार्थं तेन किम् । शब्दस्याकप्रत्ययेऽकसहितस्येमोऽकारे क इति रूपं सिध्यति ॥ **दस्य मः** ॥ त्यदादेर्दस्य मः स्यादौ । इमौ । अमूः । त्यदादेः किम् । छेदो भेदः । दस्य किम् । यौ । ये । स्यादौ किम् । अस्यापत्यमैदमः । अमुमिच्छत्यदस्यति । अथ द्वावित्यत्र कस्मान्न । शृणु । दो म इति वक्तव्येऽकारोच्चारणं अपरस्य दकारस्य मत्वमिति बोधनार्थम् । अत एव त्यदिति दकारस्य त्यदादेर्न । न चात्र त्यदाद्यत्वं कपरत्वान्मत्वप्रसंगात्त्यदाद्यत्वावकाशः । द्वौ कः मत्वावकाशः । इमौ । स इत्यत्रोभयप्रसंगे परत्वान्मत्वं स्यात् । नचात्वविधौ त्यदादिग्रहणं व्यर्थम् । उत्तरत्र चरितार्थत्वात् । यद्वा स्यादाविति दस्य विशेषणं स्यादिपरस्य दस्येति । येन नाव्यवधानं तेन व्यवहितेपीति वचनप्रामाण्यादिति अकारव्यवधाने भवति । नच द्विव्यवधाने यद्वा क्वचिद्द्वयोरिति निर्देशान्न ॥ **सौ सः** ॥ त्यदादेर्दस्य सः सौ । असौ नंदः । दस्य किम् । अमूनि । अकारविवक्षणात्स इत्यादौ अंतस्य न । तदोः सः सावनंत्ययोरिति सूत्रेऽतोरिति वक्तुमुचितम् । त्यदादीनामित्यनुवृत्तेः । यत्तु अनेष इत्यत्र नकारेऽतिप्रसंगः । तन्न । असिद्धं बहिरंगमंतरंग इति न स्यासिद्धत्वात् । एकपदाश्रितत्वात्सत्वमंतरंगं द्विपदाश्रितत्वान्नस्तु बहिरंगः । अत्र पक्षेऽनंत्ययोरिति कर्तव्यमेव । यदि तदयोः सः साविति क्रियते । तदाऽनंत्ययोरिति न कर्तव्यम् । अकारपरत्वाभावेन अन्त्येतिप्रसङ्गाभावात् । त इत्यत्राकारस्तवाप्युच्चारणार्थ एव । यद्वा तः सः सौ इति सूत्रणीयम् । अदसो द इति च । तत औसुलोपश्च इत्थं नान्त्योऽतिप्रसङ्ग इति दिक् ॥ **तः** ॥

त्यदादेस्तस्य सः सौ । स्यः । सः । सिपरत्वे त्यदादेर्विशेषणं न तस्य । तेन नस्य इत्यत्राव्याप्तिः । त्यदादेः किम् । तातः । तः किम् । यः । सौ किम् । तौ । अथ त्वमित्यत्र प्राप्नोति । नच तकारोच्चारणसामर्थ्यादिति वाच्यम् । प्रतित्वमित्यत्र गौणे चरितार्थत्वात् । त्यदाद्यत्वं च प्राप्नोति । न च मकारोच्चारणसामर्थ्यमिति वाच्यम् । अतित्वमिति गौणे चरितार्थत्वात् । मैवम् । सिपरत्वाभावात् । सौ इति वक्तव्ये सिनेति गुरूकरणं वस्नसोरिव प्रकृतिप्रत्ययसंमोहार्थम् । अत एव मितौ आगमौ न ॥ **इदमोऽयं पुंसि सौ ॥** अयम् । इदमः किम् । यः । सौ किम् । इमौ । पुंसि किम् । इदम् । नन्वत्र लुकि न तन्निमित्तमित्येव न भविष्यति । सत्यम् । तस्य नित्यत्वज्ञापनार्थम् । तेन प्रियतिसृ हे वारे इत्यादि सिध्यति ॥**इयं स्त्रियाम् ॥** इदमः स्त्रियामियमादेशः सौ । इदम् । इदमः किम् । या । सौ किम् । इमे । इमाः । स्त्रियां किम् । इदम् । लुकि न तन्निमित्तमित्यस्य नित्यत्वे चेदमपि ज्ञापकम् ॥ **स्भ्यः ॥** इदमोऽकारादेशः सकारभकारादौ स्यादौ । एषु । आभ्याम् । ननु अः षष्ठीनिर्दिष्टस्येति अन्तस्य स्यात् । न चास्याकारविधाने प्रयोजनाभावात्सर्वादेशो भविष्यति । अद्भिः । एस्भीत्यादेशान्तरबाधनार्थत्वादकारविधानस्य । मैवम् । तस्याः परिभाषाया अनित्यत्वात् । तच्चोक्तं य्वोर्लोपशित्यत्र । यद्वा असादेशो विधीयते । स च प्रतिपदोक्तत्वात्प्रथमं प्रवर्तते पश्चादत्वमुभयपक्षयोः यपेऽस्येति निर्देशोऽनुकूलः । स्भसिति सुवचम् । ननु स्त्रियां सन्निपातपरिभाषया न स्यात् । मैवम्।आस्विति निर्देशेन तस्या अनित्यत्वज्ञापनात्।इदमकिम्।तैः । येषु । स्भि किम् । इमौ । इमाः । स्यादौ किम् । इदं भातम् । इदं सक्तम् । ननु स्भीत्यनेन सान्ते भान्ते किं न स्यात् । मैवम् । अस्यासुनिर्देशेन तदादिविधेर्ज्ञापनात् । सांतस्यौसः संभवेपि भान्तस्य स्यादेरसम्भवाच्च । हलि लोप इत्यस्य स्थाने स्भ्यशिति सुवचम् ॥ **अनटौ सोः॥** इदमः । अनेन । अनया । अनयोः । इदमः किम् । तेन । ययोः । टौसोः किम् । इमौ । अनायीति तु नोक्तम् । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः । स्भसादेशविधानेन परिशेषाट्टौसोर्लाभेऽप्यतिलाघवार्थं टौसोर्ग्रह-

---

१ मात्राबहुत्वेपि व्यक्तिकृतलाघवात् । प्रत्याहारे तु पञ्चदशव्यक्तयष्टाद्यष्टौसोरिति व्यक्तिद्वयमेवेति ध्येयम् ।

णम् ॥ **भिस्भिसू॥** इदमो भिसूभिसेव भवति।भिसो भिसूविधानं भ्य इत्ये-त्वबाधनार्थम् । एभिः । इदमः किम् । तैः । भिस् किम् । इमौ । ह्रस्वो वेत्यतो वाग्रहणमनुवर्त्य व्यवस्थितविकल्पाश्रयणान्नेह । इमकेन । इमकः । नानुवर्तमानादेवेदमेतदोरन्वादेशे द्वितीयाटौस्स्वेनद्भवति । अदसः भिसूभिसे-व भवति । अमीभिः । अदसः किम् । यैः । भिस् किम् । अमू । अमी । इदमो अदस इत्यादिनिर्देशस्तु शब्दस्वरूपापेक्षया अर्थपरत्वे त्वस्यामुष्येत्यादि भवति । **सेरौ ॥** अदसः परस्य । असौ । अदसः किम् । यः । सेः किम् । अमूभ्याम् । नन्वेवमके सति स्त्रियामसकाविति स्यात् । सेरौत्वेऽत्वेऽपि च कृते काप्यत इत्यस्य प्रसङ्गात् । मैवम् । ङेरौ ङिदित्यतो मण्डूकप्लुत्या ङिदित्यस्यानुवर्तनात् । सेर्डाविति पाठाभ्युपगमाद्वा। अदस औ सुलोपश्चेत्यस्य स्थानेऽदसःसेर्डाविति सुवचम्।अत्र वाग्रहणमनुवर्त्य व्यवस्थितविकल्प आश्रय-णीयः । तेन साकाददसः सेरौ वा डौत्वाभावे सादुत्वं चैतेनासुक इति सिध्यति । न चाके कृते तद्विशिष्टस्य शब्दान्तरत्वात्त्यदादित्वाभावात्सत्वमत्वे न स्यातामिति वाच्यम् । तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् । तद्यथा । गंगां यमुनां प्रविष्टान्यका नदी गंगायमुनाग्रहणेन गृह्यते । यथा देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते । तथेदमदसन्तर्गतोऽकस्तद्ग्रहणेन गृह्यते । एव-मपि ते तु न स्यातामनेकेन व्यवधानात्स्यादिपरत्वाभावादिति चेन्न । साके स्यादिपरत्वं त्यदादेर्विशेषणम्।तद्रहिते तु दस्येत्यभ्युपगमात् स्यादिपरत्वानपा-यात् । अथ कथममुकगोत्रस्यामुकशर्मण इति । अपभ्रंश एवायमिति प्राञ्चः । वस्तुतस्त्वमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषय एव प्रयुज्यते । नियतविषयाश्च शब्दा दृश्यन्ते । यथैश्वर्यवाची स्वशब्द आम्निंत एव । यथा प्रातर्दिवादोषे-त्यादयः।अधिकरणशक्तिपरा अपि वृत्तिविषये शक्तिमत्पराः यथा वाऽविकशब्दः। इत्थं हि महानिबन्धानामृषिवाक्यानां च गतौ सत्यां नाप्रामाण्यमापादनीयम् । केवलस्य तु सर्वादिकार्यानुरोधेनादकसूशब्दस्यैव प्रयोगो न्याय्यः । अमुक इत्येकवचने तु यदि शिष्टप्रयोगस्तदा साधुनो चेदसाधुरेवामुकशब्दस्य तु वृत्ति-विषये प्रयोगाभ्युपगमो युक्त एवेति । यद्यपि सामान्येऽकः स्यादिवच्चेति व्युत्पादितस्तथापि तस्य प्रयोगः समासे एव न स्वतन्त्रस्य । प्रथमैकवचने

क्वचिदिति दिक् ॥ **मादू** ॥ अदसो मात्परस्य ह्रस्वस्य उः दीर्घस्य ऊः । प्रमाणसाम्यात् । अमुम् । अमून् । मादिति पञ्चमीनिर्देशात्परः स्थानी लभ्यते । स च हसः स्वरश्च । मात्परस्य हसस्यासम्भवात्स्वर एव गृह्यते ऊ इति ह्रस्वदीर्घयोः सन्धिनिर्देशः । समाहारे समासे ह्रस्वत्वं प्रसज्येत । भवतु वा समाहारः । ह्रस्वं तु संज्ञापूर्वकत्वाद्वाऽनुवर्तनादनित्यत्वाद्वा । न । अनित्यत्वे लिङ्गं त्वतोमिति तपरत्वम्।अन्यथा दीर्घाभावादव्यर्थमेव स्यात् अनित्यत्वफलं तु मुखं च नासिका चेति मुखनासिका सा वचनमस्य अदेदो इत्यादि मस्य स्यादिनिमित्तत्वेपि नोत्वन्तन्निमित्तमतो मत्वाभावेनोत्वम्।अदस्यति । अदसः किम् । इमा ॥ **एरी बहुत्वे** ॥ अदस एत ई बहुत्वेऽर्थे । अमी ।अमीभिः । अदसः किम् । ते । येषु । एः किम्। अमून् । बहुत्वे किम् । अमुयोः । एतईद्बहुवचने इत्यत्र बहुत्व इति युक्तम् ॥ **भि द्पाम्** ॥ अपो दः स्याद्भादौ । अद्भिः।अद्भ्यः । अपः किम् । गुब्भिः । भादौ किम् । आपः।स्यादौ किम् । अमूभिः । स्भीत्यनुवर्तमाने भिवचनं सव्यावृत्त्यर्थम् । अप्सु।अपामिति बहुवचनं चिंत्यम् ॥ अष्टनः त्रेरितिवदेकवचनमेव युक्तम् । अर्थप्राधान्यसूचने तु गौणत्वेऽव्याप्तिः । शोभना आपोऽस्मिस्तडागे स्वाप् । स्वापौ । स्वद्भ्यामित्यादि सिध्यतीति । यत्तु माधवेनोक्तं बहुवचनाद्यर्थात्स्ववसूस्वतवसूमासां संग्रहः । स्ववद्भ्याम्।स्वतवद्भ्याम्।माद्भ्यामित्यादि सिध्यतीति।तन्न।लौकिकमात्रप्रतिपादनपरेत्र वैदिकप्रतिपादनायुक्तत्वात् । अन्यथाऽन्येषामपि व्युत्पाद्यत्वप्रसंगात् । लौकिकप्रयोगनिष्पत्तये इति मूलविरोधाच्च। नन्वत्र द्ग्रहणं मास्तु।त इत्यनुवर्त्य प्रथमान्ततया व्याख्येयम् । मैवम् । उत्तरार्थं द्ग्रहणम् । प्रशस्तो विद्वान् विद्वद्रूपः । नाम्नस्तद्धितोत्पत्तिरिति पक्षे पदत्वाभावाज्जबो न स्यात् । अत्रोपादानं तु विभक्तिविपरिणामादिक्लेशनिवृत्त्यर्थम् ॥ **वसां रसे** ॥ बहुवचनमाद्यर्थम् । लक्ष्यदर्शनात्तन्त्रान्तरसंवादाच्च वसुस्रंसुभ्रंसुअनडुहो गृह्यन्ते । वसु चात्र प्रत्ययो न धातुः प्रत्याख्यानात् । साहचर्यस्य सर्वत्रानियामकत्वादुत्सृष्टानुबन्धकत्वेन वसुक्सोः सामान्यग्रहणम्। विद्वस् सि चक्रिवस् सि इति स्थितेऽन्तरङ्गत्वात्प्रथमं नुम् । पञ्चसु । विवक्षिते इति व्याख्यानात् । ततो दीर्घः । न सिति प्रतिपदोक्तत्वात् दत्वं बाधित्वा

परत्वात्संयोगांतस्य लोपः । ततः सिलोपः सकृद्गतिन्यायेन न भवर्तते । यद्वा सौ स इत्यतः स इत्यनुवर्त्य षष्ठ्यन्तं व्याख्येयम् । तच्च वसोर्विशेषणं न स्रंसादेरव्यभिचारात् । नानडुहोऽसम्भवात् । सान्तवस्वन्तस्य विधानान्नेह । विद्वान् । वस्त्रादिभिर्नाम्नो विशेषणान्नेह । स्रस्तम् । ध्वस्तम् । ननु रस इति मास्तु । स्यादौ स्भीत्यनुवर्त्य स्भादौ स्यादौ विधास्यते । मैवम् । रस-ग्रहणस्य तद्धितसंग्रहार्थत्वात् । विद्वत्तरो विद्वत्कल्पो विद्वच्चरो विद्वद्देश्यो विद्वद्रूपः ॥ असति रसग्रहणेऽत्र न स्यात् । ननु वसादिग्रहणं मास्तु । अनडुहो रस इत्येवास्तु । ढबाधनार्थत्वाद्दस्य विद्वद्भ्यामिति झभे जबा इति साम्याद्दः । विद्वत्स्वित्यत्र खसे चपा इति तः । स्रदित्यत्र वावसाने तदौ स्याताम् । मैवम् । सकारे उक्तसूत्राणामप्रवृत्तेः । परत्वात्प्रतिपदोक्तत्वाच्च-स्रोर्विसर्ग इत्यनेन बाधनादन्यथा विसर्जनीयस्य स इत्यादिसूत्रवैयर्थ्यप्रस-ङ्गात् खसे चपा इति सस्य विधानाद्विसर्गाभाव एवमुशनोभ्यामित्यादिरूपा-सिद्धिश्चातः कर्त्तव्यं वस्वादिग्रहणम् । सस्तोनपीति ज्ञापकं चात्र । अन्यथा खसे चपा इत्येव सिद्धे किं तेन । नन्वत्र पदान्तग्रहणं कर्तव्यम् । विद्वदा-गमनम् । विद्वदैश्वर्यम् । विद्वद्वसनम् । विद्वद्याग इत्यादि सिद्ध्यर्थम् । सत्यम् । पदांते चेत्यस्य दशानां वसां रसे इत्यादीनां शेषत्वात् । देहलीदीपकन्यायेन काकाक्षिगोलकन्यायेन चोभयत्रान्वयसंभवात् । एतानि तत्र नीत्वा तद्वा-त्रानीय वाक्यभेदेन व्याख्येयम् । वसां किम् । हरिभ्याम् । मातृषु । रसे किम् । विद्वांसौ । पदांते किम् । विदुष्मान् । नाम्नो मतोर्विधानादपदत्वम् । अत्रेदमवधेयम् । दविधानान्नाम्नस्तद्धितोत्पत्तिरित्युक्तम् । अनामिवत इति निर्देशाद्विभक्त्यन्तात्तद्धितोत्पत्तिरित्यपि पक्षेऽस्ति वस्य रसत्वाभावे विभक्त्य-न्तत्वे च न लोपो न स्यात् । विभक्त्यन्तात्तद्धित इति पक्षे रसग्रहणं शक्यम-कर्तुम् । स्भीत्यनुवृतेश्च । सिद्धेरेवमुत्तरसूत्रेष्वपि पक्षद्वयमपि जातिव्यक्तिपक्ष वदव्यवस्थितं बोध्यम् । प्रथमे पक्षे तु आरातीयो मरुत्वतीयो विद्युत्वानित्या-दिसिद्धिः फलम् । द्वितीये तु भवदीयो भवज्जातीयो भवद्रूपो भवन्मय इत्यादि सिद्धिरिति दिक् ॥ **चोः कुः** ॥ चवर्गान्तस्य नाम्नः कवर्गातादेशः स्यात् रसे पदान्ते च । त्वक्—त्वग् । युग्भ्याम् । वाक्षु । सौ परत्वात्कुत्वे

सिलोपः।रसे किम्।वाचिकम् त्वचौ । किम् नाम्नः।वच्मि।वच्मः । अन्त्यस्येति किम्।मत्यञ्चौ । खञ्चौ । एतेन मत्यन् च् सि इति स्थिते । नस्य चुत्वेन ञकारे सिलोपे संयोगान्तलोपे ञस्य कुत्वेन ङकार इति वदन्माधवोऽपि मत्युक्तः।अकृतव्यूहपरिभाषया मथमं त्वमवृत्तेर्नित्यत्वात्संयोगान्तलोपापत्तेः। खन्नित्यादावतिव्याप्तेश्च।पदान्ते लुग्वा। वागाशीः । पुगागमः । पदांते किम्। वाचि यदीदं नारभ्येत तदा वाजाशीरिति स्यादित्थं जबापवादोयम् । सति त्वस्मिन्पुनः मसङ्गविज्ञानाज्जबचपौ।चोः किम्।मरुत् । मरुद्भ्याम्।मरुदासनम् । संख्यासाम्याद्यथाक्रमं विधिः मवर्तते।यथास्थानी लभ्यते । स आदेशो भवति तेन च जपोः स्थानिनोः कगौ । ननु वक्ता वक्ष्यतीत्यादावव्याप्तिर्नामत्वाभावा त्सत्यम् । धातोश्च झसे इत्यस्यात्रानुकर्षणाच्चोः कुरित्यस्य तत्रानुवृत्तेर्वा- सिध्यति।झसे किम्।वच्मि।पदान्ते किम् । खञ्चाति।**दिशाम्**। बहुवचनमाद्य- र्थम्।तेन दिश् शृस्पृदृश् दधृष् ऋत्विज्स्रज्क्रुन्च्युन्ज्अन्चूउष्णिहादीनां कुत्वं रसे पदांते च । दिश् सि इति स्थिते परत्वात्कुत्वेन मयत्नसाम्यात् खकारे सिलोपे जब्चपौ।दिक् दिग्।दिग्भ्याम्।दिश्दृश्स्पृश्दधृष्ऋत्विज्स्रज्इत्यादी- नां षत्वे माप्ते क्रुन्च् युन्ज् अन्च् त्रयाणाममाप्ते उष्णिहो ढत्वे माप्तेऽयं कुत्वविधिः।दिशा किम्।विट्।विड्भ्याम्।रसे किम्।दिशौ। पदान्ते किम्।दिग- म्बरः।दिगीशः।पदांते किम्।दिशाम् । दिशः । रसग्रहणाद्दिक्पाशा । दिग्रूपा दिक्कल्पा।नाम्नस्तद्धित इति पक्षे इदं विभक्त्यन्तात्तद्धित इति पक्षे तु रसग्रहणं मत्याख्यातं माक् ॥ **षोडः** ॥षान्तस्य नाम्नोऽन्तस्य डो रसे पदान्ते च।त्विट्।त्विड्भ्याम् । षट्।षड्भिः।षट्सु । नाम्नो विशेष्यत्वत्वस्य विशेषणेन तदन्तविधिलाभान्नेह । षोडश तिष्ठन्ति । षष्ठीति निर्देशात् । थटि ना।षष्ठः रसे किम् । त्विषौ।पदान्ते षडागमनम् । त्विडूष्णा । विट्पाशा विट्कल्पा पक्षद्वयेऽपि डत्वम्।ननु मास्त्विदं सूत्रम् । वावसाने।झभे जबाः । खसे चपा इत्येतैर्डटयोर्लाभात् । अथ षडागमनमित्यादौ कथमिति चेन्न । वावसान इत्यस्य मवृत्तिसंभवात् । अवसीयतेऽनेनेत्यवसानम् पदेन ह्यवसीयतेऽतः पदान्ततैवावसानं योगेनैव गतार्थत्व।द्विरामोवसानमिति नारब्धव्यम् । वाव- सान इति व्यवहारस्तु कृतः । इदं च षाण्मातुर इत्यादिसिद्धयर्थमवश्यम-

भ्युपेयम् । षाष्मातुर इति डत्वे कृतेऽपि चपस्याभावात् ञमो न स्यात् । वावसान इत्यनेन तु जबचपयोः कृतयो रूपद्वयसिद्धिः । अथ ममापि मते त्वन्मदेकत्व इति निर्देशाज्जबस्यापि ञमो भविष्यति।न चायं तान्तादेशो न दान्त इति वाच्यम् । त्वद्यति मादयतीत्यादि सिद्ध्यर्थं दान्तस्यैवेष्टत्वात् नाम्नो य इञोर्विधानान्नापदत्वमिति चेदुच्यते त्वन्मदिति । असमासपक्षे वावसान इति चपे कृते तस्य च ञमस्य सिद्धत्वान्न निर्देशेनेष्टसिद्धिरतो नारम्भणीयं सूत्रम् । ननु प्रत्याख्यानपक्षेऽपि ञमे ञमावेत्यत्र वाग्रहणं व्यर्थं जबचपाभ्यां रूपद्वयस्य सिद्धत्वात् । सत्यम् । प्रत्ययञमे जबस्यापि विधानार्थंवाग्रहणमत्रोत्तरार्थं च।ननु षण्णामित्यस्य सिद्ध्यर्थं सूत्रमस्तु।ड्ण इत्यनेन डस्य णो विधानादिति चेन्न । षकारस्यैव डविधानात् । ड इति षकारस्य प्रथमैकवचनरूपं षो णो नामीति तदर्थः । ननु धातोर्झसे इत्यत्रानुवृत्त्यर्थं सूत्रमस्तु।मैवम् । प्रयोजनाभावादद्वेडिति वावसान इत्यनेनैव सिद्धत्वात् । द्विष्ट इत्यस्य झभे जबा इत्यनेन सिद्धत्वात् द्वेष्टीत्यादौ षोडः खसे चपा इत्युभयोरप्रवृत्तिरष्टन इति निर्देशादित्थं चिन्त्यमिदं सूत्रम् । **नाम्नो नो लोपशधौ ॥** न इत्यनेन नाम विशिष्यते । तेन तदन्तविधिः । नान्तस्य नाम्नोन्त्यस्य लोपश् धौ रसे पदांते च । रसे । राजभ्याम् । राजसु-राजेत्यत्र तु प्रथमं सिलोपात्परत्वान्नलोपश् प्राप्तः तथापि "प्रायशो दृश्यताम्" इति सिलोपः । आसाविति ज्ञापकाच्च।सौ न लोपशि सर्विसर्गे सतीष्टे सिद्धे किन्तेन।ननु धौ दीर्घनलोपशोभावात्तदर्थमिदमिति चेत् न।तथा सत्यधावित्येवावक्ष्यत् । पदान्ते राजाश्वः।राजोढः । राजैश्वर्यमत्र नलोपश्यपि सन्धिर्भवति । श्वादेरिति लिङ्गात् । रसपदान्तोदाहरणानि । राजकल्पो राजता राजरूप इत्यादि सिबंतात्तद्धित इति मते पदान्तस्य नाम्न इति मते रसस्योदाहरणम् । रसे किम् । राजन्वात् । सिबंतातद्धित इति पक्षे तु सिबन्तात्तु राजवान् । अधौ किम् । हे राजन् । पदान्ते किम्।राजानौ । नाम्न इत्यनुवर्त्त्यमाने पुनर्नामग्रहणं नामसंज्ञाप्रवृत्तिकालोपस्थितस्य नस्य लोपशर्थम् । तेनागमादेशयोर्न । पचन् । भवान्।खन्।सुहिन् । प्रशान् । मान्भ्याम् । लोपग्रहणमनुसृत्य उत्तरसूत्रस्थमेव लोपग्रहणमत्र पाठ्यमित्यग्रेऽनुवृत्तिसम्भवात् ।

पश्चस्वित्यनेन ज्ञाप्यं न लोपेन विभक्तिकार्यमिति विभक्तौ कार्यं विभक्तेर्वा कार्यं विभक्तिकार्यम्। राजभ्याम्। राजभिः। पथिष्वित्यादौ षत्वं तु न विभक्तिकार्यम्।सैषादिति निर्देशात्।**संयोगान्तस्य लोपः** ॥ संयोग अन्तस्येति च्छेदः। अनुकरणाद्विभक्तेर्वैकल्पिकत्वादविभक्तिको निर्देशः। नाम्न इति विशेष्यम्।संयोगेति विशेषणम्। विशेषणेन तदन्तविधिलाभः। तेन संयोगान्तस्य नाम्नोंत्यस्य लोपो रसे परे पदान्ते वर्तमानो यः संयोगान्त इत्येव न तु नाम्नस्तेन धातोः संयोगस्यापि पदांते भवति। पुम्भ्याम्।सुहिन्भ्याम्।सौ तु परत्वात्संयोगान्तलोपः।पश्चात्सिलोपः। मत्यङ्। खन्।पदान्ते पुमर्थः।पुंदेश्यः।पुंरूपः।अचोस्कुन्।अचंखन्। अवनीवन्।संयोगान्तस्य किम्। मरुत्।संयोगस्य नाम्नो विशेषणादादेर्न।त्सः।त्सरौ।त्वट्। त्वक्षौ। रसे किम्। पुमांसौ।पदांते किम्। अचोस्कुंत्ताम्। सूत्रेऽत्यग्रहणं तु बहूनां हसानामानन्तर्ये प्रत्येकसंयोगसंज्ञापक्षे अग्निचित् स्थातेत्यादौ लोपवारणार्थम्। संयोगावंते यस्येति द्विवचनांतविग्रहलाभार्थं कृतमन्यथोक्तरीत्या सिद्धे किं तेन। समुदायसंज्ञापक्षे संयोगोन्तो यस्येति विग्रहेऽपि व्यर्थं विशेषणत्वेनैव तदन्तलाभात्।ननु लोपशूग्रहणमेवानुवर्तताम्। किं लोपग्रहणेन मैवम्। सन्नच्युतः। मत्यङ्ङात्मेत्यादौ द्वित्वाभावप्रसंगाल्लोपशि न संधिरिति सिद्धांतात्। वस्तुतस्तु प्रत्याख्यातं तत्। धातोश्च झसे इत्यतो झसग्रहणमपकृष्य षष्ठ्या विपरिणमय्य संयोगांतस्य झस्य लोप इति व्याख्यानान्नेह।दध्यत्र।मध्वत्र। असिद्धं बहिरंगमंतरंग इति तूक्तं प्राक्। रात्सस्यैव लोपो नान्यस्य।चतुरो वाराम्। चतुः। सोर्लोपः। चिकीः।नन्वत्र षत्वे कृते लोपो नेति वाच्यम्। प्रकृतव्यूहेतिन्यायात्।सस्य निमित्तमपदान्तत्वं तच्च भावीति न पूर्वं षत्वप्रवृत्तिप्रवृत्तं वा निमित्ताभावन्यायेन निवर्तयितुं सुशकम्।नेह।ऊर्क्।अमार्ट्।अजर्घत्।नेदमपूर्ववचनं दिश्योर्हसात् ज्ञापकादस्यसिद्धत्वात् अबिभर्भवानित्यादौ दलोपार्थं तदारभ्यते यदा रात्सस्येति न स्यात्तदा तद्व्यर्थं स्यात्संयोगांतलोपेनैव सिद्धत्वात्।सिग्रहणमुत्तरार्थम्।ननु हसे प इत्यत्र हसग्रहणं मास्तु लिडित्यादावनेनैव लोपस्य सिद्धत्वादिति चेन्न।दिप्साहचार्याद्धातोरित्यधिकाराच्चास्यसेग्रहणात् स्यादेर्व्यवधायकाभावात् सिलोपानुवृत्तौ तु एकदेशानुवृत्तिक्लेशादमाला

इत्यादावतिप्रसंगात्।अद्रुदादेरित्यादौ दिस्योर्ग्रहणावश्यकत्वाच्च॥ **स्कोराद्यो श्च।** आदिशब्दस्यावयविवाचित्वेन ससम्बंधित्वादवयव्याकांक्षायां संयोगेति संबध्यते नाम्नोऽवयवो यः संयोगः। पदांते वर्तमानो रसपरश्च धातोरवयवो य संयोगः पदांते वर्तमानो झसपरश्च तदाद्योः स्कोर्लोपः स्यात्।संयोगान्तलोपापवादः।झसे त्वपूर्वो विधिः।गोरड्भ्यां वृक्षवृड्भ्यां गोधूमभृड्भ्याम् । सौ तु परत्वात्स्कोर्लोपे कृते सिलोपः। गोरडर्थः। वृक्षवृडर्थः। गोरड्रूपः। वृक्षवृड्देश्य इत्यादि । पदांते किम् । गोरक्षौ । वृक्षवृश्चौ।रसे किम् । गोरक्षो भावोगौरक्ष्यम्।वार्क्षवृश्च्यम्।गोधूमभृज्ज्यम्।नाम्नस्तद्धित इतिप्रत्युदाहरणम्। झसे चष्टे।व्रष्टा।भ्रष्टा।रिप्सते।लिप्सते पदान्ते अरारड्।अताताट्। अवाव्रट् अबाभ्रट्। झसे किम् । चक्षीत । वृश्च्यात् । भृज्ज्यात् । रसे झसे पदान्ते चेति नामधातून् विहाय संयोगविशेषणं कृतम्।तेनेह न।स्पृष्टाभ्यां ताभ्याम्।स्पृष्टाभ्याम्। ततः स्कोः किम् । दंष्ट्राभ्याम् । आद्योः किम् । दंक्ष्यति । नंक्ष्यति । स्कोः संयोगविशेषणं किम् । क्शाता । क्ष्टृभ्याम् । अत्र हि झसरसपरः ककारः स न संयोगादिः । सकारनकारयोर्झसूनिमित्तत्वात् मस्जनसोरिति नुम् । बहूनां समवाये द्वयोर्द्वयोः संयोगसंज्ञेति पक्षे सजोः संयोगसंज्ञामाश्रित्य सलोप उपधात्वान्नो लोप इति नलोप ओदित्वान्नत्वम् । मग्नो मग्नवान् । एवं मंकु मंक्तेत्यत्रापि सलोपः। स्कोरिति स्वरूपस्य स्कुञ् धातोर्वा न ग्रहणं द्विवचननिर्देशात्।तेन वस्कः।स्कोतेत्यत्र येन नाव्यवधानेनेति नलोपः। **स्त्रोर्विसर्गः॥** पदान्ते वर्तमानयोः स्त्रोर्विसर्गः स्यात् । धात्वधातुसाधारणमिदम् । अचकाः । अवर्वाः । अबिभः । अपिपः । देवः । मातः । अंतः । परत्वात्सिलुकि नात्र रसपरत्वम् । पदांते किम् । मत्स्यात् । वुस्यात्। चूर्यात् । वारि। पयसी । रसपरयोर्नाम्नः स्त्रोर्विसर्गः स्यात् । वेधोभ्याम् । दोष्षु।सौ तु प्रथमं सिलोपः। परत्वाद्विसर्गे कृते तस्य हसत्वाभावेन सिलोपाभावे नित्यं विसर्गद्वयश्रवणप्रसङ्गः। अथ वेधा इत्यत्र द्वयोः सकारयोरेको विसर्गो भविष्यति सत्वजातेराश्रयणादितिचेत्।प्रियचत्वाः । गीः । पूरित्यादौ रसयोरेकजात्यभावादुक्तदोषतादवस्थ्यम् । अथ कुप्वोः ᳲक ᳲप कपयोः । परतो विसर्गादेशेन ᳲक ᳲपविसर्गानुस्वाराणां हसादित्वं ज्ञापितमिति चेत्तर्हि

प्रथमं विसर्गेऽपि न क्षतिर्हसत्वात्सिलोपसम्भवात्। रसे किम्। वार्वान्। चातु-र्य्यम्। वस्तेः क्विपि क्विविशिष्टस्य नामसंज्ञा भवति लुप्तेऽपि क्विपि एकदेश-विकृतन्यायेन नामत्वमस्ति युवोभ्यामित्यादौ विसर्गः। सिध्यति स् च र् च स्रौ तयोः। अत्र रेफो निर्दिष्टो न तु रेफभूत ऋकारः। रेफस्थानिकविसर्ग-स्य शादेशविधायकस्य र इति सूत्रस्य वैयर्थ्यापत्तिः। कर्तृकार्ययोरित्यादिनिर्दे-शाच्च। न ह्यत्र ऋकारस्य विसर्गो निर्दिष्टः। प्रातः कल्पम्। प्रातः पाशमि-त्यादावुभयथा विसर्गः। नामसंज्ञाकाले सतो रेफस्य सुपि न विसर्गः। चतुर्ष्विति निर्देशात्। तेन गीर्षु वार्षु पूर्ष्वित्यादि सिध्यति। नार्कुटो नार्पत्य इत्यत्र तु बहिरङ्गाया वृद्धेरसिद्धत्वान्न विसर्गः। कर्तृसाधनयोरिति निर्देशात्। **सस्तौ** ॥ सस्य विसर्गः स्यात्तवर्गे परे। आद्वे लोपश्।चका।धि। आद्धे तथयोः। सति विसर्गे विसर्जनीयस्य सौ भविष्यति। दकारस्तु नास्त्येव। वध्वे इत्यत्र तु यद्यपि हवे इत्युत्वं प्राप्तं तथापि आद्वेलोपशित्यत्र हव इत्यनुवर्त्यं क्वचिद्धवे लोपश् विधानात्। क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशतीति न्या याच्च। ऐधिध्वमित्यादौ तु ध्वे च सेर्लोप इति वचनेन कैश्चित्समाहितम्। वस्तु-तस्तु नामिनो र इत्यत्र नामिन इत्यधिकम्। अवर्णाल्लोपशो विधानेन परिशेषात्तल्लाभात्। अतो योगविभागेन नामिनः परस्य विसर्गस्य क्वचिल्लो-पशविधानाददोषः। अकृढ्वं अदिढ्वमित्यादौ लोपो ह्रस्वादिति परत्वात्सिलोपः। सौ सः। इत्यतः स इत्यनुवर्त्य नाम्नो न इत्यतो न इत्यनुवर्त्य विभक्तिविप-रिणामं कृत्वा नकारे सस्य विधानाद्ध्वस्तं ध्वस्नातीत्यादावदोषः। परिशेषाद्धातो-रेवेदम्। नाम्नस्तु पूर्वसूत्रेणैव सिद्धत्वात्। सौ किम्। अस्मि। सः किम्। स्कंतासि। **अह्नः** ॥ अहन् शब्दस्य विसर्गः स्यात् रसे पदांते च। अहोभ्याम्। अहःसु। सौ तु अन्तरङ्गान्विधीन्बहिरङ्गो लुग्बाधते इति न्यायात्प्रथमं सिलुक् ततः पदान्तत्वाद्विसर्गः। अहःकल्पम्। अहःपाशम्। रसे किम्। अहनी। दीर्घाणि अहानि यस्मिन्निदाघे इति विग्रहे दीर्घाहन् सि निदाघ इति स्थिते हसे प इति सिलोपात्परत्वात्प्रायश इति वचनादसिद्धत्वज्ञापनाद्वा विसर्गाच्च प्रथमं न्नोपधाया इति दीर्घे कृतेऽह्न इति विसर्गे कृते सिलोपः। यद्वा नित्यत्वात्सिलोपे कृते विसर्गो भवति। विसर्गस्तु न

नित्यो अकृते सिलोपे रसनिमित्तः । कृते तु पदान्ततानिमित्तो निमित्तभेदेन शास्त्रभेदात् । पुनः प्रवृत्तिमात्रेण तु प्रथमः पक्ष उक्तः । निदाघशब्दमाश्रित्यादबे लोपशिति विसर्गलोपश्च तदभावे तु दीर्घाहाः । दीर्घाहानौ दीर्घाह्ना।दीर्घाहोभ्याम् । धौ तु दीर्घाभावाद्विसर्गे हवे इत्युत्वे दीर्घाहो निदाघेति भवति अन्यदा दीर्घाहः । यत्तु माधवेन पूर्वसूत्रात्समनुवर्त्य सविधानं कृतम् । तच्चिंत्यम् । सस्यापि विसर्गविधानावश्यकत्त्वेन विसर्गविधानस्यैवौचित्यात् । ननु सस्तौ इत्यस्य स्थाने सोधीति सूत्रं संयोगान्तलोप इत्यस्याग्रे विधेयमिति चेन्न।रामो धाता पयो धिनोतीत्यादावतिप्रसङ्गात्।त्याद्यधिकाराभावात्स्यादौ धकाराभावाच्च। अथ यथान्यासं सोधीति कर्तुं शक्यम् ।

**पदांते च ॥** दशसूत्र्या अयं शेषो न त्वह्न इत्यस्यैव चकारकरणात् कस्य शेषे चकारं विनाप्यन्वयलाभात्। चकारस्य त्वेवं स्वभावो यज्जातीयात्पठ्यते तज्जातीयं द्वितीयं समुच्चिनोति।सप्तम्यंन्तात्पठितः । सप्तम्यन्तं समुच्चिनोति तच्च सन्निहितत्वाद्रसे इति । तेनेदं दशसूत्र्याः शेषः संपद्यते । तथा च विदुषा तुल्यं विद्वद्वत् । राजवत्। वाग्वत् । स्रग्वदित्यादि सिध्यति।यथा द्योश्चेति चकारः षष्ठ्यंतात्पठितोत्यस्येति षष्ठ्यन्तं समुच्चिनोति । चकाराभावे आदिलोपः आरभ्यमाणस्तक्रकौंडिन्यन्यायेनान्तलोपस्य बाधक इत्याशंकेत तन्नेति सूचनात् अमार्ट् । अमार्ज्म । अबीभर्त् । अचोकुर्दित्यादि सिध्यति।

**रो रात्रिषु ॥** अह्नो विसर्गस्य पदान्ते रः स्याद्रात्र्यादिषुवर्जितेषु परतः। अहर्गणः । बहुवचनमाद्यर्थम् पर्युदासोऽयम् तेन रात्र्यादिभिन्नो रात्र्यादिसदृशोऽवप्रत्याहारो गृह्यते तेनाहः । पतिरहः करोति । अहश्चरतीत्यादौ न रः। अन्ये त्वाहुः । हसत्वेन सादृश्यं नावत्वेन रो हसत्वेनापि संभवात् । तेनाहर्पतिः । अहर्चतुष्टयमित्यादिसिद्धम् । ननु वर्णत्वेन सादृश्यं गृह्यतां पूर्वसूत्रं त्ववसाने सावकाशमिति चेन्न।पक्षे हसत्वेन सादृश्यात्।अवेऽपि विकल्पापत्तेः । रात्रिरूपरथंतरा रात्र्यादयः । रूपयति रूप्यते वेत्यविशेषादुभयं गृह्यते न रूपप्रत्ययो रात्रिसाहचर्यात् । अन्ये तु सर्वत्र साहचर्यस्यानियामकत्वेन प्रत्ययोऽपि गृह्यते इत्याहुः । तेन प्रशस्तमहः अहोरूपम् । अहोरूपं गतमहो रात्रिरेषा । अहश्च रात्रिश्चानयोः समाहारोऽहोरात्रः । पुंस्त्वं तु

लिंगमशिष्यं लोकाश्रयत्वाल्लिंगस्येति न्यायात् । नपुंसकमित्यस्य नित्यत्वाद्वा लोकाच्छेषस्य सिद्धिरिति वचनाच्च।अहोरूपम् । अहोरात्रः । अहोरथंतरम् । एषु विसर्गो त्वौनि। पदान्तेकिम्॥अहोभ्याम्।अह्नः किम्।को गतः।पूर्वेण प्राप्तस्य विसर्गस्यापवादो रो इत्यपि सुवचम् । न चारात्रिष्वयं प्रसज्यप्रतिषेध एवेति वाच्यम्। अनन्वितसमासो वाक्यभेदश्चेति दोषद्वयं स्यात्। पदान्ते विषयविशेषलाभेन पर्यायप्रसंङ्गाच्च । **दोषाम्** जबचपविसर्गाणामपवादः । बहुवचनमाद्यर्थम्।दोषादीनां रो भवति रसे पदान्ते च।दोर्भ्याम् । हविःषु । चक्षुःषु। सौ तु परत्वाद्रेफे कृते सिलोपः । हविरादीनां क्लीबानां तु अन्तरङ्गानपीति स्यमोर्लुकि पदांतत्वाद्रः । हविः । दोरर्थः।दोरिहा । हविःकल्पम् । चक्षूरूपम्। सादौ किम्।दोषौ।दोषान् किम्। खन्सु। अव्युत्पत्तिपक्षमाश्रित्येदम् ।व्युत्पत्तिपक्षे तु ओसि सुप्रत्ययान्तानां स्रोर्विसर्ग इत्येव सिद्धम् । भादौ तु नामिनो र इति।नचांतरंगत्वात्प्रथमं षत्वं स्यादिति वाच्यम्।अकृतव्यूहपरिभाषासत्त्वात्। कृतस्यापि निवृत्तिसंभवाच्च । अपदान्ते हि षत्वं हविष्षु इत्यादौ चरितार्थम्। पदान्ते रत्वम् । दोरैश्वर्यम् । सौ तु षत्वे सिलोपे च विसर्ग इत्युक्तपरिभाषाविषयः । भादौ षत्वात्परत्वाद्विसर्गो लभ्यते यद्यपि तथापि सजुषूतुसूपिसादेः । रविधानार्थं सूत्रम् । तुसूपिसादीनां विसर्गे सिद्धे दीर्घो न सिध्यति सजुष्शब्दस्य तूभयं पादादीनां षोडशानां पदादय आदेशास्तिरश्चादित्वाद्भवंति एवं हि बहुवचनादिपदसार्थक्यम् । अन्यथा स्पष्टार्थमुदोच्च् तिरश्चावित्येवावक्ष्यत् । यद्वा पादादयः पदादयश्च स्वतंत्रा एव बोध्या नतु स्थान्यादेशरूपा इति दिक् ॥ **धातोश्च झसे** ॥ अधिकारोयम् । चकारेण नाम्न इति षष्ठ्यंतं समुच्चीयते । स्कोराद्योश्चेति चकारोऽनुवर्तते । स च झसे इत्यस्याग्रे बोध्यः । स च पदान्ते इति सप्तम्यन्ते रसे इत्यनेन सहितं समुच्चिनोति । तेन त्रीणि निमित्तानि द्वौ कार्यिणौ । तथा हि धातोर्झसे पदांते नाम्नश्च रसे पदान्ते चेत्यधिकृतं बोध्यम् ॥ **मो नो धातोः** ॥ मान्तस्य धातोर्नो भवति झसे पदान्ते च । मान्तस्य नाम्नो नो भवति रसे पदान्ते च । प्रशान्भ्याम् । प्रशान्सु । सौ तु परत्वान्नत्वे कृते सिलोपः । प्रशान् ।पदान्ते प्रशानर्थः प्रशानासनं प्रशान्कल्प इत्यादि।पदांते किम्। प्रशामौ

धातोर्झसे नकारमकारयोरनुस्वारे विशेषाभावात्सामर्थ्यात् झसस्याभावलक्षणया वा वमयोरुदाहरणं बोध्यम्।चक्षण्वहे।चक्षण्महे अशंसन्।अचंकन्।पदान्ते किम्। चक्षमे । वमयोः किम् । क्षाम्यति । पुनर्धातुग्रहणान्नामापि धातुरूपमेव गृह्यते । तेनेह न । इदं किम् । पुनर्धातुग्रहणाच्च धातुरेव धातुर्गृह्यते । न नामधातुस्तेनेह न।अयमिवाचरन् । इदाम् । क इवाचरन् । किम् । नलोपस्तु नभवतीत्युक्तं प्राक् । न च विधानसामर्थ्यान्न भविष्यतीति वाच्यम् । पदान्ते तथात्वेऽपि रसे धौ विधानस्य चरितार्थत्वात् । हे प्रशान् । न च प्रशाम्शब्दस्याव्ययेषु पाठान्नोक्तमिति वाच्यम् । प्रशाम्शब्दस्य द्वैविध्यात् क्रियाप्रधानस्यासत्वार्थकत्वेन लिङ्गसंख्यानभिधायकस्याव्ययेषु पाठात् । कारकप्रधानस्य सत्त्वार्थकसंकतयोक्तरूपसंभवात् । ननु स्वरादीनां सत्वार्थकानामव्ययत्वादस्यापि सत्वार्थकस्यैवाव्ययत्वमस्तु । मैवम् । स्वरादीनामसत्वार्थकानामसम्भवात् । पाठबलादव्ययत्वस्वीकारात् । इह त्वसत्त्वार्थसंभवे सत्त्वार्थकस्याप्यव्ययत्वस्वीकारानौचित्यात् ॥ **होढः** ॥ नाम्नो हस्य ढो झसे रसे पदान्ते च । मधुलिड्भ्याम् । सौ तु । परत्वाड्ढत्वे सिलोपः । मधुलिड।गमनम् । उभयोः । मधुलिट्कल्पः । धातोर्हस्य ढो झसे पदांते च । लेक्ष्यति । अलेट् । रसे किम् । मधुलिहौ।झसे किम्।लिह्यात् । लिलिहुः । ननू भयोर्हस्य रसे झसे वाटोस्तु किं प्रत्याहारद्वयेन । मैवम् । झसे इत्युक्ते मधुलिड्रूपो मधुलिण्मय इत्यादावव्याप्तिः । रसे इत्युक्ते लेलिह्यादित्यादावतिप्रसंगः । ननु टठडेष्वन्यतमोस्तु किं ढविधानेन।मैवम् । झभांतत्वाऽभावेन-तथाद्ध इत्यस्याप्रवृत्तेः । लटि लेढि इत्यादावव्याप्तेः । ननु लेट्सि इतिस्थिते प्रथमं खसे चपा इत्यस्तु । मैवम्।येननाप्राप्ते च यो धविधिरारभ्यमाणोऽपवादो भवति । ननु लेड्धीत्यत्र ष्टुत्वात्परात्वात् झसे जबा इत्यस्तु मैवम् । प्राप्ते जबे आरभ्यमाणो ढलोपोऽपवादत्वात्प्रवर्तते ॥ **दादेर्घः** ॥ द् आदिर्यस्य तस्य दादेर्नाम्नो हस्य घो रसे पदान्ते च । गोधुग्भ्याम्।गोधुगागमनम् । उभयोः । गोधुङ्मयः । रसे पदान्ते किम् । गोदुहौ । दादेर्धातोर्हस्य घो झसे पदान्ते च ढस्यापवादः।दोग्धि।धोक्ष्यतीति ढत्वेपि सिध्यति। पदांते अधोक्।झसे किम् । दुह्यात्। अधोगित्यत्र तु असिद्धं बहिरंगमंतरंगे

इत्यटो सिद्धत्वादाद्यः । दामलिहमिच्छन्दामलिडित्यत्र तु दादेर्धातोर्नाम्न इत्युभयविशेषणाश्रयणसामर्थ्यान्नातिव्याप्तिः । यद्वा । धातुग्रहणद्वयमनुवर्तते । एकमाद्युच्चारणप्रतिपत्त्यर्थमाद्युच्चारणे दादेर्धातोरिति व्याख्यानादधोगिति सिध्यति । ननु कवर्गेष्वन्यतमो विधीयताम् । किं घविधानेनेति चेन्मैवम् । धोक्ष्यतीत्यादिसिद्धावपि दोग्धीत्याद्यसिद्ध्यापत्तेः । यत्तु दादेर्धातोर्घ इति पाणिनीयम्।दग्धुं दग्धेत्यत्र घत्वस्यासिद्धत्वाड्ढत्वं प्राप्तं घत्वविधानसामर्थ्यान्न भवति।यत्तु होढोऽदादेरिति छित्त्वाददादि भिन्नस्य ढत्वविधानं कृतं तन्न।दाम लेढीति दामलिट् इत्यत्र धुडित्यत्र च ढत्वाप्रसङ्गः । तस्मात्प्रथमपक्षो ज्यायान् । अपवादो वचनप्रामाण्यादिति धातोरिति वचनाद्दामलिडित्यत्र न घत्वम् । दादेर्धातुत्वाभावाद्दादेरिति वचनाड्ढत्वमपि न । अतो हस्यैव प्रयोगः स्यादधोगित्यत्राकारादित्वादव्याप्तिर्धातोरवयवो दादिरिति व्याख्यानेन परिहृता ॥ अत्रेदं वक्तव्यम् । धातोरिति मास्तु पदस्येत्यनुवर्त्य पदस्यावयवो दादिरिति व्याख्येयम् । अधोगित्यत्रान्तावयवो दादिर्दोग्धेत्यत्राद्यवयवोदादिः । यद्वा दादेरिति हस्य विशेषणं दादिर्यो ह इति । येन नाव्यवधानमित्येकेन व्यवहितेऽपि दुहेस्त्वप्राप्तो विकल्पस्तेन दामलिडित्यत्र नातिव्याप्तिरिति दिक् ॥ **द्रुहादेर्वा** ॥ वृत्तिः प्राग्वत् । मित्रध्रुड्भ्याम्।मित्रध्रुग्भ्याम् मित्रध्रुडर्थः । मित्रध्रुगर्थः । द्रोढा । द्रोग्धा । अदोध्रोट् अदोध्रोक् । एवं मुहूष्णुहूष्णिहः । दिवाद्यंतर्गणोयं द्रुहादिः । नचैवं गणनिर्दिष्टत्वादप्राशितपेति निषेधाद्यङ्लुकि न स्यादिति वाच्यम् । तस्यानित्यत्वाभ्युपगमात् ॥ **नहोधः** ॥ डस्यापवादः । वृत्तिः प्राग्वत् । उपानद्भ्याम् । उपानदर्थः । उभयोः उपानद्रूपः । नद्धा । नत्स्यति । अनानत् । तथादेष्वन्यतमविधानेन नत्स्यतीति सिद्धावपि नद्धेत्यादि सिद्ध्यर्थं धविधानम् ॥ **छशषराजादेः षः** ॥ छान्तस्य शान्तस्य षान्तस्य राजादेश्च नाम्नः षो रसे पदांते चाधातोर्झसे पदान्ते च छांतं नाम नास्ति क्वौ छस्य शविधानात् । परेषां विचि यदि प्रछ् यदिनामास्ति तदास्माकमपि भजां विणिभवति । तत्त्वप्रट् । अकृतव्यूहपारिभाषया द्वित्वं न प्रवर्ततेऽसिद्धपरिभाषया न वृद्धिः । विणिनिमित्ता वृद्धिः रसनिमित्तं षत्वं धातोः । प्रष्टा पृष्टः ।

अपामट्।शांतम् । विड्भ्याम् । विडागतः । विड्रूपः । द्वौ विशौ वैश्यमनुजा-
वित्यमरे । धातोः । वेष्टा । अवेवेट्।षांतम् । विष् । विप्रुट् । पदान्ते विप्रुडेहा
रसे किम्। विषौ । षस्य षविधानमादेशांतरनिवृत्त्यर्थं तच्च खसे चपा इति
चयः । पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरानीति न्यायात् ।
न्यायो हि सन्निहितेनैव बाध्याकांक्षापूर्तौ व्यवहिते गमनं निरर्थकमिति द्विड्।द्वे
इत्यत्र झभे जबाः । अद्वेट्। अद्वेडित्यत्र वावसाने चाभवत्यत्र ड्रूण इति डकार-
निर्देशोऽप्यनुकूलः । अयं चानिषेधो न स्यादौ लक्ष्यानुसाराच्च । नादावित्यतो
नेति स्यादाविति च मण्डूकप्लुत्याऽनुवर्त्य स्यादौ नेति व्याख्यानाद्वा । तेन
विप्रुट्सु । राजादयस्तु राज्यज्मृज्मृज्वृश्भ्राज्परिव्राजोऽष्टौ ॥ विराड्-
भ्याम् । विराडर्थः।विराण्मयः । विभक्त्यन्तात्तद्धितः।पदान्तत्वाद्वावसान इति
जबचपौ । प्रत्यये ञमे जबस्यापीति टडयोर्णः। धातोः अराराजीत् अरा
राट्।परत्वात्पे निमित्ताभावेन शस्य सत्वे स्कोरिति सलोपः । वृक्षवृड्भ्याम् -
सृगृत्विजोस्तु दिशादिपाठः षत्वबाधनार्थः । असृज् शब्दस्तु न सृजेरसेरौ-
णादिकऋज्प्रत्यये सिद्धः । लाक्षणिकत्वान्न गृह्यते । राजृसाहचर्याद्भ्राजृ-
दीप्ताविति गृह्यते।नत्वेजृसहचरितस्तेन तस्य कुत्वमेव । विभ्राड्भ्याम् ।
परिव्राड् । विण्णन्तो गृहीतः । तेन क्विबन्तस्य तु कुत्वमेव । परिव्रग्भ्याम् ।
॥ **षढोः कः से** ॥ पंचाधिकारो निवृत्तः।से इत्यादिनिमित्तान्तरोपादानात् ।
षढयोः कत्वं सकारे।क्ष्यति।लेक्ष्यति।अक्षाक्षीत्।अलिक्षत् । से किम्।कष्टा।षढोः
किम् । तक्ष्यति।धातोः किम् । विप्रुट्सु।ननु लिट्सु इत्यत्र धातोरित्युक्तेऽपि
प्राप्नोति नामत्वेऽपि धातुत्वानपायात् । सत्यम् । द्वितीयं धातुग्रहणमनुवर्त्य
धातोरेव धातोरिति व्याख्येयं न तु नामत्वविशिष्टस्य परत्वात् । खसे चपा
इति तु न युक्तमस्य चपापवादत्वात् सीति तु वक्तुं युक्तम्॥**सस्तोऽनपि** ।
धातोः सस्य तः स्यात्से।वत्स्यति से । किम् । वस्ता।सः किम् । रिप्सते ।
धातोः किम् । वेधःसु । नास्ति अप् यस्मिन्निति बहुव्रीहौ अप्निमित्तादन्य-
स्मिन् अपोऽन्योऽनप् इति तत्पुरुषे च पर्युदासाश्रयणादप्सदृशे प्रत्यय इत्यर्थ-
लाभः । उभयथापि वस्से आस्से इति सिद्धम् । सुवः साधुरित्यत्र नाति
प्रसङ्गः । सुवः स्तिरित्यत्रापि न संयोगवद्विप्रयोगस्याऽपि विशेषावगतिहेतु-

त्वात् । सवत्सा सावर्करा सकलभा धेनुरानीयतामित्युक्ते यथा विशेषावसायो भवति तथा सावर्कराऽकलभेत्याद्युक्तेप्यविशेषावसायो भवति । यस्या वत्सादिसम्बधः संभाव्यतेऽवत्सापि सैव गृह्यते । एवं यस्यापूसंबंधः संभाव्यतेऽनपूशब्देनापि स एव धातुप्रत्ययो गृह्यते न सुप्।यद्वा नेति स्यादाविति चानुवर्त्त्य स्यादौ नेति व्याख्येयमुक्तसूत्रद्वये यत्र अदेपू सि अवावसू सीति स्थिते कत्वतत्वे प्राप्ते परत्वात् सिलोपान्न स्तः।नचानपीति प्रसज्यप्रतिषेध एवास्त्वितिवाच्यम् सुवस्साधुरित्यत्रातिप्रसङ्गात् । अनन्वितसमासवाक्यभेददोषप्रसङ्गाच्च ॥ **दिपि** ॥ धातोः सस्य तः स्यादिपि । अशात् । अचकात् । दिपि किम्।शास्ति । सस्य किम् । अहन् ॥ **सिपि वा** ॥ धातोः सस्य वा तः सिपि दिपि।अशाः, अशात् । अचकाः । अचकात् । सिपि किम् । चकास्थः।सस्य किम् । अयाः । दिपि किम्।दिप्सहचारित एव सिपि यथा स्यादेवमर्थं दिपि तु पूर्वेण नित्यमेव । अतश्चकास्मीत्यादौ नातिव्याप्तिः । मण्डूकप्लुत्या पदांते इति वानुवर्त्यं सिपि सस्य दांतत्वं तु लङ्येव संभवति ॥ **दः** ॥ धातोर्दस्य सिपि रो वा पदांते । अवेः । अवेत् । अभिनः । अभिनत् । दस्य किम् । अवेत् । पदांते किम् । वेत्सि । रो रात्रिष्वित्यतो मण्डूकप्लुत्या र इत्यनुवर्तनीयं न निकटं त्वनंतरं त इति । तेनावर्वोः । अपास्याः । अनर्घाः इति सिद्धम् । रिलोप इत्यस्य प्रवृत्तिसंभवात् । सानुवृत्तौ दीर्घरलोपयोरसम्भवात् । दोषादित्वकल्पने गौरवाच्च । **खसे चपा झसानाम्** । स्पष्टम् । निश इति अव्युत्पन्नं नाम । निशाया आदेशो वा । तस्य सुपि तालव्यशस्य तालव्यश्चः । निच्शु । नचात्र छशषेति षत्वेन भाव्यं धातोरित्यनुवर्त्य शान्तस्य धातोर्नाम्न इति व्याख्यानात् । ईड्टे स्थानसाम्यात् षस्य टः । षट्सु । भुत्सु।बस गतौ।क्विप्।खस्य कः । वक्षु । दिक्षु । दिश् सु इति स्थिते दिशामित्यनेन महाप्राणस्याघोषस्य शस्य तादृश एव खस्तस्य कः । ककुप्सु।लप्स्यते । झसानां किम् । स्रन्सु । वार्षु । पुंसु । चपा इति किम् । झसानामिति स्थानषष्ठीनिर्देशात् स्थानसाम्यात् चपस्य विधेयत्वसंभवात् । नैवम्।छजझपानामपि सत्त्वात् । खसे किम् । वेद्मि । द्विष्यात् । झसानां चपा खस इति वक्तव्ये विपरीतोच्चारणं वैचित्र्यार्थम् ॥ **झबेजबाः** ॥

झसानाम् । निजूभ्याम् । षड्भ्यः । भुद्भ्याम् । पयोमुग्भ्याम् ।ककुब्भ्याम् । झसानां किम् । खन्भ्याम् । गीर्भ्याम् । झबे किम्।खञ्जौ । गिरौ । झभ इति पाठे भृज्जौ लज्जत इति न सिध्येत् । सस्तोऽनपीत्यारंभसामर्थ्यात्सस्य तवर्गेण सावर्ण्याभावात् चुत्वेन शे कृतेऽनेन जः।शपेरौणादिकदमत्यये शब्दः। वाग्ग्मी।वाचो ग्मिन् । चस्य कुत्वेन कः । तस्य झबे गः। **वावसाने**॥पदस्यान्ते वर्तमानानां झसानां जबाश्चपाश्च वा स्युः । राग् राक् । ककुप् । ककुब् । भुद् । भुत् । वाक् । वाग् । पदस्य किम् । मरुतौ । अंते किम् । जातः । गतः । झसानां किम्।सुगण् । माङ् । अवसातिरवसानम्।षोंऽतकर्मणि भावे युट् समाप्तिरन्त इति यावत् । अवसानशब्दस्यान्तावयवार्थकस्यावयविनि साकांक्षस्य पदस्यावयवः संबध्यते।शब्दान्वाख्यानप्रसङ्गात् । व्याकरणे हि प्राधान्येन पदान्यन्वाख्यायन्ते। तदुक्तं पार्दाकवे॥पदानीह संस्कृत्य संस्कृत्योत्सृज्यंते येषां यथेष्टाभिसंबंधो भवति । आहर पात्रं पात्रमाहरति । अवसानशब्दस्यांतावयवार्थत्वं लोकेऽपि प्रसिद्धम्।तच्छिष्याध्ययननिवेदितावसानानां कथावसान इत्यादौ वाक्यसंस्कारपक्षेऽपि पदसंस्कारद्वारैव वाक्यसंस्कारो भवति न साक्षात् । वाक्यस्य क्वचिदप्यनुपादानात् द्विधा द्विधा सुप्तिङंतं चतुर्द्धा सुप्तिङंतं प्रादि अव्ययं पञ्चधा सुप्तिङंतप्रादिअव्ययकर्मप्रवचनीयम् । कैश्चित्पदं भिन्नं चतुर्द्धा पंचधापि वा । अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवदिति सिद्धान्तात्। यद्वाऽवसीयते व्युत्पाद्यत्वेन निश्चीयते इत्यवसानं पदं कर्मणि युट् । यद्वाऽवसीयते प्रतिपाद्यतेऽर्थोऽनेनेत्यवसानं पदं साधने युट् । लोके हि पदैः पदार्थाः प्रतिपाद्यंते।पदे झसानामिति लब्धम्। आदिजबानामिति खसे चपा इति तथे इत्यादिनिर्देशादादिमध्यानामग्रहणे ज्ञाते परिशेषादंत्यानामेव ग्रहणम् । यद्वा झभान्तस्येत्यतोऽतग्रहणमपकृष्य वचनव्यत्ययेन योजनीयम्।नन्वेवं पदांते इत्येवानुवर्तनीयं किमवसानग्रहणे नामैवम्।पदांते इत्यधिकारस्य निवृत्तत्वान्मंडूकप्लुत्याऽनुवर्त्तते त्वधिकरणाभावादवसानग्रहणस्य त्यक्तत्वाद्वाग्रहणस्य वैयर्थ्यात् । जबचपयोर्विधानादेव। विकल्पस्य सिद्धत्वादुभयोर्विकल्पः । प्राधान्ये तु रूपत्रयप्रसंगादनुवृत्त्यर्थं वाग्रहणस्थापने तु क्लेशाधिक्यात्। ननु वाग्रहणाभावेऽनंतरत्वाज्जबानामनुवृत्तिः

स्यान्न चपानां व्यवधानादिति चेन्न । अनन्तरस्येति न्यायस्य बाधात् । ङसिरदिति निर्देशाच्चपा अबे इति सूत्रारंभाच्च।अन्यथा जबानां सत्त्वाच्चपाना-मसत्त्वात् किं सूत्रेण । सातिशब्दवत्सानशब्दस्यापि अवसानवाचित्वात् । व्यर्थमेवेति । एवं हि विरामोऽवसानमिति सूत्रं व्यर्थं संज्ञां विनापि लोके प्रयोगदर्शनात् ॥ **आदिजबानां झभांतस्य झभाः स्ध्वोः** ॥ झभा-न्तस्यादौ वर्तमानानां जबानां झभाः स्युः सादौ भादौ ध्वे पदांते च।मंडूक-प्लुत्या भिदपामित्यतोभीत्यनुवर्तते।पदांते इति च । आदिशब्दस्यावयववाचि-त्वादवयव्याकांक्षायां धातोर्नाम्नश्चेत्याक्षिप्यते । धुक्षु।धुग्भ्याम् । धुक्ष्यति । धुग्ध्वे । अधुग्ध्वे । ध्वेति ध्वे ध्वमोः सामान्यग्रहणम्।पदान्ते।धुगासनम् । अधोक् । वकारविशिष्टस्य ग्रहणाद्दोग्धीत्यादौ न । जबेति किम् । योत्स्यते । झभांतस्येति किम्।दास्यति । धातुसंबंधं झसग्रहणं नेह संबध्यते। स्ध्वोर्ग्रहण सामर्थ्यात् । आदिजबानां कथं निर्विग्रहरूपमिदं विज्ञायते । न तावदादयश्च ते जबाश्चेति । गर्दभमाचष्टे गर्दबित्यत्र गकारेऽतिव्याप्तेः । आदेः परा जबा इत्यपि न धुगित्यादावव्याप्तेः । आदावुपदेशावस्थायां जबा इत्यपि न गर्द्धबित्यादावतिव्याप्तेः नामधातूनामुपदेशा-भावात्।अतः पारिशेष्यादादौ धातुसंज्ञाप्रवृत्तिकाले जबानामिति व्याख्येयम्। दामलिहमिच्छति दामलिडित्यत्र दकारे गर्द्धबित्यत्र गकारे चातिव्याप्तिः । नैवम्।अंत्यबाधेऽन्त्यसदेशस्येति परिभाषणात्। यद्वा । स्ध्वादिपरत्वं जबानां-विशेषणम्।येन नाव्यवधानन्यायेन द्वाभ्यां व्यवधाने प्राप्नोति।दुहेस्त्वनुवर्तना-द्दुहेरनुवृत्तिरूर्यंतरोपलक्षणार्था । तेन भंत्स्यतीत्यादि सिद्धम्।यद्वा बध्नाति। बध्यादित्यादिषु नकारस्यादर्शनात्।पटो दग्ध इति वदेकदेशदाहे समग्रदाहव्यप देशवत्।कचिन्नस्यादर्शनात् । सर्वत्राभावांगीकाराद्व्यन्तरमस्त्येव।यद्वा । झभां-तस्येति न धातुविशेषणं किं तु जबस्य।सूत्रे लिङ्गवचनमतंत्रमेकवचनमित्यु त्सर्गत एव वचनम्।यद्वा पदसंस्कारपक्षे द्व्यन्तरनिरपेक्षस्य व्युत्पादनादेकवचनं बहिरंगेण पदान्तरयोगेनांतरंगस्य संस्कारस्य न निवृत्तिः।तेन ससमीपवर्त्तिनो जबस्य झभ इत्यर्थः।पक्षद्वये आदिग्रहणं चिंत्यम् । जबानामित्यत्र दगबानां झभा इत्यपेक्षितम्।आद्ययोरदर्शनात् ।एकाचो बशो इत्यत्रैकाज्ग्रहणं चिंत्यम् ।

यङ्लुक्यप्राप्तेः । **तथोर्द्धः** ॥ झभान्तात्परयोस्तथयोर्धः । लीढः । लीढा। अबुद्ध।अबुद्धाः।दोग्धि।देग्धि।दिग्धः।जग्धः।अलब्धः।अलब्ध्वा।झभान्तात्किम् । भूतः। सिक्थम्।तथोः किम् । बध्नाति।राध्यति । ननु धत्तो धत्थ इत्यत्र कुतो नेति चेन्न। दादेरित्यालोपस्य स्थानिवत्वेन झभांतस्याभावात्।यद्वा-नहो ध इत्यत्रतंत्रेणावृत्त्या वा ध इति च्छित्त्वा तदत्रानुवर्त्य दधातेर्नेति व्याख्या-नात्।**अव्ययाद्विभक्तेर्लुक्**॥च वा कृत्वा नमस्कृत्य भोक्तुमित्यादि अव्य-येति महासंज्ञाकरणेनान्वर्थसंज्ञाविधानात् । तदंतस्यापि भवति । तेन परमो च्चैस्तदंतस्य प्रधानस्य भवति। तेनात्युच्चैःसावित्यत्र ना।यद्वा। विहितविशेषण-मिदम् । अव्ययाद्विहिताया विभक्तेर्लुक्।परमोच्चैरित्यत्रोत्तरपदप्राधान्यादस्त्य-व्ययाद्विधानमत्युच्चैःसावित्यत्र त्वन्यपदार्थस्य प्राधान्यादव्ययार्थस्योपसर्जनत्वा-न्नास्त्यव्ययाद्विधानम्।अके तु सति तन्मध्यपतितन्यायेनास्त्यव्ययत्वमुच्चकै-रिति विभजनम् । विभक्तिर्विभागः।वाक्ये तु स्यादित्यादिरूपेण द्विधा विभा-गोऽस्ति।यद्वा।विभज्यते विविच्य बोध्यते कर्तृकर्माद्यर्थोऽनयेति विभक्तिः। स्यादित्याद्योरेव योगरूढिः। योगमात्रे तु । कृत्तद्धितेष्वतिप्रसक्तम्।तेषामपि कर्तृकर्माद्यभिधायकत्वात्।अत्र हि स्यादेः सिप् इति वा वक्तव्यम्।विभक्तिग्र-हणं यत्र स्यादित्याद्योः। सामान्यग्रहणम्।तत्र युक्तमविभक्ति नामेति।यथा इह तु स्यादेरेव संभवात्।तन्न । युक्तम्।न चोत्तरत्र कुंभं करोतीत्यादौ त्यादेर्लु-ग्विधानार्थमिति वाच्यम् । तत्र धातोरेव प्रत्ययविधानान्न विभक्त्यन्तात्। तर्ह्यत्रापि नाम्नामिति वचनाद्विभक्त्यन्तानामेव समासोऽस्तु। मैवम् । अन्वय इति वचनादन्वयश्च विभक्त्यंतानामेव सम्भवति न केवलानाम्।लोपानुवृत्ति-संभवे लुग्ग्रहणं सर्वलोपार्थम् । अलिङ्गमसंख्यमव्ययमिति पूर्वाचार्यवचनादस-त्वार्थकेन च कारकानभिधायित्वाद्विभक्तेः प्राप्तेरेवाभावात् किं लुग्विधानेन। सत्यम्।इदमेव लुग्विधानं ज्ञापयत्यव्ययेभ्यः। सप्तापि विभक्तयः स्युरिति । यद्वा।संख्याकारकाद्यभावेऽपि सप्तानामप्येकवचनान्येव भवन्ति।तस्य वचनस-र्वनामत्वेनौत्सर्गिकत्वेन एकत्वभावे च प्रवृत्त्यभ्युपगमात् । वा टाङ्योरित्या-द्यनुकूलम्।यद्वा लिंगार्थे प्रथमेति प्रथमवचनान्तरं द्वित्वबहुत्वयोरभावात्।स्वः। प्रातः। उच्चैः। इत्यादौ विसर्गविधानफलं पदसंज्ञायाः । **समासप्रत्य-**

यर्थोः ॥ समासे वर्तमानाया विभक्तेः प्रत्यये च परे लुग्भवति।अधिहरि। राजपुरुषः। पंचाग्नि।धवखदिरौ। नीलोत्पलम्। चंद्रशेखरः। औपगवः। दाक्षिः। समासे किम्। राज्ञः पुरुषः। प्रत्यये किम्। उपगोरपत्यम्। विभक्तेः किम्। ग्राममागतो ग्रामागतः। समासे वर्तमानस्याप्याङो न लुक्।एकापि सप्तमी विषयभेदाद्भिद्यते। एकरूपान्वयाभावेऽपि निपातनात्समासः। यद्वा।भावे सप्तमीयं समासे सति प्रत्यये च सतीति प्रतीयते।कर्तृकर्माद्यर्थोऽनेन प्रत्ययः। इण् गता।स्वरादः।यद्वा।अय गतावन्तर्भावितण्यर्थः। प्रत्ययतेः प्रत्याययत्यर्थं पचाद्यः।यद्वाऽऽभ्यां ण्यन्ताभ्यामेव पचाद्योऽस्मादेव निपातनाद्ध्रस्वः। स च स्यादित्याद्यावादिकृत्तद्धितेषु योगरूढोऽतःपञ्चकनामार्थपक्षे तत्र नातिप्रसंगः। स्यादेतत्।वृत्तौ विभक्त्यर्थस्यांतर्भावादुकार्थेनेति न्यायेन विभक्तेर्निवृत्तिः सिद्धा। यथा। द्वंद्वे चस्य बहुव्रीहावन्यपदस्य। तथा हि।परार्थाभिधानं वृत्तिः। परः। स्वार्थादन्योऽर्थः।यद्वा।स्वस्मात्परस्य शब्दस्य योऽर्थः स परार्थः। तस्याभिधानं प्रतिपादनं राजपुरुष इत्यत्र राजपदं हि स्वार्थविशिष्टपुरुषशब्दार्थं प्राधान्येनाह। पुरुषशब्दोऽपि राजशब्दार्थविशिष्टं प्राधान्येनाह। अर्द्धपिप्पली निष्कौशांबिरित्यत्र पूर्वं पदमुत्तरपदार्थ विशिष्टस्वार्थं प्राधान्येनाहोत्तरपदमपि स्वार्थविशिष्टं पूर्वपदार्थप्राधान्येनाह।एवमव्ययीभावेऽपि पंचाग्नीत्यत्र समाहारद्विगौ द्वे अपि पदे समाहारं प्राधान्येनाहतुः। परस्परं तयोः पाष्ठिकः संबंधः। तद्धितार्थद्विगावपि द्वे पदे तद्धितार्थं प्राधान्येनाहतुः। तयोः परस्परं पाष्ठिकः संबंधः। धवखदिरावित्यत्रेतरेतरद्वंद्वे अपि पदे उभावर्थौ प्राधान्येनाहतुः। समाहारद्वन्द्वे तु समस्यमानानि पदानि समाहारं प्राधान्येनाहुः। परस्परं संबंधाभावस्तु द्विगोर्विशेषः।कर्मधारये तु पूर्वोत्तरपदे उत्तरपदार्थं प्राधान्येनाहतुस्तयोश्च परस्परमेकत्र वृत्तित्वं संबंधः। चित्रग्वादौ बहुव्रीहौ समस्यमानानि पदान्यन्यपदार्थं प्राधान्येनाहुस्तेषां परस्परं पाष्ठिकः सम्बन्धः। उत्सर्गतो रीतिरियम्। औपगव इत्यादौ प्रकृतिः स्वार्थविशिष्टं प्रत्ययार्थं प्राधान्येनाह। प्रत्ययेऽपि प्रकृत्यर्थविशिष्टं स्वार्थं नाहेति दिक्।इत्थं विभक्त्यर्थस्य वृत्तावन्तर्भावेण स्वतो निवृत्तौ सत्यां किमनेन न च कार्यशाब्दिकप्रतेनेदं च युक्तं

पूर्णक्रांतादीनां लोपस्याविधानेन तन्मतस्यात्रानंगीकारदर्शनादिति उच्यते । प्रह्मोक्तिः । समिदाहरणम् । ककुबवलोकनमित्यादौ पदकार्यार्थं स्वाभाविक्या अपि निवृत्तेः । सूत्रेणानुविधानं अन्यथा प्रत्ययलक्षणं न स्यात्सुपो धातुप्रातिपदिकयोरिति सूत्रं त्यक्त्वा अव्ययादाप्सुप इत्यस्याग्रे समासे प्रत्यये इति सूत्र प्रणेये । सुपः लुगिति चानुवर्तनीयम् । **अलुक् क्वचित्** ॥ समासे सति प्रत्यये च सति क्वचिद्विभक्तेरलुक् स्यात् त्वचिसारः उरसिलोमा क्वचित्किम् । त्वक्सारः । मूर्द्धशिखः समासे किम् । त्वचि वर्तते प्रत्यये आमुष्यायणः । अमुष्यकुलिका अमुष्यपुत्रिका । माह्लेतरे इत्यादि । ननु त्वचिसार इत्यादीनि वाक्यान्येव भवन्तु न तु समास इति चेन्मैवम् । त्वचिसारस्यापत्यं त्वाचिसारीत्याद्यसिद्धिप्रसङ्गात् । कस्मान्नाम्नस्तद्धितोत्पत्तिरिति सिद्धान्तात्पक्षे कृच्छ्रमुक्त इत्याद्यनिष्टरूपप्रसङ्गाच्च **अव्ययीभावात्** ॥ अव्ययीभावात्परस्या विभक्तेर्लुक । अधिहरि । अपविष्णु । उपसमित् । अव्ययेति किम् ! कृष्णश्रितः । विभक्तेः किम् । उपराजम् । अव्ययीभावादयं अम् न विभक्तिः । नन्वलुगेवानुवृत्त्यतामनंतरत्वान्न प्राप्तिविरहात् लुक् । प्राप्तिपूर्वको ह्यलुक् । नन्वव्ययादिति लुक्प्राप्तिरस्ति अव्ययीभावस्याप्यव्ययत्वं तदप्यन्वर्थसंज्ञाविज्ञानादनव्ययमव्ययं भवतीत्यव्ययीभावः । ज्वलादेर्णः । अनव्ययस्याव्ययत्वेन भवनमिति वा । अस्मिन्नेकार्थीभावे इति वा च्विः । भावे आधारे वा घञिति । मैवम् । तत्पुरुषादिसंज्ञावदस्या अन्वर्थत्वाभावात्तत्त्वे तु योगविभागो मास्तु अव्ययीभावादतोमनत इत्येक एव योगोऽस्तु लुक् तु अव्ययाद्विभक्तेरित्यनेन सिद्धमेव अत एव योगविभाग एव ज्ञापयत्यत्रान्वर्थसंज्ञा नास्तीति । **अतोऽमनतः** ॥ अत इत्यस्य विशेषणत्वात्तदन्तविधिः । अदंतादव्ययीभावाद्विभक्तेरलुगभिन्नाया स्तस्या अमादेशश्च । उपकृष्णम् । उपकृष्णात् । अव्ययेति किम् । ग्रामगतः । अतः । किम् । उपसमित् । नन्वमादेश एव लुको बाधकः स्यात्किमलुग्विधानेन । मैवम् । टाङसिङीनां लुक्प्रसंगात् । प्रवर्तमानो ह्यम् । लुको बाधकः स्यान्नात्वप्रवर्त्तमानोऽपीत्यतो वाक्यभेदेनोभयविधानं लुको भावो लुकोन्यो लुको विरुद्धो वेति त्रिष्वपि पक्षेषु लङ्नेति फलितम् । जसुङसा-

दिषु सर्वादेशार्थमम् विधानमन्यथाऽमेव व्यधास्यत् । अकाररूपाया अन्दता याश्च विभक्तेरभावादसेरत् पर्युदस्यते । नन्वकारादेः पर्युदासोऽस्तुमिवं सप्तम्यभावात् । यस्मिन्विधिस्तदादौ वर्णग्रहणे इति वचनात्सप्तमीनिर्देशे-तदादिविधिरस्ति । अनत इति तु षष्ठीनिर्देशः । यदि तु अव्ययीभावाद्व-चनत्रयात्मिकाः सर्वा विभक्तयः स्वीक्रियंते । तदाऽनत इत्याद्युपलक्षणम् । वचनत्रयस्यैकवचनांगीकारे त्विदमेव शोभनम् । उपराजमित्यादावप्रत्ययस्य समासोत्तरपदान्तरभावादम् ॥ **वाटाङ्क्योः** ॥ अदंतादव्ययीभावाट्टाङ्क्यो-रम् वा । उपकुंभेन वा कृतमुपकुंभमुपकुंभे वा निधेहि । अव्ययेति किम् । राजपुरुषेण । अदंतात्किम् । अधिस्त्रि । सुमद्रमुन्मत्तगंगमित्यादौ सप्तम्या नित्यमम् । व्यवस्थितविकल्पाश्रयणात् । स नपुंसकं सन्निहितोऽव्ययीभाव-स्तच्छब्देन परामृश्यते इत्याहुः । सन्निधानादेवानुवृत्तिलाभे सिद्धे स्पष्टार्थं सग्रहणमिति ध्येयम् । अव्ययीभावो नपुंसकलिङ्गो भवति । गाः पाति वा गोपस्तस्मिन्नधिगोपम् । उपग्रामणि । उपचर्म । नपुंसकस्येति ह्रस्वः । निर्मक्षिकमुपनदि तु अन्यार्थे ह्रस्व इति ह्रस्वः । स किम् । राजपुरुषः । न स्त्री पुमानिति नपुंसकम् । स्त्रीपुंसशब्दस्य पुंसूकभावोऽस्मान्निपातनात्सहा-दित्वाद्वा ॥ **एकत्वे द्विगुद्वंद्वौ** ॥ एकत्वे वर्तमानौ द्विगुद्वंद्वौ नपुंसकलिंगौ स्तः। पंचाग्नि।द्विबाहु । संज्ञापरिभाषम् । पाणिपादम् । एकत्वे किम् । पंच-कपालः पुरोडाशः । रामकृष्णौ।द्विगुद्वंद्वौ किम् । चित्रगुःरक्तलता । एकत्व-संख्याविशिष्टस्य वाचको भावप्रत्यये एकत्वं प्रथमासंख्या । सर्वं वाक्यं सावधारणमिति न्यायेन एकत्वे एव समाहार इति यावत् । समाहारस्यै-कत्वादतः पंचकपाल इत्यत्र नातिप्रसंगः । द्वौ गावौ शब्दौ यस्मिन्स द्विगु-रित्यन्वर्थसंज्ञाबलाद्बहूनां न द्विगुः द्विमासजातः । द्व्यहजातः । द्वयो-र्मासयोरह्नोर्वा समाहारो द्विमासम् । द्व्यहः । तत्र जातः द्विशब्दस्य द्वित्वं पूर्वपदस्येतोऽमुत्तरस्य अः निपात्यतेऽस्मान्निपातनात्सहादित्वाद्वेति दिक् ॥

हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ।
रघुनाथाभिधो व्याख्यां युष्मत्पादस्य वाडवः ॥

इति युष्मत्पादः ॥

## कारकपादः ६.

॥ **लिंगार्थे प्रथमा** ॥ लिंगं च अर्थश्चानयोः समाहारः लिं-गार्थं तस्मिन् अर्थे प्रथमेत्युक्ते कस्यार्थे इत्याकांक्षायां यस्मात्स्या-दिविधिस्तस्य नाम्नोऽर्थे नामार्थश्च नियतोपस्थितिको यस्मान्नाम्नो योऽर्थो नियमेन भासते स तस्यार्थः। आमंत्रण इत्यस्यारंभान्नियतत्वलाभो लिंगग्रहणाच्च अनियतलिंगार्थं हि तत् । नामार्थो द्विविधः । अलिंगा-संख्यो नियतसंख्यश्च । आद्ये स्वर् पुनर् उच्चैः। पदत्वाद्विसर्गसिद्धिः। ननु र इत्यनेन रस्थानिकविसर्गस्य रविधानाद्विसर्गो लभ्यते किं प्रथम-येति चेन्नाभ्रातर्गच्छ। मातर्नमामीत्यादौ चरितार्थत्वात्सांतेऽपि तस्यावश्य-कत्वाच्च। अंतेवासी चितिः कुलम्। एषु लिंगं नामार्थो नियमेन भानात्। लिंगं तु नामार्थव्यतिरेकेण नास्तीति लिंगमात्राधिके नामार्थे प्रथमाविधानं न कारकसंबंधाधिके तयोर्नाम्नोर्नियतभानाऽभावात्। तटः। तटी। तटम्। यदित्वर्थशब्दो वृत्तिविषयपरः। वृत्तिस्तु शक्तिर्लक्षणा च।गौणी तु लक्षणांत-र्भूता पृथग्वाऽस्तु। त्रिकं च नामार्थ इत्याश्रीयते।तदा लिंगे इत्यपि मास्तु। लक्षणाविचित्रत्वेऽपि न क्षतिर्नियमांशत्यागात्। शक्यं लक्ष्यं गौणं च पुँल्लिंगं स्त्रीलिंगं नपुंसकलिंगं च। लक्ष्यमिति वैचित्र्यं शक्ये एवेति नियमस्य पुंस्त्वादिना लिंगस्य वाच्यतेति नियमस्य च त्यागात्। लिंगत्वेनैव लिंगस्य वाच्यताभ्युपगमात्। खारी। द्रोणः। आढकमित्यत्र नामार्थ एव प्रथमा। परिमाणस्य नामतो नियतभानात्। द्रोणो रेणुका व्रीहिरित्यत्र तु पदान्त-रयोगाद्द्रौणत्वावगतावप्यंतरंगसंस्कारस्य न निवृत्तिः। यद्वा। द्रोणादिश-ब्दानां प्रथमत एव तत्परिमिते लक्षणा। लाक्षणिकस्याप्यर्थे स नामार्थत्वे-नाभ्युपगमात् प्रथमासिद्धिः। एवं गौर्वाहीकः। सिंहोमाणवक इत्यादावपि बोध्यम्।एको द्वौ बहव इत्यत्र। संख्याया नाम्नैवाभिधानान्नार्थे यदेकत्वादि तस्मिंस्तस्याविधानात्प्रथमा न स्यात्।मैवम्। न केवला प्रकृतिः प्रयोक्ति-व्येति नियमात्।किंचिद्वचनं प्रयोक्तव्यं तन्न। प्रकृतिविरुद्धमनन्वयमसङ्गाद-तोऽनुवादकप्रयोगस्यैव न्याय्यत्वादत्रावशिष्टं सोनः पुंस इत्यतो बोध्यम् ॥ इत्थं प्रातिपदिकार्थलिङ्गवचनपरिमाणमात्रे प्रथमेति पाणिनीयसूत्रे प्रथमावि-भक्तिर्लिङ्गार्थवचनेति कालापसूत्रे च । अर्थे प्रथमेत्येव सारं विभक्तिलिंग-

वचनशब्दानां वैयर्थ्यात् । ननु चितिरित्यादावस्तीत्यध्याहार्यं तेनान्योक्तेः इति सिद्धा प्रथमा किमनेनेति नैवम् । अध्याहारेण गौरवाद्वैयर्थ्याच्च । 'सत्यं ज्ञानमनंतं ब्रह्म । न सत्ताज्ञानानंदवत् शुक्लोयं न रक्तः' इत्यादौ विशेषणान्तरनिवृत्तिफलके वाक्ये क्रियाध्याहारस्य नावश्यकत्वात् । ननु तस्मात्सिऔजसित्यनेन विभक्तीनां विहितत्वादिदं प्रकरणं वृथेति चेन्न । सिद्धे सत्यस्यारंभस्य नियमार्थत्वात् । नियमे हि एवकारः कल्प्यः । स यस्यायं ततोऽन्यत्रावधारणमिति सिद्धान्तात् नियमोऽपि द्विविधः । विभक्तिनियमोऽर्थनियमो वा नामार्थे एव प्रथमा कार्ये एव द्वितीया कर्तृकरणयोरेव तृतीयानान्येति विभक्तिनियम एवमग्रेऽपि । अत्र पक्षे परस्पराव्ययेभ्यश्च न प्राप्नुवन्ति । अर्थनियमस्तु नामार्थेप्र थमैव कार्ये द्वितीयैव कर्तृकरणयोस्तृतीयैवेत्येवंरूपोऽत्र पक्षे अर्थो नियतो न विभक्तय इति अव्ययेभ्यो भवंति । विभक्तिनियमे तु नामार्थे इति प्रथमैव भवति । तावतैवाव्ययाद्विभक्तेरित्यस्य चरितार्थता यहि त्वेकत्वे एकवचनं द्विबह्वोर्द्विवचनबहुवचने इति सूत्रयित्वा यदा संख्यायां वचनानि नियम्यन्ते तदाव्ययैरेकत्वद्वित्वबहुत्वप्रतिपादनात्प्रथमैकवचनमात्रं भवति । औत्सर्गित्वात् । सप्तानामेकवचनानीति पक्षोऽव्ययीभावस्याव्ययत्वमभिप्रेत्योक्तः । यत्तु योऽर्थः सन्नेव केवलं न जात्यादिरूपो न लिङ्गसंख्याकारकशक्तियोगी । यथाव्ययार्थः । केवलमस्तीति शक्यो वक्तुम् । न पुनरीदृशस्तादृस्तथाविध इति । माधवेनोक्तं तन्न । उच्चैः नीचैरित्यादिशब्दानां सन्नित्याकारकप्रतीतिजनकत्वस्य सर्वतंत्रविरुद्धत्वात् । अस्त्यादिसमानाधिकरणस्यापि असत्त्वार्थके सुदुर्लभत्वान्न लिङ्गसंख्याकारकयोगीति तदुक्तिविरोधाच्च । पदांतरोपस्थापितस्यापि तस्यास्तिसामानाधिकरण्यमस्तीति चेत् न । तस्याव्यावर्तकत्वात् । पुनरित्यादिवाक्यशेषविरोधाच्चेति दिक् ॥ **आमंत्रणे** ॥ अभिमुखीकरणेऽनुकूलकरणे प्रथमा स्यात् । हे राम । हे रामौ । हे रामाः । आमन्त्र्यते प्रसन्नः क्रियतेऽनेनेति साधने युट् । आमंत्रणे किम् । रामस्य । चोऽत्र व्यर्थः । विनापि तेनानुवृत्तिदर्शनात् । **सिर्द्धिः** ॥ आमंत्रणे सिर्द्धिसंज्ञः । प्रयोजनं तु समानाद्धर्धावमित्यादि । हे राम । आमंत्रणे किम् । रामः ।

सत्यः । सिः किम् । हे रामौ । यत्त्वेकवचनं संबुद्धिरिति पाणिनीयसूत्रं तत्र सुर्द्धिरिति सुवचम् । यदपि आमंत्रिते सिः संबुद्धिरिति कालापसूत्रं तत्त्यक्त्वा आमंत्रणे चेत्यस्याग्रे सिर्द्धिरिति पठितुमुचितम् । भोस्भगोस्अघोस्भवत् भगवदघवतां धौ निपात्याः । योग्यताबलादेत एव स्थानिन आक्षिप्यंते पद्न्नोमासित्यत्र पदादिभिः पादादयो यथासिद्धरूपोच्चारणं निपातनं तदत्रास्तीति निपात्यंते इत्युक्तम् । हे भोः हे भवन् । हे भगोः । हे भगवन् । हे अघोः हे अघवन् । एषु निपातनान्न नुम् । नुमा सहितानां वा निपातनम् । धौ किम् । हे भवन्तौ । भवदादीनां किम् । हे पितः । विभाषा भवद्भगवदघवतामोच्चावस्येति वररुचिवाक्यं तु त्यक्त्वा वा भोस् भगोस् अघोस् इति पाठ्यम् । पदादिभिरिव स्थानिनामाक्षेपो भविष्यति । इति प्रथमा ॥

शेषाः कार्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबंध आधारभावयोः[?] । शिष्यंते इति शेषाः । कर्मणि घञ् । उपयुक्तायाः प्रथमाया अन्याः शेषाः षड्विभक्तयः कार्यादयश्च षड्भिः पदैर्निर्दिष्टास्तेषां यथाक्रमं प्रवृत्तिः । कार्ये द्वितीया क्रियते । कर्त्रा स्वक्रियया निष्पाद्यते यत्कार्यं फलं तत्साध्यं च । यष्टा हि स्वव्यापारेण यागं स्वर्गं च साधयति । उभयोरुद्देशेन हि कर्तुः प्रवृत्तिर्दृश्यते । तत्संबंधात्तदाश्रये द्वितीया विधीयते । फलं तु धातुवाच्यं तदाश्रयो द्वितीयावाच्योऽनन्यलभ्यस्य शब्दार्थत्वादाश्रयत्वं त्वखंडोपाधिरूपं वाच्यतावच्छेदकं आश्रयत्वस्य वाच्यत्वे आश्रयत्वत्वस्य वाच्यतावच्छेदकत्वे गौरवप्रसंगः । तत्कर्म सप्तविधम् । "निवर्त्त्यं च विकार्य्यं च प्राप्यं चेति त्रिधा मतम् । तत्रेप्सिततमं कर्म चतुर्द्धाऽन्यत्तु कल्पितम् ॥ औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् । संज्ञांतरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥ तद्यथा । सदसज्जायते सद्वा जन्मना यत्प्रकाशते । तन्निवर्त्त्यं विकार्य्यं तु कर्म द्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत् । किंचिद्गुणांतरोत्पत्त्या सुवर्णादिविकारवत् ॥ क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते " ॥ तत्र निर्वर्त्यं यथा । घटं करोतीति । घटो ह्यसन्नेव जायते वैशेषिकादिमते । सांख्यादिसत्कार्यवादिमते तु सन्नेवाभिव्यज्यते इति अस्ति विशेषलक्षणम् । सामान्यलक्षणं

तु प्रकृतधातूपात्तोत्पत्त्याख्यशालित्वम् । प्रकृतेः प्रकृतिभूतस्यात्मन उच्छेद संभूतं प्राप्तम् । तद्यथा । काष्ठं भस्म करोतीति । गुणांतरोत्पत्त्या यथा सुवर्णं कुण्डलं करोतीति । इह भस्मकुण्डलयोर्निर्वर्त्यत्वमेवेति बोध्यम् । मृदं घटं करोतीति तंडुलान् ओदनं पचतीति । घटौदनयोरपि केचित्तु संस्कार्य्यं पृथगेवेच्छंति । व्रीहीन्प्रोक्षति । पुत्रमुपनयतीति । प्राप्यं तु आदित्यं पश्यतीति । औदासीन्यं तु तृणं स्पृशति।स्पर्शनाख्यः क्रियाकृत विशेषोऽस्त्येव । अन्यथा कर्मत्वानुपपत्तेः । तथापि प्रतिपत्तृव्यतिरिक्तपुरुषापेक्षया विशेषो न गम्यते । विकार्ये तु काष्ठादौ कथं धातूपात्तफलाश्रयता। उच्यते । प्रकृतिविकृत्योरभेदविवक्षया निरूढया उत्पत्त्याश्रयता । यद्वा । काष्ठानि विकुर्वन् भस्मोत्पादयतीत्यर्थः । तंडुलान् विक्लेदयन् औदयन् ओदनं निर्वर्तयतीतिवत् एतच्चद्व्यर्थः पचिरिति प्रक्रम्य पतंजलिना व्युत्पादितम् । ओदनं पचतीत्यत्र विक्लित्त्या निर्वर्तयतीत्यर्थः । यद्वा। तादर्थ्यात्ताच्छब्द्यमिति ओदनशब्देनौदनार्थास्तंडुला गृह्यंते । तस्माद्धातुत्वेनोपात्ता भावनां प्रति पचित्वेन पच्युपात्ता विक्लित्तिः कर्मतया करणतया वा संबध्यते । ईप्सितानीप्सितयोः शाब्दबोधस्त्वेकरूप एव ईप्सितत्वादेस्तत्र भानाभावात् । तथा हि । चैत्र ओदनं पचतीत्यस्य तंडुलनिष्ठविक्लित्त्यनुकूल एकचैत्राभिन्नाश्रयको वर्तमानो व्यापार इत्यर्थः । घटं करोति कुलालः । घटनिष्ठोत्पत्त्यनुकूल एककुलालाभिन्नाश्रयको वर्तमानो व्यापारः। तंडुलानोदनं पचतीत्यत्र तंडुलनिष्ठविक्लित्तेरोदनोत्पत्तेश्चानुकूल एकाश्रयको वर्तमानो व्यापारः । एवं मृदं घटं करोतीति मृन्निष्ठविकारोत्पत्तेर्घटोत्पत्तेर्घटाभिव्यक्तेर्वानुकूल एकाश्रयको वर्त्तमानो व्यापारः । हरिं भजति सेवया । हरिनिष्ठप्रीत्युत्पत्त्यनुकूलः सेवाकरणकः एकाश्रयो वर्तमानो व्यापारः । घटो नश्यति । घटध्वंसानुकूलो घटतिरोभावानुकूलो वा एकघटाश्रयो वर्तमानो व्यापारः । घटो भविष्यतीति । घटोत्पत्तेर्घटाभिव्यक्तेर्वाऽनुकूल एकघटाभिन्नाश्रयको भविष्यन्व्यापारः । घटोऽनशदित्यत्र घटध्वंसानुकूलो घटतिरोभावानुकूलो वा एकघटाभिन्नाश्रयकोऽतीतो व्यापारः । देवदत्तस्तिष्ठतीत्यत्र देवदत्तनिष्ठसत्यभावानुकूल एकदेवदत्ताश्रयको वर्तमानो व्यापारः।

रामो राज्यं चकारेत्यत्र राज्यकर्मकपालनाद्यनुकूल एक रामाभिन्नाश्रयक श्चिरातीत इंद्रियागोचरो व्यापारः । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र सुखविशेषोत्पत्तेर्देशविशेषप्राप्तेर्वानुकूल एकस्वर्गाभिन्नाश्रयकोऽग्निष्टोमसंज्ञक यागसाधनको यो व्यापारस्तदनुकूला प्रेरणा । यजतीत्यत्र यागोत्पत्त्यनुकूल एकाश्रयको वर्तमानो व्यापारः । ओदनं भुंक्ते रामः । ओदननिष्ठगलादधोदेशसंयोगानुकूल एकरामाभिन्नाश्रयको वर्तमानो व्यापारः । नगरादरण्यं गच्छति राम इत्यत्र चलनेन वननिष्ठसंयोगोत्पत्त्यनुकूल एक रामाभिन्नाश्रयको वर्तमानो व्यापारः । घटं जानातीत्यत्र ज्ञानेन जन्यस्य घटनिष्ठस्य ज्ञातताविशेषस्यावरणभंगस्य वा विषयतासंबंधेन ज्ञानस्यैव वानुकूल एकाश्रयको वर्तमानो व्यापारः । घटमिच्छतीत्यत्रेच्छाजन्यघटनिष्ठेष्टताया विषयतासंबंधेन घटनिष्ठेच्छाया वानुकूल एकाश्रयको वर्तमानो व्यापारः । विषं भुंक्ते पयः पिबतीत्यत्र विषपयसोर्गलादधोदेशसंयोगस्यानुकूल एकाश्रयको वर्तमानो व्यापारः । क्रूरमभिक्रुध्यति । अभिद्रुह्यतीत्यत्र कोपजन्यक्रूरनिष्ठाभिभवस्य जिघांसाजन्यप्राणवियोगस्य वानुकूल एकाश्रयको वर्तमानो व्यापारः । अक्षान् दीव्यतीत्यत्राक्षनिष्ठाधोदेशसंयोगानुकूल एकाश्रयको वर्तमानो व्यापारः । गां दोग्धि पयः कृष्ण इत्यत्र गोनिष्ठपयःक्षरणानुकूलव्यापारस्यानुकूल एककृष्णाभिन्नाश्रयको वर्तमानो व्यापारः। रामं गां याचत इत्यत्र रामनिष्ठगोत्यागानुकूलो गोदानांगीकरणानुकूलो वा यो व्यापारस्तदनुकूल एकयाचकाभिन्नाश्रयको वर्तमानो व्यापारः । एवं च धातूपात्तव्यापारविषयीभूतं यत् त्याजनदानांगीकारादि तदाश्रयत्वं गवादीनां स्पष्टमेव। शत्रूनगमयत्स्वर्गमित्यत्र स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूल एकहर्यभिन्नाश्रयकश्चिरातीतो व्यापारः। याचयत्यन्नं चैत्रो मैत्रेण । तंडुलनिष्ठविक्रित्त्यनुकूल एकमैत्राभिन्नाश्रयको वर्तमानो व्यापारः । इत्यत्र मैत्रस्य फलव्यापारोभयाश्रयत्वेऽपि परत्वाद्व्यापाराश्रयत्वात्तृतीया । पूर्वत्र तु फलाश्रयत्वाद्द्वितीया । पूर्वविप्रतिषेधात् । एवं ञ्यंते सर्वत्र विवक्षाभेदेन व्यवस्था सा च प्रामाणिकप्रयोगानुसारिणी न यथेष्टा । कर्तुरीप्सिततममि त्यादीनि कर्मसंज्ञाविधायकानि सूत्राणि नारंभणीयानि । कर्मणि द्वितीये-

त्यत्र कर्मशब्दस्य यौगिकत्वांगीकारेण फलनिरूपिताश्रये सर्वत्र द्वितीयायाः सिद्धत्वात् । एतेन यत्क्रियते तत्कर्मेति कालापसूत्रमपि मत्युक्तं कर्मशब्दस्य यौगिकत्वांगीकारादिति दिक् ॥ अत्राहुः । असत्कार्यवादे निर्वर्त्यस्य कारकत्वं न प्राप्नोति असतस्तस्य फलाश्रयत्वानुपपत्तेः । क्रियाजनकत्वाभावात्कारकत्वानुपपत्तेश्च । क्रियां कुर्वद्धि कारकमिति सिद्धांतादिति । कर्तृसाधनयोस्तृतीया क्रियां करोतीति कर्त्ता धातूपात्तव्यापाराश्रयः । सर्वेषां हि कारकाणां प्रधानक्रियासाधने व्यापारोस्ति । यदा यदीयो व्यापारो धातुनोपादीयते स कर्ता । तदुक्तम् "धातूपात्तक्रिये नित्यं कारके कर्तृतेष्यते ।" इति वस्तुतस्तु तदनिर्देश्यं न हि वस्तु व्यवस्थितं स्थाल्या पचत इत्येव व्यवस्था दृश्यते । यत इति च काष्ठानि पचंति । आविक्लित्तेः सम्यग्ज्वलंतीत्यर्थः । अग्निः पचति । सम्यक् तापयतीत्यर्थः । स्थाली पचति । स्वस्मिन्समावेशयति धारयति वेत्यर्थः। व्यापाराश्रयः कर्त्तेत्युक्तम्। व्यापारो धातुवाच्य आश्रयस्तृतीयावाच्योऽनन्यलभ्यत्वात् । आश्रयत्वं तदवच्छेदकमखंडोपाधिरूपमखंडं वस्तु लक्ष्यतावच्छेदकस्य गुरुत्वाभ्युपगमात् । शक्यतावच्छेदकस्यापि गुरुत्वाभ्युपगमे बाधकाभावात् । स त्रिविधः । स्वतंत्रः प्रयोजकः । स एव हेतुश्च । कर्मकर्ता चेति । यद्यपि करणादिरप्यस्ति कर्त्ता तथापि तस्य पृथक्कार्यदर्शनात्स्वतंत्रेंतर्भावाच्च न पृथक् गणनं कृतम्। क्रिया साध्यतेऽनेनेति साधनं क्रियासिद्ध्युपकारकं तदेव करणं व्यापारवत् । कारकं करणमविलंबेन क्रियोत्पादकं वा । तत्र तृतीया तस्याश्च व्यापार आश्रयश्च पृथग्वाच्यौ । तत्र सर्वत्राश्रये प्रकृत्यर्थे भेदेन संसर्गेण विशेषणं व्यापारस्तु भावनायाम् । तदुक्तम् । "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनंतरम् । विवक्ष्यते यदा यत्र तत्तत्र करणं स्मृतम्" ॥ रामेण बाणेन हतो वाली एकरामाभिन्नाश्रयकोऽतीतो यो व्यापारस्तेनेरितो यो बाणस्तदभिन्नाश्रयको यो व्यापारः संयोगभेदनादिस्तत्साध्यो यः प्राणवियोगस्तदाश्रयो वाली। स्वामिना भृत्येन भारः प्राप्यते वाह्यते वा भारनिष्ठदेशांतरसंयोगानुकूलो भृत्याश्रयो व्यापारस्तदनुकूल एकस्वाम्यभिन्नाश्रयो वर्तमानो व्यापारः । ग्रामं गम्यते चैत्रो मैत्रेण। ग्रामनिष्ठसंयोगानुकूल एकचैत्राश्रयो

व्यापारस्तदनुकूल एकमैत्राभिन्नाश्रयो वर्तमानो व्यापारः । ग्रामो गतश्चै-त्रेणाश्वेन । एकचैत्राश्रयो ग्रामाश्रयसंयोगानुकूलो व्यापारस्तदनुकूलो यो व्यापारस्तत्प्रेरिताश्वाभिन्नाश्रयो यो व्यापारस्तत्साध्यो यः संयोगस्तदाश्रयो ग्रामः । कुठारेण देवदत्तेन छिद्यते वृक्षः । एकवृक्षाभिन्नाश्रयो द्वैधीभाव एककुठाराभिन्नाश्रयव्यापारसाध्यस्तदनुकूल एकदेवदत्ताभिन्नाश्रयको वर्त-मानो व्यापारः।भिद्यते कुशूलेन एककुशूलाभिन्नाश्रयको वर्तमानो भेदनरूपो व्यापारः । पच्यते ओदनेन । एकौदनाभिन्नाश्रयको विक्लित्तिरूपो व्यापारः । उक्ते तु कर्मादौ परत्वात्प्रथमेति दिक् । यत्तु पाणिनीयं सूत्रं स्वतन्त्रः कर्त्तेति तन्न कर्तव्यं कर्तृशब्दस्य यौगिकत्वेन व्यापाराश्रये तृतीयाविधानोपपत्तेः । स्वातंत्र्यं धातूपात्तव्यापाराश्रयत्वमितिवत् धातूपात्तव्यापाराश्रयत्वं कर्तृ-त्वमिति व्याख्यातुं शक्यत्वात्तत्प्रयोजको हेतुश्चेत्यपि न वक्तव्यम्।हे-तुमतिचेत्यत्र प्रेरणे इत्येव सुवचम् । हेतुभये इत्यत्र कर्त्तृभय इति कर्त्त-व्यम् । साधकतमं करणमित्यपि न वक्तव्यम्।क्रियतेऽनेनेति करणमिति यो-गाश्रयणेनैव निर्वाहात् ।एतेन यः करोति स कर्ता यः कारयति स हेतुश्च येन क्रियते तत्करणमिति कालापत्रिसूत्री प्रत्याख्याता।घटो भवतीत्याद्यचेतने ऽव्याप्तश्च करोतीत्यर्थस्य चेतनेष्वेव संभवात्।अन्वर्थे तु अचेतने कर्त्तरि न दोषः । धातूपात्तव्यापाराश्रयत्वस्य तत्र सत्त्वात् । दानपात्रे चतुर्थी।दीयत इति दानम् । कर्मणि ल्युट् । दानस्य पात्रं योग्यम्।"योग्यभाजनयोः पात्रम्" इत्यमरः । दीयमानस्य गवादेर्यद्योग्यं तस्मिंश्चतुर्थी । चैत्रो वेदविदे गां ददाति वेदविदुद्देश्यकगोनिष्ठो यः स्वत्वत्यागस्तदनुकूल एक-चैत्राभिन्नाश्रयको वर्तमानो व्यापारः । अत्र पक्षे सूर्यायार्घ्यं ददाति।खंडि-कोपाध्यायस्तस्मै चपेटिकां ददाति इत्यत्र न प्राप्नोति । ननु श्रोत्रियाय कन्यां ददात्यत्रापि न प्राप्नोति स्वत्वत्यागाभावात् । उच्यते स्वस्य भावः स्वत्वम् । आत्मत्वं आत्मीयत्वं ज्ञातित्वं धनत्वं च आत्मत्वात्मीयत्वयोस्त्यागो नास्तीति ज्ञातित्वत्यागस्तु । परगोत्रप्रवेशात् । धनत्वस्यैव त्यागोस्ति विवाहोत्तरं दातुं विक्रेतुमशक्यत्वात् अतोऽत्र कन्यायां स्वत्वस्य धनत्वस्य त्यागः परस्वत्वस्यापादनरूपं मुख्यं दानमस्त्येव । पात्रशब्देनोद्देश्यत-

लक्षणीया । सामान्यधर्म्मेणोद्देश्यत्वेन विशेषधर्मस्य योग्यत्वस्य व्याप्तत्वेन शक्यसम्बन्धत्वात् सूर्यशिष्ययोरर्घ्यचपेटात्यागे उद्देश्यत्वाच्चतुर्थी । नहि उद्देश्यत्वं ददातेरेव योगे किं तु धात्वंतरयोगेपि।हरये रोचते भक्तिः । हरिं प्रीणयतीत्यत्र हरेः फलाश्रयत्ववत् उद्देश्यत्वमप्यास्ति । तन्निमित्ता चतुर्थी । गोपी कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वेत्यत्र कृष्णस्य श्लाघादि बोधयितु-मिष्टत्वेनोद्देश्यत्वाच्चतुर्थी । कृष्णोद्देशक आत्माभिन्नाश्रयश्लाघ्यत्वादिबोध-नानुकूल एकगोप्यभिन्नाश्रयो वर्तमानो व्यापारः । भक्ताय धारयति मोक्षं हरिरित्यत्र भक्तोद्देश्यकमोक्षकर्मकधारणानुकूल एकहर्य्यभिन्नाश्रयको वर्त्तमानो व्यापारः । पुष्पेभ्यः स्पृहयतीत्यत्र पुष्पाणां फलाश्रय-त्वमुद्देश्यत्वं चास्तीति पर्यायेण द्वितीयाचतुर्थ्यौ । पुष्पोद्देश्यकेच्छानुकूल एकाश्रयको वर्तमानो व्यापारः । द्वितीयापक्षे पुष्पनिष्ठेच्छाजन्येष्टत्वा-नुकूल एकाश्रयो वर्त्तमानो व्यापारः । क्रूराय क्रुध्यति द्रुह्यति ईर्ष्यति असूयति वेत्यत्र क्रूरोद्देश्यकजिघांसादिजन्यताडनाद्यनुकूल एकाश्रयो वर्तमानो व्यापारः । यद्वा यं प्रतीति द्वितीया षष्ठ्यर्थे यस्य सम्बन्धी कोपः सम्बन्धश्चोद्देश्यतैव कृष्णाय राध्यति ईक्षते वेत्यत्र कृष्णसम्बन्धि शुभा-शुभं लोचयतः कृष्णोद्देश्यता स्पष्टैव । यस्येति षष्ठ्याप्युद्देश्यतैवोक्ता। विप्राय गां प्रतिशृणोतीत्यत्र विप्रोद्देश्यकगोकर्मकाङ्गीकारानुकूल एकाश्रयो वर्तमानो व्यापारः। होत्रेऽनुगृणाति प्रतिगृणातीत्यत्र होतारं प्रोत्साहयतो होतोद्देश्ये भवत्येव।ग्रामाय गच्छतीत्यत्र चलनेन ग्रामस्योद्देश्यत्वाच्चतुर्थी । गतिजन्य-ग्रामनिष्ठसंयोगाश्रयत्वस्य प्रतिपादनाय द्वितीया । पत्य शेते।रघवे करं ददौ । तत्तद्भूमिपतिः पत्न्यै दर्शयन्नित्यादौ , उद्देश्यत्वप्रतिपिपादयिषया चतुर्थी । एवं च रजकाय वस्त्रं ददातीत्यपि भवत्येव । रजकस्येति संबध-सामान्यविवक्षया षष्ठी । अयमत्र संक्षेपः । सर्वाणि कारकाणि सर्वत्र संति । यस्य यत्र प्रतिपिपादयिषा तत्र सा प्रयुज्यते । यथा घटं करोतीत्यत्र फलत्वाश्रयविवक्षया द्वितीयैव वेदविदे इत्यत्रोद्देश्यत्वविवक्षया चतुर्थ्येव । ग्रामे तूभयविवक्षयोभे । विवक्षा च निरूढप्रयोगानुसारिणीति न स्वेच्छानु-सारिणी । पाणिनिना तु एषां प्रत्येकं संप्रदानसंज्ञां विधाय चतुर्थी संप्रदाने

इत्युक्तम्।“संप्रदानं तदेवस्यात्पूजानुग्रहकाम्यया । दीयमानेन संयोगात्स्वामित्वं लभते यदि”॥ संप्रदानं त्रिधा।तदुक्तम्।“अनिराकरणात्कर्तुस्त्यागांगकर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते संप्रदानताम्” इति । अनिराकर्तृ यथा । सूर्यायार्घ्यं ददाति । न चात्र सूर्यः प्रार्थयते न वानु मन्यते न वा निराकरोति प्रेरकम् । यथा विप्राय गां ददाति । अनुमंतृ यथा।उपाध्यायाय गां ददाति।एवमस्मन्मते संप्रदानवदुद्देश्यमपि त्रिविधं न तादर्थ्ये चतुर्थीत्यनेन गतार्थता दानक्रियार्थत्वात्संप्रदानस्य दानक्रियायाः संप्रदानार्थत्वाभावाच्च संप्रदानसंज्ञाप्रकरणं सुत्यजम् । चतुर्थी च संप्रदानशब्देनोद्देश्यं लक्षयित्वा तत्र चतुर्थीविधानस्यौचित्यात् । उद्देश्ये चतुर्थीति सूत्रस्य शक्यत्वाच्च । एतेन यस्मै तत् संरोचते धावते वा तत्संप्रदानमिति कालापसत्रमपि प्रत्युक्तम्।संप्रदाने इत्यत्रोद्देश्ये इति वक्तुं युक्तत्वादिति दिक् । ननु कर्मणेति विहितसंप्रदानसंज्ञकाद्विहितचतुर्थ्या उद्देश्यार्थः । न चतुर्थीमात्रस्येति कथं रुच्यार्थेत्यादीनां प्रत्याख्यानमिति चेन्न । चतुर्थी संप्रदानस्य इत्यत्र तदुक्तिविशेषाभावात् । नहि कर्मणेति विहितसंप्रदानसंज्ञकादेव चतुर्थी नान्यस्मात्संप्रदानसंज्ञकादिति विशेषो लभ्यते । अथ संप्रदानमात्रादुद्देश्ये चतुर्थीत्यपि न कर्तृकर्मादिसंज्ञापवादः । संप्रदानं विधीयते तत्र कर्मकर्त्रादिकमेव वाच्यं स्यान्न तूद्देश्यं अधिशीङादियोगेऽधिकरणस्य कर्म संज्ञां विधाय विहिताया द्वितीयाया अधिकरणमेव वाच्यम् । यथोच्यते । अत्रोद्देश्यं द्विविधं शाब्दं मानसं च गृह्यते विशेषो यथा।आद्यम् । वेदविदे गां ददाति । द्वितीयम् । हरये रोचते भक्तिः।हरिनिष्ठप्रीतेर्भक्तिः कर्त्रीत्यर्थे सति प्रीतिविशिष्टो हरिः भक्तेर्भक्तस्य वोद्देश्य इति मनसा गम्यते इति चतुर्थी । विश्लेषावधौ पञ्चमी । श्लेषणं श्लेषः संयोगः । विगतः श्लेषः विरुद्धो वा श्लेषः विश्लेषो विभागस्तस्मिन्साध्येऽवधिर्विश्लेषावधिस्तस्मिन्पञ्चमी स्यात् । अवधीयते एकरूपतया ज्ञायते सोऽवधिः । प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तदुपयोगीति यावत् । वृक्षात्पर्णं पतति वृक्षाभिन्नावधिकोऽधोदेशसंयोगानुकूल एकपर्णाभिन्नाश्रयको वर्तमानो व्यापारः । धावतोऽश्वात्पतति चैत्रः । शीघ्रगत्यनुकूलो यो व्यापारस्तदाश्रयो योऽश्वः तदवधिकोऽधोदे-

शसंयोगानुकूल एकचैत्राभिन्नाश्रयको वर्तमानो व्यापारः। अत्राश्वस्य गतिमत्त्वेपि प्रकृतगम्युपात्तगतिमत्वाभावादवधित्वेन विरोधः । तथा परस्परस्मान्मेषावपसरत इत्यत्र सृधातुना गतिद्वयस्याप्युपादानादेकमेषानिष्ठां गतिं प्रत्यपरस्य सिध्यति विश्लेषावधित्वं मेषावधिको यः पूर्वदेशसंयोगस्तदनुकूलो मेषाभिन्नाश्रयको वर्तमानो व्यापारः। कुड्यात्पततोऽश्वात्पतति चैत्रः कुड्याभिन्नाश्रयावधिकोऽधोदेशसंयोगानुकूलो यो व्यापारस्तदाश्रयोऽश्वस्तदवधिकोऽधोदशसंयोगानुकूल एकचैत्राभिन्नाश्रयको वर्तमानो व्यापारः। इदमेवान्येऽपादानमिति व्यवहरन्ति । तदुक्तम्।"अपाये यदुदासीनं चलं वा यदि वाचलम् । ध्रुवमेव तदावेशात्तदपादानमुच्यते ॥ पततो ध्रुवेन वाश्वो यस्मादश्वात्पतत्यसौ। तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥ एवं परक्रियापेक्षमवधित्वं पृथक्पृथक् । मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथक" इति अतदावेशादिति विश्लेषजनकक्रियानावेशात् । "गतिं विना त्ववधिना नापायः कथ्यतेऽवधिः" । निरपेक्षस्य चलनस्य विश्लेषत्वाभावादिति भावः । पंचमीत्ववधौ शक्ता तत्राभेदेन संबंधेन प्रकृत्यर्थो विशेषणं अवधिस्तु क्रियायां विशेषणं कारकाणां क्रिययैव संबंधात्। अन्यथाऽसाधुत्वात् क्रियां करोतीति कारकमित्यन्वर्थत्वात् निर्दिष्टविषयं किंचिदुपात्तविषयं तथा अपेक्षितक्रियं चेति त्रिधापादानमुच्यते यत्र साक्षाद्धातुना गतिनिर्दिष्टविषयम्।अश्वात्पततीति यथा यत्र धात्वर्थांतरार्थांगं स्वार्थं धातुराह तदुपात्तविषयं यथा बलाहकाद्विद्योतते इति निःसरणांगे विद्योतते द्युतिर्वर्तते।यथा वा कुसूलात्पचतीति आदानांगे पाके ऽत्र पचिर्वर्तते । अपेक्षितक्रियं तु तत्। यत्र प्रत्यक्षसिद्धमागमनं मनसि निधाय पृच्छति कुतो भवानिति। पाटलिपुत्रादिति चोत्तरयति । अर्थाध्याहारस्य न्याय्यताया उक्तत्वात् इह सार्थाद्धीयते इत्यपि निर्दिष्टविषयस्योदाहरणम्।गम्यमाना क्रिया कारकविभक्तेः प्रयोजिका भवति।प्रविश पिंडीं प्रविश तर्पणं प्रविश गेहं भक्षय पिंडीं प्राविश जलं कुरु तर्पणं अधर्माज्जुगुप्सते विरमति प्रमाद्यति वेत्यत्र संश्लेषपूर्वको विश्लेषो नास्तीति मानसः संगृह्यते। तेन पंचमीपूर्वं हि बुद्ध्याऽधर्मं संप्राप्य ततो दोषदर्शनान्निवर्तते जुगुप्सादयो हि जुगुप्सापू-

र्विकायां निवृत्तौ वर्त्तत इत्युपात्तविषयः । चोराद्बिभेति उद्विजते मैत्रः । त्रायते रक्षति वा पुत्रम् । अधर्माभिन्नावधिको निंदाविरामप्रमादानुकूल एक-मैत्राभिन्नाश्रयको वर्त्तमानो व्यापारः । चोराभिन्नावधिकाभयपूर्विका या निवृत्तिस्तदनुकूलः पुत्र एकमैत्राभिन्नाश्रयको वर्त्तमानो व्यापारः । चोरा-वधिकनिवृत्तिपूर्वकं पुत्रनिष्ठं यद्रक्षणं तदनुकूल एकमैत्राभिन्नाश्रयको वर्त-मानो व्यापारः । अध्ययनात्पराजयतेऽध्ययनाभिन्नावधिकनिवृत्तिपूर्वक-श्चित्तग्लान्यनुकूल एकाश्रयको वर्तमानो व्यापारः । यवेभ्यो गां वारयति गोपालः । यवप्राप्त्यवधिनिमित्तपूर्वको गोनिष्ठप्रवृत्तिप्रतिघातानुकूल एकगोपालाभिन्नाश्रयको वर्तमानो व्यापारः । मातुर्निलीयते कृष्णः।मातृ-प्राप्त्यभिन्नावधिकनिवृत्तिपूर्वको दर्शनानुकूलः कृष्णाभिन्नाश्रयको वर्त्त-मानो व्यापारः । उपाध्यायादधीते कृष्णः । उपाध्यायप्रा-प्त्यभिन्नावधिकनिवृत्तिपूर्वकोऽध्ययनाकूल एककृष्णाभिन्नाश्रयको वर्तमानो-व्यापारः । ब्रह्मणः प्रजाः प्रजायंते । ब्रह्मप्राप्त्यभिन्नावधिकनिःसरणपूर्वक-प्रादुर्भावानुकूलो बहुप्रजाभिन्नाश्रयको वर्तमानो व्यापारः । सत्कार्यवादे कारणात्कार्यस्य निःसरणान्मुख्यो विभागः । असत्कार्यवादे तु मानसः । हिमवतो गंगा प्रभवति। हिमवदभिन्नावधिकनिःसरणपूर्वकः प्रादुर्भावानुकूलो-गंगाभिन्नाश्रयकवर्तमानो व्यापार इत्यादिषु शारीरं मानसं वा विभाग-माश्रित्य विश्लेषावधौ पञ्चमी विधेया । इत्थं हि ध्रुवमपायेपादानमित्या-दीनि सूत्राणि न कर्त्तव्यान्यपादाने पञ्चमीत्यत्र विश्लेषावधौ पञ्चमीति सूत्रणीयमेतेन यतोपैति भयमादत्ते वा ईप्सितं रक्षार्थानामित्यपि कालापसूत्र-त्रयं परास्तम् । विभक्तिविधायकसूत्रेऽपादानस्थाने विश्लेषावधिग्रहणं कर्तव्यं न चैवं मानसविभागस्य गौणत्वान्मुख्ये संभवति गौणग्रहणस्यान्याय्य-त्वात्कथं गौणं ग्रहीतुं शक्यम् । मुख्याप्रख्ययोर्मुख्ये कार्यसंप्रत्यय इति लौकिक्याः परिभाषाया अनित्यत्वात्।बहुपुत्रस्य ज्येष्ठमध्यमकनिष्ठव्यवहारास्त स्मिंस्तस्मिन्दृश्यंते।यथैकपुत्रस्यापि ते व्यवहारास्तस्मिन्दृश्यन्तेऽत उक्तन्याय-स्यानित्यत्वं लभ्यते एवं पूर्वत्रोद्देश्ये शब्दे मुख्ये संभवति । गौणस्य मानसस्य ग्रहणमपि बोध्यम् । सम्बन्धे षष्ठी । कः संबंधो नाम । एतौ संबन्धौ इति

प्रत्ययव्यपदेशजनकः । स च नामार्थो नियतभानाभावात् त्रिकपक्षे कारकवत् स च द्विविधः । क्रियाकारकसम्बन्धद्रव्यगुणसंबंधभेदात् । आद्योपि द्विविधः सामान्यं विशेषश्च । विशेषः कर्मत्वादिरूपस्तत्र द्वितीयादयो पवादा विहिता आद्ये षष्ठी तदुक्तम्। "संबंधः कारकेभ्योन्यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां च क्रियायां सोभिधीयते"। नटस्य शृणोति नटसंबंधी श्रवणानुकूल एकाश्रयो व्यापारः । न माषाणामश्नीयात् माषसंबंधिभोजनानुकूल एकाश्रयव्यापाराभावः । फलानां तृप्तः । फलसंबंधितृप्त्याश्रयः । सतां गतं सत्सम्बधि गमनम्। भजे शंभोश्चरणयोः । शंभुचरणसंबंधिभजनानुकूल एकास्मदर्थाभिन्नाश्रयो वर्तमानो व्यापारः । विशेषविवक्षायां तु नटेन गीतं शृणोति । नटाभिन्नाश्रयो यो व्यापारस्तत्साध्यगीताभिन्नाश्रयं यत् ज्ञानतादि तदनुकूल एकाभिन्नाश्रयो वर्तमानो व्यापारः । न माषानश्नाति माषाभिन्नाश्रयो गलादधोदेशसंयोगस्तदनुकूल एकाश्रयो व्यापारस्तदभावः । फलैस्तृप्तः । फलाभिन्नाश्रयो यो व्यापारस्तत्साध्या या तृप्तिस्तदाश्रयः। सद्भिर्गतम्।सदभिन्नाश्रयकं गमनम्।शंभोश्चरणौ भजे। शंभुसंबंधी चरणाभिन्नाश्रयसेवाजन्यज्ञाततायनुकूल एकास्मदर्थाभिन्नाश्रयो वर्तमानो व्यापारः । अंत्यो यथा । राज्ञः पुरुषः । राजसम्बन्धवान्पुरुषः । स च सेव्यसेवकरूपः । राज्ञः पुत्रः । राजसंबंधवान्पुत्रः । स च पितापुत्ररूपः । तंतूनां पटः । अवयवावयवीरूपः। पटस्य रूपं गुणगुणिभावः संबंधः।माषाणां राशिः । समूहसमूहीभावः।कुरूणां राजा। पाल्यपालकरूपः । चैत्रस्य वाहनम ।वाह्यवाहकरूपः । शब्दस्यार्थः । वाच्यवाचकरूपः । चक्षुषो विषयो रूपम् । बोध्यबोधकरूपः । अग्नेर्धूमो व्याप्यव्यापकरूपः । घटस्याभावः । प्रतियोग्यनुयोगिरूपः । उपगोरपत्यम् । अपत्यापत्यवद्रूपः । कुसूलस्यान्नम् । आधाराधेयरूप इत्यादिसम्बन्धसामान्ये षष्ठी यद्यपि विहिता तथापि पदान्तरसमभिहाराद्विशेषोवसीयः। सामान्यविशेषौ च।यथा। रूपं शुक्लं च रूपवान् घटः।शुक्लः पटः। ननु सम्बन्धो निरूप्यत्वात् कस्मात् षष्ठीविशेषणात्।राज्ञ इत्यत्र प्रकृत्यर्थो विशेषणं पुरुषस्तु स्वरूपनिष्ठ एव प्रतिपाद्यते न विशेषणत्वेन । यदा तु विशेषणत्वेन विवक्षितस्तदा षष्ठी भवत्येव।पुरुषस्य राजेति सम्बन्धनिरूपकात् षष्ठी संबंधाश्रयेणेति निष्कर्षः ।

तदुक्तम्।"भेद्यभेदकयोः श्लिष्टः सम्बन्धोन्योन्यमीक्ष्यते॥द्विष्ठो यद्यपि सम्बन्धः-षष्ठ्युत्पत्तिस्तु भेदकात्" इति । "द्विष्ठोप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते । तत्राविधीयमानस्तु प्रधानेप्युपयुज्यते" इति । "तथा परार्थे स्वार्थनिक्षेपाद्-प्रधानं विशेषणम् । विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात्" इति । नन्वेवं शुक्लः पट इत्यत्रापि विशेषणे षष्ठी प्राप्नोति। मैवम्।अभेदस्य विवक्षणा-द्भेदविवक्षायां षष्ठीविधानात् । तदुक्तम् । "नाम्नो द्विधैव सन्बन्धः सर्ववाक्ये व्यवस्थितः । सामानाधिकरण्येन षष्ठ्या अपि क्वचिद्भवेत्। षष्ठ्येति तदपवाद विभक्तीनामुपलक्षणम् । सामानाधिकरण्येनाभेदेन षष्ठ्याभेदेन राहोः शिर इत्यत्र तु सतोप्यभेदस्याविवक्षणम्।यथा । लोमकैडकानुदराकन्येति भेदवतो वस्तुनः । असतोप्यभेदस्य विवक्षा यथा। समुद्रः। कुंडिका विंध्यो वर्द्धतकमिति कुंडिकायां जलाधिक्यात्समुद्रत्वं समुद्रे त्वगस्त्यादिदृष्ट्या-कुंडिकात्वं विवक्ष्यते वर्द्धतके परिविष्टेऽन्नादौ विंध्यत्वं बाहुल्याद्विवक्ष्यते विं-ध्ये वा हनुमदादिदृष्ट्या क्षुद्रत्वाद्वर्द्धतकत्वम् । राज्ञः पुरुषस्येति षष्ठी तु बाह्यं वस्त्रगेहादिसम्बन्धमनपेक्ष्य राज्ञः पुरुषेणेत्यादि च बाह्यक्रियासम्बन्ध-मपेक्ष्य प्रयुज्यते । राजानं प्रति तु पुरुषः नामार्थमात्रनिष्ठ एव प्रतिपाद्यते आधारे सप्तमी । अधीयते क्रिया अस्मिन्नित्याधार इति संज्ञायामकर्तरि चेति चकाराद्घञ् । अनुक्ते व्यापाराश्रये तृतीया विहिता फलाश्रये च द्वितीया फलस्यापि क्वचित् क्रियाशब्देन व्यवहारः । क्रियाविशेषणमित्यत्र उक्तयोः स्तुतयोः प्रथमातः परिशेषात्कर्मव्यवहितक्रियाया आधारः सप्तम्यर्थः।तदुक्तम्। कर्तृकर्मव्यवहिताम साक्षाद्धारयत्क्रियाम्।उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति । अधिकरणम् आधारः । "आधारस्त्रिविधो ज्ञेयः कटाकाशति-लेषु च॥निमित्तादिप्रभेदाच्च षड्विधः कैश्चिदिष्यते" इति। औपश्लेषिकः सामी-पिकोऽभिव्यापको वैषयिको नैमित्तिक औपचारिकश्चेति चित्रविहितायाः सप्तम्या आश्रयनिष्ठः प्रकृत्यर्थस्त्वभेदेनाश्रये विशेषणम् । आश्रयस्तु क्रियायां कारकाणां क्रिययैवान्वयात् । तदुक्तम् । "आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा॥ यथायथं विभक्त्यर्थाः सुपां कर्मेति वाक्यतः" ॥ कर्मद्वितीया कर्तृसाधनतृतीया आधारसप्तमी नामाश्रयोऽर्थो निरूपभेदाच्चार्थभेदः । चतु-

र्थ्यां उद्देश्योऽर्थः पञ्चम्या अवधिरर्थः । षष्ठ्याः सम्बन्धः । आधाराधेययोः प्रादेशिकः सम्बन्ध उपश्लेषः आधाराधेययोरन्यत्र सिद्धयोः संयोगश्च उपश्लेषः तत्र भव औपश्लेषिकः। उप उपरि श्लेषः सम्बन्धः सोऽस्यास्तीति वा अइकाविरतीकः णितो वेति णित्त्वाद्वृद्धि- र्वा । कटे शेते कुमारोऽसौ एककटाभिन्नाश्रयको निद्रानुकूल एककुमारा- भिन्नाश्रयको वर्तमानो व्यापारः । औपश्लेषिकत्वादिकं तु शाब्दबोधेन भासते पदान्तरसमभिहारात्तद्भासते गौर्वाहीकइत्यत्रोपसर्जनत्ववत् सामीप्य सं युक्तसंयोगाल्पकत्वं तत्र भवं तदस्यास्तीति केनेयेका इतीकः । अइका- विति वा। वटे गावः सुशेरते वटाभिन्नाधारकनिद्रानुकूलो बहुगोभिन्नाधार- कवर्तमानो व्यापारः। नात्र गवां वटेन संयोग इत्यौपश्लेषिकाद्भिन्नमिदम् आधारत्रितयपक्षे त्वौपश्लेषिकोऽस्यांतर्भावो वटे गोसंयोगस्यारोपणात् । अपृथक्देशयोराधाराधेययोः सर्वावयवसम्बन्धिकमभिव्यापकम् अभितः सर्व- तो व्याप्यते आधेयेनेत्यभिव्यापकम् अभिविपूर्वादाप्नोतेः कर्मणि घञंता- त्स्वार्थिकताद्धितः कः। तिलेषु विद्यते तलं बहुतिलाभिन्नाधारक आत्म- धारणानुकूल एकतैलाभिन्नाश्रयो वर्तमानो व्यापारः । देशविभागाभावादौ- पश्लेषिकादेर्भिन्नमिदम् । विषयोऽनन्यभावस्तत्र भवं वैषयिकम् । अन्यथा ब्रह्मणोऽन्यत्रापि भावादवैषयिकं स्यात् । यद्वा । विषयः प्रकाशनसामर्थ्य- मस्यास्तीति पूर्ववत्प्रक्रिया । "मनसैवानुद्रष्टव्यं दृश्यते त्वग्रया बुद्ध्या" इति श्रुतेः । हृदि ब्रह्मामृतं परं विद्यते इत्यस्यानुषङ्गः निदिध्यासतां स्फुरतीति शेषो वा हृदयाभिन्नाश्रयक आत्मधारणानुकूलः स्फुरणानुकूलो वा एकब्रह्मा- भिन्नाश्रयको वर्तमानो व्यापारः । अमृतं सुखरूपं मरणशून्यं वा परम् उत्तमं निरुपाधिकमिति यावत् । इदं द्वयं ब्रह्मणो विशेषणं मनोब्रह्मणोः प्रकाश्यप्रकाशकभावः । सम्बन्धः प्रकाश्यतासंबन्धेन ब्रह्म मनसि वर्तते । शास्त्रेऽस्य ज्ञानमस्तीत्यत्र ज्ञानं शास्त्रे यथा मनोब्रह्मणोर्निरवयवत्वाद- मूर्त्तत्वाद्वा नौपश्लेषिकादिः । निमित्तं हेतुस्तत्र भवं नैमित्तिकं निमित्तं फलं तदस्यास्तीति वा । युद्धे संनह्यते धीरो, युद्धाभिन्नाधारकः कवचबंधनानुकूल एकधीराभिन्नाश्रयको वर्तमानो व्यापारः।कवचबन्धनस्य युद्धफलकत्वात्तन्नि

मित्तम् चर्मणि द्वीपिनं हंतीत्याद्यप्येव । अन्यत्र विद्यमानस्य सम्बन्धस्यान्यत्रारोप उपचारस्तत्र भवं सोस्यास्तीति औपचारिकम । अंगुल्यग्रे करिणां शतं विद्यते इत्यस्यानुषंगोस्तीत्यध्याहारो वा अङ्गुल्यग्राभिन्नाश्रयक आत्मधारणानुकूलः करिसंबंधशताभिन्नाश्रयको वर्तमानो व्यापारः । करिभूम्योराधाराधेयभावोंगुल्यग्रे आरोप्यते । एवं शाखायां चंद्रोस्तीति आधारत्रितयपक्षे अन्तिमद्वयस्याप्यौपश्लेषिकेंतर्भावः । फलाश्रयाधारस्योदाहरणम् । स्थाल्यां पचति । विक्लित्याश्रयाणां तंडुलानामौपश्लेषिकमधिकरणमिति दिक् । अधिशीङ्स्थासां कर्म, उपान्वध्याङ्वसः, अभिनिविशश्च, एषां आधारः कर्मवद्भवति तेन कर्मणि द्वितीया । कर्मप्रत्ययाश्च भवंति । न्यायसिद्धमिदं न तु वाचनिकम् अधिशेते अधितिष्ठति अध्यास्ते वा वैकुंठं हरिरित्यत्र फलेन वैकुंठं व्याप्नोति फलाश्रयः फलजन्याश्रयो वा कर्मेत्युक्तम् । अत्र त्रयाणां फलं स्थितिः स्थानजन्यसंयोगाश्रयत्वाद्वैकुंठः कर्म । ग्रामं गच्छतीत्यत्र गतिजन्यसंयोगाश्रयत्वाद्ग्रामो यथा हरिं भजतीत्यत्र सेवाजन्यप्रीत्याश्रयो हरिर्यथा अवस्थानजन्यवैकुंठनिष्ठसंयोगानुकूल एकहर्य्यभिन्नाश्रयको वर्तमानो व्यापारः । यद्वा । अन्तर्भावितण्यर्था एते । वैकुंठशब्देन तद्वासिजनो गृह्यते तात्स्थ्यात्ताच्छब्द्यमितिन्यायात् वैकुंठजनाभिन्नाश्रयकः स्थित्यनुकूलो यो व्यापारस्तदनुकूल एकहर्य्यभिन्नाश्रयको वर्त्तमानो व्यापारः । उपवसति । अनुवसति । अधिवसति । आवसति वैकुंठम्। वासेन वैकुंठं व्याप्नोति वैकुंठाभिन्नाश्रयको वासजन्यो यः संयोगस्तदनुकूल एकहर्य्यभिन्नाश्रयको वर्त्तमानो व्यापारः । यद्वा । वैकुण्ठस्थजनाभिन्नाश्रयकः स्थित्यनुकूलो यो व्यापारस्तदनुकूल एकहर्य्यभिन्नाश्रयको वर्तमानो व्यापारः । अभिनिविशते सन्मार्गम् अभिनिवेशेन सन्मार्गं व्याप्नोति अभिनिवेशजन्यः सन्मार्गभिन्नाश्रयको यः सम्बन्धस्तदनुकूल एकाश्रयो वर्तमानो व्यापारः । इत्थं पाणिनीया त्रिसूत्री मत्याख्याता । देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । भावश्चेति वार्तिकमपि । कुरून् स्वपिति । स्वापेन कुरून्व्याप्नोति । स्वापभिन्नकुर्वभिन्नाश्रयो यः संयोगस्तदनुकूल एकाश्रयो वर्तमानो व्यापारः । मासमास्ते आसनेन मासं व्या-

प्नोति आसनजन्यो मासाभिन्नाश्रयको यः संयोगस्तदनुकूल एकाश्रयो वर्तमानो व्यापारः । मास आस्यते इत्यत्राप्येवम् । क्रोशं योजनं गव्यूतिं वास्ते । आसनजन्यः क्रोशाद्यभिन्नाश्रयको यः संयोगस्तदनुकूल एकाश्रयो वर्तमानो व्यापारः । गोदोहं सक्तुपेषं वास्ते । आसनजन्यगोदोहाद्यवच्छिन्नकालाभिन्नाश्रयको यः संयोगस्तदनुकूल एकाश्रयको वर्तमानो व्यापारः । फलस्य करणत्वं तु अध्यादियोग एव विवक्ष्यते नतु तद्रहितानाम् । वैकुंठे शेते यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमसंज्ञकेन यागेन स्वर्गं भावयेत् यजतीत्यत्र तु यागं भावयति । यजेत यागं भावयेतात्र यागस्य करणत्वकर्मत्वे भावे सप्तमी । भवनं भावः क्रिया सा च प्रसिद्धा ग्राह्या तद्ग्रहणस्योचितत्वात्परंप्रति प्रयुज्यमानस्य परप्रसिद्धत्वापेक्षणात्सोत्रास्तीति भावः । मत्वर्थोऽप्रसिद्धक्रियावान् तत्र भावे प्रसिद्धक्रियावतीत्यर्थः । प्रसिद्धक्रियावांश्च सापेक्षत्वादप्रसिद्धक्रियावंतं संलक्ष्यैव भवति । क्रियावल्लक्षणं च क्रियाद्वारैवेति प्रसिद्धक्रियायाऽप्रसिद्धक्रियालक्षणे प्रसिद्धक्रियावतः सप्तमी स्यात् यद्वा भावेन स्वनिष्ठक्रियया क्रियांतरं लक्षयति यः स भावयतीति भावः।स्वनिष्ठक्रियया क्रियांतरलक्षकः ञिर्हेतुकरणे इति ञिकरणे क्रियासामान्ये सर्वविशेषाणामंतर्भावात्प्रलक्षणे भवति । यद्वा कर्तृकरणाद्धात्वर्थे इति चुराद्यंतर्गणसूत्रेण ञिः ञाविष्ठवदिति टिलोपः । पचाद्यः । भावे स्वनिष्ठाक्रियालक्षके प्रत्यासत्त्या स्वनिष्ठेति लभ्यते कस्येत्याकांक्षायां भावे इत्यावर्त्त्य षष्ठ्यंततया विपरिणमय्य भावस्य क्रियांतरस्येति योज्यते । निराश्रयस्य भावस्यासंभवादाश्रय आक्षिप्यते । लक्षणत्वं प्रसिद्धस्यैव लक्ष्यत्वं चाप्रसिद्धस्यैव संभवति । प्रसिद्धेनाप्रसिद्धसाधनस्यौचित्यात् । अयं निर्गलितोर्थः । यः स्वनिष्ठया प्रसिद्धयाऽन्यनिष्ठां क्रियां लक्षयति । तत्र सप्तमी देवे वर्षति चौर आयातः । वर्षतीत्यत्र लक्षणहेत्वोः क्रियाया इति लक्षणे शता स च कर्तरि । कर्ता च देवस्तयोः सामानाधिकरण्यात्सप्तमी।देवाभिन्नाश्रयका या वर्षणक्रिया तयोपलक्षितं भूतयदागमनं तदाश्रयश्चौरः । पतत्यंशुमालिनि पतत्यरातिः । अंशुमाल्यभिन्नाश्रयं यत्पतनं तदुपलक्षितं पतनानुकूल एकारात्यभिन्नाश्रयो वर्तमानो व्यापारः।

गोषु दुह्यमानासु गतः । बहुगोऽभिन्नाश्रयकः पयःक्षरणानुकूलो यो व्यापारस्त दुपलक्षितं यद्भूतं गमनं तदाश्रयः । अग्निषु हूयमानेषु गतः । बह्वग्नि भिन्नाश्रयकहविःप्रक्षेपजन्या या प्रीतिस्तदनुकूलव्यापारोपलक्षितं भूतं यद्ग मनं तदाश्रयः । अस्याश्च सप्तम्याः क्रियान्वयसत्त्वात्कारकविभक्तिषु विधानं कर्तृसाधनयोः आधारभावयोश्चैकपदत्वाद्यथाक्रमलाभोतो लक्ष्यसंस्कारवाक्या नां भेदेप्यदोषः । क्रिययेति किम् । यो जटातिः स भुंक्ते क्रियान्तरमिति यो भुंक्ते स देवदत्तः । अत्र शेषा इति योगो विभज्यते । द्वितीयाद्या विभक्तयो वक्ष्यमाणेभ्योऽर्थेभ्योऽन्यत्रापि भवन्ति । न त्वा तृणाय तृणं वा मन्ये । पित्रा पितरं वा संजानीते । अधीती व्याकरणे । कर्मणि चतुर्थीतृतीया-सप्तम्यो भवन्ति । स्तोकान्मुक्तः । अत्र करणे पञ्चमी । ग्रामस्य दूरं दूरेण दूरात् दूरे वा बसति । दूरांतिकार्थेभ्योऽधिकरणे द्वितीयातृतीयापञ्चमी-सप्तम्यः । नामार्थमात्रेप्येभ्य एता एव पुष्ये पुष्येण वा गच्छेत् । इहस्थोयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्तेत्यत्र कारकद्वयमध्यस्थकालाध्वभ्यां सप्तमीपञ्चम्यौ । रुदति रुदतोर्वा प्राव्राजी-दित्यत्रानादरविशिष्टे भावे षष्ठीसप्तम्यावित्यादिकारकविभक्तिप्रकरणे भाव-ग्रहणाद्भावसप्तम्या अपि कारकविभक्तित्वमवगम्यते । क्रियान्वयितः कारकत्वाभ्युपगमात् षष्ठ्यास्तत्र ग्रहणं यथासंख्यार्थम्। किं च क्वचित्कारके नटस्य शृणोतीत्यादावपि विधानार्थम् । नटो हि कर्तृत्वावधित्वेनाविवक्षितः। क्रियान्वयित्वेन विवक्षितत्वात्कारकं भवति । तत्त्वेन विवक्षणे तु नटे नटाद्वा गीतं शृणोतीति भवत्येव। सर्पिषो जानीते इत्यत्र तु करणत्वेनाविव-क्षणात् । सम्बन्धत्वेन विवक्षणात् षष्ठी । जानातिरत्र प्रवृत्त्यर्थः । सर्पिः सम्बन्धप्रवृत्त्यनुकूल एकाश्रयो वर्तमानो व्यापारः । करणत्वविवक्षायां तु सर्पिषा जानीते । सर्पिरभिन्नाश्रयकव्यापारसाध्यः प्रवृत्त्यनुकूल एकाश्रयो वर्तमानो व्यापारः । मातुः स्मरति । अध्येति वा सर्पिषो दयते । जगतामीष्टे इत्यत्र कर्मत्वाविवक्षायां सम्बन्धत्वविवक्षायां षष्ठी । कर्मत्व विवक्षायां तु मातरं स्मरति । सर्पिर्दयते । जगंतीष्टे । मातृभिन्नाश्रयक-ज्ञानाद्यनुकूलसर्पिरभिन्नाश्रयकत्यागानुकूलः । जगदभिन्नाश्रयकनियमनाद्य-

नुकूल एकाश्रयो वर्तमानो व्यापारः।पूर्वत्र तु मात्रादिसम्बन्धिज्ञानाद्यनुकूल इत्यादि कृद्योगे तु मातुः स्मरणम् । जगतामीशनम् । कार्यत्वविवक्षायामपि कर्तृकार्ययोरिति षष्ठीसमासविकल्पात् मातृस्मरणं सर्पिर्दयनं जगदीशनमिति भवति । पाणिनीयाष्टसूत्री तु निष्कर्षे स्वरार्था । शेषषष्ठ्यां समासेऽतोदात्तत्वम् । कारकषष्ठ्या तूत्तरपदप्रकृतिस्वरत्वम् । यत्तु कालापीया त्रिसूत्री स्मृत्यर्थकर्मणि करोतेः प्रतियत्ने हिंसार्थानामज्वरेरिति सा व्यर्था । कर्मत्वविवक्षायां द्वितीयाया एव दर्शनात् । सम्बन्धत्वविवक्षायां तु स्वाम्यादीत्यनेन सिद्धत्वादन्यथा सर्पिषो जानीते दयते ईष्टे नाथते वेत्यादिष्वनिर्वाहात् । स्वाम्यादीत्यपि न युक्तम् । सम्बन्धे इति तु युक्तं सम्बन्धसामान्यस्यैव षष्ठ्यर्थत्वाभ्युपगमात् । स्वस्वाम्यादिविशेषस्य अर्थप्रकरणादिना लाभात् । यथा घटेन जलमाहरेत्यत्र घटत्वेन घटोपस्थितिः । ताम्रत्वादिना छिद्रेतरत्वादिना चोपस्थितिरर्थप्रकरणादिवशात् । अन्यथाऽश्वस्य घास इत्यत्रानिर्वाहात् सम्बन्धसामान्यस्य वाच्यत्वाद्विशेषे तु तादर्थ्ये चतुर्थी विधानात् षष्ठ्यप्रसङ्गात् । यदपि कालापसूत्रं तत्र भावग्रहणमयुक्तं कारक विभक्तिग्रहणे एव भावग्रहस्यौचित्यात् । कालग्रहणं तु आधारत्वविवक्षायां तदभावे वा । नाद्यः । अधिकरणग्रहणेनैव गतार्थत्वात् । नान्त्यः । मासस्य द्विरधीत इत्यादावतिप्रसङ्गात् । कार्त्तिक्या आग्रहायणी मासे । इत्यत्र तु मासस्याधिकरणविवक्षया वने आम्रा इतिवत्सिद्धत्वात् । विना सह नम ऋते निर्द्धारणस्वाम्यादिभिश्च शेषा इत्यनुवर्तते । विना च सह च नमश्च ऋतेच निर्द्धारणं च स्वामी च ते आदयो येषां इति द्वंद्वगर्भो बहुव्रीहिः । द्वन्द्वान्ते श्रूयमाणत्वादादिशब्दः प्रत्येकं संबध्यते । द्वितीयादीनां चात्र यथाक्रममन्वयः । विनादियोगे द्वितीया । विना पापं सर्वं फलति । पापसम्बन्धाभावे सर्वं कर्म फलप्रदं भवतीत्यर्थः । द्वितीयाद्या उपपदविभक्तयः षष्ठ्यपवादाः । विना उभयतः सर्वतः धिक् उपर्य्युपरि अधोधः अभितः परितः समया निकषा हा प्रति अन्तरा अन्तरेण अनुर्हेतौ सहार्थे हीने च । उपो हीने लक्षणेत्थंभूताख्यानभागवीप्सासुप्रतिपर्यनवः । अभिरभाग अतिक्रमपूजनयोः पृथक् नानेत्यादिर्विनादिः । उभयतः कृष्णम् । धिक्

कृष्णाभक्तम् । धिक् निर्भर्त्सननिंदयोः । उपर्युपरि लोकं हरिः । लोकस्योपरिष्टात्समीपे देश इत्यर्थः । अध्यधि सुखं सुखस्योपरिष्टात्समीपकाले दुःखम् । अधोधो लोकं शेषः लोकस्याधस्तात्समीपदेशे शेष इत्यर्थः । अभितः कृष्णन् । उभयत इत्यर्थः । परितः कृष्णं सर्वत इत्यर्थः । ग्रामं समया । निकषा ग्रामस्य समीपे मध्ये वेत्यर्थः।हा कृष्णाभक्तं तस्य शोच्यत इत्यर्थः । बुभुक्षितं न प्रति भाति किंचित् । अंतरा त्वां मां हरिः । अन्तरेण हरिं न सुखम् । जपमनुप्रावर्षत् । हेतुभूतजपोपलक्षितमतीतकालमेकाश्रयं वर्षणमित्यर्थः । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । अनु हरिं सुराः । उपहरिं सुराः । हरेर्हीना इत्यर्थः । लक्षणे वृक्षं प्रति परि अनु वा विद्योतते विद्युत् । वृक्षोपलक्षित एकविद्युदभिन्नाश्रयको विद्योतनानुकलो व्यापारः । इत्थंभूताख्यानेऽयं प्रकारोऽनेन वा प्रकारेण इत्थं प्रकारविशेषं भूतः प्राप्तस्तस्याख्यानं प्रतिपादनं तस्मिन् भक्तो विष्णुं प्रतीत्यादि विष्णोर्भक्तत्वं प्राप्तः । भागे लक्ष्मीर्हरिं प्रतीत्यादि । हरेर्भाग इत्यर्थः । वीप्सायां देवं देवं प्रतीत्यादि नमस्कारे हरिमभिवर्तते ।हरिं लक्षयित्वेत्यर्थः। भक्तो हरिमभि हरेर्भक्तत्वं प्राप्तः । देवं देवमभिनतिः । क्रियागुणद्रव्यैरनेकेषां पदार्थानां युगपद्व्याप्तुमिच्छा वीप्सा । अभागे किम् । यदत्र ममाभि तद्दीयताम् । ममाभि मम भाग इत्यर्थः । अतिदेवान् कृष्णः । देवानां पूज्य देवानतिक्रान्तो वा । रामं पृथक् । रामं नाना । ग्रामं–दक्षिणेन ग्राममुत्तरेण । कालाध्वनोर्नैरन्तर्य्ये कालश्च अध्वा च कालाध्वानौ तयोः । निर्गतमन्तरं यस्मात्तत् निरंतरं तस्य भावो नैरंतर्य्यं तस्मिन् । क्रियागुणद्रव्यैः कालाध्वनोर्निरन्तरसम्बन्धे सति कालाध्वभ्यां द्वितीया । मासमधीते । निरंतरमाससम्बन्ध्येकाश्रयोऽध्ययनानुकूलो वर्तमानो व्यापारः । मासं कल्याणी । अव्यवच्छिद्य माससम्बन्धिशोभनगुणवती । मासं गुडधानाः । अव्यवच्छिद्य माससंबद्धा इत्यर्थः । क्रोशमधीते । क्रोशं कुटिला नदी । क्रोशं गिरिः । नैरंतर्य्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेश पर्वतः । "कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ॥ सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ अन्तर्भूतं प्रधानक्रियापेक्षया क्रियान्तरं येषामिति

ते तथा तैर्योगे सम्बन्धे सति मासमास्त इत्यादौ मासादीन्व्याप्यास्त इत्यर्थः । उप समीपे पदमुपपदं तन्निमित्ता विभक्तिरुपपदविभक्तिः । षष्ठ्यास्तदपवादस्य चापवादः । कारकविभक्तिस्त्वर्थनिमित्ता नोपपदनिमित्तेति तस्या नोपपदविभक्तित्वम् । चकारोऽप्यादिशब्दवत्प्रत्येकं सम्बध्यते । सर्वानुक्तसमुच्चायार्थः । तेनेदं वचनजातं संगृह्यते । सहादियोगे तृतीया । सह शिष्येणागतो गुरुः । नन्वियं सम्बन्धे तृतीया । सम्बन्धश्चोभयनिष्ठोऽत उभाभ्यां तृतीया स्यादिति चेन्मैवम् । उत्सर्गसमानदेशा अपवादा भवंति इति न्यायात् । यतः षष्ठी प्राप्ता । तत एवास्या विधानात् । षष्ठी चाप्रधानाद्विहिता । यद्वा । परत्वात्प्रथमया बाधात् । सह शिष्येण भुंक्तेऽत्र तृतीया चरितार्था । घटः कृत इत्यत्र प्रथमा । सह शिष्येणागतः इहोभयप्रसंगे परत्वादन्योक्ते प्रथमा । कर्तृत्वेन कर्तुर्गुरोरभिधानात् । पुत्रेण सह शयनमित्यत्रान्तरङ्गत्वान्नामार्थे प्रथमा । सम्बन्धस्योभयापेक्षत्वेन बहिरङ्गत्वमित्थं सहयुक्तेऽप्रधाने इत्यत्राप्रधानग्रहणं चिंत्यम् । ननु शिष्येण सहागतो गुरुरित्यत्र शिष्यस्यापि सहार्थसामर्थ्यात्प्रतीयमानं कर्तृत्वमस्त्येव शिष्यस्यागमनं विना गमने साहित्यासम्भवादिति । कर्तृसाधनयोरित्येव तृतीया सेत्स्यतीति किमत्र सहग्रहणेन । न चात्राप्यन्योक्ते प्रथमा स्यादिति वाच्यम् । मुख्यस्य गुरोरेव कर्तुः क्तादिनाभिधानात् । गौणस्य त्वनन्योक्तत्वात् । उच्यते । इह शिष्येण सहागमनं गुरोरित्यत्र कर्तृकार्ययोरिति शिष्यात् षष्ठी स्यात् । यथा तिलैः सह माषान् वपति । तिलानामपि कर्मत्वप्रतीतेर्द्वितीया स्यात् । तथा शिष्येण सह स्थूलो गोमांश्चेति द्रव्यगुणसम्बन्धप्रतिपादनात् । क्रियागन्धस्यैवाभावात् । कर्तृगन्धोऽपि नास्तीति तृतीया न स्यात् । किं च लक्ष्मणेन सह रामेण हतो रावणो रामेणेत्यत्र मुख्ये कर्त्तरि सम्भवति । गौणमुख्यन्यायेन गौणकर्त्तरि लक्ष्मणे न स्यादिति सह ग्रहणम् । ननु गुरुणा सहागतः शिष्य इत्यत्र कथं गुरोः प्राधान्यादिति चेन्मैवम् । न ह्यत्र लौकिकं प्राधान्यं गृह्यते । किंत्वत्र शाब्दम् । तच्च शब्दप्रतिपादितक्रियत्वम् । अर्थलब्धक्रियत्वमप्राधान्यं तच्छिष्यस्य गुरोर्वा यत्रास्ति तत्र तृतीयेति दिक् । एवं साकं सार्द्धं समं अमा पृथक् विना नानायोगेपि सहार्थ-

विवक्षायामसति सहार्थप्रयोगे तृतीया । सिना जसेत्यादिनिर्देशात् । येन विकृतेनांगिनो विकारो लक्ष्यते तस्मात्तृतीया । पादेन खंजः । शिरसा खल्वाटः । हस्तेन कुणिः । कर्णेन बधिरः । पादविशिष्टखंजत्वविशिष्ट इत्यादिरर्थः । अंगविकारः किम् पादः खंजोऽस्य प्रकारविशेषं प्राप्तस्य लक्षणात्तृतीया । जटाभिस्तापसः । शिष्येणोपाध्यायः । कमंडलुना छात्रः । पुस्तकेन पंडितः । दंडेन यतिः । जटादिना ज्ञाप्यतापसत्वादिविशिष्टः । लक्षणे किम् । अस्य जटाः पिंगाः । जटासम्बन्धमात्रमिह विवक्षितं न ज्ञापकत्वम् । हेतुवाचकात्तृतीया । दंडेन घटः । पुण्येन दृष्टो हरिः । दध्ना स्थूलः । धूमेन वह्निमान् कृतकत्वेनानित्यः । फलमपीह हेतुः । अध्ययनेन वसति । दंडादिप्रयोज्यो घटादिः । पुण्यप्रयोज्यदर्शनविषयो हरिः । क्रियागुणद्रव्याणां साधारणं निर्व्यापारं च कारणं हेतुः । क्रियामात्रजनकं व्यापारवच्च कारणं करणम् । फलसाधनयोग्यः पदार्थो हेतुरिति माधवः। तदुक्तम्। "द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् । अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते" । अनुक्तसमुच्चयार्थचकारसम्बन्धबलादेतल्लभ्यते । अलं श्रमेणत्यस्य श्रमेण साध्यं नास्तीत्यर्थः । इह साधनक्रियां प्रति श्रमः करणम् । शतेन शतेन वत्सान् पाययति पयः । शतेन परिच्छिद्येत्यर्थः । अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । दास्या संयच्छते कामुकः । धर्म्ये तु भार्यायै संयच्छति । दाणः किम्।दास्यै ददाति ।चतुर्थ्यर्थे किम्।दासीं संयच्छति । प्रकृत्या चारुः । गोत्रेण गार्ग्यः । प्रायेण याज्ञिकः । तुल्यार्थैरतुलोपमाभ्यां वा । कृष्णेन तुल्यः सदृशः समो वा । अतुलेति किम् । तुला उपमा वा कृष्णस्य नास्ति।नम आदियोगे चतुर्थी । रामाय नमः । ननु महेशानं मुनित्रयं नारायणं वा नमस्कृत्येत्यत्र चतुर्थी युक्ता । नमसो योगसत्त्वात् । उच्यते । किं जहत्स्वार्थवृत्तिरिति पक्षे चतुर्थी आपाद्यते उत अजहत्स्वार्थवृत्तौ वा । नाद्यः । नमःशब्दस्यानर्थक्यात् । अर्थवद्ग्रहणे नानर्थकस्येत्यनेनार्थवत एव तत्र ग्रहणात् । समुदायस्यैवार्थवत्त्वात् । न द्वितीयः । एकैकस्योभयार्थाभिधायकत्वेन नमः शब्दार्थमात्राभावात् नमः शब्दस्योत्तरपदार्थाभिधायक एवौचित्यात् स्वार्थेन क्रियावाचकत्वात्तत्कर्मणि

द्वितीयाया एवौचित्यात् । स्वार्थविशिष्टांतराभिधायकत्वेन गौणत्वाच्च । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात् च नमस्यामो देवानिति यथा न्यायसिद्धमिदं वचनम् । तथा हि । देवशब्दस्य करोतिनान्वयो नमःशब्देन वा । आद्ये कर्मकारकत्वाद्द्वितीया । नमःशब्दो हि करोतिनान्वेति । यथा च नमस्कारविशिष्टान् देवान् नमस्करोतीत्यर्थो भवति । तत्र क्रियाकारकसम्बन्धस्यांतरंगत्वाच्चतुर्थ्याः प्रसंग एव नास्ति । द्वितीये त्विष्टापत्तिरेव । नमःशब्दः करोतिनान्वेति देवशब्दस्तु नमःशब्देन । तथा च देवसंबंधिनमस्कारं करोति । तत्र सम्बन्धसामान्ये षष्ठ्यां प्राप्तायां तदपवादो नमआदीति चतुर्थी विधीयते । द्वितीये च नमस्करोति देवानित्यत्र गतिः । नमस्कृत्येत्यत्र तु व्यवस्था पूर्वमेवोक्ता । स्वयंभुवे नमस्कृत्य कपिलाय नमस्याम इत्यादौ तु क्रियार्थोपपदेति चतुर्थी बोध्या । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति वचनं तु कार्यायेदित्यनेन ज्ञापितं कार्यं विधातुमुच्चारित इति तदर्थात् । प्रजाभ्यः स्वास्ति । अग्नये स्वाहा-पितृभ्यः स्वधा । वषडिंद्राय । दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि आयुष्यं चिरंजीवितं मद्रं भद्रं कुशलं निरामयं सुखं शम् अर्थः प्रयोजनं हितं पथ्यं कृष्णाय भूयात् । प्रभ्वादीनां निर्द्धारणादिषु च पाठात् । तद्योगे षष्ठ्यपि कार्यकारणसंबंधे कार्याच्चतुर्थी । यूपाय दारु । कुंडलाय हिरण्यम् । पटाय तंतवः । रंधनाय स्थाली । अवहननायोलूखलम् । संयमाय । श्रुतम् । क्लृप्यर्थधातुयोगे संपद्यमानाच्चतुर्थी । भक्तिर्ज्ञानाय कल्पते संपद्यते जायते इत्यादि । भक्तिर्ज्ञानात्मना परिणमत इत्यर्थः । भक्तेर्ज्ञानाकारपरिणाम संबंधी सामर्थ्याद्यनुकूल एकाश्रितो वर्तमानो व्यापारः । ऋतेआदित्वात्पंचम्यपि । भक्तेर्ज्ञानं कल्पते । प्रकृतिविकृत्योरभेदभक्तिर्ज्ञानं कल्पते । उत्पातेन ज्ञापिताच्च । वाताय कपिला विद्युत् । हितादियोगे च । ब्राह्मणाय हितं बलिः सुखं रक्षितम् । तुमर्थाच्च भाववचनाच्चायागाय याति । यष्टुं यातीत्यर्थः । आदिशब्दः प्रकारे । चकारोनुक्तसमुच्चायार्थस्तेनेदं सिद्धम् । ऋतआदियोगे पंचमी । ऋते ज्ञानान्न मुक्तिः । अन्यः कृष्णात् । आरात् इतरो भिन्नो वा । दिक्शब्दयोगे । प्राक् पूर्वः परो वा रामात् । दिशि दृष्टः शब्दो

दिक्शब्दस्तेन संप्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः। अवयववाचियोगे तु न पूर्वं कायस्य । प्राक् प्रत्यग्वा वनात् । दक्षिणाहि ग्रामात् । पृथक् विना नाना वा रामात् । अपहरेः परिहरेः संसारः । आमुक्तेः संसारः । आसकलाद्ब्रह्म । प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् । कर्तृवर्जित ऋणे पंचमी । शताद्बद्धः । अकर्तरि किम् । शतेन बन्धितः। हेतौ। जाड्यात् बद्धः । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः । विभागवतो निर्द्धारणाश्रयात्पञ्चमी । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः । नह्यत्र माथुराणां पाटलिपुत्रकाणां च केनापि प्रकारेणैक्यमतो विभाग एवातो नात्र निर्द्धारणषष्ठी । यद्वा विश्लेषावधावित्र पञ्चमी । मनसा तेषामविभागं गृहीत्वा मनसैव विभागग्रहणान्मानसविभागसत्त्वात् निर्द्धारणादिभिर्योगे षष्ठी । नितरां धार्यते जातिगुणक्रियासंज्ञाभिः पृथक्त्वेनावधार्य्यतेऽनेन हेतुनाऽसौ निर्द्धारणः। यद्वा जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्द्धारणं तदस्ति साध्यत्वेनास्येति अइकावित्यः । निर्द्धारणो हेतुरिति यावत् । यत्तु माधवेनोक्तं निर्द्धारण इत्यर्थपरो निर्देशो विनादीनां च स्वाम्यन्तानां द्वंद्वे तत आदिशब्देन बहुव्रीहौ विनादिभिः प्रत्येकं संबध्यमानोप्यादिशब्दो न सम्बध्यते ततश्च निर्द्धारणार्थे षष्ठीति । तन्न । द्वंद्वासंभवात्सोप्येकरूपेणान्वयाभावात् । अतो त्रद्वन्द्वो निपात्यते इति वक्तव्यं स्यात् । किञ्च निर्द्धारणार्थे विधीयमाना षष्ठी नाम्नः स्यात् । नाम च सन्निहितं त्रयं निर्द्धारणाश्रयो निर्द्धारणहेतुर्निर्द्धार्य्यमाणश्च । तत्र विशेषानुपादानात्कस्माद्भवति कस्मान्नेति न ज्ञायते। अस्मन्मते त निर्द्धारणहेतोर्न । तद्योगे विधानात्तस्मादविधानाच्च निर्द्धार्य्यमाणादपि न तस्य स्वनिष्ठत्वेनाभिधानादतः परिशेषान्निर्द्धारणाश्रयात् षष्ठी परैरपि । ततश्च निर्द्धारणमित्यनेन निर्द्धारणाश्रयाद्विहिता न निर्द्धारणार्थे । नृणां द्विजः श्रेष्ठः । गवां कृष्णा बहुक्षीरा । क्रियापराणां भगवदाराधकः श्रेष्ठः । छात्राणां मैत्रः पटुः । नन्वत्र समूहसमूहिलक्षणे सम्बन्धे षष्ठी सिद्धैव । सत्यम् । विनादीनां द्वितीयादिभिर्यथाक्रमलाभार्थं षष्ठीविधानम् । किंच स्वाम्यादित्वान्निर्द्धारणयोगे सप्तमी विधीयते । तया बाधो माभूत्यदि

तोऽपि षष्ठीविधानम्। गवां स्वामीश्वरः अधिपतिर्दायादः साक्षी प्रतिभूः प्रसूतः। हरिपूजनस्यायुक्तः कुशलो वा। हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी। अन्नस्य हेतोर्वसति। हेतुशब्दप्रयोगे किम्। अन्नाद्वसति। हेतौ द्योत्ये किम्। हेतुना वसति। निमित्तपर्यायप्रयोगे सर्वादेः सर्वा विभक्तयोऽसर्वादेस्तृतीयादयः। किन्निमित्तं वसति। केन निमित्तेन। कस्मै निमित्तायेत्यादि। एवं किं कारणं को हेतुः कोर्थः किं प्रयोजनमित्यादि ज्ञानेन निमित्तेन ज्ञानाय निमित्तायेत्यादि। ग्रामस्य दक्षिणतः। पुरः पुरस्तात्। उपरि उपरिष्टात्। दक्षिणेन वा। यत्तु माधवेनोक्तं निर्द्धार्यते विविच्यतेऽस्माद्वृन्दादेकदेशस्तन्निर्द्धारणमित्यपादाने ल्युट्। तत्र निर्द्धारणे समुदाये इत्यर्थः। तन्न। पूर्वापरविरोधात्। पूर्वं हि निर्द्धारणे षष्ठीत्युक्तं इदानीं समुदाये शब्दे इत्युच्यते शब्दे त्वादिशब्दस्याप्यन्वयः स्यात्ततश्च निर्द्धारणादिभिर्योगे इत्यन्वयः स्यात्ततश्च निर्द्धारणाद्धेतोः षष्ठी स्यान्न तु निर्द्धारणाश्रयात्। यथा विनादियोगे विधीयमाना विनादिशब्देभ्यो न भवन्ति। स्वाम्यादियोगे सप्तमी। गोषु स्वामीश्वरोऽधिपतिर्दायादः साक्षी प्रतिभूः प्रसूतः आयुक्तः कुशलो वा। हरिपूजने निर्द्धारणादिपाठात् षष्ठी युक्ता। नृषु द्विजः श्रेष्ठः। गोषु कृष्णा बहुक्षीरा। गच्छत्सु धावन् शीघ्रः। छात्रेषु मैत्रः पटुः। मातरि निपुणः साधुर्वा कृष्णोऽसाधुर्मातुले। प्रसित उत्सुको वा हरौ। सहादित्वाद्धरिणेत्यपि लोकेऽधिको हरिः। ऋत आदित्वाल्लोकादधिकः। अधिभुवि रामः। अधिरामे भूः। उपपरार्द्धे हरेर्गुणाः। परार्द्धादधिका इत्यर्थः। कर्तृकार्ययोरक्तादौ कृति षष्ठी। कर्त्तरि कर्मणि च षष्ठी क्तादिवर्जिते कृदन्ते प्रयुज्यमाने। व्यासस्य कृतिः। श्रुतेरध्ययनम्। जगतः कर्त्ता कृष्णः। कर्तृकार्ययोः किम्। ग्रामेऽध्ययनम्। अश्वेन यानम्। ब्राह्मणाय दानम्। कृति किम्। कटं करोति। घटः क्रियते कुलालेन। कृतपूर्वीकटम्। भावे कर्मसामान्ये वा क्तः। तेन कर्मणस्तद्विशेषस्य वा उक्तत्वमस्ति। कृतं पूर्वमनेन कारकादिति कर्त्तरीन्। ओदनं पचतितराम्। न चात्र निरवकाशत्वाद्द्वितीयातृतीये बाधके स्यातामिति वाच्यम्। रामेण वाली हतः। कृष्णः कंसं हतवानित्यादौ सावकाशत्वात्। क्तक्तवतू शतृशानौ क्वसुकानौ

किः उः उकारांतः उकण् तृन् क्त्वा क्यप् तुम् णम् खलप् इति क्तादयः । एतद्भिन्ने । कृष्णेन कंसो हतः । कृष्णः कंसं हतवान् । सुखं कुर्वन् कुर्वाणः । चक्रिवान् । चक्राणः । चक्रिर्वा हरिं दिदृक्षुरलंकरिष्णुर्वा । दैत्यान् घातुको हरिः । कर्त्ता कटम् । नकारोपादानात्तृयोगे न निषेधः । कटस्य कर्त्ता । सुखं कृत्वा प्रकृत्य कर्तुं कारं ईषत्करः कटः । सुपानः सोमो भवता । सोमं पवमानः । आत्मानं मंडयमानः । वेदमधीयन् । चकारस्यानुक्तसमुच्चयार्थस्यानुवर्तनात् क्वचिद्वा । मुरस्य मुरं वा द्विषन् । मया मम वा सेव्यो हरिः । एवं सर्वकृत्ययोगे । शब्दानामनुशासनमाचार्येणाचार्यस्य । क्वचिन्न । आश्चर्यो गवां दोहोऽगोपेन । अत्र कर्त्तरि न । सतः पालकोऽवतरति । शतं दायी । व्रजं गामी । एषु कर्मणि । न नेतव्या व्रजं गावः कृष्णेनेत्यत्रोभयत्र न अक्तादावित्ययं निषेधोऽनन्तरस्येति अपादानादिविशेषैरविवक्षितं कर्मसंज्ञम् । राज्ञां मतः बुद्धः पूजितो वा । इदमेषां शयितं गतं भुक्तं आसितं वा । स्वार्थण्यंतातिरिक्तण्यंता द्विकर्मकाः । "दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमंथ्मुषाम् ॥ कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" ॥ दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुणा कर्मणा यद्युज्यते तदेव गौणं कर्मेति परिगणनं कर्त्तव्यमित्यर्थः । एतदर्थकाश्चान्येऽप्यत्र ग्राह्याः । ननु नीवह्योः पर्यायत्वादन्यतरो न पठनीय इति चेत् । अजां नयति वहति वेत्युक्तेर्विलक्षणार्थावगतेर्यथा च रथस्य नेता रथस्य वोढाऽन्यत्रापि यथा च यो हलं वहति स एव हालिक इत्युच्यते । न तु यो नयति । गां दोग्धि पयः । बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तंडुलानोदनं पचति । गर्गान् शतं दंडयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति।वृक्षमवचिनोति फलानि।माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । क्षीरनिधिं मथ्नाति सुधाम् । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि।एष्वादौ पठितं गौणं कर्म पश्चादपेक्षणात् पयआदिकं तु मुख्यमादावेवापेक्षणात् । कर्मणि प्रत्यये तु दुहादीनां गौणं न्यादीनां तु मुख्यं कर्मोक्तं भवति । गौर्दुह्यते पयः ।

बलिर्याच्यते भिक्ष्यतेऽर्थ्यते वा वसुधाम् । तंडुला ओदनं पच्यंते । गर्गाः शतं दंड्यंते । व्रजोऽवरुध्यते गाम् । माणवकः पंथानं पृच्छ्यते चोद्यते वा वृक्षोऽवचीयते फलानि । माणवकः धर्ममुच्यते भाष्यते शिष्यतेऽभिधीयते वा । शतं जीयते देवदत्तम् । क्षीरनिधिः सुधां मथ्यते । देवासुरैरमृतमंबुनिधिर्ममंथे। देवदत्तः शतं मुष्यते। ग्राममजा नीयते ह्रियते कृष्यते ऊह्यते।एषां ण्यंतानां कर्त्तरि उदाहरणानि । गा दोहयति पयो गोपेन चैत्रः । बलिं याचयति वसुधां भ्रात्रेंद्रः । तंडुलानोदनं पाचयति गुणेन । राजा गर्गान् शतं दंडयत्यमात्येन । राजेत्यादि ण्यंतात्कर्मणि गौर्दुह्यते पयो गोपेन चैत्रेण । बलिर्याच्यते वसुधा भ्रात्रेंद्रेण । तंडुला ओदनं पाच्यंते सूदेन राज्ञा । गर्गाः शतं दंड्यंतेऽमात्येन राज्ञा । गौणे कर्मणि कृति वा षष्ठी । गां गौर्वा दोग्धा दोहनं पयसः । बलिं बलेर्वा याचको याचनं वा वसुधायाः । तंडुलान् तंडुलानां वा पाचकः पाचनं वौदनस्य । गर्गान् गर्गाणां दंडको दण्डनं वा शतस्य । व्रजं व्रजस्य वा रोधको रोधनं वा । गवां माणवकं माणवकस्य वा । पृच्छकः प्रश्नो वा पथः । वृक्षं वृक्षस्य वाऽवचायकोऽवचयनं वा फलानाम् । माणवकं माणवकस्य वा वाचको वचनं भाषको भाषणं शासकः शासनमभिधायकोऽभिधान वा। धर्मस्य शतं शतस्य वा।जेता जयनं वा देवदत्तस्य क्षीरनिधिं क्षीरनिधिर्वा मंथको मन्थनं वा सुधायाः । देवदत्तं देवदत्तस्य वा मोषको मोषणं वा शतस्य।ग्रामं ग्रामस्य नेता नयनं हारको हरणं कर्षकः कर्षणं वाहको वहनं वाऽश्वस्य । कर्मणि कृति।गौर्दुग्धा पयो गोपेन । बलिर्याचितो वसुधां हरिणा । तंडुला ओदनं पक्वाः सूदेन । गर्गाः शतं दंडिता राज्ञा । व्रजोवरुद्धो गां गोपेन । माणवकः पंथानं पृष्टोऽध्वगेन । वृक्षोऽवचितः फलानि चैत्रेण । माणवको धर्ममुक्तो भाषितः शिष्टः पित्रा । शतं जितं देवदत्तं द्विषता । क्षीरधिः प्रार्थितः सुधां देवैः। देवदत्तः शतं मुषितो वंचकेन अजा ग्रामं नीता हृता कृष्टा ऊढा वा चैत्रेण । अथ ण्यंता द्विकर्मकाः। गत्यर्थज्ञानार्थभक्षणार्थाः शब्दकर्मकारकाः असंभावितकालादिभिन्नकर्मका जल्पत्यादयः । नियंतृकर्तृको वहिः भक्षिर्हिंसार्थः।दृशिभिन्ना ज्ञानविशेषार्थका न ग्राह्याः । नीवहिआदिखादिशब्दायनयश्च न ग्राह्याः । हृक्रोर्वा अभिवादि

दृशोराति वा शत्रून् स्वर्गं गमयति।वेदार्थं स्वान् वेदयति।देवानमृतमाशयति ।विधिं वेदमध्यापयति । पृथ्वीं सलिले आसयति । अर्थं जल्पयति भाषयति वा पुत्रं देवदत्तः।वाहयति रथं वाहान् सूतः।भक्षयति बलीवर्दान्सस्यम्।हिंसार्थस्य किम्। भक्षयत्यन्नं बटुना।दर्शयति हरिं भक्तान् । नाययति वाहयति वा भारं भृत्येन । आदयति खादयति वाऽन्नं बटुना । स्मारयति हरिं घ्रापयति गंधं देवदत्तेन मैत्रः । हारयति कारयति वा भृत्येन भृत्यं वा कटम् । अभिवादयते देवं भक्तेन भक्तं वा । दृशेः मात्रविकल्पः । अन्येषां त्वप्राप्त विकल्पः । अथ पूर्वोक्ताः कर्मणि उच्यन्ते । स्वर्गं स्वर्गाय वा गम्यंते शत्रवो हरिणा वेदार्थं स्वा वेद्यंते । वेदार्थः स्वान् वेद्यते वा हरिणा । अमृतं देवा आश्यंतेऽमृतं देवानाश्यते वा । वेदं विधिरध्याप्यते वेदो विधिमध्याप्यते वा । कल्पं पृथिवी सलिले आस्यते हरिणा । अर्थं जल्पते भाष्यते वा पुत्रो देवदत्तेन । रथं वाह्यंते वाहाः सूतेन । सस्यं बलीवर्दा भक्ष्यंते । हरिं भक्ता दृश्यंते साधुना । नाय्यते वाह्यते वा भारो भृत्येन चैत्रेण । आद्यते खाद्यते वौदनो बटुना । चैत्रेण स्मार्य्यते हरिर्घ्राप्यते गंधश्चैत्रेण मैत्रेण । हार्य्यंते कार्य्यंते वा कटं भृत्यश्चैत्रेण । हार्य्यंते कार्य्यंते वा कटो भृत्येन चैत्रेण । अभिवाद्यते दृश्यंते देवं भक्तश्चैत्रेण । अभिवादयते दर्शयते वा देवो भक्तेन चैत्रेण । कृति तु स्वर्गं स्वर्गाय वा शत्रूणां गमयिता हरिः । वेदार्थं भक्तानां बोधयिता हरिः । अमृतं देवानामाशयिता हरिः । वेदं विधेरध्यापको हरिः । कल्पं पृथिव्याः सलिले आसको हरिः । हारयिता कारयिता वा कटं भृत्येन चैत्रः । अभिवादयिता दर्शयिता देवं भक्तस्य चैत्रः । देवस्य भक्तेन चैत्र इति वा । स्वर्गं गमयितव्या शत्रवो हरिणा । वेदार्थं वेदयितव्याः स्वा हरिणा । अमृतमाशितव्या देवा हरिणा । वेदमध्याप्यो विधिर्हरिणा । कल्पं सलिले आसनीया पृथ्वी हरिणा । कारितो हारितो वा कटो भृत्येन चैत्रेण । अभिवादितो दर्शितो वा भक्तश्चैत्रेण देवं देवो भक्तेन चैत्रेणेति वा । एष्वक्तादाविति कर्तृकर्मणोर्न षष्ठी तृवुणादियोगे तु प्रयोज्ये कर्मण्येव षष्ठी । साक्षात् कृदर्थयोगात् । न तु प्रकृत्यर्थकर्मणि साक्षात्कृदर्थयोगाभावात् । अन्ये त्वाहुः । परंपरासम्बन्धेऽपि

कर्मणि कृद्योगे षष्ठी भवत्येव । परंपरासंबद्धे प्रकृत्यर्थकर्मणि प्रत्ययो यथा। तन्मते स्वर्गस्य शत्रूणां गमयिता हरिः । वेदार्थस्य स्वेषां बोधको हरिरित्यादि । तदुक्तम् । "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ॥ बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया । प्रयोज्यकर्मण्यन्येषां ण्यंतानां क्तादयो मताः" ॥ वाचनिकमिदमित्येकेऽन्ये तु न्यायसिद्धमिदमाहुः । तथा हि क्षीराद्यर्थिनोऽपि प्रथमं पालनप्रीणनादिरूपा प्रवृत्तिर्गवादावेव दृश्यतेऽतः प्रत्ययेन तदेवाभिधीयतेऽन्यादियोगे तु प्रथममजादावेव प्रवृत्तिर्दृश्यते रक्षणादिकं चाजादेरेव चिकीर्षितं न तु ग्रामस्येति । प्रत्ययेन तदेवाभिधीयते यस्य वेदार्थान्न शब्दादयः एव प्रतिपाद्य देयत्वेनेष्टस्तस्य त एव प्रत्ययेनाभिधीयन्ते यस्य तु भक्तो बोधयितव्येन देवोऽमरत्वेन विधिर्व्युत्पादयितव्यत्वेनेष्टस्तस्य त एवेति प्रयोजकव्यापारस्य प्राधान्यात्तेनाप्तुमिष्टस्य प्रयोज्य कर्मणो मुख्यत्वान्मुख्यामुख्येतिन्यायात्तस्यैवाभिधायकाः क्तादयः । स्वर्ग गमनेन शत्रूणामतिशयाधानामिष्टं न तु शत्रुगमनेन स्वर्गस्य स्थित्या पृथिव्या अतिशयाधानमिष्टम् ननु कल्पस्येत्यतोऽपि प्रयोज्यस्य मुख्यत्वम् । करः कार्य्यते भृत्येन मैत्रेणेत्यत्र प्रयोज्यस्य कर्मत्वाभावात् । ण्यंतात् प्रयोज्ये कर्मणि आदिविधानात् क्तादयो न स्युः । उच्यते । आद्धुविकर्मणीति कर्मणि क्तादिविधिः प्राप्तः । स बाधनीयो वा मुख्योपि कर्मणि विधिः स्वीक्रियते । न तु सर्वथा बाध इति प्रधाने नियता षष्ठी गौणे तूभयथा भवेदितीदं वाचनिकमित्येके । न्यायसिद्धमित्यन्ये । नेताऽश्वस्य स्रुघ्नं स्रुघ्नस्य वेत्यत्राश्वस्य प्रथमं क्रियासम्बन्धात्कृदर्थसम्बन्धादनुक्तयोः मुख्यत्वं तत्र न षष्ठी । उभयोः कर्मणोर्द्वितीयावदुभयोः कर्त्रोस्तृतीयावदुभयोः कर्मणोः षष्ठी भवति । अन्योक्ते प्रथमा । अन्येन आख्यातेन कृता तद्धितेन समासेन चोक्ते कर्मादौ सम्बन्धे च प्रथमा । अधिकारोऽयं कार्ये द्वितीयेत्यादिभिः प्रत्येकं सम्बध्यते । प्रत्येकाभिप्रायादेकवचननिर्देशः । कार्ये द्वितीयाऽन्योक्ते प्रथमा कर्तरि तृतीयाऽन्योक्ते प्रथमेत्यादि । घटं करोति कुलालः । घटः क्रियते कुलालेन । घटस्य कर्ता कुलालः । घटः कृतः पच्यतेऽनेनेति पचनोग्निः । दीयतेस्मै दानीयो विप्रः । उपसमीपे गत्वाऽधीतेऽस्मा-

दित्युपाध्यायो गुरुः । पच्यतेऽस्यां पचनी स्थाली । कुंकुमेन रक्तं वस्त्रं कौंकुमं वस्त्रम् । अक्षैर्दीव्यतीत्याक्षिकः । पञ्च वृद्ध्यादि दीयतेऽस्मै पञ्चकः पुरुषः इन्द्रो देवताऽस्यैंद्रं हविः । दंडः प्रहरणमस्यां क्रीडायां दांडा । प्राप्तमुदकं यं प्राप्तोदको ग्रामः । ऊढो रथो येन ऊढरथो ऽनड्वान् । उपहृतः पशुर्यस्मै उपहृतपशू रुद्रः । उद्धृतमन्नमस्मा दुद्धृतान्नः कटाहः । पीतमंबरं यस्य स पीतांबरो हरिः । वीरा पुरुषा यस्मिन् वीरपुरुषो ग्रामः । क्वचिन्निपातेनाप्यभिधानम् । क्रमादमुं नारद इत्यबोधि सः । अन्योक्ते किम् । करोति । रामेण हतः । अन्येन किम् । स्वार्थद्रव्यलिङ्गसंख्याकारकाणीति पञ्चकनामार्थपक्षे नामोक्तेऽपि प्रथमा स्यात् । द्वितीयादिविधानं तु द्विकादिपक्षे चरितार्थमन्यत्वं च विभक्तिप्रकृत्यपेक्षया गृह्यते । न विभक्त्यपेक्षया नापि विभक्त्यन्तापेक्षया प्रथमा । नाम्नो विहितत्वेन तयोर्नामत्वाभावात्प्राप्तेरेवासत्त्वात् । तदुक्तम् । "यस्मिन्नर्थे विधीयंते लकारास्तद्धिताः कृतः । समासो वा भवेद्यत्र स उक्तः प्रथमा ततः" ॥ नन्विदं सूत्रं मास्तु क्तादिना कर्मादेरभिहितत्वेन कृतः कट इत्यादौ द्वितीयादयो न भविष्यन्तीति चेन्न । प्रथमाया अप्यप्रसङ्गात् कारकाणां नियतोपस्थितिकत्वाभावेन नामार्थत्वाभावात् । पञ्चकपक्षे नियतोपस्थितिकत्वेऽपि तस्याऽसार्वत्रिकत्वात् । त्रिकपक्षे बहुधाप्यव्यवहारदर्शनात् । ननु लिङ्गार्थे प्रथमेत्यस्याग्रेऽन्योक्त इति सूत्रणीयम् । द्विः प्रथमाग्रहणं न कर्तव्यं भवति । उक्तरीत्याधिकारोऽभ्युपेयः । मैवम् । विधिपक्षस्यापि सम्भवात् तत्र दोषप्रसङ्गात् । कर्तृकार्येति षष्ठ्यावकाशो घटस्य कर्त्ता । अस्या अवकाशः । कृतो घट इति कर्त्तव्यो घट इत्युभयत्र प्रसङ्गे परत्वात् षष्ठी स्यादंत्यपाठे तु पक्षद्वयेऽपि न क्षतिः । ननु लिंगार्थेत्यादि चतुः सूत्र्यन्योक्ते प्रथमेत्यस्यानंतरं पाठ्यः । ततश्च द्विः प्रथमाग्रहणं न कर्त्तव्यं भवति । मैवम् । शेषा इत्यस्य प्रयोगाभावप्रसङ्गादुक्तादन्यत्वाभावादथ द्वितीयाद्या इति पाठ्यम् । मैवम् । एकमात्रालाघवार्थे सूत्रविपर्यासस्यानौचित्यात् । नन्विह प्रासाद आस्त इत्यत्र कथं सप्तम्यधिकरणस्य यत्रोक्तत्वात् । उच्यते । शक्तिः कारकमितिपक्ष अत्राश्रीयते कर्मद्वितीया-

कर्तृकरणतृतीयाऽधिकरणसप्तमीनामाश्रयत्वमर्थः । स चाखंडो धर्मस्तादात्म्यसम्बन्धेन तदेव वाच्यतावच्छेदकं तच्च निरूपकभेदाद्भिन्नं कर्मणि फलस्य निरूपकत्वं कर्तृकरणयोर्व्यापारस्य निरूपकत्वमाधारे तु स्वाश्रयद्वारा फलव्यापारयोश्च निरूपकत्वमेवं स्थितेऽनुक्तां शक्तिमभिधातुं सप्तमी प्रयोगः । ननूक्तामभिधातुं प्रथमाप्रयोगस्तस्या षष्ठैवोक्तत्वेन प्रथमायाः साधुत्वेऽनुपयोगात् । सप्तम्यास्त्वनुक्तशक्त्यभिधाने साधुत्वे चोपयोगसत्त्वाद्बलीयस्त्वात्तस्या एव प्रयोगः । एवमुद्देश्यत्वमवधित्वे बोध्ये । सम्बन्धत्वमप्यतिरिक्तमस्तु विशिष्टज्ञानजनकत्वं वा । यद्वा । शक्तिमदेव कारकं प्रधानं क्रियानिरूपितैव विभक्तिर्भवति । न त्वप्रधाननिरूपिता । तदुक्तम् । "प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते"। प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते । यदा गुणे तदा तद्वदनुक्तापि प्रतीयते । एवमासने आस्ते पचनेन पचन्यां वा पचति । एवं पक्कमोदनं भुंक्ते । कृतेन घटेन जलमाहरतीत्यादावप्याख्यातांतवाच्यक्रियायाः प्राधान्यात्तदुपयोगिन्येव विभक्तिः । ओदनं पक्त्वा भुज्यते इत्यत्रौदनस्य पचिनैव शाब्दः सम्बन्धः भुजिनात्वार्थः । एवं पक्त्वौदनो भुज्यत इत्यत्र ओदनस्य भुजिना शाब्दः सम्बन्धः पचिनात्वार्थः । तत्र व्यवस्थित एव प्रथमाद्वितीये। अथ कटं करोति भीष्ममुदारं दर्शनीयमित्यत्र विशेष्यविभक्त्यैव कर्मणा उक्तत्वाद्विशेषणेभ्यः कथं द्वितीयेति चेत् न । खले कपोतन्यायेन सर्वेषां क्रियायां सम्बन्धात् द्वितीयासंभवात्पश्चात्तु तेषां विशेषणविशेष्यभावो मनसा गृह्यते । गुणानां द्रव्यं प्रति द्रव्यस्य च गुणं प्रति साकांक्षत्वादुपस्थितपरित्यागेनानुपस्थितकल्पने गौरवात् । एवमरुणयैकहायिन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यादावपि बोध्यम् । यद्वा । विशेष्यस्यैव क्रियान्वयो विशेषणानां तु विशेष्येणैव सम्बन्धो न तु क्रियायाः । विभक्तिस्तु विशेष्यस्यैव विशेषणे कार्याऽन्यथाविशेषणत्वालाभात् । तदुक्तम् । गुणानामाश्रयतो लिंगवचनानि भवंतीति "लिंगसंख्याविभक्तीश्च विशेष्यस्था विशेषणे" इति चाकुर्यादिति शेषः। "उक्तार्थस्य गृह्णन्ति वचनानि तिङः परम् । लिङ्गसंख्या विभक्तीश्च कृत्तद्धितसमासकाः" इति। अनभिहिते इति पाणिनीयं सूत्रं

तच्च व्याख्यातृभिरित्थमवतारितम् । ननु बहुपटुरित्यादौ बहुचोक्तार्थत्वाद्यथा ल्यबादयो न, एवं क्रियते कट इत्यादावपि तिङादिभिरुक्तत्वाद्द्वितीया न भविष्यति । किं च कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कट इत्यादिषु प्रथमया बाधिष्यते । निरवकाशत्वात् । न च वृक्षः स्वृक्ष इत्यादि रवकाशस्तत्रापि प्रतीयमानामस्तिक्रियां प्रति कर्त्तृत्वेन तृतीयाप्रसङ्गात् । अथ नीलमिदं न तु रक्तमित्यादौ विशेषणांतरनिवृत्तितात्पर्यके अस्ति क्रियाया अनावश्यकत्वात्प्रथमाया अवकाशं ब्रूषे, तर्हि विप्रतिषेधात्प्रथमा स्तु । एवं चानभिहिताधिकारो वृथेति चेन्मवम् । संख्याविभक्त्यर्थ इति-पक्षे सूत्रारम्भात् । तथा चानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचन-मित्यर्थः । सूत्रानारम्भे च कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमम् । इति वाक्यार्थः । कृतः कट इत्यादौ च क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्त-तयाऽप्युदुर्वारः । परत्वात्प्रथमेत्यपि न । कर्तव्यः कट इत्यादौ ततोऽपि प-रत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात् । कारकमात्रं विभक्त्यर्थ इति पक्षे तु सूत्रं प्रत्याख्यातमिति । अत्रोच्यते । कृतोऽस्मिन्सूत्रेऽभिहिते द्वितीयादिर्मास्तु प्रथमा तु केन स्यात्कर्मादेर्नियतोपास्थितिकत्वाभावेन प्रातिपदिकार्थत्वा-भावादस्तु वा प्रथमा । तदंतात् शब्दोऽप्रसङ्गेनैकशोऽल्पश्र् इत्यादिसूत्रप्रयो-गाणामसङ्गतत्वप्रसङ्गात् । प्रथमायाः कर्तृकर्मादिशब्दैरभिधानात्कारका-धिकारेऽपाठाच्च कारकविभक्तित्वाभावात् । अथ वस्तुतः कारकाभिधाना-त्तदस्तीति चेत्तर्हि नटस्य श्रवणं मातुः स्मरणमित्यादावतिप्रसङ्गः स्यात्त-तश्च गतिकारकोपपदानामिति नित्यः समासः । गतिकारकोपपदादिति प्रकृतिस्वरश्च स्यादिति दोषं दृष्ट्वाऽनभिहिते इति सूत्रमपनीय समानाधि-करणे प्रथमेति वचनं वार्त्तिककृतारब्धम् प्रातिपदिकार्थेतिसूत्रमस्त्येव तिङ्-कृत्तद्धितसमासानामुपलक्षणं तेन तिङादिना समानाधिकरणेन प्रतिपादितेऽर्थे प्रथमा । यद्वा वार्त्तिककृतार्थकथनमिदं वचनानुपूर्वीत्वित्थं प्रातिपदिकार्थेति सूत्रस्य निष्कर्षेऽर्थे प्रथमेति स्थितम् । तस्याग्रे तिङाद्युक्ते इति वा । अन्योक्त इति वा । उक्तस्य वक्ष्यमाणस्य च शेषोऽयं न स्वतन्त्रो विधिः । कर्तव्यो घट इत्यत्र परत्वात्षष्ठीप्रसङ्गात् । यद्वा । सर्वस्यास्य प्रकरणस्यांतेऽन्योक्ते प्रथमेति

सूत्रणीयमित्थं च विधिपक्षेऽपि न दोषः। अन्योक्ते कर्मणीत्यादिशब्देन विधानात्प्र थमाकारकविभक्तिर्भवतीमं च वार्त्तिककृदाशयं विवरीतुं प्रकरणान्ते श्रीसरस्व त्याऽन्योक्ते प्रथमेति सूत्रं कृतमिति दिक् ॥

हाटकेशपुरस्थायी विनायकसुतोऽकरोत्।
रघुनाथाभिधोव्याख्यां कारकाङ्कैर्यथाऽकरोत् ॥
इति कारकप्रकरणम् ॥ ६ ॥

---

# तद्धितपादः ७.

॥**अपत्येण्**॥ नाम्नः षष्ठ्यन्तादण् वा स्यादन्वये सति। अपत्येन योगश्च- नामार्थस्यैव सम्भवति। न धात्वाख्यातांशयोः। क्रियार्थत्वात्। नापि सिब- न्तस्य। विभक्त्यर्थस्य प्राधान्यात्। प्रथमान्तस्य तु स्वार्थनिष्ठत्वादतः परि- शेषान्नाम्नि लब्धे नाम्न इत्यतः षष्ठ्यन्तस्यानुवृत्तिः। षष्ठी विचक्षणार्था। गामुप- गतः उपगुः। नाम्नश्चेति समासः। गोरिति ह्रस्वः। यादवविशेषः। उद्ध- वस्य पूर्वजेषु कश्चित् उद्धवं प्रत्यौपगविर्जगामेति भागवते तृतीयस्कंधे उक्तत्वात्। उपगोरपत्यम्। अणः प्रयोगे उक्तार्थानामप्रयोग इति न्यायादप- त्यशब्दस्याप्रयोगः। वाटाङ्च्योरित्यतः वेत्यनुवर्तते। पक्षे षष्ठीसमासः। उपग्वपत्यमिति तस्य वैकल्पिकत्वाद्वाक्यमपि। यद्वा नाम्न इति वेति च नानुवर्ततां परिशेषान्नामलाभ इत्युक्तं विभक्त्यंतत्वं च समासप्रत्यययो- रलुक् क्वचिदित्यतो लब्धं अपत्यापत्यवत्सम्बन्धाच्च षष्ठी लब्धा। समा- सश्चान्वये इत्यत्र चकारेण तद्धितस्यापि सङ्ग्रहादन्वय इति लब्धम्। अन्व- यंति अनुगच्छंत्येकीभवंति पदानि अर्थाश्च यस्मिन्नित्यन्वयो व्यपेक्षालक्षणः सम्बन्धो वाक्ये गृह्यते। इत्थं वृत्तिवाक्ययोरन्वयभेदेन व्यवस्थोपपत्तौ तदर्थं समर्थानां प्रथमाद्वेत्यत्र वानपत्ये इत्यत्र च वाग्रहणं व्यर्थम्। "अपत्यं तोकं तयोः समे" इत्यभिधाने यस्य शब्दस्य पुत्रे कन्यायां च शक्तिदर्शनादौ- पगवीत्यपि भवति। अपत्यमित्येकत्वं त्वविवक्षितं लुग्बहुत्वे क्वचिदिति ज्ञापकात्। तेनोपगोरपत्ये उपगूनां वापत्यानि औपगवो औपगवाः। षष्ठ्यं- तात्किम्। उपगुरपत्यमुपगुना हेतुना वाऽपत्यं सति प्रत्यये उपगुजन्यापत्य-

मित्यर्थो न लभ्येत। अन्वये किम्। वस्त्रमुपगोरपत्यं चैत्रस्याऽत्र व्यपेक्षालक्षणेऽप्यन्वयो नास्त्येकार्थीभावस्तु दूरापास्त एवेत्याशयेन प्रत्युदाहरणम्। **अत इञनृषेः** ॥ अतः, इञ्, अनृषेः, इति योगत्रयम्। अतः। अकारातान्नाम्नः षष्ठ्यंतादण् प्रत्ययो भवत्यपत्यार्थेऽन्वये सति। औपगवस्यापत्यं औपगवः दाशरथः। शैवः। यास्कः। बैदः। पौत्रः। और्वः। वासिष्ठः। वासुदेवः। श्वाफल्कः। यौधिष्ठिरः। भीमसेनः। एवमन्ये ऋष्यंधकवृष्णिकुरवो बोध्याः। आंगः। वांगः। कालिंगः। सौरभसः। अन्वये किम्। वस्त्रमौपगवस्यापत्यं चैत्रस्य। इञ् इति द्वितीयो योगः। पूर्ववद्वृत्तिः। गार्गिः। नाडिः। कौंजिः। बैदिः। बाहविः। सौमित्रिः। सावर्णिः। काश्यपिः। औडुलोमिः। अस्य बहुत्वे पूर्वेणाण्। णितो वेत्यणित्। बहुलोमाः। उडुलोमान्। अनृषेः इति तृतीयो योगः। ऋषिभिन्नोऽनृषिः इति पर्युदासात् ऋषिसदृशो मनुष्यो गृह्यते। अदंतान्नाम्न इञ् अपत्ये। औपगवस्यापत्यमौपगविः। दाशरथिः। दाक्षिः। तौल्वलिः। मनुष्येति किम्। मृगस्य हरिणस्य विहंगमस्य वाऽपत्यम्। ऐंद्रिः। पाकशासनिः। मारुतिः। वारुणिः। माह्लादिरित्यादयोऽत्र ग्राह्याः। मध्यमयोगे वा काकिः। मायूरिरिति केचनेच्छन्ति। एतावपि मध्यमयोग एवोदाहार्य्यौ। मृगादिभ्यस्त्वपत्यार्थे प्रत्ययो न भवति। मृगत्वादिना पितापुत्रयोर्भेदाभावात्। उपगुत्वं त्वौपगवे नास्त्येवेति भवत्यप्रत्ययः। शौरिः। कार्ष्णिः। माद्युम्निः। आर्जुनिः। नाकुलिरित्यादयोऽप्यत्रैवोदाहार्य्याः। अनृषेरिति प्रसज्यप्रतिषेधेनापि अतोऽपत्ये इञित्यनुवर्त्य विधिः स्वीकार्य्यः। तस्यैव चानृषेरिति प्रतिषेधोऽनन्तरस्येति न्यायात्। अतो मध्येन गार्गिरित्यादयः सिद्धाः। **ण्यायनणेयण्णीयागर्गनडात्रिस्त्रीपितृष्वस्रादेः**॥ ण्यश्च आयनण् च एयणौ च णीयश्च ते अत्रिश्च स्त्री च अत्रिस्त्रियौ पितुः स्वसा पितृष्वसा गर्गश्च नडश्च अत्रिस्त्रियौ च पितृष्वसा च एषां समाहारस्तदादिर्यस्य स तस्मादनुद्भूतावयवभेदसमुदायस्यान्यपदार्थत्वादेकवचनम्। द्वन्द्वान्ते श्रूयमाण आदिशब्दः प्रत्येकमभिसंबध्यते। स च प्रकारवाची न व्यवस्थार्थः। एतदादिगणस्यात्रादर्शनात्। स्त्रीशब्देन स न सम्बध्यते स्त्रीप्रत्ययस्येष्टत्वात्। स्वरूपग्रहणं च नेष्टम्।

अत्र्यादिषु तस्य सुग्रहात् । नापि स्त्रीविशेषग्रहः । तेषामप्यत्र्यादिषु सुवचत्वात् । यदा गर्गादिर्द्वन्द्वगर्भो द्वन्द्वस्तदा चैयणाविति द्विवचननिर्देशो न कार्य्यः। यदा तु पञ्चपदस्तदा कार्य्यः । एवं यथाक्रमेण गर्गादिभ्योऽपत्येऽण् । गर्गादिशब्दास्तदपत्ये लाक्षणिकाः । साक्षादपत्ये गार्गिरित्युक्तम्।गर्गस्य कोर्थः। गार्गेरपत्यं गार्ग्यः । वात्स्यः । कात्यः । वातंड्यः । आवट्यः । एभ्यः स्त्रियां नदादित्वादीप् । अपत्यप्रत्ययान्तस्य जातित्वाभ्युपगमेऽपि योपधत्वात् जातेरिति नेप् । कत्यादित्वाद्यलोपः । गार्गी । वात्सी । काती । वातण्डी । अजादित्वादावट्या । पौतिमाष्या । तयोर्नदादित्वं नास्तीति सुवचम् । नडादेरपत्ये आयनण् । नडस्य साक्षादपत्यं नाडिः।नडस्य कोर्थो नाडेरपत्यं नाडायणः । एण्यन्तानां च नडादित्वाभ्युपगमात् । गार्ग्यायणः । दाक्षायण इत्यादि। चारायणः । आश्वायनः । आश्वलायनः । कौंजेरपत्यम् । आयनणंतात्स्वार्थे ण्यः । कौंजायन्यः । ब्राध्नायन्यः । बहुत्वे लक् । कौंजायनाः । ब्राध्नायनाः । ग्लुचुकस्यापत्यम् । आयनणंतात् स्वार्थे इञ् । णितो वेत्यणित्वान्न वृद्धिः । ग्लुचुकायनिः । आत्मगुप्तायनिः । इञि आत्मगुप्तिः । अत्र्यादेरपत्येर्थे एयण् अत्रेरपत्यं आत्रेयः । नैधेयः । मैधेयः । बालेयः । मांडूकेयः । दौलेयः । शौभ्रेयः । मार्कण्डेयः । वैमात्रेयः । कौषीतकेयः । वैकर्णेयः । प्रावाहणेयः । प्रवाहणेयः । गार्ष्टेयः । वार्ष्णेयः । पांडवेयः। मृकंडोर्मार्कंडेयः । भ्रू-भ्रौवेयः । पैतृष्वसेयः । मातृष्वसेयः कत्यादयः। स्त्रीप्रत्ययांतादपत्ये एयण् । वैनतेयः। गांगेयः । माहेयः । रौहिणेयः । दात्रेयः । गौधेयः । नाटेयः । कौलटेयः । ध्वासेयः । काणेयः । काल्याणिनेयः । बांधकिनेयः । कौलटिनेयः । दासेरः । नाटेरः । काणेरः । कौलटेरः । गौधेरः । गौधारः । चाटकैरः । जडस्यापत्यं जाडारः । पंडस्यापत्यं पांडारः । काल्याणिनेयादयः । कत्यादिषु बोध्याः । पितृष्वसादेरपत्ये णीयः । पितृष्वसुरपत्यं पैतृष्वस्रीयः । मातृष्वस्रीयः । भ्रात्रीयः । स्वस्रीयः । अपत्यप्रत्ययान्तानां जातित्वेऽपि योपधत्वान्नेप् पितृष्वस्रिति षत्वनिर्देशः । पूर्वपदादुत्तरपदस्य समासे क्वचित्षत्वज्ञापनार्थः । मातृष्वसा । पितृष्वसा । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । ज्योतिष्टोमः । आयुष्टोमः । भीरुष्ठानम् । कपिष्ठलः । अंगुलिषङ्गः । अंबष्ठः ।

आंबष्ठः । गोष्ठः । भूमिष्ठः । गविष्ठिरः । युधिष्ठिरः । सव्येष्ठः । अङ्गुष्ठः । परमेष्ठी । बहिष्ठ इत्यादि । आयनणेयणोरणन्तादीप् । न चानर्थक्यादस्याग्रहणं अन्तणकारपाठसामर्थ्यात् परिभाषाया बाधानात् । अन्यथा ण्यणीयव ण्णायनणेयावित्येव ब्रूयात् । अत एव ण्ययणोरनुबन्धव्यत्यासः। यदि ण्यस्थाने यण् पठेत् तर्हि मैत्री सामग्रीत्यादावीप् न स्यात् । यद्वार्थवत्परिभाषाऽनित्या टेनेत्यादौ टकारग्रहणात् ज्ञापकात् । असति हि टकारे अत इनञौ विधीयमानौ आमोप्यातः प्रसज्येयातां सत्यां तु परिभाषाऽनित्येति । **लुग्बहुत्वे क्वचित्** । लुगिति योगो विभज्यते । बहुत्वे क्वचिल्लुगिति वक्तव्ये पूर्वं विधेयनिर्देशसामर्थ्यात् अपत्यबहुत्वे इत्युत्तरसूत्रारंभात् । कंबोजः । चोळः । शकः। केरळः । एभ्योऽत इत्यणो लुक् । अवन्तेरपत्यं पुमानावंत्यः । स्त्री अवंती । कुंतेरपत्यं कौंतेयः । स्त्री कुंती । नदादेरितीप् । इतो मनुष्यजातेरिति वार्त्तिकेन वा । कुरोरपत्यं कौरव्यः । स्त्री कुरूः । उतऊरित्यूः । शूरसेनस्यापत्यं शौरसेनः । स्त्री शूरसेनी । मद्रस्यापत्यं माद्रः । स्त्री माद्री । माद्रीसुताविस्यत्र मद्रस्येयं माद्री । इदमर्थेऽण् । देवकी दैविकीति द्विरूपकोशात् । पक्षेऽणो लुक् । एतेभ्यो जातेरितीप् अपत्यबहुत्वे विहितस्याऽणादेः क्वचिल्लुक् ऐक्ष्वाकः । इक्ष्वाकवः । कत्यादित्वादुलोपः । पाञ्चालः । पञ्चालः । पौरवः। पूरवः । पाण्ड्यः । पांडवः । कत्यादिः । गांधारः । गांधारयः । अंगाः । वंगाः । सुह्माः । पुंड्राः । मगधाः । कलिंगाः । शूरमसाः । आंबष्ठ्यः । आंबष्ठाः । आवन्त्यः । आवंतयः । काशल्यः । कौशलाः । आजाद्यः । आजादाः । कौरव्यः । कुरवः । नैषध्यः । निषधाः । औदुम्बरिः । उदुम्बराः। मात्यग्रथिः । मत्यग्रथाः । कालकूटिः । कालकूटाः । आश्मकिः । आश्मकाः। अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गौतमाः । अङ्गिरसः । पान्नगारिः । पान्नागाराः । यौधिष्ठिरिः । यौधिष्ठिराः । तैकायनयश्च कैतवायनयश्च । तिककितवाः । आष्ट्रककपिष्ठलाः । लमकाः । बहुत्वे किम् । आंगः । क्वचिदिति किम् । आष्टकिकपिष्ठलयः । नामकायनाः । गौपवनाः । शैग्रवाः । कात्यायनस्येमे कात्यायनीयाः । कातीयाः । गार्ग्यः । स्त्रियः । आत्रेयः । आंग्यः । वांग्यः । अणादेः किम् । जसादेर्न । अपत्ये किम् । दाक्षस्येमे दाक्षाः । अप-

त्यबहुत्वे किम्। प्रियो गार्ग्यौ येषां ते प्रियगार्ग्याः।बैदस्य प्रतिकृतयः बैदाः। बैदशब्दो लक्षणया प्रतिकृतिबहुत्वे वर्त्तते नत्वपत्यबहुत्वे । गार्ग्यकाश्यपगालवानामत्र समासकृतं बहुत्वं न तु प्रत्ययकृतम् । भृगुवत्साग्रायणा इत्यत्र भृगवश्च वत्साश्च आग्रायणाश्चेति विग्रहः । पूर्वयोरपत्यबहुत्वे लुक् । गर्गवत्सवाजाः। बहुवचनानामेव विग्रहः।गार्ग्यश्च वात्स्यश्च वाज्यश्चेति एकवचनविग्रहे तु न द्वन्द्वः । अभिधानलक्षणाः कृत्तद्धितसमासाः इति सिद्धान्तात् । युक्तस्य तु एकवचनान्तत्वात्प्रत्ययस्य न । यद्यभिधानमस्ति तदा लुगिति पूर्वेण लुक् । गर्गवत्सवाजाः । यद्वाऽपत्येऽर्थे उत्पन्नस्याणादेः बहुत्वे सति क्वचिल्लुग् भवति । अत्र पक्षेऽपत्यकृतमेव । यदि बहुत्वसन्निधानाद्गृह्येत तर्हि प्रथमपक्षाद्विशेषो न स्यात् । अतो यत्किंचित्कृतं बहुत्वं ग्राह्यं तेन गर्गवत्सवाजाः । समासकृतेऽपि बहुत्वे लुक् । गार्ग्यकाश्यपगालवानामित्यत्र तु क्वचिदित्युक्तेर्न । भृगुवत्साग्रायणेष्वाद्ययोर्लुगन्तस्य न लुक् । एवं प्रियात्रेयाः काश्यपप्रतिकृतयः । काश्यपाः । भार्गव्यः । वासिष्ठाः । स्त्रिय इत्यत्रापि क्वचिद्ग्रहणान्न लुक् ॥**देवतेदमर्थे**॥त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता। मंत्रस्तुत्या च । देवता च इदम् चानयोः समाहारो देवतेदम् । स चासावर्थश्च तस्मिन् अणादयः प्रत्यया भवंति । द्वंद्वान्ते श्रूयमाणत्वात्प्रत्येकमर्थशब्दः संबध्यते । तेन देवतार्थे इदमर्थे चेति फलितम्। देवतया हविश्च मंत्रश्चाक्षिप्यते। प्रत्ययस्तु देवतासकाशात् आक्षेपलभ्ये एव देवाताया हविषश्चप्रत्ययार्थत्वं देवतायाः प्रकृत्यर्थेन सहाभेदान्वयो हविषश्च स्वत्वेन ततश्च बहुव्रीहेरस्य च तुल्यविषयत्वात्प्रथमान्तादेवायं षष्ठ्यर्थे प्रत्ययः । कृत्या च सम्बन्धस्यान्तर्भावात्षष्ठ्यभावोऽन्योक्ते प्रथमेति तद्धितो नोक्तसम्बन्धे प्रथमा । इंद्रो देवतास्य ऐंद्रं दधि । विशेषसमर्पणार्थं दध्यादिप्रयोगः । सोमो देवताऽस्य सौम्यं नदादित्वादीप् । कत्यादित्वाद्यलोपः । सौमी ऋक् । अग्निर्देवताऽस्य आग्नेयः पुरोडाशः । आग्नेयी ऋक् । को ब्रह्मा देवताऽस्य कायम्। यस्य लोपं बाधित्वा परत्वाद्वृद्धिः। श्रीर्देवताऽस्य श्रायम् । अणूवृद्ध्याय । पित्र्यम् । क्वचित्स्वरवद्य इति यः । रत्वं णितो वेति न वृद्धिः । वायव्यम्। ऋतव्यम्। वोव्यः स्वरे इत्यव् । उषस्यम् ॥ अपोनपादपानपाच्च देवतास्यणीयः नणित्वं अपो

नप्त्रीयम् अपान्नप्त्रीयम् । कत्यादी । अत्रार्थे वक्ष्यमाणा अपि तेषामत्रापकर्षात् अस्य तत्रानुवर्तनाद्वा।अपोनप्त्रियम्।अपांनप्त्रियम् । शतं रुद्रा देवताऽस्य शतरुद्रीयम् । शतरुद्रियम । महेंद्रियम्।माहेंद्रम्।महेंद्रीयम्।द्यावापृथिवीयम्।द्यावापृथिव्यम् । शुनासीरियम्।शुनासीर्य्यम्। मासो देवतास्य मासिकम् । प्रावृषेण्यम् कत्यादित्वादेण्यः। मरुत्त्वतीयम् । मरुत्त्वत्यम् । अग्नीषोमीयम् । अग्नीषोम्यम्। वास्तोष्पतीयम् । वास्तोष्पत्यम्।गृहमेधीयम् । गृहमेध्यम्।उपगोरयमौपगवः। पृथाया अयं पार्थः। तवायं त्वदीयः।ममायं मदीयः। युवयोर्युष्माकं वायं यौष्माकः। यौष्माकीणः । आवयोरस्माकं वायम्।आस्माकः । आस्माकीनः । तवायं तावकः। तावकीनः।ममायं मामकः। मामकीनः । कत्यादयः । औपगवीयः । गार्गीयः। कातीयः कात्यायनीयः ॥ **णितो वा** ॥ अणादयः कादयश्च णितो वा भवन्ति । अणादीनां णित्त्वे सिद्धे पक्षे निषेधार्थं वचनं कादीनामणित्त्वे पक्षे विधानार्थं स च क्वचिन्नित्यनिषेधः क्वचिद्वैकल्पिकः क्वचिदनिषेध एव प्रत्ययविधिरप्येवं णितो वेति णित्त्वबाहुल्यात् णिद्ग्रहणम्। यथा ब्राह्मणग्रामः । इञोऽपि ञित्वविकल्पो भवत्येव । ग्लुचुकायनिर्यथा । यद्वा।सोपि णिदेव कर्तव्यः । अर्थान्तरे विहितानां प्रत्ययानां णित्त्वमात्रमनेन व्यवस्थाप्यते। नत्वर्थान्तरेऽनेन प्रत्यया विधीयन्ते । विधेयभेदे वाक्यभेदप्रसङ्गात् । सत्यां गतौ तस्यान्याय्यत्वात् । किंच। धैनुकमापूपिकमित्यादौ कादीनां विधानं केन स्यात् । केनेयेका इति चेत्तर्हि तदेव विधायकमस्तु । कादीनामत्रापकर्षेण णित्वमात्रं व्यवस्थाप्यते । विधिस्तु तेनैव ॥**कारकात्क्रियायुक्ते**॥ कारकादणादयः कादयश्च कर्त्तरि कर्मणि च स्युः । कारकशब्दः कर्तृमात्रे दृष्टः सात्विकः कारकोऽसंगीत्यत्र । "कर्त्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणे इत्याहुः कारकाणि षट्" इत्यत्र क्रियासाधने सर्वस्मिन्नपि दृष्टः । तत्र कस्यात्रग्रहणम्। उच्यते। अत्राद्यस्य न ग्रहः।वसिष्ठेन दृष्टं वासिष्ठं साम।वररुचिना कृतो वाररुचो ग्रंथः। इत्यादौ विधिसंभवेऽपि कुंकुमेन रक्तं वस्त्रं कौंकुममित्यादावप्रसङ्गात् । इत्थं हि स्पष्टार्थं कर्तुरित्येवावक्ष्यत । कर्तृकार्ययोरिति यथाकारकादिति कर्तुर्विधीयमानः प्रत्ययः कर्त्रर्थे न सम्भवत्येवातः कार्ये इत्येवावक्ष्यत । न क्रियायुक्त इति । अतः परिशेषादंत एव गृह्यते अक्षैर्दीव्यत्या-

क्षिकः । धुरं वहति धुर्यः । संज्ञापूर्वकत्वान्न दीर्घः । मनुना प्रोक्तो मानवो धर्मः । चर्मणा परिवृतः चार्मणः । पुष्येण युक्ता पौषी । कत्यादित्वाद्यलोपः । मथुराया आगतो माथुरः । ग्रामे भवो ग्राम्यो ग्रामीणः।कारकात्किम्। फलानां सुहितः । नाग्निस्तृप्यति काष्ठानाम् । क्रियायुक्ते किम्।काष्ठैः पाकः । रथेन गमनम्। तीर्थे दानम् । नात्र पाकादिः क्रियायुक्तः किं तु क्रियैव । क्रियाग्रहणं किम् । कारकाद्युक्ते इत्येव वक्तव्यम् । ग्रामे दंडी । गेहे घटः । दंडघटत्वादियुक्तोपि स न क्रियायुक्तः । कारकाक्रियायामित्येवास्तु । शब्दं करोति शाब्दिक इत्यादौ क्रियाया एव प्राधान्ये न भानं स्यान्न तु कर्तुः । यदि तु कर्तृकार्यग्रहणं मंडूकप्लुत्यानुवर्त्तते तदा क्रियायुक्त इति मास्तु । अथ का क्रिया उच्यते । व्यापारः भावना सैवोत्पादना सैव च क्रिया । यद्वस्तु सिद्धमेवासिद्धं वा शब्देन साध्यत्वेनाभिधीयमानं समाश्रितक्रमं सा क्रियेति माधवः । तदुक्तम् । "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते" ॥ नन्वेवं सति वितता बहवः क्षणा धातुवाच्या इत्युक्तं भवति । यथा पचतीत्यत्राधिश्रयणोदकासेचनतंडुलावपनैधोपकर्षणादिः । ततश्चैषां बहुत्वेनैकत्वाभावात्कथमेकक्रियात्वेनैकधातुवाच्यत्वम् । नचास्ति समुदायभावः । क्षणानां क्षणिकत्वेन युगपदसन्निधानात् । नैष दोषः । क्रमवतामेषां क्षणानामेकफलोद्देशेन प्रवृत्तानां सकलानां बुद्ध्या समापादितैक्यानां क्रियात्वव्यवहारात् । नच यदनंतरं फलं निष्पद्यते तस्यैव फलसाधनत्वम् । एवं ह्यधिश्रयणादिवैयर्थ्यं स्यादिति तैरपि समीहितफलानुगुणैर्यथात्वं विशेष आधीयते एवेत्यवश्यं फलसाधनत्वमंगीकर्त्तव्यम् । एवं च काल्पनिकः समुदायो धातुवाच्य इत्युक्तं भवति तत्रावयवक्षणाः समुदाये गुणभावमापन्ना इति न ते शब्दभेदं प्रयुंजते । तदुक्तम् । "गुणभूतैरवयवैः समूहः क्रमजन्मनाम्॥बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" । इति क्रमजन्मनामेषां क्षणानामभेद एकत्वं बुद्ध्या संकलनात्मिकया प्रकल्पितः । स च समूहः स्वभावतो गुणीभूतैरवयवैर्युक्त इत्यर्थः । गुणभूतैरवयवैरिति वचनमवयवानां शब्दभेदं प्रति प्रयोजकत्वं नेति प्रतिपादनार्थमेवं समूहरूपायाः क्रियाया एकत्वादपूर्वापरीभावाक्रमत्वेप्यवयव-

क्रमाश्रयेण क्रमिकत्वव्यवहारः । उक्तं च ।"स चापूर्वापरीभूत एकत्वादक्रमात्मकः । पूर्वापराणां धर्मेण तदर्थेनानुगम्यते" इति । कथं तर्ह्येकैकस्मिन्क्षणे धातोः प्रयोगः पचतीत्यधिश्रयितर्य्यपि वक्तारो भवंति । उच्यते । अधिश्रयणारम्भे एव फलाभिसम्बन्धस्तत्रैव समुदायस्यारोपात् । अयं च समाश्रितपूर्वापरीभाव एवापरोप्यत इत्येकोपि क्षणः क्रमिको भवति । अत एव क्षणान्तरे अनुष्ठीयमानेनुष्ठास्यमाने बाधरोपितपचिरूपस्य क्षणस्यातीतत्वात्समुदायः स्यादिति भूतकालता तथा तस्य क्षणस्य भावित्वादितरेष्वभाविष्वपि पक्ष्यतीति भविष्यत्कालता तथाचैकस्य क्षणस्य वर्तमानत्वादन्येष्ववर्तमानेष्वपि पचतीति वर्तमानकालता चेति कालत्रययोगः उपपद्यते । यथोक्तम् । "समूहः स तथाभूतः प्रतिभेदं समूहिषु । समाप्यते ततोऽभेदे कालभेदस्य सम्भवः" इति तथाभूतः क्रमिकं समूह आरोप्यते ततो विषयविषयिणोरभेद एकत्वे कालभेदः संभवतीत्यर्थः । तदेवं शब्देन साध्यतया प्रतीयमानः समाश्रितक्रमोऽर्थः क्रियेति स्थिते पटो भवतीत्यात्मभरणलक्षणा सत्ता तथैवाभिधीयते इति क्रियात्वेन विचिकित्सा । तथा च क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदकेति क्रियाभेदहेतुना कालेनाभूदस्ति भविष्यतीति प्रयोगः । नह्यक्रियस्य कालेन विभागोस्ति । उक्तंच "कालानुपाति यद्रूपं तदस्तीति प्रतीयते" इति । एवं च भूतं भव्यायोपदिश्यत इति न्यायेन देवदत्तः किं करोतीति प्रश्ने पचतीत्यादिवदस्तीति प्रतिवचनाभावः । निर्ज्ञातसत्तस्यानिर्ज्ञातो व्यापारभेदः पृच्छ्यते न तुनिर्ज्ञाता सत्तैवेति तद्विषयस्य प्रश्नस्यैवानुदयात् यदा तु सत्ताविषयः प्रश्नो विनाशाशंकया किं करोति देवदत्त इति तदास्ति तावदिति प्रतिवचनमपि भवत्येव । ननु क्रियायाः क्रमिकत्वमध्यारोपेणेत्युक्तं गौणता तु प्राप्नोति । अत्र परिहरति । "व्यवहारस्य सिद्धत्वान्नचेयं गुणकल्पना उपचारोहि मुख्यस्यासंभवादपदिश्यते" इति यथा गोशब्दस्य संभवात्सास्नादिमदर्थस्य वाहीकादिवृत्तित्वे गौण इति क्रियातद्युक्तमिति तया क्रियया युक्तम् । क्रिया द्विविधा । व्यापाररूपा फलरूपा चेति । व्यापारेण युक्तः कर्त्ता फलेन युक्तं कर्म तस्मिन् तद्युक्त इति । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । दृषदि पिष्टा दार्षदाः सक्तवः ।

चक्षुषा गृह्यते चाक्षुषं रूपम् । उपनिषत्सु उपनिषद्भिर्वा ज्ञायते औपनिषदः पुरुषः । ब्रह्म जानाति ब्राह्मणः । उलूखले क्षुण्णाः औलूखलाः । श्रवणेन गृह्यते श्रावणः शब्दः । इत्याद्यनेनैव सिद्धम् । कालापे पाणिनीये च रागान्नक्षत्रयोगादिति दृष्टं सामेत्यादीनि नानावचनानि प्रत्ययविधायकानि क्यर्थानि कारकादित्यनेनैव सिद्धं कालापे पाणिनीये च।**केनयेकाः**॥कश्च ईनश्च इयश्च इकश्चैते पूर्वत्रापकर्षणादपत्यादिष्वर्थेषु भवंति । उत्तरत्रानुवर्तनात्स्वार्थादिषु मध्येऽसंयुज्यपाठाच्चानुक्तेष्वप्यर्थेषु भवन्ति । यद्वा देवतेदमर्थे इत्यत्रार्थग्रहणमधिकं कथं देवतेदमोरित्युक्ते शब्दे कार्यस्यासम्भवात् । अर्थे कार्यं विज्ञास्यते इत्यर्थे प्रत्ययलाभसंभवात् । तत्र स्पष्टार्थमुक्तमिहानुवर्तते । तेनानुक्ते उक्ते चार्थे कादयः स्युः । रेवत्या अपत्यं रैवतिकः । कुलस्यापत्यं कुलीनः । क्षत्रस्यापत्यं क्षत्रियः । गार्ग्या अपत्यं गार्गिकः । धेनूनां समूहो धैनुकम्।अपूपानां समूहः आपूपिकम्। औपगवकम् । कैदारिकम् । कावचिकम् । कैदार्य्यम्। ब्राह्मण्यम् । ग्रामाणां समूहो ग्रामता ।रथानां समूहो रथकट्या । गवां समूहो गोत्रा । त्रयाणां समूहः त्रेता । कत्यादयः । अंगाः । वंगाः । पंचालाः। इत्यादयो बहुवचनांता एव देशविशेषे रूढाः । एवं वरणाः । आम्रा इत्यादयो ग्रामविशेषे रूढाः । इंद्रस्यात्मनो लिंगम्। इंद्रेण दृष्टम्। इंद्रस्य सृष्टं जुष्टं दत्तं दुर्जयं वा इंद्रियं वा। अश्मनो विकार आश्मम्।उमाया विकारऔमम् । औमकम् । और्णं और्णिकम्। पिष्टकम्। **स्वार्थेपि** ॥ उक्ता वक्ष्यमाणाः प्रत्ययाः स्वार्थेपि स्युः। चोर एव चौरः। वय एव वायसः। पुंवद्वेत्यत्र वा ग्रहणेनास्मिन्केपि क्वचित् पुंवद्भावः।रक्ष एव राक्षसः। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। चत्वार एव आश्रमाश्चातुराश्रम्यम्।सामीप्यम्।आनंतर्य्यम्।देव एव देवता।नियतमेव नित्यम्।कत्यादित्वात् प्रत्नम्।प्रणम् । मृत्तिकेत्यादि।प्रतनं प्रीणं नवीनम्। **वत्तुल्ये**॥यत्तुल्या सा क्रिया चेत्। ब्राह्मणवदधीतेऽश्ववद्धावति। क्रियाग्रहणमनुवर्तते। तच्च तुल्येन संबध्यते । क्रियायां तुल्यायामित्यर्थः। तुल्यते सादृश्येनोन्नीयते ज्ञायते।तुल उन्मानेऽस्मादेव ज्ञापकात्क्यप् । अनूदुपधेभ्योपि क्यबंतेन ज्ञाप्यते । तेन सिध्यः। पुष्यः। तिष्यः। इत्यः। स्तुत्यः। शिष्यः । वृत्यः। आदृत्यः । जुष्यः । भृत्यः। भिद्यः।राजसूयः। सूर्यः। गुप्यत

इति गुप्यम् । सहार्दी।यद्वा तोलनं तुला । अेरभावे भिदाद्यङ् । तुलया समितं तुल्यम् । कारकादिति ण्यः । णितो वेत्यणित्त्वम्।विषेण वध्यो विष्यः । मूलेनाप्यं मूल्यम् । नावा तार्यं नाव्यम् । सीतया समितं सीत्यं क्षेत्रमिति वत् । अक्रियासादृश्येपि षष्ठ्यंतात्सम्भूताच्च भवति, चतसृवत् चतुर्वेदिति निर्देशात् । चैत्रस्येव चैत्रवन्मैत्रस्य गृहम् । मथुरायामिव मथुरावत्पाटलिपुत्रे प्राकारः । घटस्येव घटवदुदरं चैत्रस्य । ज्ञापकसिद्धस्यासार्वत्रिकत्वादभिधानलक्षणाकृत्तद्धितसमासा इति वा नातिप्रसङ्गः । गोसदृशो गवय इति । क्रियेति किम् । पुत्रेण सदृशः स्थूलः । तुल्येति किम्।देवदत्तेन सहाधीते।गेहेगावः । यद्वादौ प्रत्ययोच्चारणं योगविभागार्थम् । तेनाक्रियातुल्येपि सिद्धांतवद् महानसवदित्यत्र भवितुमर्हतीति क्रियाध्याहार्या।क्रियां विना बोधे सत्यपि साधुत्वं न भवति।तेन तुल्यं क्रिया चेदिति पाणिनिनोक्तेः।**भावे तत्वयणः॥** तश्च त्वश्च यण् च ते भावे एतेऽणादयश्च प्रत्ययाः स्युः।इदमर्थे प्राप्तस्यापवादोयम् । भावशब्दोऽयमनेकार्थः।भवतीति भाव इति ज्वलादिर्णोतोऽभिप्राये । यथाऽयं भाव इति पदार्थमात्रवचनोप्यस्ति। यथा विचित्रा हि भावशक्तयः इति । अस्ति च शृंगारादिर्यथा स्थायिभावाः संचारिभावा इति । घञंतस्तु भवत्यर्थे कर्तृवर्जिते कारके च वर्तते । भवतिश्चानेकार्थः । तद्यथा । तत्रावस्थानात् धान्यानां भवनमित्युत्पत्त्यर्थः । इत्थंभूत इति । प्राप्त्यर्थः । भूष्णुर्भूतिकामः इति समृद्ध्यर्थः । भाव इति धात्वर्थमात्रवचन इति। तेष्वत्र कस्य ग्रहणम्, उच्यते । प्रवृत्तिनिमित्तवचनस्य भवन्ति शब्दा अनेनेति व्युत्पत्तेः प्रवृत्तिनिमित्तं लभ्यतेऽभिप्रायादिवचनस्य त्वनभिधानादग्रहः । तत्र ये रूपादयः शब्दा गुणमात्रवृत्तयस्तेभ्यो गुणसमवायिनि सामान्यविशेषे भावप्रत्ययः रूपत्वं रसत्वं गंधत्वं स्पर्शत्वं शब्दत्वमिति ये तु शुक्लादयो गुणगुणिवृत्तयोऽभेदोपचारात्तेभ्यो गुणवृत्तिभ्यो गुणसमवायिनि सामान्यविशेषे भावप्रत्ययः। शुक्लत्वं पीतत्वं कृष्णत्वमिति गुणवृत्तिभ्यस्तु गुणे यथा पटस्य शुक्लत्वमिति अणुमहद्दीर्घादयः परिमाणिनि वर्तते तेभ्यः परिमाणे भावप्रत्ययः । अणुत्वं महत्त्वं दीर्घत्वं ह्रस्वत्वं परिमाणमिति षत्वणत्वमित्यादि भिन्नवर्णव्यक्तिसमवेते सामान्यविशेषे प्रत्ययः।गवादयो यदा जातिमात्रवाचिनस्तदा तेभ्यः शब्द-

स्वरूपे प्रत्ययः। तथा हि। अर्थे जातौ शब्दस्वरूपमध्यस्यते।यो गोशब्दः स एवार्थ इति शब्दरूपमेव तत्र प्रवृत्तिनिमित्तं नान्यत्। यद्वा जातावप्युपाधिरूपं सामान्यमस्ति। सकलगोव्यक्तिवृत्तित्वे सति तदितरावृत्तित्वरूपं तस्मिन् प्रत्ययः। द्रव्यवाचिभ्यस्तु गवादिभ्यो जातौ प्रत्ययः। समासकृत्तद्धितास्तु यद्यपि केवलं संबंधं नाभिदधति तथापि संबंधिनि वर्तमानाः संबंधं प्रवृत्तिनिमित्तमपेक्षंत इति तेभ्यः सम्बन्ध एव प्रत्ययः। तथा च राजपुरुषत्वमिति स्वस्वामिभावः सम्बन्धः प्रतीयते। पाचकत्वमिति क्रियाकारकसंबन्धः। औपगवत्वमित्यादावपत्यापत्यवत्संबंधः। केचिदौपगवत्वमित्यपत्यस्य जातिमभिधेयामिच्छंति।मन्मते हि तस्य सौम्यत्वम्।आग्नेयत्वमित्युदाहरणं द्रव्यदेवतासंबंधः। उक्तंच हरिणा। समासकृत्तद्धितेषु संबंधाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबंधेभ्य इति। रूढिशब्दा गौरखरसप्तपर्णलोहितशाल्यादयो जातिविशेषावच्छिन्नद्रव्यवाचिन इति तेभ्यो जातावेव भावप्रत्ययः। एवं कुंभकारत्वं हस्तित्वमिति अभिन्नरूपाः शुक्लादयो लुग्बहुत्वे क्वचिदिति मतोर्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि तेभ्यो भावप्रत्ययो गुण एव भवति न तु संबंधे। गुणगुणिनोर्जातितद्वतोरिव सौम्यत्वमित्यभिसंबंधेन लोकनिरूढेन भेदसंबंधस्य न्यग्भावादभेदेनैव गुणिनोभिधानम्।अव्यभिचरितसम्बन्धः सत्ताभावः सत्तेति जातावेव भावप्रत्ययः। नहि सद्वस्तु सत्तासंबंधतो व्यभिचरतीति सत्तासंबंधानपेक्षणान्न संबंधे प्रत्ययः। राजपुरुषयोस्तु संबंधस्य कादाचित्कत्वात्। तदपेक्षो राजपुरुषशब्दः स्वार्थमभिधत्ते इति। ततः संबंधप्रत्यये युक्तस्तस्मात्सत्सु पदार्थेषु नित्यसमवायिनि शब्दप्रवृत्तिनिमित्तं सत्तैव भावप्रत्ययवाच्या न तु सत्सत्तयोः संबंधः समवायाख्यः। धवखदिरत्वमिति जातिद्वन्दाज्जातिसमुदाये द्रव्यद्वंद्वात्तु साहित्ये कुत्वमित्यादौ संज्ञास्वरूपे संज्ञिष्वध्यस्ते प्रत्ययः। अन्ये तु संज्ञासंज्ञिसंबंध इत्याहुः। उक्तं च। "जातिगुणाज्जातिगुणे,समासकृत्ताद्धिताच्च संबंधे। डित्थादेः स्वरूपे, धवखादिराज्जातिसंघाते" इति। यदा तु परिमाणभेदाद्भिन्नेपि पिंडेऽभेदप्रत्ययावलंबनं जातिः स्वीक्रियते तदा तत्र प्रत्ययः डित्थत्वम्। यदा तु प्रशस्तं गुणं क्रियां जातिं वारोप्य संज्ञा क्रियते। शुक्लः

कृष्णः कपिलः विष्णुः भानुः ।सिंहो व्याघ्रो हंस इति । तदा गुणक्रियाजातिषु प्रत्ययः । इह नानात्वं सहत्वं यौगपद्यमित्यादौ वृत्तिविषये नानाशब्दे ऽसहभूतेर्थे वर्तमाने सहशब्दः सहभूतेर्थे युगपच्छब्दोपि । युगपद्भूते ततोऽसहभावादौ भावप्रत्ययः। भावेऽणादीनामुदाहरणानि । आणवम् । लाघवम् ज्ञातेयम् । कातेयम् । आमुष्यकुलिका । अत्र कारकादित्यतः क्रियाग्रहणमनुवर्तते तच्च विभक्तिविपरिणामेन क्रियाया मप्येते प्रत्ययाः स्युरिति व्याख्येयम् । ब्राह्मण्यम् । हौत्रम् । औद्गात्रम् । आध्वर्यवम् । द्वैहायनम् । यौवनम् प्राजापत्यम् । पौरोहित्यम् । राज्यम् । भावप्रत्ययांतेन नञि समासे।अशौचम्।अनैश्वर्यम् । अक्षैत्रज्ञम्।अकौशलम्। अनैपुणम्। नञ्समासात्तु भावप्रत्यये आपाटवम् । आचातुर्य्यम्।आसंगत्यम् । आलावण्यम्।आवश्यम् आयुध्यम् ।आरस्यम् । क्वचिद्द्वयोरित्युभयपदवृद्धौ तु आनैश्वर्यम्। आक्षैत्रज्ञम् आकौशलम् । आनैपुणम् । लक्ष्यानुसारात्कचित्समासे कृते तद्धितः प्रायशो ग्रहणात् । क्वचित्तद्धिते कृते समास इति ज्ञेयम्। तांतं स्त्रियां त्वांतं क्लीबं यणंतमुभयत्र । सामग्र्यं सामग्री । मैत्र्यं मैत्री । औचित्यम् औचिती । आर्हत्यम् आर्हती । कत्यादयः स्त्रियामणंतत्वादीप् । ण्ययणोर्णस्यानिर्देशे अनर्थकस्याप्यणो ग्रहणस्य ज्ञापनात् । लोहितस्य भावो लोहितिमा। लघिमा । महिमा । गरिमा । प्रथिमा । म्रदिमा । क्रशिमा । भ्रशिमा । द्रढिमा । परिवृढिमा । बहोर्भावो भूमा । इत्यादयः मन्नंताः कत्यादित्वान्निपात्यंते । प्रत्ययार्थस्य धर्मस्य विशेष्यस्य प्रकृत्यर्थस्य धर्मिणो विशेषणस्य च सम्बन्धात् षष्ठीविभक्तिर्लभ्यतेऽतस्तस्येति नोक्तम् । **अस्त्यर्थे मतुः** ॥ अस्त्यर्थे वर्तमानान्नाम्न इति । नायं प्रकृत्यर्थः । अस्तिमान् भवितृमान् वेतृमान् इत्यादावेव स्यात् । नापि प्रत्ययार्थः । गोमानित्यत्रेति प्रतीत्यभावात् । नापि प्रत्ययार्थविशेषणं विशेष्यस्यान्यस्याभावात् । अतः परिशेषात्प्रकृत्यर्थविशेषणम् । अस्त्यर्थे वर्तमानान्नाम्नः मतुरिति । नन्वस्त्यर्था अपि बहवः प्रकृतेः सत्ताप्रत्ययस्य कर्तृसंख्याकालाः । नाद्ये वृत्तिः । गोमानित्यतो गोसत्तेति प्रतीतिविरहात् । नापि द्वितीये वृत्तिः। गोमानित्युक्ते सत्ता कर्त्ता गौरिति ज्ञानाभावात्। न तृतीये वृत्तिः। एका गौरिति प्रतीत्यभा-

वात् । नापि तुर्य्ये । वर्तमानो गौरिति प्रतीतिविरहादिति चेत् । उच्यते । अस्तीत्याख्यातांतस्यानुकरणम् । अनुकार्यानुकरणयोरभेदविवक्षयाऽर्थवत्त्वाभावान्न विभक्तिः । अर्थे इति पृथक्पदम् । अस्तौ मतुरित्युक्ते शब्दे प्रत्ययाभावादर्थे प्रत्ययो विज्ञास्यते । अस्तीत्यत्र प्रत्ययस्यार्थे आश्रयः व्यापाराश्रयेऽभेदेन संसर्गेण वर्तमानं यन्नाम तच्चाख्यातेनोक्तत्वात्प्रथमान्तं च । तथा-च आत्मधारणानुकूले व्यापाराश्रयेऽभेदेन वर्तमानान्नाम्नोर्थे मतुरित्यर्थः पर्यवसितः । कस्मिन्नर्थे इत्याकांक्षायां प्रथमाकांक्षितत्वात्स्वामिन्यर्थे । संति गावोऽस्येति गोमान् चैत्रः । अत्र च क्रियायुक्तेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । क्रियायुक्तश्च न कर्त्ता गृह्यते । तथाऽस्त्यर्थेनैव संगृहीतत्त्वात् । नापि कर्म । अस्त्यर्थस्य तदभावात् । अतः क्रियायुक्त आधारो गृह्यते । तस्य परंपरया क्रियाश्रयस्य कर्तुर्लाभात् । उच्यते । कर्तृवत्कर्मणोपि ग्रहणं स्यात् । ज्ञप्तिरस्यास्तीति ज्ञप्तिमान् चैत्र इतिवत् ज्ञप्तिरस्मिन्नस्तीति ज्ञप्तिमान् घट इत्यपि स्यात् । किंच गोभिः पृष्ट इत्यत्रानुक्तादपि कर्तुरस्तीत्यस्यानुमाने मतुः स्यात् । उक्तत्वस्यालाभात् । अतो यथोक्तमेव न्याय्यम् । ननु यद्यस्य भवति तस्मिन्नपि यच्च यस्मिन्भवति तस्यापि तद्भवति यथा वृक्षस्य शाखा । वृक्षे शाखेति । तत्रान्यतरानिर्देशेनैव सिद्धं किमर्थमुभावर्थौ निर्दिश्येते । उच्यते । षष्ठ्यर्थमात्रनिर्देशे यत्राधारत्वेनैव रूपेण विवक्ष्यते न सम्बन्धत्वेन तत्र न स्यात् । यथा वृक्षा अस्मिन्पर्वते संतीति । नह्यत्र पर्वतः क्रियाकारकसम्बन्धेनावयवावयव्यादिसम्बन्धेन वा दृश्यते । अतो वृक्षवान्पर्वत इति सिद्ध्यर्थं सप्तम्यर्थे निर्दिष्टः । षष्ठ्यर्थस्याग्रहे तु पुत्रवान् गोमानिति न स्यात् । नह्यत्र पितुः स्वामिनश्चाधारत्वम् । सामीपिकाधारत्वमस्तीति चेत् । न । देशांतरगते पुत्रे गवि च पुत्रवान् गोमानिति न स्यात् । सामीप्यस्याप्यसत्वात् । अत उभयनिर्देशो युक्तः । ननु चास्तिग्रहणं व्यर्थं घट इत्युक्तेऽस्तीति गम्यते एव । तदुक्तं प्रथमपुरुषोऽस्तिभवतिपरोऽप्रयुज्यमानोपि अस्तिभवतिपर इति । तथा च गमादीनां सत्तामादाय भविष्यतीति चेदुच्यते । या मुख्या बाह्यार्थसत्ता तामादायैव प्रत्ययो भवतु न कल्पितां मानसीं सत्तामादायेति वक्तुमस्तिग्रहणम् । यदि त्वार्थिकीं सत्तामादाय प्रत्ययः

स्यात् तदा शशः शृंगवानित्यपि स्यात् । गावोस्यासन्भवितारो वेत्यत्र न प्रत्ययः । तिपा निर्दिष्टस्य वर्तमानकालस्य विवक्षणात्।यद्येवं विद्यमान एव देवदत्ते तद्गवीनामतीतानागतत्वप्रतिपादनाय गोमान् भवितेति प्रयुज्यते । तत्र प्रकृत्यर्थस्य वर्तमानकालेऽसत्वात्प्रत्ययाऽप्रसङ्गः । नैष दोषः । नात्र साक्षाद्गवां सत्ता कथ्यते । किं तु गोमतः । अत्र यद्यपि यो गोमान् स विद्यते तथापि गोमत्तारूपं तस्यातीतमनागतं चेति भूतभविष्यत्प्रयोगः । यथेश्वरोयमासीद्दारिद्रोयं भविष्यतीति । तत्रार्थात्प्रकृत्यर्थस्याप्यतीतानागत्वप्रतीतिर्भवति । साच वाक्यार्थवशादुपजायमाना बहिरङ्गेति नान्तरंगं शब्दसंस्कारं निवर्तयति । यथा ग्रामं न गच्छतीति तदेवं संप्रति सत्तायां यथा स्यात् । भूतभविष्यत्सत्तायां माभूदित्येवमर्थमस्तीति स्थितम् । अथ क्रियमाणेप्यस्तिग्रहणे इह कस्मान्न भवति गावोऽस्य संत्यनंतरातिसापेक्षत्वेनान्वयात् । गावोऽस्य संतीत्यानंतर्य्यार्थसामिप्यार्थषष्ठ्यंतार्थेनाभिधानात् । एवं चित्रा गावोऽस्येत्यत्र समासोपि न । इह कस्मान्न भवति । चित्रगुः । शबलगुरिति बहुव्रीहिणोक्तत्वात् । वाक्ये तु चित्रा गावोऽस्य संतीति प्रत्येकमसामर्थ्यान्न भवति । समुदायाच्चानामत्वात् । पंच गावोऽस्य संति पंचगुरिति । संख्यापूर्वो द्विगुरिति तद्धितार्थे द्विगुः प्राप्नोति । अन्यार्थ इति बहुव्रीहिरपि । चित्रगुरित्यादौ सावकाशं बहुव्रीहिं द्विगुर्बाधते । द्विगुना तद्धितार्थस्योक्तत्वात्तद्धितो न भवति । क्वचिदुक्तार्थस्यापि प्रयोगो दृश्यते इति द्वैमातुर इत्यादौ भवति । अत्र वाक्यभेदेनाणादयोपि विधीयंते । तेन तपोऽस्यास्तीति तापसः । ज्योत्स्नास्यास्तीति ज्यौत्स्नः । केनेयेका इत्यत्र तंत्रेणेतोपि निर्दिश्यते । फलानि बर्हाणि शृंगाणि च संत्यस्य फलिनः । मलिनः । बर्हिणः । गुण्या ब्राह्मणाः ॥ हिम्याः पर्वताः । गौशतिकः । ऐकशतिकः । इत्यादि सिध्यति । अर्थमित्यनेनार्थांतरेपि मत्वादयो विधेयाः । तदुक्तम् "भूमनिंदाप्रशंसासु नित्ययोगेऽतिशायने । संबंधेऽस्तिविवक्षायां भवंति मत्विनादयः" इति । अस्तिविवक्षायां ये मत्वादयो विधीयंते ते भूमादिषु विषयेषु भवंतीत्यर्थः । बहूनां भावो भूमा । तत्र भूम्नि गोमान् । बहुत्वं चाभिधानवशाद्विशिष्टमेवाश्रयणीयम् । यदाह यावतीभिः खल्वपि गोभिर्वो-

हृदोहमसवाः कल्पंते तावतीषु सत्ता कथ्यते कस्यचित् चतसृभिरभिकल्पंते कस्यचिच्छतेनापि न कल्पंते इति । एवं च यवमानिति त्रिप्रभृतिषु बहुत्वसद्भावोपि न भवति भूमादिग्रहणं त्वभिधानस्वभावदर्शनार्थम् । निन्दायाम् । ककुदावर्त्तिनी कन्या । प्रशंसायाम् । रूपवान् । नित्ययोगे। क्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । संबंधः संसर्गः । संयोग इत्यर्थः । दंडीति संसक्तदंड उच्यते । गृहावस्थिते तु दंडे न भवति । केचित्तु भूमादिष्वस्तिविवक्षायां चेति समुच्चयमाहुः । अस्तिविवक्षायाम् । अस्तिमानिति । अस्तिशब्दो विभक्तिप्रतिरूपको निपातः कर्तृविशिष्टसत्तावाची । प्रत्ययांतमपि दृश्यते । अस्तित्वम् अस्तितेति । अव्यभिचारादस्तिसामानाधिकरण्यं नास्तीत्यस्ति विवक्षायां प्रत्ययो विधीयते । अस्तिमानिति च वृत्तिविषये कर्त्तृविशेषतद्धितेऽस्तिशब्दो वर्त्तते । नहि कर्तृसामान्येन प्रत्ययार्थस्य विशेषणं संभवति । सर्वस्यैव हि सर्वदा यत्किंचिदस्ति । शुक्लः पट इत्यादौ शुक्लादय एवाभेदोपचारात्तद्वति वर्तते । भेदविवक्षायां तु पटस्य शुक्ल इत्यपि भवति।अत्र पक्षे मतुः प्राप्तः लुग्बहुत्वे क्वचित्॥इति तस्य लुक्।यद्वा मत्वर्थेऽणेव विधीयते णितो वेत्यणित्त्वान्न वृद्धिः । मतु वत्वीयसूनामुरीब्नुमर्थः । **मांतोपधाद्वत्विनौ।**मश्च अश्च मौ । अंतश्च उपधा च अंतोपधे मौ अन्तोपधे यस्य तन्मान्तोपधं तस्मात् अस्त्यर्थे वर्त्तमानात्प्रथमांताद्वत्विनौ प्रत्ययौ स्तोऽनपवादे मतोरपवादः।नन्वत्र यथासंख्यं प्राप्नोति यस्यांतेन संबंधः।अस्योपधया संबंध एवं मांताद्वतुः अवर्णोपधादिन् । मैवम्। ज्ञापकसिद्धं न सर्वत्रेति सिद्धान्तात् । यथासंख्यस्य च ज्ञापकसिद्धत्वात् । यद्वा। मांतोपधादिति वक्तव्ये यद्गुरुकरणं तस्माद्यथासंख्याभावज्ञापनात् । म अंते यस्य तन्मंतम्।अ उपधा यस्य तदोपधम्।मंतं च ओपधे च अनयोः समाहारः मंतोपधं तस्मात् । इत्थं हि यथासंख्यं लभ्यते।तदकरणाच्च यथासंख्याभावः। किंवान् । इदंवान् । शंवान्।कंवान् । अहंवान्।लक्ष्मीवान् । रश्मिवान् । भूमिवान् । गमिवान् । जग्मिवान्।धनवान् । विद्यावान् । यशस्वान् । भास्वान्। मांतान्मान्तोपधादवर्णोपधाच्चेन्नास्ति अभिधानलक्षणाः कृत्तद्धितसमासाश्चेत्यभ्युपगमात् । दंडी। धनी।माली।मायी।शिखी । मनीषी । नामिवत इति ज्ञाप

कादमांतोपधादपि वतुर्भवति । तडित्वान् । मरुत्त्वान्।विद्युत्त्वान् । स्यादेतन्मतुरित्यनुवर्त्य षष्ठया विपरिणमय्य मांतोपधात्परस्य मतोर्वत्विनावादेशौ स्त इति व्याख्यायताम् । नच करिणौ करिण इत्यत्र ञितो नुमिति नुम् प्रसज्येत । स्थानिवद्भावेन इत उदित्वादिति वाच्यम् । वतोरुकारकरणेनेनस्तदभावज्ञापनात् ।अन्यथा स्थानिवद्भावेनैवोदित्त्वसिद्धौ किं तेन।अवर्जो नामिन इति ज्ञापकाच्च । नच करिणीत्यत्र ञ्चित इति ईप् न स्यात् । ञण ईबितीप्सिद्धेः । तस्य फलं तु मत्वंतान्मत्वर्थीयस्सरूपो नेति वचनात् । वह्निमद्वान् देश इति न भवति । नन्वेवं दण्डिमतीत्यपि न स्यादिनः स्थानिवद्भावेन मतुत्वात्सारूप्यात् । न चादेशनिष्ठं वैरूप्यं गृहीत्वा भविष्यति तर्हि वह्निमद्वानित्यत्रापि तुल्यम् । अतः आदेशपक्षो न सम्यक् । यदि तु वतुरादेशो नेति लभ्येत तर्ह्यादेशपक्षोपि सम्यग्भवेत् । तन्न लभ्यं वत्विनाविति द्वंद्वनिर्देशात् । मत्वंतान्मत्वर्थीयो नेति न वाचनिकं किं तु न्यायसिद्धम् । तथाहि येन वह्निना प्रासादो वह्निमान् तेनैव ग्रामोपि । तेन तत्र वह्निमानित्येव भवति । ग्रामस्यापि प्रासादसमुदायरूपत्वात् । दंडिमती शालेत्यत्र तु दण्डसंबद्धपुरुषवत्त्वं शालायां विवक्षितं न तु दंडवत्त्वमात्रम् । अतो भिन्न विषयत्वाद्भवतः । एवं कुंजोस्यास्तीति कुंजरः । कुंजरोस्त्यस्मिन् कुंजरवान् ग्रामः । एवं पामास्यास्तीति पामनः।सोस्त्यस्मिन्पामनवान् । वामिवान् ग्राम इत्याद्यपि भवति । एकाक्षरात्कृतो जातेः सप्तम्यां च नतौ स्मृतौ । ताविकेनौ । एकाक्षरात्।स्ववान्।त्ववान्।कवान् । कृतः।पाकवान् । कुंभकारवान्। जातेः।व्याघ्रवान् । सिंहवान् । ऋच्छवान् । सप्तम्याम्। दंडाः संत्यस्यां दंडवती । कुत इति हेत्वपेक्षायाम् । अनभिधानादिति बोध्यम् । यत्र त्वभिधानमस्ति तत्र स्त एव यथा रसिकः । स्थानी कार्यीत्यादि।**तरतमेयस्विष्ठाः प्रकर्षे** । तरश्च तमश्च ईयसुश्च इष्ठश्चेतीतरेतरद्वन्द्वः । प्रकर्ष इति । न प्रकृत्यर्थः प्रकर्षे वर्त्तमानाच्छब्दादिति । एवं सति प्रकर्षातिशयनिर्भरादेरेव स्यात् । नापि प्रत्ययार्थः । एवं सति आढ्यस्य प्रकर्ष आढ्यतर इति स्यात् । आढ्यस्येति कर्तरि कर्मणि वा षष्ठी । उभयथाप्याढ्यतमो देवदत्त इति सामानाधिकरण्यं न स्यात् । आढ्यतमो देवदत्तस्येत्येव स्यात् ।नापि प्रत्य-

यार्थविशेषणम् । अन्यस्य कस्यचित्प्रत्ययार्थत्वान्निर्देशात् । नापि प्रकृतेरेव विशेषणं प्रकर्षविशिष्टाच्छब्दादिति । प्रत्ययद्योत्यः प्रकर्षः प्रकृत्यभिहितस्य प्रधानस्यैवार्थस्य विशेषणं युक्तं न त्वर्थाभिधाने प्रति व्यग्रस्य गुणभूतस्य शब्दस्य । यदा तु गुणभूतः तदा भवत्येव प्रकर्षप्रयोगः। उच्चतरः शब्दो नीचतर इति । ननु च शुक्लवदेवैतत्स्यात् । तद्यथा । शुक्लतरः पट इति गुणभूतस्यापि शौक्लस्य प्रकर्षो द्रव्यस्य प्रकर्षहेतुः।तथा शब्देप्यस्तु। शौक्ल्यादयो हि द्रव्यसमवेताद्युक्तं यत्तत्स्वयं प्रकृष्टादद्रव्यं प्रकर्षयति शब्दस्तु न तथेति कथं तत्प्रकर्षेपि द्रव्यं प्रकृष्येत । परिशेषात्प्रकृत्यर्थविशेषणं प्रकर्षः विभक्त्यंताच्च तरादयः प्रकर्षप्रशंसाकुत्सादियुतस्यैव प्रवृत्तिसंभवात् । यद्यप्यविशेषेण चत्वारोपि विहितास्तथापि द्वयोरेकस्य प्रकर्षे तरेयसू बहूनां त्विष्ठतमाविति ज्ञेयम् । प्रकर्षशब्दस्य तु नायं विग्रहः प्रकर्षतीति । इत्थं हि कर्तृवाचकाच्छब्दादित्यर्थः स्यात् । तथा च पाचकतरः पचिष्ठः दोहीयसीत्यादावेव स्यात् । कत्यादित्वात्तृलोपः । नापि प्रकृष्यते इति कर्म घञंतः । पक्तरः । पक्तव्यतमः । दर्शनीयतर इत्यादावेवं स्यात् । नापि प्रकृष्यतेऽनेनेति पचनतर इत्यादावेव स्यात् । नापि प्रकृष्यतेस्मिन्निति पचनितरा स्थालीत्यादावेवं स्यान्न तु शुक्लतरः पटतम इत्यादौ नापि प्रगतः कर्षमुन्मार्गविशेषं द्रुमविशेषं वा। नापि प्रगतः कर्षणं हलविलेखनम्, इत्यस्मादिति समासार्थस्य बहिरंगत्वात् शब्दशक्तिस्वाभाव्यादनभिधानात्सूत्रार्थसंकोचापत्तेश्चातः प्रकर्षणं प्रकर्ष इत्येव विग्रहो न्याय्यः । प्रकर्षश्चात्र नाधिक्यं किं तर्ह्यभिभवो मतः । यद्यपि कृषिः केवलो विलेखने वर्तते तथापि प्रपूर्वोभिभवे वर्तते । उपसर्गवशाद्धातोरर्थांतरवृत्तित्वात् । यद्यपि द्रव्यस्य स्वतः प्रकर्षो नास्ति तथापि गुणप्रकर्षात्प्रकर्षो भवति । संति च द्रव्ये बहवो गुणास्तेषु यस्य भावाद्द्रव्यशब्दनिवेशः । सन्निधानात्तत्प्रकर्षाश्रयः । उक्तं च "द्रव्यस्याव्यपदेशस्य य उपादीयते गुणः । भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते" इति । अव्यपदेशस्येति धर्मयोगमंतरेण व्यपदेष्टुमशक्यस्य तस्य प्रकर्षोऽभिधीयते प्रत्ययेनेत्यर्थः । गुणक्रियाजातिसंज्ञाभेदेन चतुष्टयी शब्दानां प्रवृत्तिः । तत्र गुणक्रिययोः प्रवृत्तिनिमित्तयोः तत्प्रकर्ष-

प्रत्ययः। तद्यथा । गौरयं हलं वहति गोतरोऽयं हलं शकटं च वहति । गोतमोयं ते गोण्यौ वहति। अश्वोऽयं यश्चत्वारि योजनानि गच्छति।अश्वतरोऽयं यः षट्।अश्वतमोऽयं योऽष्टौ।पटोऽयं यः किंचिदावृणोति।पटतरोयं योऽवयविनमावृणोति।पटतमोऽयं योऽवयव्यन्तरमप्यावृणोति।इयं स्त्री याऽपत्यं जनयति। स्त्रीतरेयं या पचत्यपि। स्त्रीतमेयं या गृहमपि रक्षति । पाचकोऽयं य ओदनं पचति।पाचकतरोऽयं यः सूपमपि ।पाचकतमोऽयं यः शाकमपि पचति। यद्वा विलंबेन पचति यः स पाचकः । यस्तु ततः किंचिच्छीघ्रं स पाचकतरः। यस्त्वतिशीघ्रं पचति स पाचकतमः।यस्य सामान्यतः श्वेतो गुणः स शुक्लः। यस्य तदपेक्षयाधिकः स शुक्लतरः। यस्य ताभ्यामत्यधिकः स शुक्लतमः। यः किंचिज्जानाति स पटुः । ततोधिकं स पटुतरः । ततोप्यधिकं स पटुतमः । संज्ञाशब्देषु प्रकर्षो नास्ति शब्दस्वरूपस्यैव प्रवृत्तिनिमित्तत्वात् । तस्य च सर्वत्र तुल्यत्वात् । जात्यभ्युपगमेऽपि तस्या अन्यदेवदत्तशरीरेऽभावात् । सजातीयप्रतियोगप्रकर्षाभावात् । प्रकर्षो हि सजातीयप्रतियोगिको भवति । नहि कृष्णापेक्षया शुक्लतरः उच्यते । किंतु शुक्लांतरापेक्षयैव तत्सहचरति तं धर्मांतरमादाय तु चैत्रतर इत्यादिप्रयोगो न भवति । व्यवहाराभावात्। सति व्यवहारे निमित्तं कल्प्यते न तु निमित्तकल्प्योऽस्तीति व्यवहारः । ऋषौ गोतमशब्दे तु न तमप्रत्ययः । किं तु गवि यो गोतम शब्द उक्तः स एवात्र संज्ञात्वेन विनियुक्तः । यद्वा गाः इंद्रियाणि तमयति क्षपयति । तमु कांक्षायाम् । ण्यंतात्कर्मण्यण् । यद्वा गां वाचं स्वर्गं धेनुं वा ताम्यति।यद्वा गोभिरिन्द्रियस्तम्यते पीड्यते । कर्मणि घञ् । यद्वा तमप्रत्यय एवायं गोत्वसहचरितधर्माणां पावनत्वप्रकाशकत्वपूज्यत्वेष्यमाणत्वादीनां धर्माणामारोपात् । गोषु स्वर्गनेत्रजलधेन्वादिष्वयं प्रकृष्ट इत्यर्थः। यद्वा मृतया हेतुभूतया गवा ताम्यति कांक्षति गंगाम्। यद्वा गौर्वाक् तमं विपरीतलक्षणया प्रकाशो यस्य । 'तमं च तमसा सार्द्धम्' इति द्विरूपकोशः । यद्वा गवि स्वर्गे तमा रात्रिर्येन विना विपरीतलक्षणया प्रकाशो वा यत्प्रणीतशास्त्रेण । यद्वा गवां शास्त्रांतराणां तमो राहुरिव दूषकत्वात् । यद्वा गवा तन्यते गोताड्ः। सा मा लक्ष्मीः शोभा वा यस्य । यद्वा गेन गणेशेन ऊयतेऽस्य गोता तां

मयते माति मिमीते मायते मिनोति मीनाति वेति दिक् । संख्यापरिमाणप्रमाणोन्मानशब्देभ्योपि न तरादिः नहि भवति । द्वितरः । त्रितरः । प्रस्थतरः । आढकतरः । अरत्नितरः । हस्ततरः । सुवर्णतरः । गद्याणकतरः । तदुक्तम् "उर्द्धमानं किलोन्मानं परिमाणं तु सर्वतः । आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः" ॥ ऊर्द्धमानं तुलापरिमाणं कुडवद्रोणादि । प्रमाणं हस्तवितस्त्यादिः। संख्या एकादिः । सर्वथा धर्मद्वारको द्रव्यप्रकर्षस्ततः तद्यथा।शुक्लगुणयोगात् द्रव्यस्य शुक्लव्यपदेशः । तथा प्रकर्षव्यपदेशोपि तत्प्रकर्षादेव प्रकर्षप्रत्ययांतादपि प्रकर्षप्रत्ययो भवति अतिशयेन प्रशस्य एषामयं श्रेष्ठः कत्यादित्वात् श्रः । अत्र प्रकर्षरहितप्रतियोग्यपेक्षया यः प्रकर्षः तत्रेष्ठो विहितः प्रकर्षवत्प्रातियोग्यपेक्षया यः प्रकर्षः इष्ठे स द्योतितः । तत्र तमः श्रेष्ठतम इति केचित् । नेत्यन्ये । तथाहि । न तावत्तरांतादपरस्य प्रसंगः । यत्र हि त्रयाणामेकः शुक्लः द्वितीयः किंचिदुत्कृष्टस्तृतीयश्चात्यंतं तत्र किल प्रसङ्गः शंक्यते । तत्र च द्वितीयस्य सदप्युत्कृष्टत्वतृतीयसन्निधावकिंचित्करं राजसंनिधाविवामात्यस्येति द्वितीयात्तावत्तरो न भवति । तृतीयादपि न भवति । तस्मिन्नेव प्रयोगे त्रयाणामपेक्षितत्वेन द्वयोरेकस्य प्रकर्षाभावात् । एवमीयसुः । नापि तमान्तात्तमप्रसङ्गः । यत्र हि चतुर्णां द्वौ शुक्लौ तृतीयः किंचिदुत्कृष्टः चतुर्थात्तु तमो भवति एवमिष्ठोपि । ननु कुमारितरेत्यत्र प्रत्ययस्य स्वार्थिकत्वेन वयोवाचित्वात् वयसीतीप् प्राप्नोति । मैवम् । कुमारशब्दादुत्पन्नया वयोविशिष्टस्यार्थस्य स्त्रीत्वं द्योतितमितिकृत्वा भविष्यति।तरांतात्तु स्त्रीत्वमात्राभिव्यक्तये आप् भविष्यति कुमारितर इत्युच्यमाने कुटीरः शमीर इतिवाल्लिंगान्तरं गम्येत । यद्वा कुमारशब्दस्य वयःप्रवृत्तिनिमित्तम्। तरान्तस्य तु तद्गतः प्रकर्ष इति कुतोत्र यः प्रसंगः:प्रकृत्यर्थविशेषणं च स्वार्थिकानां द्योत्यं भवति । कारकादित्यतः क्रियेत्यनुवृत्य वाक्यभेदेन व्याख्येयम् । आख्यातांतादपि तरतमौ स्तः । तदंताच्च कत्यादित्वादाम् । तदंतस्य च क्त्वाद्यंतं चेत्यव्ययत्वम् । पचतितरां देवदत्तः । पच्यतेतरामोदनः । गुरुप्रशस्यादेरिष्ठेयस्वोः कत्यादित्वाद्गरादिरादेशः । गुर्वादेरित्यादिवार्त्तिकानि कत्यादिप्रपंचः । तत्र प्रशस्यादिगुणवा-

चकेभ्य एवेष्ठेयसू न रुयश्वब्राह्मणादिभ्यः । श्वेतकालचित्रादिभ्योप्यभिधानलक्षणाः कृत्तद्धितसमासा इति सिद्धांतात्सत्याभिधाने स्तोऽन्यथा नेतीति ज्ञेयम्। यत्र प्रथमं प्रकर्षस्य विवक्षा पश्चादन्यपदार्थस्य तत्र तराद्यंतेन बहुव्रीहिः। सूक्ष्मतराणि वस्त्राण्यस्येति सूक्ष्मतरवस्त्र इति । यत्र तु प्रथममन्यपदार्थस्य विवक्षा पश्चात्प्रकर्षस्य तत्र बहुव्रीहेस्तरादिः सूक्ष्मवस्त्रतर इति । अत्र गुणद्वारको वस्त्रे प्रकर्षः । तद्द्वारको विशेष्ये । अतिशायने तमबिष्ठनावित्यत्र प्रकर्षे तमबिष्ठनाविति वक्तुमुचितं लाघवात् । नच दीर्घत्वं निपात्य तद्विशिष्टस्य लोके साधुत्वबोधनार्थमतिशायनशब्दस्य ग्रहणमिति वाच्यम्। निवृत्तप्रेषणाण्णिचि स्वार्थणिचि वा ततो ल्युटि तस्य सिद्धत्वात् । "निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजुच्यते" इति सिद्धांतादिति दिक् । **वोऽव्यस्वरे।** उश्च ओश्चानयोः समाहारः वो । एकत्वे द्विगुद्वंद्वाविति नपुंसकत्वेपि न ह्रस्वः । तस्यानित्यत्वात् । तत्रातोमिति तपरकरणं ज्ञापकमुक्तम् । यद्वा अनुकार्य्यरूपस्य स्पष्टप्रतिपत्त्यर्थत्वान्न ह्रस्वः । ह्रस्वे हि सति पूर्वेण सवर्णे दीर्घे सति पुनस्तस्य ह्रस्वेऽह्रस्वे वा सति वादेशे वऽव्यस्वर इति स्यात् । तथा च संशयः स्यात्किमत्र व एव निर्दिष्टः । उर्वा ऊर्वा इति । यश्च स्वरश्च यस्वरं तस्मिन्। उ इति जातिग्रहणात्सर्वेषां संग्रहः। ओ ग्रहणं यकारार्थं स्वरे तु ओ अवित्येव सिद्धम् । उग्रहणं तूभयार्थम् । यद्यत्रादेशो व एव निर्दिष्टः स्यात्तर्हि उग्रहणं व्यर्थं स्यात् । स्वरे उ वमिति यकारे क्वचित्स्वरवद्य इति सिद्धत्वात्। ननु उ वमित्यस्याग्रे ये चाविति सूत्र्यताम् । उ अव ये स्वरे चेति व्याख्यायताम् ।ओ अवित्यत्रापि ये चेत्यनुवर्त्यताम् । यद्वा ओ अवित्यस्याग्रे ये चेति सूत्र्यताम् । उग्रहणमनुवर्तताम् । उ ओ च अव् भवति स्वरे ये चेति व्याख्यायताम् । किमनेन सूत्रेण।न च यमात्रग्रहणे अंबु यातीत्यत्रापि स्यात् । प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति निर्वाहात् । न चैवमपि विष्णूयति स्तूयत इत्यत्रापि स्यात । य इति दीर्घेण परत्वादबाधनात्सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेत्यभ्युपगमात् । नच भूयते लूयत इत्यत्राति प्रसङ्गो दीर्घस्य दीर्घविधानं तु प्रयोजनाभावान्नास्ति । नन्ववादेशबाधनार्थं दीर्घस्य दीर्घविधानसम्भवात् । एवं तर्हि सूयते

रूयत इत्यत्रातिप्रसङ्गः। न चात्रापि ये इति दीर्घः संभवति । अनब्विषये तस्य प्रवृत्तिसम्भवात् । अत्र चाव्विषयत्वात्तस्माद्यथान्यासमेव रमणीयम् नच यथान्यासेपि उक्तातिप्रसङ्गः । तद्धितप्रकरणत्वात्तद्धितसम्बन्धिनोर्यस्वरयोर्ग्रहणात् । ननु नावा तार्यं नाव्यम् । पितुरागतं पित्र्यम् । कारकादिति ज्यः। णितो वेत्यणित्त्वम् । औकार ऋकारयोरव्रत्वविधायकाभावात्।क्वचित्स्वरवद्यइति वचनमारब्धव्यम्।तच्च गव्यूतिः क्षय्यं जय्यमित्याद्यर्थं कर्तव्यमेव । तेन नाव्यादेरपि सिद्धिः । उ औपगवः । बभ्रोरपत्यं बाभ्रव्यः । काद्रवेयः । ओ स्मृतोरपत्यं स्मार्तवः । सुद्योरपत्यं सौद्यवः । गोरिदं गव्यम् तर्हि क्वचित्स्वरवद्य इति वचनं कर्तव्यम् न कर्त्तव्यम् ओदौतोर्यः स्वरवदिति सूत्रं त्वित्थं व्याख्येयम् । यः स्वरवद्भवति ओदौतोर्निमित्तं यो यः सोऽपि स्वरवद्भवति । अनेन प्रथमवाक्यार्थस्य क्वाचित्कत्वं गम्यते । इत्थं क्वचिद्यः स्वरवदिति सिद्धम्।स्वरेण तुल्यं स्वरवत्।क्वचिच्च ओदौतोर्यः स्वरवादिति पाठः । तत्र स्वरे इव स्वरवदिति व्याख्येयम् । अत्रायं निष्कर्षः । अत्र सूत्रे ओग्रहणं व्यर्थम् । उरव्यस्वर इति वा सुपठं तत्र सूत्रे ओदौतोः स्थाने क्वचिद्ग्रहणं सुवचं लाघवात् । अलुकक्वचित्क्वचिद्वयोरितिवल्लक्ष्यानुसारेण प्रवृत्तिरभ्युपेयते । औयतेत्यत्र नातिप्रसंगः । गव्यं नाव्यं च सिद्धम् । स्वर इति संज्ञापूर्वकविधेरनित्यत्यात्स्वायंभुवमित्यादि सिध्यति । माधवस्तु।उ ओ अव् यस्वर इति च्छेदः। तत्र वोरित्युकारौकारयोर्ग्रहणं न वकारौकारयोर्व्याख्यानाद्विशेषप्रतिपत्तिः । ननु वमात्रमेवादेशः स्यादकारसत्त्वे प्रमाणाभावात् । न च वाच्यमुकारस्य उवमित्येव सिद्धे वकारे पुनस्तद्विधानवैयर्थ्यमेव प्रमाणमिति । वायव्यमित्यादौ यकारार्थत्वात् नापि क्वचित्स्वरवद्यकार इति सिद्धिः । तस्य ओ अव् इत्यत्र गव्यूतिरित्यवादेशविषयत्वप्रतिपादनादिति तन्न । पित्र्यमित्यादेरसिद्धिप्रसङ्गात् । रादेशविषयत्ववत् वादेशविषयत्वस्यापि वक्तुं युक्तत्वात । उकाररस्यावकारविधानवैयर्थ्यमेवाकारप्रश्लेषे प्रमाणं यदपि असंदेहार्थं तर्हि वकारद्वयेन वोयस्वर इतिनिर्देशाभावप्रमाणमित्यवादेश इति । तदपि न । वकारद्वयपाठेऽपि संदेहानपायात्।कथं जंबुकंब्वादेः बुइत्यस्योकारादेशसंभवात् । नचांत्यस्यौकारे जांब-

वमित्यादि सिध्यति । जसीतिवत् षष्ठ्यभावेनांत्यादेशाभावात् । यदपि वोय-स्वर इति सूत्रं कृत्वा वर्ण ओकार एव विधीयते । अवादेशस्य ओ अवि-त्येव सिद्धत्वात् । न पूर्वेणादेशो न क्वचिदोकारो विद्यातीति ज्ञापनार्थत्वात्। तेन विष्णो इत्यादौ धिनिमित्तौकारांतस्य अवैदिक इतिशब्दे परे प्रकृतिभा-वोपि सिध्यतीत्याह । तदपि न । स्वरसंज्ञापूर्वकत्वेनौअवित्यादेरनित्यत्वा न्नामि इत्यत्र योगविभागेनापि सिद्धत्वात् । ज्ञापनफलाभावात् । यदपि एव-मप्योकार ग्रहणं व्यर्थं प्राग्वत्तस्यादेशसिद्धेः । सत्यम् । यप्रत्ययस्य तु स्वर-वत्त्वमसार्वत्रिकमिति ज्ञापनार्थत्वाददोषः । तेन आ ऊयते ओयते इत्यत्राव्-नेत्युक्तम्।तदपि न । क्वचित्स्वरवद्य इति । क्वचिद्ग्रहणेनैव गतार्थत्वात्। यदपि असार्वत्रिकमपि यकारस्य स्वरवत्त्वमिष्टे विषये स्यादिति वायव्यमित्यादौ स्वर इत्येवोकारस्याविति सिद्धे यकारग्रहणं स्वरे क्वचिदवोऽप्रवृत्तिं गमय-तीति स्वायंभुव इत्युव् सिध्यतीत्युक्तम् । तदपि न । अवोपि संज्ञापूर्वकत्वेना-नित्यत्वात् । ननु अवोऽप्रवृत्तावपि उव् कथं स्यात् स्यादौ स्वरे तद्विधाना-न्मैवम्।य्वोर्धातोरियुवौ स्वर इत्यत्र स्वरे अ इति च्छित्वाऽकारेपि तद्विधा-नात् । अकारस्य स्वरांतर्भावेऽपि पृथग्ग्रहणादस्यादेरेवाकारो गृह्यते । ननु प्रकरणप्राप्तं स्यादिग्रहणमेव त्यज्यताम् । न स्यर्थं चार्थमित्यत्रेयुवोरतिप्रस-ङ्गात् । ओर्गुणः वोतोपि प्रत्ययधातोस्तन्निमित्तस्यैवेति त्रिसूत्री त्याज्या । क्षय्यजय्यौ शक्यार्थेक्रय्यस्तदर्थे अध्वपरिमाणेचेत्यपि वव्ययस्वरे क्वचित्स्व-रवद्य इत्येताभ्यां गुरुत्वात् । वो किम् । विधातुरपत्यं वैधात्रः । यस्वरे किम् पटुरूपः । गोतमः । गोरूपः । ऋ उराणि॥सामान्यशब्दस्यापि लक्ष्यानुसारा-द्विशेषपरत्वं बोध्यम् । संख्यासंभद्रपूर्वस्य जननीवाचकस्य मातृशब्दस्य ऋकारस्योर भवति अपत्याणि परे । द्वयोर्मात्रोः षण्णां चापत्यम् । संख्यापूर्वं इति तद्धितार्थे द्विगुःद्विगुनोक्तत्वात्तद्धितस्याप्राप्तौ अणिति वचनादण् । उक्ता-र्थस्यापि प्रयोगदर्शनाद्वा । द्वैमातुरः । वावसान इति जबचपौ । जबपक्षे षाड्मातुरः । चपपक्षे ञमे ञमा वेति षाण्मातुरः । भाद्रमातुरः । सांमातुरः। बाहुमातरः। संख्यादिपूर्वस्य किम् । सौमात्रः।जननीति किम्।सांमिमीते। यस्त-स्यापत्यं सांमात्रः । मात्रिति किम्।माता च पिता च पितरौ । द्वयोः पित्रोर-

पत्यं द्वैपित्र्यः । मातृवाचकः पितृशब्दः।नतु मातृशब्दः । ऋकारस्य किम् । अनेकाक्षरत्वात् सर्वादेशो मा भूत् । अपत्ये किम् । द्वयोर्मात्रोरिदं द्वैमात्रम्। माधवस्त्वाह । षट् च ता मातरश्चेति कर्मधारय इति । तन्न । दिक्संख्ये संज्ञायामिति नियमात्तद्धितांतस्य संज्ञात्वेऽपि समासस्यासंज्ञात्वात् । इदं सूत्रमेव न।किं तु वार्तिकम्।तदपि सहादित्वात्सिद्धमिति चाह।**यस्य लोपः**॥ इश्च अश्च यं तस्य लोपः ये स्वरे ईपि च । काव्यम्।वासिष्ठः। मौनम्।नदी । सखीत्यादि । यस्येति किम्। वैधात्रः । कर्त्री ।नन्वत्र यस्यैव लोपोऽस्तु सूरी मत्सीत्यादाविति चेन्न । अंत्यादिति ज्ञापकादत्र हि अस्य लोपो न तु यकारस्य। अत एव ईश्च आश्चेति यमित्यपि न । अंत्य इत्यस्यासिद्धिप्रसंगात् । यस्वरौ तद्धितस्यैव ग्राह्यौ प्रकरणाज्ज्ञापकाच्च। उभये स्वराः । हसे चपा अबे इत्यादिनिर्देशा ज्ञापकाः। न स्यादिः स्वरो गृह्यते इति अदे आतोनपीत्यादिनिर्देशात्त्यादिस्वरोऽपि न । नच तयोर्नियमार्थता । विधिनियमसंभवे विधेरेवौचित्यात् । आतोड इति ज्ञापकात्स्वरोऽपि न । अन्यथाऽऽतो इति सूत्रयित्वाऽऽतः अः इति च्छेत्तव्यम्।यद्वाऽऽत इति पठित्वा अ आत इति छेत्तव्यम्।इत्थं सिध्यति गोदः कंबलद इति किं डित्त्वेन । न चोत्तरार्थं तदिति वाच्यम् उत्तरत्रैव नाम्नि ड इति सुपठत्वात् । अश्च इश्चेति समाहारद्वंद्वे । ह्रस्वे च कृते इति ह्रस्वाभावे ए इति भवति । तस्य एलोप इति वक्तव्यम् यस्येति वचनं तंत्रादिना यकारस्य लोप इत्यर्थांतरलाभार्थम्।गार्गी तैषं पैषं गार्गीभवति । गार्ग्यस्येदं गार्गीयम्।गार्गीयति । कानीन इत्यादि सिध्यति । न च इवर्णस्यैकारस्य वा लोपः स्यादिति वाच्यं अंत्यादितिज्ञापकात् । ननु सिद्धांतेऽपि इश्च अश्चेति किं न स्यादिति वाच्यम् । अंत्यादिति निर्देशेन ह्रस्वो वर्णो गृहीतः इति निर्णीते तत्साहचर्यादिवर्णोपि ह्रस्व एव ग्रहीष्यते । जातिनिर्देशाच्च व्यक्त्यन्तरसंग्रह इति दिक्।**डिति टेः**॥अत्र वाक्यार्थत्रयम्।नाम्नो लोपो भवति डिति परे।विंशतेः पूरणः विंशः। एकविंशः।यस्य लोपे कृतेऽत लोपः यकारे स्वरे चेति न संबध्यते डितीतिसप्तमीनिर्देशात् । टेः नाम्नष्टेर्लोपो भवति यकारे स्वरे च। लघिष्ठः। लघीयान् । पटिष्ठः । पटीयान् । बहिर्भवो बाह्यः । पौनःपुन्यम्। पौनःपुनिकः । सायं-

प्रातिकः । कुतः कुतः आगतः कौतस्कुतः । कारकादित्यण् । वाहीकः । केनेयेका इत्यत्र ईकोऽपि निर्दिष्टः तेन तृतीय एव तार्तीयीकः । द्वैतीयीकः । शाक्तीकः । याष्टीकः इत्यादि सिध्यति । नाम्नष्टेर्लोपो भवति ङिति । अत्र प्रकरणप्राप्तं तद्धिते यस्वरे इति न संबध्यते । विश्लेषावधावित्यादिनिर्देशात् । अत्र ङेरौङिदिति न तद्धितः । **नो वा**॥अत्राधिकारलभ्यम्।आक्षेपलभ्यं वा नाम तस्य न् इति विशेषणम् । नांतस्य नाम्नष्टेर्लोपस्तद्धिते यस्वरे च । अत्र टेरित्यावर्त्य सप्तम्या विपरिणम्य टेप्रत्यये परतोऽपि व्याख्येयम्।अत्र वेति व्यवस्थार्थम्।क्वचिट्टिलोपः क्वचिदुपधालोपः क्वचिन्नोभयम्।उडुलोम्नोऽपत्यं औडुलोमिः।बहुत्वे त्वण् । णितो वेत्यणित्त्वम्।उडुलोमाः।राज्ञः कर्म राज्यम् । अतिशयेन ब्रह्म ब्रह्मिष्ठः । कविराजः । कविराजी । एकादशादौ तु परत्वादनेन टिलोपः । उपधा । तक्ष्णोऽपत्यं ताक्ष्ण्यम् । पौष्ण्यः । धार्तराष्ट्र्यः।वृत्रघ्नोऽपत्यं वार्त्रघ्नः । अह्ना निर्वृतमाह्निकम्।अह्नः पूर्वः पूर्वाह्णः नोभयम्। ब्रह्मणोऽपत्यं ब्राह्मणः । राजन्यः क्षत्रियः । राजनोऽन्यः । चाक्रिणः । ब्रह्मण्योऽन्य इत्यादि॥**त्यतनौ**॥इदं सूत्रं कारकादित्यस्याग्रे पठितुं युक्तं प्रत्ययविध्यनुरोधात् । क्रियायुक्त इति प्रत्ययार्थलाभाच्च । अमा सह समीपे वा भवः अमात्यः । इहत्यः । क्वत्यः । कुतस्त्यः । तत्रत्यः । नित्यः । दक्षिणेति । तत्रादित्वादकारांतमव्ययम्।दक्षिणा भवो दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः । णितो वेति णित्त्वाद्वृद्धिः । एषमो भवं ऐषमस्त्यम् । ऐषमस्तनम्।ह्यस्त्यम्।ह्यस्तनम्। श्वस्त्यम् । श्वस्तनम् । सायंतनम् । चिरंतनम्। प्राह्णेतनम्।प्रगेतनम् । **आदिस्वरस्य ञिणति वृद्धिः** ॥ स्वराणां स्वरेषु वा आदिः आदिस्वरः । निर्द्धारणार्थया षष्ठ्या सप्तम्या वा समासः । क्वचिदप्राधांतपरत्वस्येदमपि ज्ञापकम् । निर्द्धारणं च सजातीयापेक्षं तेन यथा नृणां श्रेष्ठ इत्युक्ते ब्राह्मण एव लभ्यते न तु गौः । तथा त्राप्यादिः स्वर एव न तु हसः । यद्वा यस्वरे इत्यतः स्वर इत्यनुवर्तते तच्च प्रथमया विपरिणम्यते । तेनादिस्वर इति लभ्यते । यद्वा स्वर इति निर्द्धारणे सप्तमी । जातावेकवचनम्।आदिश्चासौ स्वरश्चेति कर्मधारयः । स्वरेषु मध्ये आदिस्वरस्य वृद्धिः । अत्र च तंत्रादिनार्थांतरमपि बोध्यम् । आदिस्वरस्येति च्छित्त्वा

स्वराणां मध्ये आदिस्वरस्य क्वचिदाकारो विधेयः । तेन दविकायां भवा दाविको मत्स्यः । शिंशपाया विकारः शांशपश्चमसः । दित्यूहोऽपत्यं दात्यूहः । दीर्घसत्रस्येदं दार्घसत्रम्। श्रेयसोऽपत्यं श्रायस इति सिध्यति । ञ् च ण् च ञ्णौ । ञ्णौ इतौ यस्य स तस्मिन् । प्रकरणात्तद्धितप्रत्यये । तेन जातं मिनोति करोति सलिलं नेत्यादौ धातौ नञि च न । माधवस्त्वाह । परिशेषात्तद्धित इति लभ्यते। धातोर्नामिनः अत उपधाया इत्यंतोपधावृद्धी आदिवृद्धेरपवादौ तस्यां प्राप्तायां विधानात् । बभूवेत्यत्रादिवृद्धिं बाधित्वा-ऽतवृद्धिः प्राप्ता तां बाधित्वा कुक् । देवदत्तहंतरिन्यायेन पुनर्न प्रवर्तते । न च सति संभवे बाधनं भवति । अस्ति च संभवो यदुभयम्।मैवम्।सत्यपि संभवे बाधनं भवति । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौंडिन्यायेति । सत्यपि संभवेऽपि तक्रदानं दधिदानस्य बाधकं भवति । यथा भिनत्तीत्यादौ अंत्यात्स्वरात्परो जायमानो नम् अपो बाधकः । अदायीत्यादौ युक् वृद्धेर्बाधकः । नन्वत्रान्तरङ्गायां वृद्धौ बहिरङ्गस्याटोऽसिद्धत्वान्न वृद्धिः । आतो विशेषाभावात् । मैवम् । दरिद्रायक इत्यादौ विशेषसद्भावात् । ददावित्यत्र तु ददा औ इति स्थिते वृद्धिः परत्वाद्युक् तस्य च डिति टेरिति लोपः।नन्वत्र नित्यत्वाट्टिलोपो युक्तः शब्दांतरप्राप्त्या तस्यानित्यत्वात्कृते युकि आयशब्दस्य लोपोऽकृते त्वाशब्दस्योभयोरनित्ययोः परत्वाद्व्यवस्था । डित्करणसामर्थ्याच्च । कृते युकि टिलोपोऽन्यथा डित्करणमनर्थकं स्यादो औ औ इत्यनेन सिद्धत्वात् । वुक्युकौ वृद्धिमिव द्विर्वचनं बाधेते । आभ्वोर्णादाविति ज्ञापकात् । अनेन हि भवतेः पूर्वस्माद्विधीयते द्वित्वाभावे कः स्यात् । ननु तु गोपेत्यादावादिवृद्धिः प्राप्नोति तद्बाधकस्य कस्याप्यप्रसङ्गात् । नं च गणोत्र बाधकः । ञ्णिति प्राप्तायामञ्णित्यप्राप्तायां चादिवृद्धौ गुणस्यारभ्यमाणत्वात् । परत्वमप्येकाश्रये एकनिमित्ते वा सति बाध्यबाधकभावस्य प्रयोजकम् । इह तु वृद्धिगुणयोराद्युपधाश्रयत्वेन व्याश्रयत्वं णित्त्वपित्त्वभेदाच्च निमित्तभेदोऽपि सत्यं प्रत्ययः प्रधाननिमित्तमेवेति न दोषः । न चान्यो ञ्णिप्रत्ययो यत्र वृद्धिः प्राप्नोति । तस्मात्पारिशेष्यात्तद्धितः एव निमित्तमिति तत्र । अरक्षीत् अतक्षीदित्यादावतिव्याप्तेः । णित्पे इति सोर्णित्त्वात् ।

बाधकस्य चाप्राप्तेः । ननु सौ क्वचिज्जातांत्यवृद्धिरुपधावृद्धिश्च सर्वत्रादिवृद्धेर्बाधका भविष्यति । यथा पूर्वस्य हसादिः शेषः पपाचेत्यादौ जातः। आट आतेत्यादावनादेर्हसस्य निवर्तको भवति । मैवम् । दृष्टांतदार्ष्टांतिकयोर्वैषम्यात् । पूर्वस्य हसादिः शेषः । इत्यत्रादिशब्देनानादिर्लक्ष्यते शेषशब्देन लोपः । ततश्च पूर्वस्यानादेर्हसस्य लोपो भवतीत्यर्थः । मानं चात्राऽभ्वोर्णादावित्यत्राग्रहणम् । न हि तत्राकारादेः पूर्वस्याकारो विधीयते । आदिबोधकशब्दाभावात् । नाप्यकारांतस्य ददौ पपाचेत्यादावतिप्रसङ्गात् । ह्रस्वविधेश्च निनाय लुलावेत्यादौ चरितार्थत्वादतोऽकाररूपस्य पूर्वस्याकारो विधीयते । नचांतहसलोपं विनाटदित्यादावमात्रं पूर्वं लभ्यते । न चारक्षीदित्यादौ किंचित्तादृशमानमस्ति। अत्र णित्प इति सूत्रे पे णिदिति पाठ्यम् । तंत्रेण णिदणिदिति च्छेद्यम् । अरावीदित्यादौ णित्त्वमरक्षीदित्यादावणित्त्वं लक्ष्यानुसारादिति चेत्तर्हि बंधयति विबुभूषयति कंडूयति दरिद्रयतीत्यादौ दोषतादवस्थ्यात् । अथादित्वं नाम किं सत्यस्मिन् यस्मात्पूर्वो नास्ति स आदिः । सत्यस्मिन्यस्मात्परं नास्ति सोंतः । एवं तर्हि श्रीर्देवताऽस्येति श्रायमिति न सिध्येदीकारस्यान्यस्वरस्याभावेनादित्वाभावादेवमस्य वासुदेवस्यापत्यमिरित्यपि न सिध्येदकारस्यांतत्वाभावादिञ् न स्यात् । मैवम् । यस्मात्पूर्वं नास्ति स आदिर्यस्मात्परं नास्ति सोंऽत इत्याद्यंतलक्षणाभ्युपगमात् । पूर्वलक्षणेऽपि न दोषः । व्यपदेशिवद्भावाभ्युपगमात् । व्यपदेशो । व्यवहारो मुख्यो यत्रास्तीति व्यपदेशी तद्वदेकस्मिन्नपि व्यवहारो दृश्यते । यस्य हि बहवः पुत्राः तस्य तस्मिंस्तस्मिन् ज्येष्ठमध्यमकनिष्ठव्यवहारो दृश्यते । यस्य त्वेक एव पुत्रस्तस्य तस्मिन्नेव सर्वो व्यवहारः । योऽनेकवारं काश्यामागतस्तस्य तस्मिंस्तस्मिन्नागमने प्रथमादिव्यवहारो यस्तु पूर्वं नागतोऽग्रे चानागमने काशीमागत इदं मे प्रथमागमनं तस्य व्यवहारो जायते । न चायं गौणः । लोकप्रसिद्धत्वात् । ञ्णितीति समुदायः परो न संभवत्यतः इच्छब्दः प्रत्येकमभिसंबध्यते । द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसंबध्यते इति न्यायाच्च । न च जनेर्ञुणिति समुदायोऽस्तीति । मैवम् । तस्य ग्रहणेऽभ्युपेते ञुणि वृद्धिरित्येव ब्रूयात् । ञुणपि न विधेयः । जै

इत्यस्मान्नुप्रत्ययेऽपि जानुशब्दस्य सिद्धत्वाद्वा । स्यादेतत् । णितीति वाऽत्र वक्तव्यं सर्वत्र णकार एवासंजनीयो घञित्यत्र ण् कर्तव्यः । न च त्रण इबित्यस्य प्रसङ्गः एकानुबन्धकग्रहणे न द्व्यनुबंधकस्येति न्यायात् । णघ इत्यनुबंधव्यत्यासाश्रयणाद्वा । यत्तु माधवेनोक्तम् घञन्तस्य स्त्रियां वृत्तिर्नास्तीति । तन्न । कर्मघञंतस्य स्त्रियामपि वृत्तिसम्भवात्तस्य त्रिलिङ्गत्वात्पच्यत इति पाका भाजी । संबध्यत इति सम्बन्धा कन्या । क्रियत इति कारेत्यादि । एवं घ्यणि त्याज्या ग्राह्येत्यादावपि ण्यघ इति ञिर्डित्करण इत्यत्र णिर्डिदिति पाठ्यम् न चैवं ञित्स्वरितेत इति अत्र स्या ण्णित्स्वरितेत इति पाठात् । न चैवमिण् गतावित्यत्रातिप्रसङ्गः । णकारत्यागात् । न च दादेः प इत्यादिषु इ इति पठनीयम् तथा च कटीत्यत्र प्रश्लिष्टस्याग्रहणं स्यात् । यदि तद्वारणार्थमेतीति पाठ्यं तर्हि वीत्यत्र प्रश्लिष्टस्यापि ग्रहणं स्यात् । यदि तद्वारणार्थं ककारोऽनुबध्यते तर्हीङिकावध्युपसर्गतो न व्यभिचरत इत्यत्रास्यापि ग्रहणम् । एवं तर्हीपूगतावविति पाठ्यम् धातुपाठे चान्ये ञानुबंधा णानुबंधाः पाठ्याः । यद्यपि शक्यते वक्तुमनुबन्धव्यत्यासस्तु भूयान्भवति । अथ ञितीत्येव पाठ्यम् घ्यण् ञ्य घ इति पाठो णञिति ण्य ञ इति णितो ञित इति सिध्यत्येवं सूत्रेष्वनुबंधव्यत्यासस्तु भवति । यत्तु माधवेनोक्तमिदमेव ञकारग्रहणं सामान्यज्ञापकतयाऽनुबन्धकार्याणामनियमं ज्ञापयति । तेन मा भवानटीदित्यत्र णित्त्वेप्यटेरुपधावृद्धिर्नेति । तन्ना ये णिदितिपाठे न वृद्धिवारणस्योक्तत्वाद्वृद्धेः संज्ञापूर्वकत्वेनानित्यत्वाद्वेतिदिक् । **क्ङिद्द्वयोः** । पूर्वसूत्रं सर्वमनुवर्त्तते । नाम्न इत्यधिकाराल्लब्धं तच्चाविभक्त्यंतमेव ग्राह्यं नाविभक्तिकं समासप्रत्यययोरिति विभक्तेर्लुग्विधानात् । ञ्णिता तद्धिते नाक्षिप्यते इति मतेऽपि विभक्त्यंतमेवाक्षेप्यं विभक्त्यंतात्तद्धितविधानात्‌-द्वयोरिति यदि सप्तमी तर्हि द्वयोः ञ्णितोः परत आदिस्वरस्य वृद्धिरित्यर्थः स्यात् । न चैकस्मात्पदाद्द्वौ ञ्णितौ सम्भवतः । न च कौंजायन्य इत्यादौ सम्भवोऽस्तीति वाच्यम् । एकस्यैव वृद्धिहेतुत्वात् द्वितीयस्य साधुत्व उपयोगात् । यदि तु पूर्वेण प्राप्ताया वृद्धेर्नियमोऽयं द्वयोरेव ञ्णितोर्वृद्धिरिति तर्ह्यादिस्वरस्येति व्यर्थं स्यात् । द्वयोर्ञ्णितोर्वृद्धिरित्येव ब्रूयादथो द्वयोरिति

षष्ठयन्तमादिस्वरस्य विशेषणं ञ्णिति परे द्वयोरादिस्वरयोर्वृद्धिरिति मैव-मेकस्मिन् पदे द्वयोः स्वरयोरादित्वासम्भवात् । न च तृतीयापेक्षया तयो-रादित्वं मध्यमस्य मुख्यादित्वाभावेनापेक्षकस्य ग्रहणायोगात् । न च पदविशेषणम् । द्वयोः पदयोरादिस्वरस्येति नाम्न इत्येकत्वविवक्षितत्वेन नामसमुदायात् । प्रत्यये विधानाभावादाक्षेपपक्षेऽप्येकस्यैवाक्षेपो लाघ-वात् । उच्यते । यदा समासात्प्रत्ययोत्पत्तिस्तदांतर्वर्तिन्या विभक्त्या पद द्वयं संभवति । न चैदात इत्युत्तरदलस्य पदत्वाभावो ज्ञापित इति वाच्यम्, ज्ञापकसिद्धस्यासार्वत्रिकत्वात् । सुहृदो भावः सौहार्दम् । सुभगस्य भावः सौभाग्यम् । सुभगाया अपत्यं सौभागनेयः । सक्तुप्रधानाः सिंधवः सक्तु-सिंधवस्तेषु भवः साक्तुसैंधवः । शतेन क्रीतः शातिकः । तमनुगतोऽनुगतो ऽनुशतिकस्तस्येदमानुशातिकम् । इह लोके भवमैहलौकिकम् । वर्षाणां पूर्वो भागः पूर्ववर्षास्तासु भवं पौर्ववार्षिकम् । आपरहैमनम् । ञ्णि किम् । सुप-टुतरः । तद्धितेति किम् । कुंभकारः । क्वचितिकिम् । औपगवः । द्वयो-रादेः किम् । अहिच्छत्रे भव आहिच्छत्रः ।**न संधिय्वोर्युट् च** । संधानं पूर्वपर-योरव्यवधानेनोच्चारणं सूत्रेणानेन वाऽस्मिन्प्रकरण इति वा संधिः । नङ्गीति किः । संधिना संधौ वा जातौ संधिजौ क्विब्वनिब्डा इति जनेर्डः ।य् च व् च य्वौ संधिजौ च तौ य्वौ चेति शाकपार्थिवादिः । यद्वा संधिशब्देन संधिपा-दस्थसूत्रविहितत्वं लक्ष्यते । संधी च तौ य्वौ चेति । माधवस्तु संधेर्य्वौ संधिय्वाविति षष्ठीतत्पुरुषमाह । इश्च उश्चानयोः समाहारो युट् च तद्यु-चेति तयोरभेदे बाधिते टांतत्वं गृह्यते । यद्वा टां तं च तद्युचेति शाकपा-र्थिवादिः । हसादिःशेष इति वत्परनिपातः पक्षद्वये । यद्वा युसहीतष्टः युट् । द्वंद्वांते श्रूयमाणत्वात्प्रत्येकं संबंध इट् उट् इति । यद्वा इट् च उट्चेति समा-हारः । कार्यायेदितीटस्तस्य लोपः । उटस्तु न, तत्साहचर्य्यादेष्टित्वावगमात् । माधवस्तु इश्च उश्च यु तयोष्ट युडिति द्वंद्वांत्यष्टकारः प्रत्येकं संबध्यते इत्याह । तत्र यद्यपि प्राधान्याद्द एव विधानं प्राप्नोतीति तथाप्युच्चारणसामर्थ्यादिय्वो-रिति विधानं भवत्यन्यथा युग्रहणे व्यर्थं स्यात् । टूडित्येव सुवचत्वात् । संधिय्वोर्निमित्तस्यानंतरस्य य्वादिस्वरस्य न वृद्धिः । तयोर्युट् च भवति ।

ननु संधिजयोरिदूतोरेव संधिनिषेधोऽस्तु सामान्यविहिताया वृद्धेर्विशेषे बाधसंभवात् । सौप्त्यिातिर्वक्ष्यमाणिरिति न युड्विधानवैयर्थ्यप्रसंगात् । योटोऽपि सवर्णदीर्घसंभवात् । ननु विधानसामर्थ्यात् सवर्णदीर्घे बाध्यतामिति । ननु ञग्रहणवैयर्थ्यप्रसङ्गादिति प्राप्तायां वृद्धावारभ्यमाणो युड्विशेषविहितत्वात्पूर्वं स्यात् । पश्चात्तस्यादिस्वरत्वाभावेन वृद्धेरप्रसङ्गः । न च युट् एव वृद्धिनिषेधार्थो नञस्तु षष्ठ्यभावात् । एवमिष्टे सकृद्बाधितन्यायेन वृद्धेर्बाधनात् । ननु सिद्धांतेऽपि नञ् व्यर्थः । संधिय्वोः संबंधिन आदिस्वरस्य वृद्धौ प्राप्तायां य्वोर्विधीयमानो युड् वृद्धेरपवादः स्यादिति चेत्सत्यम् । वाक्यभेदेन निषेधविधाने नञोऽपि सार्थक्यात् । संधिय्वोर्युड् भवति । न च भवतीति युड्वेति चकारः संधिय्वोरित्यस्याग्रे संबध्यते संधिय्वोर्युट् चादसंधिय्वोर्युट् येन संबध्यते तादृशस्य द्वितीयस्य कर्षणस्वाभाव्याच्चकारस्य संधिय्वोर्युट् । व्यासकस्यापत्यं वैयासकिः । व्यासकेन कृता संहिता वैयासकी । कारकादित्यण् वैयाकरणः । सौवश्वः।वैयधिकरण्यम्।वैयग्रम्। नैयग्रोधम् । त्रैयंबकम्।न च युट् व्यावक्रोशी व्यात्युक्षी सुष्ठुआगतं स्वागतं सागतं तदाह स्वागतिकः। न्यग्रोधमूले भवा न्याग्रोधमूलाः । असंधिय्वोर्युट् । द्वारे नियुक्तो दौवारिकः । स्वरस्येदं सौवरम्। स्वस्येदं सौवम् ।शुन इदं शौवम् । स्वग्रामे भवः सौवग्रामिकः। स्फ्यः खादिरः खङ्गः तं करोतीति स्फ्यकृत्तस्यापत्यं स्फैयकृतः । स्वादु च तत् मृदु च तस्येदं सौवादुमृदवम् ।श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। श्वभस्त्रया चरति श्वाभास्त्रिकः ।द्व्यशीत्याक्रीतः द्व्याशीतिकः । संधिपादे इत्यादि किम् । एतीति यन् तस्यापत्यं यातः । यार्ष्टीकः । वांशभारिकः । आदिवृद्धेरपवादे युट् यत्र सा प्रसक्ता तत्रैव भवति । उत्सर्गसमानादेशा अपवादा भवंतीति न्यायात् । तेनेह न।दधिप्रियोऽश्वो दधिसहितो वाऽश्वः दध्यश्वः तस्यायं दाध्यश्वः माध्वश्वः। लाघवान्नांतय्वोरिति वक्तुमुचितम्।अनंत इत्यादावंतशब्दस्य पदांतपरता दृष्टा। ननु नुट् च युडेव कुतो न विधीयते व्याख्यानतो विशेषलाभात् । यत्तूक्तं माधवेन । न च युडागमात्पूर्वं वृद्धिः स्यादिति वाच्यम्।युटः परत्वात् कृताकृतप्रसंगित्वेन नित्यत्वाच्च । न च वृद्धिरपि नित्या शब्दांतरप्राप्तेः । कृते युटि तस्यैव प्राप्नोत्यकृतेऽन्यस्य शब्दांतरस्य प्राप्नुवन्विधिरनित्यो भवतीति । तन्न ।

उभयोः सावकाशयोः परत्वाश्रयणात् युटश्चावकाशाभावात् नित्यत्वमपि सावकाशयोरेव दृष्टमकृतव्यूहपरिभाषया वृद्धेरप्रसंगश्च।नन्वाभ्यां पदांताभ्य पूर्वौ तु ताभ्यामैच् इत्यस्य स्थाने पदांतय्वोरैजडिति सूत्रयितुमुचितम्।ङमुडागमवदैप्याजडागमो भविष्यति परत्वादैजडेव वृद्धेर्बाधको भविष्यतीति दिक्॥

**धातोर्नामिनः** । नाम्यंतस्य धातोर्वृद्धिः ञ्णिति।कारयति । नाययति यावयति।चकार।जजार।ञ्णिति किम्।स्तोष्यति।नामिनः किम्।ररक्ष।पप्रच्छ।धातोः किम् ।अत्रेयः । वैधेयः । आदिवृद्धिर्यस्य लोपात्परत्वादंत्यवृद्धिः स्यादादिवृद्धेरवकाशः। सौश्रुतः । मारुत्वतः।अंतवृद्धेः । चिचाय। रुराव । इहोभयप्रसंगे परत्वादंत्यवृद्धिः स्यात् । यस्य लोपस्यावकाशः । धनी । व्रीही । अंत्यवृद्धेः । चिचाय ।इहोभयप्रसंगे परत्वादंत्यवृद्धिः स्यात्तन्निवृत्त्यर्थं धातोरित्युक्तम्। नन्वेवमपि अग्रण्योऽग्निभुव श्चापत्यम् आग्रणः । आग्निभव इत्यत्रांत्यवृद्धिः प्राप्नोति नीभुवोर्धातुत्वात्।मैवम् ।धातोर्विहितो ञ्णोतिवृद्धिविधानान्नाम्नो विहितोरण् एवमप्यग्रण्यमग्निभुवं चेच्छति नाम्नो य ईचास्येति यःततः क्विब्लोपयलोपौ तस्यापत्यमत्र प्राप्नोति । मैवम् । धातोरित्येवंशब्देन विहिते ञ्णिति वृद्धिविधानात् । अत्र च नामशब्देन विधानात् । ननु नामिन इति व्यर्थम् । आदिस्वरस्येत्यनुवृत्त्य स्वरांतस्य धातोरिति व्याख्येयम्।मैवम्।सहोच्चरितस्यादेरप्यनुवृत्तिप्रसंगात्तथा च ददरिद्रौ चिरायति जिरायति पुत्रीयंतं प्रेरयति पुत्रीयतीत्यादौ धातोरादिस्वरस्य वृद्धिः स्यादेकदेशानुवृत्तौ तु कथयति गणयतीत्यादावदंतवृद्धिः स्यात्।नच यत इति लोपो बाधकानपि सामान्ये विहितस्य लोपस्यानपि विशेषे ञ्णिति विहिताया वृद्धेस्तदपवादत्वात्। ननु नामिन इत्यत्र आरैऔ इत्यनुवृत्त्य वृद्धिशब्देन यत्रारै औ विधीयन्ते तत्र नामिन इति षष्ठ्यन्तं पदमुपतिष्ठत इति व्याख्येयम् । तेनात्र नामिन इति लभ्यत इति चेन्न। अत उपधाया इत्यत्रापि नामिन इत्यस्यानः प्रसङ्गात्ततश्चोपधाया अतो नामिनश्च ञ्णिति वृद्धिरित्यर्थः स्यात्। अथ अवर्जाः शेषा विश्लेषेत्यादिनिर्देशान्नामिन इति नोपतिष्ठत इति ब्रूषे तर्ह्यस्मादेव ज्ञापकात् नामिन इत्यत्रैवारैऔ इति नानुवर्तत इति वक्तुमुचितम् । तत्र च नामिन इत्यस्यात्र ग्रहणमप्यनुकूलम् । अत्र स्वरस्येत्यनुवृत्त्य वाक्यभेदेन व्याख्येयम् । तेन स्वरां-

तस्याधातोर्वृद्धिः । ञ्णिति । तेन श्वानं विद्वांसं तिर्यंचं सध्र्यंचं चाचष्टे शावयति विदावयति तिराययति सध्राययति देवद्र्यंचं विष्वद्र्यंचं च देवद्राययति विष्वद्राययति। मियं अर्थं वा आचष्टे मापयति अर्थापयति ॥**अत उपधायाः** ॥ अत इति योगो विभजनीयः।अदन्तस्य धातोर्वृद्धिः ञ्णिति।अङ्कापयति अर्थापयते । गणयतीत्यादावतिप्रसङ्गो नोद्भाव्यो योगविभागस्येष्टसिद्ध्यर्थत्वात् । ततश्चोपधाया इत्यपरो योगः। नाम्न उपधाया वृद्धिः । त्वादयति । मादयति। तंत्रेणोभौ मिलित्वाऽपरोऽर्थः । धातोरुपधाया अतो वृद्धिर्ञ्णिति । पाचयति । चचार । ञ्णिति किम् । पक्ता । उपधायाः किम् । वव्रश्च । ततश्च धातोः । जगतः पृषतश्चायं जागतः पार्षतोऽत्रादिवृद्धेः परत्वादुपधावृद्धिः स्यात् । आदिवृद्धेरवकाशः । गार्ग्यः । नाडायनः । उपधावृद्धेर्जगाद॥ **आतो युक्** । आदन्तस्य धातोर्युगागमो भवति ञ्णिति । दायः । धायः । अदायि । दायकः। ददाणवि स्थिते युक् प्राप्तौ औ च तक्रकौंडिन्यन्यायेन विशेषविहितत्वादौ । तत्र कृते युक् प्राप्तोटिलोपश्च । तत्र परत्वाद्युक्। न च टिलोपो नित्यः शब्दान्तरप्राप्त्यानित्यत्वात्।इत्थमेव च डित्त्वं सार्थकं औ तु युकं वक्ष्यति । ञ्णिति किम् । दाता । भ्राता आतः किम् । ररक्ष । धातोः किम् । पार्थः । गांगेयः । यस्य लोपस्यावकाशः । गार्ग्यः । आत्रेयः । युकोवकाशोऽदायी होभयप्रसंगे परत्वाद्युक् स्यात्तन्निवृत्त्यर्थं धातोरित्यनुवर्तते । ननु ञ्णितीति मास्तु दातेत्यत्रास्तु युक् । यत इति लोपो भविष्यति । सत्यम् । पायात् ग्लायतीत्यादौ श्रवणप्रसंगः।ननु युग्ग्रहणं मास्तु युडित्यनुवर्ततां शब्दाधिकाराश्रयणाद्यकारपरं भविष्यति ।आदन्ताद्धातोःपरस्य ञ्णितो युडागम इत्यर्थः स्यात्।मैवम् । ददावित्यादेरसिद्धप्रसङ्गात् । विशेषविहितत्वात्प्रथमं औभावे कृते टिलोपात्परत्वाद्युटि कृते तस्य डिद्ग्रहणेन ग्रहणादिलोपे दधाविति स्यात् टिलोपाभावेपि ददायाविति तन्निवृत्त्यर्थं युग्ग्रहणम् ।आतो युक् चिण्कृतोरित्यत्र चिण्कृद्ग्रहणमनर्थकमतिप्रसङ्गाभावात् । न च । णल्यतिप्रसङ्गः आतो औणल इति सुवचत्वादिति दिक्॥ **हनोघत्**।हश्च न् चानयोः समाहारो हन् तस्य हनः । घश्च त् चानयोः समाहारो घत् अत्र वाक्यद्वयम् । आद्ये ञ्णितीति संबध्यते द्वितीये तञ्च तेति च ।हनो हस्य घोञ्णिति।हनो

नस्य तो भवति ञ्णिति इत्यन्ये परे ञ्णिति आनुपूर्वीविशेषबलादुत्तरसूत्रस्थापकर्षाद्वा हन इति लभ्यते । घातयति । घात्यः । घातकः । घातः । न च जघान अघानि जिघांसति प्रहन्यते इति प्रघाणः प्रघणः इच्छा सणि व् हनः सकाशात् संज्ञापूर्वकत्वाद्वृद्ध्यभावः पक्षे । हनः किम् । पाचयति । ञ्णिति किम् । हंता । ननु हनो घदादेशो ञ्णितीति वाक्यार्थः किमिति त्यक्तः । उच्यते । घदित्यत्र घकारोच्चारणं व्यर्थं हनस्त इत्येव युक्तं लाघवात् । घकारस्तूत्तरसूत्रेण सेत्स्यत्येव । णप्यापि घदादेशप्रसङ्गश्च । न च प्रक्रियालाघवार्थम् । यद्विधानं मात्रालाघवे सति तस्याऽकिंचित्करत्वात् । घादिति वक्तुं युक्तत्वाद्वृद्धिसूत्रात्प्रवर्तते न प्रक्रियालाघवस्य सत्त्वात् । उत्तर सूत्रे चेतोऽनुवृत्तिसम्भवेन हन्ग्रहणवैयर्थ्यापाताच्चेति दिक् ॥ **हनोघ्ने** अत्र हनो घिति योगो विभज्यते । ह इति षष्ठ्यन्तमनुवर्तते । आदिस्वरस्येत्यतः आदिरित्यनुवृत्तं पञ्चम्या विपरिणम्यते । आदेः पूर्वात्परस्य हन्तेर्हस्य घो भवति । जघनिथ । जघंथ । जघान । जंघन्यते । जघंनीति । जंघंति । ततो ने इत्यपरो योगः । न् च अश्चानयोः समाहारो नं तस्मिन्ने । नपरत्वं च हस्यैव सम्भवति न हनः । अवयव्यन्तरभूतस्यावयवस्यावयविनः परत्वा संभवात् । अश्च प्रत्ययो गृह्यते न वर्णमात्रं प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति न्यायाल्लक्ष्यानुरोधाच्च । हनो व्यवहितनकारपरस्य हस्य घत्वम् । अप्रत्ययपरस्य हनो हस्य च घत्वमित्यर्थः । प्रलंबघ्नः । पित्तघ्नः । विघ्नः । जघ्नतुः । जघ्नुरित्यादि तु पूर्वेणापि सिध्यति । नाम्युपधात्क इति योगविभागेन कः । पतिघ्नीत्यत्र तु नदादित्वादीप् । गमां स्वरे इत्युपधालोपः । स्तंबघनः । द्रुघणः । अंतर्घणः । निघः । संघः । उद्घः । पाणिघः । ताडघः । नाम्नि चेति डः । घन इत्यस्य सहादित्वाद्द्वित्वे दीर्घत्वे चुत्वाभावे च घनाघन इत्यपि । असान्तस्य प्रत्ययाभावाद्धननमित्यत्र न घत्वम् । योगविभागस्येष्टसिद्ध्यर्थत्वाद्धन इत्यपि । घस्यानुवृत्तौ सत्यामपि घग्रहणमर्थान्तरस्यापि सूचनार्थम् । घ्ने इति तन्त्रादिना वाक्यांतरम् । तत्र न इति नेति चानुवर्तते । न इत्यादेशापेक्षया षष्ठी । घ्नशब्देन स्यादेशो नेत्यर्थः । आदेशश्च णः प्राप्तः । प्रघ्नंति । प्राघ्नन् । शत्रुघ्नः । वृत्रघ्नः । ब्रह्मघ्नः इत्यादौ तु समासे क्वचिदेक-

पद्यं णत्वहेतुरित्यनेनापि सिद्धमिति दिक् ॥ **रातो ञौपुक्** ॥ आ च आञ्चा-नयोः समाहारः रात् तस्य रातः । अर्त्तिह्रीब्लीरीक्नूयीक्ष्माय्यातामिति पाणि-नीयसूत्रे पठिताः रात इति प्रत्याहारेण गृहीताः । ऋति भौवादिको जौहो-त्यादिकश्च गृह्यते । ऋच्छंतं इयूतं जिह्रयंतं ब्लीनंतं रीणंतं क्नूयमानं क्ष्माय-मानं वा प्रेरयति अर्पयति ह्रेपयति ब्लेपयति रेपयति क्नोपयति क्ष्मापयति । यत इति लोपः । उपधाया लघोरित्यत्र उपधाया इति योगो विभजनीयः । धातोरुपधाया नामिनो गुणः पुगीत्यनुवृत्त्य वाक्यभेदेन व्याख्येयम् । तेन शाच्छासाह्वाव्यावेञ्ञां युक् । श्यंतं छांतं स्यंतं ह्वयंतं व्ययंतं वयंतं पिबंतं वा प्रेरयति शाययति छाययति साययति ह्वाययति व्याययति वाययति पाययति । यच्छंतं दयमानं ददंतं द्यंतं दायंतं दांतं वा प्रेरयति दापयति । धयंतं दधंतं वा प्रेरयति धापयति आत इत्यादन्तस्याधातोरपि पुगर्थ-मनुवर्तनीयं तेन प्रियं स्थिरं स्फिरं वृद्धं वाचष्टे प्रापयति स्थापयति स्फाप-यति ज्यापयतीति दिक् ॥ **मितां ह्रस्वः** ॥ म् इत् येषां ते मितः तेषाम् ॥ यद्यपि कविकल्पद्रुम एवमपठितो न धातुगणान्तरे गौरवात् । तथापि घटादयो मित इति वचनेन तेषां मित्त्वमुक्तम् । संज्ञापूर्वकत्वाद्ध्रस्वविधिरनित्यः । नेत्यनुवर्त्य ह्रस्वो नेति व्याख्यानाद्वा । तेन ञ्यंतादिण्णमोर्विकल्प एवान्यत्र प्रयोगादव्यवस्था । गमयति । नमयति । विश्रामयति । संक्रामयति । अगमि । अगामि । गामंगामम् । गमंगमम् । ञ्यंतात् । ञौ तु ञित्त्वजा-त्येकत्वग्रहणादत उपधाया इति वृद्धौ कृतायामिण्णमोर्वा ह्रस्वोऽन्यत्र तु प्रयोगाद्ध्रस्वदीर्घौ व्यवस्थितौ इण्णमोर्वा ह्रस्व इति तु न कर्त्तव्यम् । हेड इत्यस्य तु हिडयति । इण्णमोर्वा ह्रस्वपक्षे अहिडिहिडं ह्रस्वाभावे सहादित्वो देतः ईत्व अहीडिहीडहीडमिति सिध्यति । क्षंजेस्तु मित्सु पाठसामर्थ्याद-नुपधाया अपि वृद्धौ सत्यामिण्णमोर्वा ह्रस्वोऽन्यत्र तु न वृद्धिः । यद्वा । अंतरंगोऽपि नुम् वृद्धौ ह्रस्वे च कृते प्रवर्तते मित्सु पाठसामर्थ्यात् ॥ **शेषा निपात्याः कत्यादयः** ॥ उक्तादन्ये शेषा निपात्याः सूत्रं विनैव प्रत्ययाः कार्यांतराणि च विधेयानीत्यर्थः । उदाहरणम् । का संख्या येषां ते कति । किंशब्दात् । डतिः । डियतुश्च कियंतः स्त्रीपुंसाभ्यां नणूस्नणौ । स्त्रैणं

पौंस्नम् । अणंतत्वादीप् । स्त्रैणी । पौंस्नी । मला: संत्यस्य ईमस: मलीमसः । इक्षूणां भवनं क्षेत्रं इक्षुशाकिनम् । इक्षुशाकटम् अवीनां विस्तारो विपटः । अश्वानां षट्त्वम् अश्वषड्गवम् । उष्ट्रयोर्द्वित्वमुष्ट्रगोयुगम् । तिलानां स्नेहास्तिलतैलमित्यादि ॥

हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ।
रघुनाथाभिधोव्याख्यां ताद्धिताङ्घ्रेर्यथामति ॥
इति तद्धितपादः ॥ ७ ॥

---

# अथ स्त्रीपादः ८.

**आबतःस्त्रियाम्** । अत इति न स्वरूपग्रहणम् । अयत इत्यत् । क्विपि यलोपे तुक् । नाप्यच्छब्दान्तस्याङ्गतपरीतदिति नुम् । तदर्थायामितिनिर्देशात् नापि ङसेरादेशस्याच्छब्दस्य स्त्रियां वृत्त्यभावात् । तस्माद्धस्वाच्चपादिति निर्देशात् पारिशेषादतोऽमिति वदकारस्येदं तपरस्य ग्रहणम् । अत इति विशेषणं नाम्न इति विशेष्यं स्त्रियामिति प्रत्ययार्थनिर्देशः । अपत्यवत् । तेनाधिकृतस्य नाम्नो विशेषणात्तदन्तविधिः। अदन्तान्नाम्न इति स्त्रियामिति प्रत्ययार्थनिर्देशाः। स्त्रीत्वे च स्त्रीशब्दा वर्त्तते । स्त्रीत्वे वाच्ये आप् । न च कालितरा इत्यत्र कालशब्दाद्विहितेनेया स्त्रीत्वस्योक्तत्वादाप् न स्यादिति वाच्यम्।गुणविशिष्टद्रव्यनिष्ठस्त्रीत्वाभिधानेऽपि प्रकर्षविशिष्टद्रव्यनिष्ठस्त्रीत्वाभिधानार्थमापः सम्भवात् । एवं स्त्यायतेः स्त्रीत्वे ड्रटा स्त्रीत्वे उक्तेऽपि ड्रटाष्टित्त्वसामर्थ्यात्स्त्रीभ्रुवोरिति लिङ्गाक्षेपः प्रवृत्तिः । द्वौ ब्राह्मणावित्यादावुक्तार्थेऽपि तुल्यस्यापि प्रयोगदर्शनाच्च । यद्वा स्त्रियामिति स्त्रीलिंगे एकार्थे उपदेश आबादिः । न चात्र पक्षे भूतामियं ब्राह्मणी रूपामियं कारणं मायेत्यादावतिप्रसङ्गः । पदसंस्कारपक्षे पदांतरनिरपेक्षस्य लिंगसामान्ये नपुंसकार्थप्रतिपादनात् । बहिरङ्गेण पदान्तरयोगे तस्यानिवर्तनात् । वाक्यसंस्कारपक्षे तु भूता रूपा ब्राह्मणीति भवत्येव । कारयति कार्यते वाऽनया वेति युडंतात्कारणी मायेति भवत्येव । न च तत्र शालायाम् । पञ्च ब्राह्मणा इत्यादावतिप्रसंगोऽलिंगत्वात् । न चैवं पंचादेरव्ययत्वं स्यादसंख्यत्वाभावादलिंगमसंख्यमव्ययमित्यभ्यु-

पगमात् । चादिषु पाठानंगीकाराच्च । सर्वा ब्राह्मणी गंगादेवीत्याद्यु-पश्रुतमाक्षिप्तं वा । यद्वा स्त्रियामिति प्रकृत्यर्थविशेषणं स्त्रियां वर्त-मानान्नाम्न आबादिः स्त्रीत्वादिकं च सो नः पुंस इत्यत्रैवोक्तं माधवस्त्वाह । स्त्रीत्वादिसामान्यस्य चेतनेषु स्तनलोमादिमती व्यक्तिर्व्यंजिका चेतनेषु सर्व-त्रोपदेशादेवाभिव्यक्तिः । केषुचिच्चेतनेष्वपि तथोक्तम् "आश्रयस्यातींद्रिय-त्वात्तेन स्त्रीत्वादिकं क्वचित्।उपदेशव्यंग्यमेव दिगात्मा गगनं यथा"इति।अतः स्त्रियामाबिति वक्तव्ये प्रत्ययस्य प्रथमोच्चारणं योगविभागार्थमनेन क्वचिद्वि-ध्यर्थं क्वचिद्बाधकबाधनार्थम् । वाचा वाक् । निशा निट् । दिशा दिक् । सीमा । दामा । बहुयज्वा । बहुपर्वा । सुधर्मा । उद्दामेत्यादिष्वपि डिति टेरिति योगविभागान्नो वेति वाग्रहणाद्वा टिलोपः । आबिति दीर्घोच्चारण-मपि अनदन्ताद्विधाने लिंगम् । अदंतादबिति विहितेपि रूपं सिध्यति । मंदा। वत्सा । विलाता । होडा । कन्येत्यादिषु वयसि प्रथमे इतीप् प्राप्तः । विफ-ला । अनीकेत्यादौ समाहारेऽत ईबितीप् प्राप्तः।ज्येष्ठा । कनिष्ठा । मध्यमा । कोकिलेत्यादौ पुंयोग इतीप् प्राप्तः । अजा । एडका । अश्वा । चटका । मूषिका शूद्रा । कुंचा । कोकिला । अमूला । सत्पुष्पा।प्राक्पुष्पा।प्रत्यक्पुष्पा । कांडपुष्पा । प्रांतपुष्पा । शतपुष्पा।एकपुष्पा चलाकेत्यादौ जातेरितीप्प्राप्तः आपा बाध्यते । दंशे ष्ट्रप्रत्यये दंष्ट्रा । षित्वादीप्प्राप्त आपा बाध्यते । अजाद्यतष्टाबित्यत्र टः सुत्यज आबिति सुवचम् । न चौङ आप इत्यादावेकेद्ग्रहणेनेकेतो डाप्चापौ न गृह्येयातामिति वाच्यम् । पित्त्वसामर्थ्याच्चापो ग्रहणसंभवात् । पित्त्वस्य प्रयोजनांतराभावात् । डापः पित्त्वमनुदात्तार्थमिति न सामर्थ्यमिति । न च वाच्यं डाबिति पठित्वापि तस्य सुसाधुत्वात् । व् च य् च वौ लोपोरिति वलोपः पौ इतौ यस्य स पित् । सुप् च पिच्च सुप्पितौ तेन वितोप्यनुदात्तत्व-संभवादित्थं सिद्धे यत्पित्त्वं तत्सामान्यग्रहणार्थमेव । यथा विदेः शतुर्वसुरि-त्युदित्त्वं वसोः सम्प्रसारणमित्यत्र वसुक्वसोः सामान्यग्रहणार्थमन्यथा डीम्नु-मोः स्थानिवत्त्वेन सिद्धत्वात्किं तेनेति दिक्॥**न्रण ईप्** । न् च आ च अण् च एषां समाहारो न्रण् तस्मात् न्रणः । अत्र मध्ये रत्वभूतो ऋकारो निर्दि-श्यते न तु रः व्याख्यानात् । रेफनिर्देशे तस्याद्यंतयोः पाठेप्यगौरवात् ।

ऋकारस्य मध्यपाठे लाघवमाद्यंतपाठे तु गौरवं नकारऋकारयोरधिकृत्य नाम्नो विशेषणत्वात्तदंतविधिः । माधवस्तु केवलत्रणः प्रयोगाभावात्सामर्थ्या-त्तदंतविधिरित्याह । अणिति प्रत्ययो गृह्यते न अणतिः क्विबंतः । प्रत्ययाप्रत्यययोः प्रत्ययस्यैव न्याय्यत्वात् । प्राधान्यादन्यस्य त्वप्राधान्यादग्रहः । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदंतस्य ग्रहणमिति परिभाषयाऽणंतं लब्धं तेन नाम्नो विशेषणादणंतांतमपि लभ्यते । अत्र संधीत्यतो नेत्यनुवृत्त्य तंत्रादिना वाक्यभेदेन योज्यम् नांतात् ऋदंतात् अणंतादणंतांतात् । स्त्रियामीप् भवति चविहितप्रतिषिद्धतया विकल्पः फलितः । स च लक्ष्यानुसाराद्व्यवस्थितो बोध्यः । नांतादीप् मघोनी राज्ञी । अल्लोपः स्वर इत्यत्र वादीपोरित्यत ईबित्यनुवर्तनादल्लोपः । ऋदंतादीप् कर्त्री । भोक्त्री । अणंतादीप् । तपोऽस्त्यस्यास्तापसी । इंद्रस्येयमैंद्री । अणंतादीप् नगरकारी । शरलावी । नन्वणंतादेवात्रेबास्त्विति चेन्न । ईबंताद्विधीयमान एयण् कारीशब्दादेव स्याद्वृद्धिरपि । तस्यैव स्यात्तद्धितप्रकृतभूतस्य स्वराणामादिस्वरस्य वृद्धिविधानात् । नगरकारेयः । कुंभकार इत्यत्र कुंभशब्दस्य कारशब्देन प्राक्समासे समुदायस्य जातिवाचकत्वेन जातेरिति पुंयोग इति वेप तत एयणि चादिवृद्धिर्भवत्येव । परमा चासौ नगरकारी चेति तस्या अपत्यमित्यत्र कस्य वृद्धिः । उच्यते । समुदायादेरेव प्रत्ययग्रहणे आदेरन्तस्य च नियमोस्ति । यत्र विधौ स्त्रीप्रत्ययो गृह्यते तत्रादिनियमो नास्ति-स्त्रीप्रत्ययेऽनुपसर्जने तदादिनियमो नेति वचनात् । परमनगरकारेय इति भवति । अनुपसर्जने किम् । नगरकारीमतिक्रांतोऽतिनगरकारिस्तस्यापत्य-मित्यत्रादिनियमाभावे एयण् स्यात् । स माभूत् । किं त्वौत्सर्गिकोणेवाति-नगरकार इति प्रिय औपगवो यस्याः सा प्रियौपगवा । नन्वत्राणंतादीप् कुतो नेति चेन्न । अणंतस्य गौणत्वात् । मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायादप्यणेव । प्रैयौपगव इति । नांतान्नेप् तु पुंसि दाम । दामा दामानौ । "सीम सीमे स्त्रियामुभे" सीमा । सीमानौ । अन्नन्ताद्बहुव्रीहेर्न । बहुयज्वा । बहुयज्वानौ । सुपर्वाणौ । सुदामानौ । बहुराजानौ । उद्दामानौ ।

---

१ स्त्रीप्रत्ययेषु तदंतविधिस्वीकारादिति सदानन्दः ।

राजयुध्वानौ । राजकृत्वानौ । सहयुध्वानौ । पारदृश्वानौ । नांतसंख्यायाः सलिंगत्वपक्षे पञ्च सप्तेति ऋदंतान्नेप् । स्वसा । अतिस्वसा । तिस्रः । चतस्रः । ननांदा । याता । दुहिता । माता । स्वसुः पितृष्वस्रादेरिति लिंगात् पंचस्वाविधानाच्च । त्रिचतुरोर्विभक्तौ तिसृचतसृविधानात्सन्निपातपरिभाषया नेबित्यपि समाधानम् । अणंतान्नेप् । मामिका । प्राज्ञा । श्रद्धा । अर्चा । वृत्तिर्वास्त्यस्याः प्राज्ञा । श्राद्धा । आर्चा । वार्ता । पंथानं नित्यं गच्छति पांथा । थो नुडित्यत्र तंत्रादिनाऽण्यपि नुट् । आपिशलिना काशकृत्स्नेन प्रोक्ता मीमांसा कारकादित्यण् आपिशली । काशकृत्स्नी तामधीते कारकादित्यण् लुग्बहुत्वे क्वचिदित्यण् लुगत्यार्थे इत्यत्रोक्तरीत्येपो लुक् काशकृत्स्न आपिशलेत्यत्र गौणत्वादपि नेप् । पुत्रं कामयते पुत्रकामा । एवं धर्मशीला । कल्याणाचारा । सुखप्रतीक्षा । बहुक्षमा । अत्र घञंतेन बहुव्रीहिरित्यप्यस्ति । समाधानं पुत्रे पुत्रे वा कामोऽस्याः धर्मे शीलमस्याः मासंभक्षमस्याः कल्याण आचारोऽस्याः सुखंप्रतीक्षा यस्याः बहुक्षमाऽस्या इति । अथ क्षारसंस्कृता क्षैरेयी यवागूः । कलिना दृष्टा कालेयीत्यत्र केनेप् अणंतत्वादिति गृहाण । नन्वण्प्रत्ययस्तत्र गृहीतोऽयं च प्रत्ययावयवो न प्रत्ययोऽनर्थकश्च कथं तत्रास्य ग्रहणमिति चेन्न । ण्यणीययोः यणेयणौश्च णव्यत्यासेन तत्रास्य ग्रहणस्य ज्ञापनात् । अर्थवत्परिभाषाया अनित्यत्वाच्च णितो वेत्यनेन मत्वर्थलक्षणाया कादिष्वित्संज्ञकणकारोन्ते सम्बध्यते इनि चेद्वृद्धीपौ स्तः । आदौ चेद्वृद्धिमात्रमसम्बन्धे तूभयाभावः । काशिषु भवा काशिका । काशिकी । वैदिकी । अक्षैर्दीव्यत्याक्षिकी । सायंतनी । ह्यस्तनी । श्वस्तनीत्यादि । यदि णितो वेत्यनेन णित्कार्यं णिच्छास्त्रं वाऽतिदिश्यते तदा नदादित्वादीप् बोध्यः । प्रत्ययग्रहणे यस्मादिति परिभाषा न्यायसिद्धा । प्रत्ययो गृह्यमाणः स्वप्रकृतिमाक्षिपति । केवलस्य प्रयोगाभावादित्याद्यंतनियमो लब्धः । ज्ञापकं चास्त्यस्याः कर्तृकार्ययोरक्तादौ कृतीत्यत्र कृत्प्रत्ययो गृहीतः । स च कारकवाची तत्र कर्तृकार्ये न स्तः । क्रियायां तयोरन्वयोतस्तत्र षष्ठीविधानमनुपपन्नमतः कृता स्वप्रकृतिराक्षिप्यते तदर्थश्च क्रिया तत्र तयोरन्वयात् । षष्ठीविधानं संभवति प्रकृत्यर्थद्वारा तयोः कृदन्वयात् । गौणमुख्ययोरित्यपि

न्यायसिद्ध।। ब्राह्मणो नमस्करणीय इत्युक्ते यो ब्राह्मणलक्षणोपेतः स एव लक्ष्यते न हालिकः।"तपः श्रुतं च योनिश्च ह्येतद्ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः" इति तल्लक्षणम् । गां देहीत्युक्ते मुख्य एव गौर्गृह्यते । न वाहीकः । सुवर्णदानस्तेययोः पुण्यपापे उक्ते तत्र मुख्यमेवाकरजं गृह्यते न ताम्रादिधातुजमिति दिक्।षिट्विदितः।ष् च ट् च उश्च आ च ते ष्टुरस्ते इतो यस्य प्रत्ययस्य ष्ट्विद् तस्मात् ष्ट्विदितः । माधवस्तु नामान्यपदार्थमाह। तन्न । धातुप्रत्ययषित्त्वादिकं विना नाम्नः षित्त्वाद्यसंभवात् । यद्यव्युत्पन्नस्य नाम्नः षित्त्वादिकं तदा भवेत्तत् । षिदंतांतात् विदंताद्विदंतांताच्च विदंताद्विदंतांताद्विदंताद्विदंतांताच्च नाम्नः स्त्रियामीप् । षिदादिशब्देन प्रत्ययग्रहणात् 'प्रत्ययग्रहणे यस्मात्स ' इति विदाद्यंतं लभते । तेन नाम्नो विशेषणात्षिदाद्यन्तमपि लभते । जल्पाकी । प्रियजल्पाकी । सुभिक्षाकी । कुट्टाकी । इक्षुकुट्टाकी । वराकी । षाकोकण इति षाकः । पच्यतेस्यां पचनी । साधन इति युट् । आढ्यंकरणी । कुरुचरी । अटाविति टः । गौणत्वे तु नेप् । बहुजल्पाका । बहुकुरुचरा । विदुषी । अतिविदुषी । धीमती । पचंती । प्रियपश्चेत्यादिषु गौणार्थपरिग्रहदर्शनादेवमापशूलिकः । कौक्कुटिकः । न संधीति सूत्राच्चमनुवृत्त्यानुक्तसमुच्चयार्थत्वेन व्याख्येयः । तेन प्राची । प्रांची । प्रतीची । प्रत्यंची । उदीची उदंची । तिरश्ची । तिर्यंची । स्तनंधयीत्यत्र धेटो टित्त्वाद्यवयवेऽचरितार्थत्वात् समुदायात् वशंतादीप् न तु शांताद्वयेत्यत्रेत्याहुः । धातोरप्यन्यपदार्थेनाश्रयणे स्रत् ध्वत् । चका इत्यादावातिव्याप्तिः प्राप्ता सा नुम्विधौ वारिता धातोश्चेद्वित्कार्यं तर्ह्यंचतेरेवेति नियमेन प्रत्ययस्यैवान्यपदार्थत्वेंचताव्याप्तिः प्राप्ता।चकारानुवृत्त्या वारिता । परेषामिच्छब्दत्रयमेकेन संगृहीतम्। अणावान्नुत्वकृवत्रीककृकत्रीनञस्त्वत्र संगृहीताः । द्वयसचूदघ्नचूमात्रचूतयप्कृरपृख्युनाष्टितां संगृहीताः । तरुणतलुनौ वयसा संगृहीतौ । न च तरुणी शालेत्यत्राव्याप्तिः । मुख्यार्थे व्युत्पादितस्य गौर्वाहीक इतिवद्गौणत्वसंभवादिति दिक्॥

**नदादेः**॥नद आदिर्यस्य स्वगणेऽन्यपदार्थे नदादिस्तस्मान्नदादेः । आदिशब्दः प्रकारे । प्रकारः सादृश्यं तच्चेप्प्रवर्तकत्वेन ग्राह्यम् । नदत्यव्यक्तशब्दं करोतीति पचाद्यः । परमनदीत्यादौ त्वीबंतेनैव समासः । गौणत्वे तु नदमति-

क्रांताऽतिनदा। ननु नदट् देवट् चरट् इत्यादयष्टितो निपातिताः तत्किन्नदग्र हणेनेति चेन्नैवम्।ते टितःपावना गौरादिराकृतिश्चाभ्युपेया इति गौरवान्मात्रालाघवार्थं च गौरशब्दं विहाय नदशब्दोपादानम्।ननु स्वरार्थं टित्त्वं ङीप् पित्त्वादनुदात्तः ङीष् तु प्रत्ययस्वरेणोदात्त इति चेन्नाअजंतानामंतोदात्तानां ङीपि यस्येति लोपेऽनुदात्तत्वस्य च यत्रोदात्तलोप इति ङीपोऽप्युदात्तत्वसंभवात् । अत्रात इत्यनुवृत्तमपि न सर्वेषां नदादीनां विशेषणम्। सरसी सखी अशिश्वीत्यादीनामनदन्तानामपीपो दर्शनात्। ननु अनुवृत्तिरेव मास्तु। मैवम्। नदमिच्छति करोति वा यांताञ्च्यंताच्च क्वौ नदीर्नदिति रूपेऽतिव्याप्तेः।एकदेशविकृतन्यायेन नदशब्दत्वान्नचैवं पूर्वयोगयोरप्यत इत्यनुवर्ततेष्टापत्तेर्नकार ऋकारयोरसम्भवान्न तदन्वयोऽणंशेत्वणयोऽकार इति तदन्वयो भवत्येव। तत्फलं तु काशकृत्स्ना स्त्रीत्यत्र प्रत्ययलक्षणेनाणमाश्रित्य ईन्नेत्यकाराश्रयणाद्वर्णाश्रये प्रत्ययलक्षणाभावात्। गवे हितं गोहितमित्यत्र यथा नाच्। एवमुत्तरसूत्रेपि वराकं कुरुचरं वेच्छति करोति यांताञ्च्यंताद्यञि लोपे वराक् कुरुचर षित्त्वटित्त्वसत्त्वेपि नेबिति दिक्॥ **जातेरयोपधात्**॥स्त्रियामीप् इह लौकिकजातिग्रहणे ब्राह्मणत्वादीनां गोत्रस्य च नाडायनादेर्जातित्वे वादिनां विप्रतिपत्तेश्चरणशब्दानां कठादीनामध्ययनक्रियासम्बन्धनिबंधनत्वेन पाचकादिवत्क्रियाशब्दत्वादव्याप्तिरित्यभिमता जातिर्लक्ष्यते।"आकृतिग्रहणा जातिः"। गृह्यतेऽनेनेति ग्रहणमिति करणसामान्ये पदं संस्क्रियते । पश्चादाकृतिशब्दसमवधाने स्त्रीत्वं प्रतीयमानं बहिरङ्गत्वात्स्त्रीप्रत्ययनिमित्तं न भवति। आकृतिः संस्थानं सा ग्रहणं यस्याः सा आकृतिग्रहणा। अवयवसन्निवेशविशेषव्यंग्येत्यर्थः। अनेन गोत्वादिजातिर्लक्षिता। ब्राह्मणत्वादिजातिस्तु न संगृहीता भवति। ब्राह्मणक्षत्रियादीनामवयवसंस्थानस्य सदृशत्वादिति तत्संग्रहाय लक्षणान्तरम्। "लिंगानां च न सर्वभाक्"। "सकृदाख्यातिनिर्ग्राह्या" सर्वाणि लिंगानि न भजतीत्ययमर्थो विवक्षितः। तत्र सर्वशब्दस्य लिंगापेक्षत्वेपि गमकत्वात् भजो ण्विप्रत्ययः समासश्च लिंगानामिति कर्माणि षष्ठी अप्राप्तप्रापणार्थं चेदं वचनं न त्वाकृतिग्रहणेऽन्यस्य संकोचकं तेन तटादेः सर्वलिंगत्वेऽप्याकृतिग्रहणत्वाज्जातित्वं भवत्येव। इह कस्मान्न भवति देवतेति उपदेशापेक्षमिदं

लक्षणम् । कोर्थः । असर्वलिंगेषु येषु जातित्वमाचार्या उपदिशंति तेष्वेव भवतीत्यर्थः । आकृतिग्रहणाया जातेरेकत्वं नित्यत्वमत्येकपरिसमाप्तत्वलक्षणा धर्मानाह । सकृदिति । एकस्मिन् पिंडे सकृदुपदिष्टोऽयं गौरिति पिंडान्तरेषु निर्ग्राह्या निश्चेतुं शक्येत्यर्थः । यदि चैका न स्यान्नैवं गृह्येत । तथा नित्यत्वाभावे पिण्डेन सह नाशात्पिंडान्तरे न गृह्येत । यत्राख्याता किं पुनः पिंडांतरे कथं पुनरेकमेकवस्तु बहु युगपत्कात्स्न्येंन वर्तते । नहि देवदत्तः तदानीमेव स्रुघ्ने च भवति मथुरायां च दृश्यते चेत्को दोषः । नहि दृष्टेऽनुपपन्नं नाम । "गोत्रं च चरणैः सह" । गोत्रमिति अपत्यमित्यर्थः । चरणशब्देन शाखाध्यायिनो गृह्यन्ते । गोत्रस्यानाकृतिग्रहणत्वात्सर्वलिंगत्वाच्च पृथगुपादानम् । नाडायनमिति नपुंसकदर्शनात् । चरणशब्दास्त्वध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात् क्रियाशब्दा एव न जातिशब्दा इति चरणग्रहणं चरणशब्दास्त्वध्ययनसम्बन्धेन प्रवृत्तत्वात् क्रियाशब्दा एव न जातिशब्दाः । कुक्कुटी सूकरीति आकृतिग्रहणाया जातेरुदाहरणं ब्राह्मणी वृषलीत्यसर्वलिंगायाः । गार्गी पैतृष्वसेयीति गोत्रलक्षणायाः कठेन प्रोक्तमधीते कारकादित्यणो लुग्बहुत्वे क्वचिदिति तयोर्लुक् । कठी । चरकी । कथं पुनः स्त्री नामाधीते सा मा नाधिगीष्ट तद्वंश्यत्वात्तु ताच्छब्द्यं भविष्यति । यथानधीयाने माणवके अपरं जाति लक्षणम् । "प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः" इति सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां याऽऽविर्भावतिरोभावौ प्राप्नोति यावद्द्रव्यभाविनीत्यर्थः । गुणैश्च युगपद्द्रव्येण सम्बध्यते यथा निर्गुणं द्रव्यं न भवति तथा जातिरहितमपीत्यर्थः । बह्वर्थामिति । अर्थशब्दो विषयवाची बहुविषयां बहुव्यक्तिव्यापिनीमित्यर्थः । असर्वलिंगामिति पूर्ववल्लक्षणांतरम् । प्रथमलक्षणे तु कुमारीति भवितव्यं कथं कौमारमयावद्द्रव्यभाव्यपि आकृतिग्रहणत्वाद्भवति । द्वितीये वयस्यचरम इति वक्तव्यं भवति । कौमारादेरजातित्वात् अयावद्द्रव्यभावित्वात्तत्र प्रथमलक्षणमेव साधीयो लाघवात् यत्तु युवजातिरित्यत्र पुंवद्भावो न प्राप्नोतीत्युक्तं तन्न । युवशब्दस्य क्लीबे पुंसि वा व्युत्पादितस्य पश्चाज्जायाशब्देन संबंधे स्त्रीत्व उपजायमानेऽप्यन्तरङ्गस्य संस्कारस्यानिवर्तनाद्दृढशक्तिरितिवद्रूपसिद्धेः । विपरीतरूपस्य त्वभावो

लक्ष्यानुसारात् । वृद्धा । स्थविरा । मक्षिका । कुलीना । वरटेत्यादयः।आबि-
त्यत्र योगविभागो बोध्यः । अयोपधात् किम् । क्षत्रिया । वैश्या।जातेः किम् ।
मुंडा । पाचिका । अत इत्येव । तित्तिरिः । गौः । नोक्तमनित्यमिति ।
अयोपधान्निषेधस्यानित्यत्वाद्रवयी।हयी।मनुषी । मत्सी ।गार्गीत्यादि सिद्धम् ।
इंद्र आदिर्यस्य स इंद्रादिस्तस्मात्पुंयोगे चेत्यत्रापकृष्यते । इन्द्रादेः स्त्रिया-
मानीप् प्रत्ययो भवति पुंयोगे । इन्द्रस्य स्त्रींद्राणी । वरुणानी । भवानी
मृडानी । शर्वाणी । रुद्राणी । स्यादेतदिंद्रादिभ्योऽदन्तेभ्योऽनीप्यपि सवर्ण-
दीर्घेणेंद्राणीत्यादिः स्यादेवेति किमाकारेण । नच यस्य लोपप्रसंगः प्रकरणा-
त्तद्धिते तद्विधानादत्र माधवः एवं तर्हीन्द्रं करोतींद्रयति ततः क्विप् इंद्र् तस्य
इंद्रः स्त्रींद्राणीत्यत्र हसांताच्छ्रवणार्थमाकारोपदेश इति तन्न । क्विबंतस्य क्रि-
याशब्दत्वेन पुंशब्दस्याभावात् । इंद्रमिच्छतींद्रयति ततः क्विपींद्रीरित्यत्रा-
तिव्याप्तेरिंद्रियः स्त्रींद्राणीति स्यात् । अनन्तत्वाद्गौणत्वाद्वा नेति यदि ब्रूषे ।
तर्हि समः समाधिरत्राप्यतोऽनुवृत्तेः सत्वादन्ये त्वाहुः । ब्रह्माणीति सिद्ध्यर्थं
दीर्घग्रहणं ब्रह्मशब्दादानीपि तेनोवेति टेरिति वा टिलोपे कृते ब्रह्माणीति ।
यद्वा इंद्रादेराकारादेशोनीप् च प्रत्ययस्तदपि न । ब्रह्माण्याः प्रकारान्तरेण
सिद्धत्वाद्ब्रह्माणमानयति जीवयतीत्यन प्राणने ञ्यंतः कार्य्येण् त्रण इतीपि
क्वचिदैकपद्यमिति णत्वे सिद्धं ब्रह्माणीति । नन्वेवं चेत्सूत्रं व्यर्थम् । इंद्रादी-
नामुक्तरीत्या सिद्धत्वान्नैवम् । इंद्रस्य स्त्री पुंयोगे चेतीपींद्रीत्यादिप्रसङ्गात्त-
स्मादनिष्टप्रसंगवारणार्थं सूत्रस्यावश्यकत्वात् । उच्यते । अतद्धितेपि
प्रत्यये क्वचिद्यस्य लोपो भवतीति ज्ञापनार्थं दीर्घग्रहणम् । नन्वकारसामर्थ्या-
ल्लोपो न स्यादिति चेन्न । धर्मादन् सुधर्मेत्यादावपि यस्य लोपाभावप्रसंगाद-
कारोच्चारणसामर्थ्यस्य सत्त्वात् । ननु हसेप इत्यत्रानीपो ग्रहणं तस्मादव्यय-
त्वेनाप्रत्ययत्वाच्च नैवम् । पित्करणसामर्थ्यात्सामान्यग्रहणार्थमेवं पित्कर-
णम् । ननु श्रवणार्थ एव यः किं न स्यात् । उच्यते । श्रवणार्थत्वे हि कार्या-
येदिति विधिर्बाध्येत । सामान्यग्रहणे तु प्रत्ययाप्रत्यययोरिति परिभाषा बा-
ध्यते । प्रधानबाधापेक्षयांगबाधे लाघवम् ।अर्थवत्परिभाषा त्वनित्येत्युक्तमेव ।
ननु इंद्रादेरानचेति सूत्र्यतामीप् तु त्रण ईप् पुंयोग इति ईपि परे सिद्ध एव

वा । मैवम् । आगमलिंगाभावेन सर्वादेशप्रसङ्गात् । ननु इंद्रादेरनुगिति सूत्रमस्तु । मैवम् । अल्लोपः प्रसङ्गात् । नचाकारोच्चारणसामर्थ्याल्लोपेनेति वाच्यम् । प्रकृत्यकारपरित्राणार्थत्वात्तस्य नुकि कृते प्रकृतेरनो लोपः स्यादनुकि तु तस्यैवातोल्लोपो न प्रकृतेः । किंच शर्वशब्देऽकारश्चरितार्थो नुकि सति प्रकृतेरल्लोपो नास्ति । वंतसंयोगात्परत्वान्नानुकि कृते सवर्णदीर्घेऽकारश्चरितार्थोऽतो न शक्यतेऽनुकर्तुम् । आनुक् तु सुवचो मात्रालाघवात् । आचार्यादणत्वम् । आचार्यानी । मातुलोपाध्यायाभ्यां वानीप् पक्षे पुंयोगेचेतीप् । मातुली । उपाध्यायानी उपाध्यायी । अर्यक्षत्रियाभ्यां वा स्वार्थे । अर्याणी अर्या । स्वामिनी वैश्या वेत्यर्थः । केचित्तु आर्यक्षत्रियाभ्यां वेति पठंति तन्मते आर्याणी आर्या । क्षत्रियजातीया स्त्रीत्यर्थः । यदि पुंयोगेऽयं विधिः स्याच्छूद्रा वैश्या च । क्षत्रियस्य स्त्री क्षत्रियाणी स्यात्पक्षे । पुंयोगे त्वयीं क्षत्रियी । हिमारण्याभ्यां लक्षणया महत्त्वे वर्तमानाभ्यामानीस्तदन्तं च स्त्रियाम् । महद्धिमं हिमानी । महदरण्यम् अरण्यानी । यदि तु तदंतं स्त्रियामिति नोच्येत तर्हि हसेप इति स्यादौ ह्रस्वः स्त्रियां योरित्यादि न स्यात् । स्त्रियां वृत्त्यभावात् । महत्त्वे किम् । हिममरण्यम् । यवाद्दोषे वर्तमानात्तदंतं स्त्रियां यवत्वजात्यभावे तदाकारानुवृत्तिर्दोषः । यवानी । दोषे किम् । यवः । यवनाल्लिप्याम् । केचिज्जनपदतो यवनाः तेषां लिपिर्नाम लिखिताक्षरविन्यासः । सा च स्त्रीलिंगैव । यवनानां लिपिर्यवनानी । लिप्यां यवनस्य यवनजातीया वा स्त्री । यवनात्किम् । नागरी लिपिः । इदमर्थेऽणो बाधकमिदमितीत्यादिपदेन संगृहीतमिति दिक् ॥**स्वांगाद्वा**॥यद्यत्र स्वमङ्गं स्वाङ्गं गृह्येत । श्लक्ष्णमुखा शालाऽत्रापि प्राप्नोति । मुखस्य शालांगत्वाद्दीर्घकेशी रथ्यात्यत्र न स्यात्केशानां रथ्यांगत्वाभावात्तदव्याप्त्यतिव्याप्तिपरिहारार्थं स्वांगं परिभाष्यते । " अद्रवं मूर्तिमत्स्वांगं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं चतेन चेत्तत्तथा युतम् " । तत्र प्राणिस्थं स्वांगमित्यनेन श्लक्ष्णमुखा शालेत्यत्र न भवति । एवमपि बहुकफात्र प्राप्नोति । तदर्थमद्रवमिति । द्रवतीति द्रवं ततोऽन्यदद्रवम् । एवमपि बहुज्ञानाऽत्र प्राप्नोति । अत उक्तं मूर्तिमदिति । असर्वगतपरिमाणं मूर्तिः असर्वगतानि यानि द्रव्या-

णि तेषां यत्परिमाणं ह्रस्वत्वादिमूर्तिः स्पर्शवद्द्रव्यपरिमाणं मूर्तिरित्यन्ये । सा यस्यास्ति तन्मूर्तिमत् । एवमपि बहुशोफात्र माप्नोति । अत उक्तमविकारजमिति । विकारो वातादिवैषम्यम् । ततो यज्जायते तन्न भवतीत्यविकारजं शोफस्तु श्वयथुसंज्ञको विकारजः । यदि प्राणिस्थं स्वांगं तर्हि रथ्यादिपरिगतानां केशादीनां स्वांगत्वं न स्यात्ततश्च दीर्घकेशी रथ्येति न सिध्यत्यत उक्तमतत्स्थमिति । संप्रत्यप्राणिस्थमपि कदाचित्प्राणिनि दृष्टं चेत्तदपि स्वाङ्गं भवत्येवेत्यर्थः । एवमपि प्रतिमावयवानां मुखादीनां स्वांगत्वं न प्राप्नोति । अप्राणिस्थत्वात् । ततश्च दीर्घा प्रतिमेत्यत्र न सिध्यतीत्यत्र उक्तं तेनचेदिति । अतत्स्थमित्यनुषङ्गः । अप्राणिस्थमपि मुखादिस्वांगं न चेन्मुखादिना तदप्राणिद्रव्यं तथा युतं भवति तथा प्राणिद्रव्यमित्यर्थः । क्वचित्पाठस्तस्य चेत्तत्तथा युतमिति । तत्रार्थः । अप्राणिस्थमपि मुखादि स्वाङ्गं तस्य चेदप्राणिनस्तन्मुखादि तथा युतं भवति तादृशसंस्थानं भवति । यादृशसंस्थानं प्राणिन इत्यर्थः । वाग्रहणात्संयोगोपधक्रोडादिबहुस्वरानुपसर्जनात् । सहनञ्विद्यमानपूर्वाच्च ॥ न नासिकोदरोष्ठजंघादंतकर्णशृङ्गाङ्गगात्रकण्ठेभ्यस्तु भवति । आद्ये लक्षणे सुमुखी सुमुखा । द्वितीये केशानतिक्रान्ताऽतिकेशी अतिकेशा रथ्या । तृतीये कुस्तनी कुस्तना प्रतिमा । संयोगोपधात्तु सुगुल्फा । क्रोडादि सुक्रोडा । बहुस्वरात् । सुजघना । सुवदना । अनुपसर्जनात् । शिखा । सनासिका । अनासिका । विद्यमानोदरा । सुनासिका । मंदोदरी मंदोदरा । बिंबोष्ठी बिंबोष्ठा । सुजंघी सुजंघा । तनुदन्ती तनुदन्ता । दीर्घकर्णी दीर्घकर्णा । सुश्रृंगी सुश्रृंगा । स्वंगी स्वंगा सुगात्री सुगात्रा । सुकंठी सुकंठा । स्वांगात्किम् । बहुधरा भूमिः । अत इत्येव सुपाणिः सुनाभिः । पुंयोगे चापुंसा पुंसो वा योगः सम्बन्धः । तस्मिन् पुंयोगे भावे निमित्ते वा सप्तमी । पुंयोगे सति पुंयोगनिमित्तं वा यन्नाम स्त्रियां वर्तते तस्माददन्तात्स्त्रियामीप् । अर्थात्तन्नाम पुंस आख्या लभ्यते स्त्रियास्तु न पुंयोगे सति स्त्रियां वृत्त्यभावात्स्वत एव स्त्रियां प्रवर्तनात् गणकी । गोपी । शूद्री । कथं पुनरेषां स्त्रियां वृत्तिस्तस्येयमिति संबंधाच्चेत्तर्हि तद्धितो भवेत् अथ नाप्राप्ते तद्धिते ईबारभ्यमाणस्तस्य बाध इत्युच्यते ।

कदाचिदपि तद्धितो न स्यादुभयमपि त्विष्यते । गणकी गाणकीति ।तस्माद्दुष्ट एवायं पक्षः । एवं तर्हि यथा मंचाः क्रोशन्ति गौर्वाहीको गंगायां घोषः यष्टीः प्रवेशयेत्यादौ तात्स्थात्ताद्धर्मात्तत्साहचर्य्याच्च तस्मिन्नपि तत्त्वाध्यारोपेण तच्छब्दप्रवृत्तिर्भविष्यति । तत्राभेदेन भेदसम्बन्धस्य निवृत्तत्वान्न तद्धितप्रसङ्गः । विवक्षितेन च भेदेन तद्धितोत्पत्त्या गाणकीत्यादि भविष्यति । भट्टिकाव्ये दुहितर्य्यपि दृष्ट ईप् केकयीतो भरतोभूदिति देवकी चेति पाक्षिकवृद्ध्यभावेनापि सिध्यति । अत इत्यणि प्रत्यये तु कत्यादित्वात्कैकयीति स्यात् । पुंयोगे किम् । देवदत्ता । स्त्रिया एव कस्याश्चिदेषा संज्ञा। अतः किम् । भानोः स्त्री भानुः । माधवमते तु पुंशब्दादिति सूत्रं तत्र पुंवाचकः शब्दः पुंशब्द इति शाकपार्थिवादिः । पुंशब्दात् स्त्रियां वर्तमानादि पूर्ववत् । चोऽनुक्तसमुच्चयार्थः । तेन पाणिगृहीती भार्यायाम् । अल्पाख्यायाम्। अभ्रलिप्ती । नाम्नश्च कृतेति सिव्युत्पत्तेः प्राक् समासे सुरापीती स्यात् । वस्त्रक्रीती । पश्चात्तु समासे सुरापीता वस्त्रक्रीता । चादेव । **पालकान्तान्न।** अश्वपालिका । गोपालिका । माधवमते तु वाग्रहणमनुवृत्य व्यवस्थितविकल्पाश्रयणेनेयं व्यवस्था बोध्या । **ऐ च मन्वादेः ॥** मनुरादिरस्य । आदिशब्दः प्रकारे तेन वृषाकप्यग्निकुसितकुसिदा गृह्यंते । मन्वादेरैचेति वक्तव्ये विपरीतोच्चारणेनान्यदपि किंचिद्विपरीतं भवतीति सूचयति । मनोरैच् । विधेयसंबद्धश्चकारो विधेयांतरं समुच्चिनोति । तच्च मनोरौ वा । वृषाकप्यग्निपूतक्रतुकुसितकुसिदानामैरीच्च पुंयोगस्त्रियां मनोरै औ वा । अनुवृत्तश्चकारो विकल्पार्थः । वर्षति कामानिति वृषः । नाम्युपधादिति कः । आकंपयति पापानीति आकपिः । अंतर्भावितण्यर्थः । इखखि इः आगमजमानित्यमिति न नुम् । वृषश्चासावाकपिश्च वृषाकपिस्तस्य स्त्री वृषाकपायी । "हरविष्णू वृषाकपी"।"वृषाकपायी श्रीगौर्यो:" । अग्नायी स्वाहा। पूतः क्रतुर्यस्य येन वा स पूतक्रतुस्तस्य स्त्री पूतक्रतायी । कुसितायी।कुसिदायी । मनायी मनावी मनुः. पुंयोगे किम् । ' यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा ' । सामर्थ्यादत इत्यधिकारो बाध्यते ॥**पत्न्यादयः॥** पत्नी आदिर्येषां ते पत्न्यादयः । आदिशब्दः प्रकारे प्रथमानिर्देशादीबंताः स्त्रियां निपात्यंते । पतिशब्दस्य नांतत्वं

निपात्यते । ञण ईबीतीप् । एकपत्नी । वीरपत्नी । सपत्नीति।समानस्य सभा-बोपि । चकारानुवृत्त्या क्वचिद्विकल्पः । तेन दृढपतिः दृढपत्नी ।वृषलपतिः वृषल-पत्नी । धर्मपत्नी । राजपत्नीत्यादौ तु पत्नीशब्देनैव समासः । निपातनसाम-र्थ्याद्गौणमुख्यन्यायो बाध्यते । दधातीति धीवरी । बहुधीवरी । नस्य रः । एता एनी । हरिता हरिणी । रोहिता रोहिणी । श्वेता श्वेनीत्यादिः॥**वोर्गु-णात्**। वा ओरिति च्छेदः । नत्वौरिति विच्छिद्य ग्रहणादौ प्रत्ययो भवतीति युक्तम् । गुणस्य प्राग्दर्शितत्वात् । सतो हि कार्यिणः कार्येण भाव्यमिति । ओरित्यपि उवर्णस्य ग्रहणं नत्वोकारस्य प्रकृत्या गुणस्य ओदंतत्वाभावात् । तत्रापि तदंतस्य ग्रहणं न केवलस्य उमात्रस्य । गुणस्याभावात् । ओर्गुणा-च्चेति त्वभिप्रेते उगुणादित्येव निर्दिशेत्। गुणशब्दोऽपि गुणवत्परः न स्वरूप-परः । स्वरूपस्यानुदंतत्वात् । नापि गुणमात्रवाचिपरः । गुणमात्रवाचकानां स्त्रियामप्रवृत्तेः।"गुणे शुक्लादयः पुंसि"इति वचनात्।यद्वादीनामपि तत्र ग्रहण-स्यौचित्यात् । सूत्रे सामान्यग्रहणेपि दीर्घान्तो गुणिवचनो नास्ति।पटुमिच्छति। पटयति । ये इति दीर्घः । पटयतीति पटुः । क्विप् । तल्लोपः यत इति यलोपः । अयं तु संप्रति क्रियावचन इति नात्र प्रसङ्गः । यद्यपि कच्छूः खर्जूरित्यादयो दीर्घाः संति । तथापि न गुणवत्पराः किंतु गुणमात्रपरा अतस्तेषु नाति-प्रसङ्गः । पट्वी । मृद्वी । ऋज्वी । तन्वी । साध्वी । बह्वी । पक्षे पटुरित्यादि। वाग्रहणच्चानुवर्तनाद्वा। **खरुसंयोगोपधात्**॥पाण्डुः।खरुः"खरुः पतिंवरा क-न्या"इति निघंटुः । तत्र प्राणिग्रहणोत्कंठाभिधायित्वाद्गुणवचनत्वं गुणलक्षणं तु "उपैत्यन्यज्जहात्यन्यद्दृष्टोद्रव्यान्तरेष्वपि।वाचकः सर्वलिंगानां द्रव्यादन्यो गुणः स्मृतः" इति । उतः किम्। शुचिः।शितिः। गुणात्किम् । आखुः। स्वांगाद्वेत्यतो वेत्यनुवर्तमाने वा ग्रहणं विकल्पयोर्मध्ये विधयो नित्याः स्युरिति । ज्ञापयति तत्रापि चकारग्रहणप्रयुक्तो विकल्पः क्वाचित्क एव यद्वार्द्धमात्रालाघवमना-दृत्य वा ग्रहणं कृतम् ॥ **उतऊः** । ओरित्यनुवर्तमाने उत इति किमर्थं नच वाच्यमूदंतान्माभूदिति । वधूः चमूरित्यसति विशेषात् । नच तथा प्रक्रिया-गौरवमपि शंक्यं सूत्रगौरवात् । तद्गौरवस्य ज्यायस्त्वात् । एवं तर्हि तदनु-वृत्तौ तद्विशेष्यस्य तत्संबद्धस्य गुणस्याप्यनुवृत्तिः स्यादिति पुनरुत इत्युक्त-

मिति माधवस्तन्न। खलप्वं यवल्वमित्यत्र विशेषत्वादसत्यस्मिन् य्वौ वेति वः सति नूवमिति तस्य सहादेरिति बाधकम् किञ्च कटप्रुवौ स्वयंभुवावित्यादौ सत्यस्मिन्नुवंस्यादसति तूवू।ननु सहादेशस्य शस्य यदादेशन्यायेन पूर्वांतत्वेन ग्रहणान्नोक्तदोष इति चेन्न । वर्णप्राधान्ये यदादेशन्यायाप्रवृत्तेः। यदि त्विवर्णो वर्णांतधातोरेव प्राधान्यम् । अथ भुवोवुगिति ज्ञापकात् । य्वोरेव स्थानित्वं नुधातोः सर्वस्येयुवावित्युच्यते तर्ह्युत इति त्यक्तुं शक्यम् । ओरित्यनुवृत्त्यैवेष्टसिद्धेः । नच तद्विशेष्यगुणादित्यनुवर्तेतेति वाच्यमिष्टानुरोधेनानुवृत्त्यभ्युपगमात् । पूर्वसूत्रे यवक्रश्चेति सुवचत्वादुकारान्ताद्गुणवद्वाचकादेप् । ऊश्चेति तदर्थसंभवात् । ननु उत उरित्येवास्तु सूत्रं मास्तु दीर्घनिर्देशः।पंगूः।कुरूरिति सवर्णदीर्घेणापि सिद्ध उच्यते । अनुदन्तादपि विधानार्थं दीर्घनिर्देशः। तेन श्वशुरस्य स्त्री श्वश्रूरिति सिद्धम् । पुंयोगे चेतीयोऽपवादः सहादित्वादुकाराकारलोपः । माधवस्तु उत उरित्येवास्तु सूत्रम् । एवमपि दीर्घान्तत्त्वात्पंगूच्छत्रमित्यत्र छ इति द्वित्वं न भविष्यति।किं तु दीर्घादपीत्यपिशब्दात्पदान्तादीर्घाच्छस्य वा द्वित्वमिति विकल्प एव स्यात् । इति सिद्धमिष्टम् । एवं तर्हि ब्रह्मबन्धूरित्यत्रान्यार्थं इति ह्रस्वो माभूत् ।टाडका इति कश्च बहुव्रीहौ माभूदिति दीर्घविधिर्दीर्घस्य हि उकारद्वयात्मकत्वेन द्वितीयोकारस्य तद्बाधनार्थत्वादित्याह । तन्न । ब्रह्मबन्धूरित्यत्रान्यार्थाभावेन ह्रस्वाप्राप्तेः प्रिया बंधुर्यस्येत्यत्र तु कप्रत्ययेन भाव्यम् । प्रियब्रह्मबन्धूक इति । यदि तु को नेष्टस्तदा तु ह्रस्वेन भाव्यम् । प्रियब्रह्मबन्धुरिति । न चोकारद्वयविधानसामर्थ्याद्ध्रस्वो नेति वाच्यम् । स्त्रियां विहितेनोकारद्वयेन स्त्रियां ह्रस्वो वा स्यात्सम्भवेपि पुंसि ह्रस्वबाधासंभवात् । अन्यथा प्रियब्रह्मबंधूकमिति नपुंसकह्रस्वो न स्यात् । विनिगमनाविरहात् । यदि तु ह्रस्वो नेष्ट एव । तदा तु बहुश्रेयसीवत् । संज्ञापूर्वकत्वेन ह्रस्वाभावः सुवचः । कप्रत्ययस्याभावस्तु इष्टानुरोधात् । बहुखट्व इत्यत्रेव भविष्यति । तदर्थमूकारान्तग्रहणं व्यर्थम् । करभोरूः । रंभोरूः । संहितोरूः भद्रबाहूः । उतः किम् । वाक् । त्वक् स्त्रियां किम् । भानुः । वाग्रहणानुवृत्तेः क्वचिन्न । अध्वर्युः । कद्रुः । वर्णत्वात्कद्रुः । बभ्रुः । रज्जुः । हनुः । धेनुः । कृकवाकुरित्यादौ नेति दिक् ॥ यून-

स्तिः । स्त्रियाम् । युवतिः । अत्र नलोपः कथं स्यादेरसस्याभावात् । उच्यते । अधाविति धिभिन्ने धिसदृशे रसादौ स्यादाविति लब्धं वसां रसे इत्यतो रसग्रहणानुवृत्तेः स्यादिभिन्नेऽपि तस्मिन्नलोपोऽत एव नाम्नस्ताद्धित इति पक्षे युवरूपः राजमयः राजचर इति नलोपः । यद्वा यूनः स्त्रियां तिरादेश एव विधीयते न प्रत्ययः । न चानेकवर्णत्वादेशप्रसङ्गः । ज्ञापकसिद्धं न सर्वत्रे त्यंतादेशसंभवात् । यद्वा त् इः इति च्छेदः यूनस्तादेशो भवति इश्च प्रत्ययः । नांतलक्षणे योऽपवादः । युवतीति तु यौतेः शत्रंतादीपि बोध्यम् । माधवमते त्वेतत्सूत्रमेव नास्तीति पत्न्यादित्वं बोध्यमिति दिक् ॥

हाटकेशपुरस्थायी विनायकसुतोऽकरोत् ॥
रघुनाथाभिधो व्याख्यां स्त्रीपादस्य यथामति ॥

इति स्त्रीप्रत्ययः ॥ ८ ॥

---

# समासव्याख्या.

**समासश्चान्वये नाम्नाम्** । अत्र योगत्रयम् समास इत्याद्यो योगः । संज्ञाधिकारश्चायमन्वर्था चेयं संज्ञा समानि एकीभूतानि पदानि अर्था वा आसते यस्मिन्नाधारे घञ् । अथवा सममेकमर्थमासयंति दीपयंत्यस्मिन्समुदाये अस दीप्तौ । ण्यंतः । स्वराद् इत्याधारे अः।यद्वा संश्लिष्टानि एकीभूतानि पदानि आस्यंते उच्चार्यंते यस्मिन्नाधारे घञ् । यद्वा संश्लिष्टानां पदानामेकतामापन्नानामासनमुच्चारणं भावे घञ् । समासः । च इत्यपरो योगः । समास इत्यनुवर्तते विधिश्चायम् । अन्वर्थसंज्ञाक्षिप्तानि पदानि संज्ञीनि पदानि परस्परसमाससंज्ञां लभंते यत्रोत्तरो विधिर्न प्राप्नोति तत्रेदं प्रवर्तते । भूतः पूर्वं भूतपूर्वः । अन्ये तु पूर्वभूत इति विगृह्य भूतपूर्वे चरडिति निर्देशाद्भूतशब्दस्य पूर्वनिपातमाहुः । विस्पष्टं पटुः विस्पष्टपटुः । नात्र कर्मधारयप्रसंगः । भूतस्य पूर्वकालेन सममभेदाभावाद्विस्पष्टत्वस्य पाटवविशेषणत्वेन पटुना सहाभेदाभावात् । न एकधा नैकधा । नायं नञ् । किंतु निषेधार्थको नः स्वायं कृतिः । सामि कृतिः । अत्र समासाभावे ऐकपद्याभावे इञ् न स्यात् । तत्र नाम्न इत्येकत्वस्य विवक्षणात् । पचत भृज्जतेत्यधीयते यस्यां क्रियायां

सा पचतभृज्जा । खादत मोदत एहिईडेत्यभिधीयते यस्मिन्कर्मणि तदेहीडं जहि जोडमित्यभिधीयते यः स जहिजोड इत्यादिषु आख्यातानां परस्परं सिबन्तेन च सह समासो नास्ति । नाम्नामिति वचनात् अन्वये नाम्नामिति तृतीयो योगः। अनु अंतर्यंति पदार्था यस्मिन्नर्थे इणू गतौ स्वरादः । अनु अन्तः अयनं पदार्थानां गमनमन्वयः। एकार्थीभावः । अनु सहान्येन यंति संबंधं लभन्ते पदानि यस्मिन् । आधारे स्वरादः । अनु सहान्येन इयंते संबंधं प्राप्नुवते पदान्यस्मिन् अन्वयो नाम व्यपेक्षालक्षणः संबंधः । अत्र तु विग्रहवाक्यमेव भवति। विशेषेण गृह्यते ज्ञाप्यतेऽनेनेति विग्रहः । तादृशं च तद्वाक्यं चेति कर्मधारयः। यद्वा विशेषेण ग्रहणं विग्रहः । तदर्थवाक्यं शाकपार्थिवादिः षष्ठीसमासो वा । एकार्थीभावे तु संबन्धे वृत्तिरेव भवति, न विग्रहः । एवमुभयसिद्धौ विभाषेति । इच्छायां वेति वाग्रहणं च न कर्तव्यं भवति । यद्यविभक्ति नामेति सांकेतितं तथाप्यत्र नाम्नामिति विभक्त्यन्तानामेव ग्रहणं समासप्रत्यययोरलुक् क्वचिदिति ज्ञापकादन्वये इति वचनाच्च सिबन्तानां परस्परमन्वयः संभवति विभक्त्यर्थद्वारकस्यैव तस्य दर्शनाच्च । स्पष्टार्थपदानामिति तु नोक्तम् । पचति भवति पश्य धावतीत्यादावन्वयसत्त्वे समासप्रसङ्गात् । सति च तस्मिन्यथेष्टो योगो न स्यात् । अत्र विधिरिति शेषः । पदानां पदयोर्वा विधिः अन्वये सति भवति पदमनूद्य विधीयमानः एकार्थीभावेति भवतीति परिभाष्यते । परिभाषा च नाम परितः सर्वतः पूर्वत्र परत्र व्यवहिते चानन्तरे च भाष्यते कार्यमनयेति तेन तद्धितसमासकृद्वृत्तयः संगृहीता भवन्ति अधिकारे तु समासमात्रं संगृहीतं स्यात् यदि तु चकारस्यानुक्तसमुच्चयार्थत्वेनान्यासामपि संग्रहस्तर्ह्यधिकारे न क्षतिः । विशेषेण गृह्यते ज्ञायतेऽनेन वृत्त्यर्थ इति विग्रहः । तादृशं च तद्वाक्यं शाकपार्थिवादिः षष्ठीसमासो वा तद्वाक्यं द्वेधा। लौकिकमलौकिकं च। आद्यं प्रयोगार्हं परिनिष्ठितं साधु । यथा राज्ञः पुरुष इति द्वितीयम् । अपरिनिष्ठितं प्रयोगानर्हमसाधु यथा राजन् ङस् पुरुष सौति समाससंज्ञादिकं चास्मिन्नेव प्रवर्तिते तत्र लौकिके वाक्ये व्यपेक्षासंबंधः । अन्योन्यापेक्षा व्यपेक्षा । आकांक्षासंनिधियोग्यत्वेषु सत्सु यः परस्परसम्बन्धः सा व्यपेक्षा वाक्ये हि राज्ञ इति पदमनियतसंबं-

ध्यपेक्षयोद्भूतं सम्बन्धं विशेषणभूतम् । अर्थमाचष्टे स्वसन्निहितयोग्यं च पुरुषमपेक्षते ममायमिति पुरुष इत्यनेनापि पुरुषस्वनिष्ठोऽभिधीयमानः स्वसन्निहितं राजानमवच्छेदकत्वेनापेक्षतेऽहमस्येति । अतो विशेषणविशेष्याभावेन संबंधः । अनियतसंबंधिविषयत्वाच्चापेक्षाया यो यः सन्निहितो योग्यश्च । तेन तेन तेन संबध्यते । राज्ञः पुरुषोऽश्वश्चराज्ञो देवदत्तस्य च पुरुष इति नार्थांतरस्य वृत्तौ तु संसृष्टता एकार्थीभावो हि तत्र सम्बन्धः। वृत्तौ हि राजपदं राजानमभिधाय न तावति पर्यवस्यति पुरुषमप्याचष्टे । यथा गंगायां घोष इति गंगापदात्तीरम् । यदि तु तावत्येव पर्यवस्येत् ततो यथा वाक्ये राज्ञः पुरुषोऽश्वश्चेति द्वाभ्यां संबंधो भवति । यथा राजपुरुषोऽश्वश्चेत्यत्रापि स्यात् । स्वविशेषणसम्बन्धोपि स्यात् । ऋद्धस्य राजा पुरुष इति । तथा पुरुषपदमपि राजविशिष्टमेव पुरुषमाचष्टे न पुरुषमात्रम् । यदि तथा स्यात् । यथा वाक्ये राज्ञः पुरुषो देवदत्तस्य चेति द्वाभ्यां संबंधो भवति राजपुरुषो देवदत्तस्य चेत्यपिस्यात्। अतो यस्य विशेषस्य भावादयं विशेषः स एकार्थीभावः । अपरे च एकार्थीभावकृताविशेषाः सन्ति । सिब्लोपो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः । संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं च योगश्चेति । तद्यथा । सिब्लोपो भवति । वाक्ये राज्ञः पुरुषो नीलमुत्पलमिति समासे तु द्वयोरेकस्मिन्विशिष्टेऽर्थे वृत्तेः पृथगर्थाभावात् । स्वभावत एव वृत्तिर्निवर्तते । सैव स्वाभाविकी निवृत्तिः शास्त्रेणान्वाख्यायते । समासप्रत्यययोरिति लक्षणेन नलोपादिकार्यं यथा स्यादिति । राजाश्वः । मरुदीहा । पृथगर्थाभावे तु पृथग्विभक्तिर्न भवति । यथा वर्णेषु व्यवधानं च पृथगर्थत्व एव दृष्टं राज्ञ ऋद्धस्य पुरुष इति । असति तत्र न दृष्टः । यथा राजपुरुषपदेन मध्ये पदांतरं प्रक्षिप्यते । प्रयोगनियमश्च पृथगर्थत्वे दृष्टः । राज्ञः पुरुषः । पुरुषो राज्ञ इति । असति तु न दृष्टो यथा पुरुषपदे वर्णेषु । किंच पृथक्संख्याविशेषोऽवगम्यते पृथगर्थेषु । राज्ञः राज्ञोः राज्ञां पुरुष इति वृत्तौ त्वभेदैकत्वसंख्या गम्यते । राजपुरुष इति । तथाहि । वृत्तौ संख्याविशेषप्रतिपादकाया विभक्तेर्निवृत्तौ अनुपात्तसंख्याविशेषमेकत्वादिष्वनुगतं संख्यासामान्यमभेदैकत्वसंख्यैव प्रतीयते । यत्र त्वर्थप्रकरणादिकं प्रमाणं तत्र स्यादेव द्विवचनबहुवचनांतस्यापि समा-

सः । यथा मुद्गैः क्रीतं मुद्गक्रीतम् । नहि एकेन मुद्गेन क्रयः संभवति। तथा युष्मत्पुत्र इत्यादौत्वदादेशाभावः द्विपुत्र इत्यादौ द्वित्र्यादीनां प्रयोगान्यथानुपपत्तिः । तदेवं सर्वत्र वृत्तौ प्रमाणांतराभावेऽभेदैकसंख्यैव गम्यते इति स्थितम् । व्यक्तं चाभिधानं पृथगर्थेषु तिष्ठति । ब्राह्मणकंबल इति वृत्तौ व्यक्तमभिधानं तिष्ठति । ब्राह्मणकंबल इति संदेहो भवति । संबुद्धिर्वा स्यात्। षष्ठीसमासो वेति । उपसर्जनविशेषणं व्याख्यातं च योगश्च भवति । पृथगर्थेषु राज्ञो गौश्चाश्वश्च कंबलश्चेति वृत्तौ त्वैकार्थ्याद्भेदनिबंधनस्य समुच्चयस्याभावाच्चशब्दो निवर्तते । राज्ञो गवाश्वकंबला इति तदेतैर्विशेषैर्विज्ञायते। संभिन्नोभयस्वरूपः पांसूदकवदविभागापन्नो वृत्तावर्थ इति । तेन राज्ञः पुरुषमानय राजपुरुषमानयेति च। यद्यप्येक एवानीयते इति कार्ययोगिनोर्भेदः। तथाप्यभिधानप्रकारो भिद्यते । यथा ब्राह्मणाः शतं भोज्यंतां ब्राह्मणानां शतं भोज्यतामिति तदेव वृत्तिवाक्ययोरर्थो भिद्यते इति स्थितम् । एवमजहत्स्वार्था वृत्तिरुक्ता । अन्ये तु जहत्स्वार्थवृत्तिमाहुः । जहति स्वार्थं पदानि यस्यामिति विग्रहः । तदुक्तं वृत्तौ वर्तिपदानामानर्थक्यं पदे वर्णवदिति। यथा वृषभ इति वृषशब्दः सुकृतादेर्वाचकः भशब्दस्तु नक्षत्राणां समुदायस्य बलीवर्दे शक्तौ । तयोरानर्थक्यम् । एवं कंबलशब्दे को वाय्वादौ वः प्रचेतसि लः पृथिव्याम् । समुदायस्य ग्राह्ये शक्तौ तेषामानर्थक्यम् । एवं रामशब्दे रोऽग्नौऽमोगत्यादौ । यद्वा न मा यस्येत्यमः, रस्य अमः रामः । यद्वा राति रायति वा राः रां माति मिनोति वा। "बले रामो नीलचारुसिते त्रिषु" इति समुदायशक्तौ अवयवानर्थक्यम् । तथा राजपुरुषशब्दयोः पृथक्छक्तयोरपि राजसंबंधिनि पुरुषे शक्तौ तयोरानर्थक्यम् । निरूपिता चेयं जहत्स्वार्था वृत्तिः। फणिना वृत्तौ सप्तमीत्यित्यत्र । यत्तूक्तं हरदत्तेन किं राजपुरुष इत्यत्र राजार्थेन गम्यते । ओमिति चेत्पुरुषमात्रस्यानयनं प्राप्नोतीति । तन्न । जहत्स्वार्थां वदता पुरुषशब्दार्थस्यापि परित्यागाभ्युपगमात्। नहि जहत्स्वार्थायां विशेषणमात्रस्य परित्यागः किंतु विशेष्यस्यापि स्वार्थत्यागोपि परस्परविशेषणविशेष्यभावेन व्यावृत्तौ सत्यां स्वीक्रियते न प्रगेवातोन्यतरपदस्यापि वैयर्थ्यं यदपि अथ गम्यते किं निबंधना तस्यावगतिः । न तावत्समासस्य शक्तिः

कल्प्या । राजशक्तिनिबंधनायामपि तस्यामनर्थभावादित्युक्तं तन्न । समुदायाद्विशिष्टार्थावगतेः समासस्य तत्र शक्तिर्गौनदीयेनाभ्युपगताऽजहत्स्वार्थापक्षेप्येकैकस्य पदस्य विशिष्टार्थे शक्तिस्वीकारः । वाक्यप्रदीपे "पदे वर्णा न विद्यन्ते वृववयवा नच । वाक्यात्पदानामत्यंतं प्रविवेको न कश्चनेति" वाक्यप्रदीपाद्वृत्तावववयवा न चेदिति जहत्स्वार्थाया एव लाभात् । यदपि नच वाक्ये राजपदं व्युत्पन्नं पुनः समासे व्युत्पत्तिमपेक्षते । तावत्येव च प्रतिपाद्यते राजार्थमित्युक्तं तदपि न । "द्विधा कैश्चित्पदं भिन्नं चतुर्द्धा पञ्चधापि वा । अपोद्धृत्यैव वाक्येभ्यः प्रकृति प्रत्ययादिवत्"। इति वाक्यपदीपेन प्रथमवाक्ये एव शक्तिग्रहस्य तदखंडितायाश्च प्रतिपादनात् । राजपुरुषमानय चित्रगुमाह्वयेत्यादौ वाक्येऽवयवभागकल्पनायां राजपुरुषचित्रगुपदे भिन्नं तस्याप्यवयवकल्पनायां राजेति छिन्नं तस्याप्यवयवकल्पनायां राजृकन्निति छिन्नम् । अपोद्धृत्येति वाक्यात्पदानामिति प्रकृतिप्रत्ययादिवदिति स्पष्टमेवोक्तमतः स्वसिद्धांताज्ञानमूलको जहत्स्वार्थावृत्त्यनभ्युपगमः परार्थाभिधानं वृत्तिरिति लक्षणमप्युभयसाधारणमेव परस्य स्वस्मादन्यस्य शब्दस्य योऽर्थस्तस्याभिधानं स्वेनेत्यजहत्स्वार्थापक्षेऽर्थः परस्य स्वार्थादन्यस्य समुदायार्थस्याभिधानं समुदायेनेति जहत्स्वार्थापक्षेऽर्थः । अत एव जहत्स्वार्थाऽजहत्स्वार्थे द्वे द्वे वृत्ती ते पुनस्त्रिधा भेदः संसर्ग एतौ द्वौ वेति वाच्यव्यवस्थितेरिति दैक्षितः सिद्धान्तोपि संगच्छते । स पुनर्वृत्त्यर्थः । संसर्गोभेदः भेदसंसर्गौ वा स्वविशेषस्य स्वामिविशेषेण स्वामिविशेषस्य च स्वविशेषेण यः संबंधः संसर्ग आख्यायते स्वान्तरेभ्यः स्वाम्यंतरेभ्यश्च व्यावृत्तिर्भेद आख्यायते । तत्र संसर्गवादिनः संसर्गः शब्दार्थः व्यावृत्तिरर्थप्राप्ता । न ह्यव्यावर्तमानयोः सम्बन्ध्यन्तरेभ्यः संसर्ग उपपद्यते भेदवादितो हि व्यावृत्तिः शब्दार्थः । संसर्गोर्थगृहीतः । नहि व्यावृत्तस्य संबंध्यंतरेण संबंध्यत्वस्य स्वाम्यादेरेवावस्थानमस्ति । उभयवादिनः उभयं शब्दार्थः । यद्यपि महत्कष्टं श्रित इत्यत्र वाक्ये व्यपेक्षालक्षणोऽन्वयोऽस्ति । वृत्तौ तु नैकार्थीभावः संभवति एकार्थीभावे हि विशेषणसंबंधो न संभवतीत्युक्तम् । कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य वृत्तिः । नात्र गुरुणा

देवदत्तस्य संबंधः किं तर्हि समुदायेन गुरुद्वारकश्च कुलेन संबंध इत्यर्थाद्गुरुणापि योगो भवति । उक्तंच "समुदायेन संबंधो येषां गुरुकुलादिना॥ संस्पृश्यावयवास्तेपि युज्यंते तद्वता सह" इति । यद्वा परिपूर्णार्थस्वान्येन सहैकार्थीभावः स्वार्थपरिपूर्तिश्च संबंधिशब्दस्य प्रतियोगिनेति भवति । तदपेक्षस्यापि वृत्तिः । उक्तं च " संबंधिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते । स्वार्थवत्सा व्यपेक्षास्य वृत्तावपि न हीयते" इति । तार्किकाः वृत्तौ समुदायशक्तिं नांगीकुर्वंति । लक्षणयैव निर्वाहमाहुः । तथाहि राजपुरुष इत्यत्र राजशब्दस्य राजसंबंधिनि लक्षणा । एवं प्राप्तानंदो हरिः । चित्रगुमैत्र इत्यादावन्यपदार्थे लक्षणा । तन्न । लक्षणाया असंभवात् । राजशब्दस्य संबंधे लक्षणासंबंधिनि वा नाद्यः । राजसंबंध इत्यर्थः । न संबंधी । नांत्यः । राज० इति विवरणविरोधात् । षष्ठ्या हि संबंधमात्रमुच्यते न संबंधी । किंच राजशब्दस्यापि कृद्वृत्तित्वेन लक्षणा संभवति । वृत्तौ शक्त्यनंगीकारात् । अथ राजशब्दो योगरूढो नृपतौ स्वीक्रियते । पंकजशब्दवद्यदि तर्हि राजपुरुषशब्दोऽपि राजस्वामिके शब्दे रूढोऽस्तु । नच दृष्टांते कुमुदशुक्त्यादिव्यावृत्तिः फलम् । अत्र तु तदभाव इति वाच्यम् । पितृपितामहपितृव्यमातुलश्वशुरादीनां व्यावृत्तेः सत्त्वात् । नहि तेऽपि सेवकवद्राजपुरुषा इत्युच्यन्ते । यदि तु राजकीया इति व्यवह्रियन्ते इति वक्षि तर्हि कुमुदादावपि पंकोद्भवाः पंकस्था इत्यादिसामान्यव्यवहारोऽस्त्येव । किंच पक्वधनं गायकगेहमित्यत्र यदि धातोः संबंधिनि लक्षणा तर्हि विक्लित्तिसंबंधी गानसंबंधी क्रियाश्रय इत्यर्थः स्यात् । यदि प्रत्ययस्यलक्षणा तर्हि विक्लितिः गानं क्रियाश्रयसंबंधीत्यर्थः स्यात् । तयोरप्येतेऽर्था अनिष्टा एव । इष्टस्तु विक्लित्यनुकूलक्रियाश्रयसंबंधि धनं गानानुकूलक्रियाश्रयसंबंधि गेहमित्यर्थः । धातुप्रत्ययसमुदाये तु लक्षणा नास्ति शक्तिविरहात् । शक्यसंबंधो लक्षणेत्यभ्युपगमात् । तथा प्राप्त आनंदो यं स प्राप्तानंदो हरिरित्यत्र यद्यप्यन्यपदार्थकर्मणि लक्षणा तर्ह्याप्तकर्मक्रियाश्रय आनन्द इत्यर्थः स्यात् । स्याद्यदितूक्तस्य लक्षणा तर्हि आप्तक्रियाश्रयकर्मेत्यर्थः स्यात् । यत्तु आनन्दस्य लक्षणा तर्ह्याप्त्यानुकूलक्रियाश्रय आनंदकर्मेत्यर्थः स्यात् । यदि त्रयाणां लक्षणा तर्ह्याप्तकर्मक्रियाश्रयमानंदकर्मेत्यर्थः स्यात् । सर्वेप्येते निष्ठास्तु आनंदक-

तृप्राप्त्याश्रयो हरिरिति स तु समुदायशक्तिं विना न लभ्यते। तथापि चित्रा गौर्यस्य स चित्रगुरित्यत्र यदि चित्राशब्दस्यान्यपदार्थे लक्षणा। तर्हि चित्रा स्वामि गौरित्यर्थः स्यात्।यदि गौर्लक्षणा तर्हि गोस्वामी चित्रेत्यर्थः स्यात्।यदि द्वयोर्लक्षणा तर्हि चित्रा स्वामी गोः स्वामीत्यर्थः स्यात्। एते सर्वेऽनिष्टा इष्टास्तु चित्राया गौस्तत्स्वामीत्यर्थः। स च समुदायशक्तिं विना नाप्यते। किंच लक्षणापि निरूढा स्वीकार्या। सा च शक्तितो नाममात्रादृते न भिद्यते। उभयोरप्यनादित्वात्। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इतीश्वरवाक्ये पुरुषशब्दस्य शक्तिः सहस्राक्षशब्दस्य तु लक्षणेत्यत्र न विनिगमकमस्ति। अस्माच्छब्दादिममर्थमयं प्रतिपद्यतामित्येवमाकारकाया ईश्वरेच्छाया उभयत्र तुल्यत्वात्। इच्छां विनोच्चरितत्वे भ्रांतवाक्यत्वापत्तेः। "समासो वा भवेद्यत्र स उक्तः प्रथमा ततः" इति समासेनोक्तत्वाभिधानमपि तत्र शक्तिं विना नोपपद्यते। किंच घृतपूर्णः कुंभो घृतकुंभः। गोयुक्तो रथो गोरथः। गुडमिश्रा धानाः गुडधानाः। दधिसिक्त ओदनो दध्योदनः। मालामतिक्रांतोऽतिमालः। कौशांब्या निर्गतो निष्कौशांबिः। शाकप्रियः पार्थिवः शाकपार्थिवः इत्यादौ पूर्णयुक्तादिशब्दानां त्वया लोपो वक्तव्यः। लक्षणया तदर्थलाभसंभवेपि सर्वत्र लक्षणयैवार्थलाभ इति नियामकाभावात्। समासेपि तेषां प्रयोगः प्राप्नोति। ऋद्धस्य राज्ञ इत्यादौ समासवारणार्थं सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणसंयोगो नेति त्वया वचनं वक्तव्यम्। हरिश्च हरश्च हरिहरावित्यत्र च लोपोऽपि वाच्यः मया तु न किमपि वाच्यम्। समासे नोक्तत्वादुक्तार्थानामप्रयोग इति न्यायाद्विशिष्टार्थे एव समासस्य शक्तिस्वीकारात्। शक्तिश्च नेश्वरेच्छादिका तस्या अस्माभिर्ज्ञातुमशक्यत्वात्। परस्याप्रत्यक्षत्वादनुमानादिना तज्ज्ञानसंभवेपि सांख्यमीमांसकादेरीश्वरानंगीकारेण तदिच्छाया असंभवेन शक्तिज्ञानासंभवाच्छाब्दज्ञानाभावप्रसङ्गात्। पशुपक्षिणामपि शक्तिभ्रमाभावेन शाब्दज्ञानाऽप्रसङ्गात्। तस्माद्योग्यतैव शक्तिर्योग्यता चार्थबोधनसामर्थ्यरूपा शब्दनिष्ठा शब्दस्य नित्यत्वेन नित्या च। तदुक्तं वाक्यप्रदीपे॥ "संबंधशब्दे संबंधो योग्यतां प्रति योग्यता॥समयाद्योग्यतासंविन्मात्रा पित्रादियोगवत्॥" इति समयाद्वृद्धानां व्यवहा-

रात्समासे खलु भिन्नैव शक्तिः । पंकजशब्दवदित्यत्र समासपदं वृत्तिमात्रोपलक्षणम् । अवयवशक्त्यपेक्षया अधिकत्वं भिन्नत्वं तस्माद्वृत्तावतिरिक्ता शक्तिः स्थितेति दिक् । अन्वये इति किम् । पश्य कृष्णं श्रितो मैत्रो गुरुं तिष्ठ त्वं शंकुलया खंडोऽसौ ग्राव्णा नमो यूपाय दार्वस्ति गृहे गतश्चौराद्भयमस्य मृत्योः वस्त्रं भार्यायाः पुरुषो राज्ञः । कपटमक्षेषु शौंडो युद्धे वस्त्रमुपगोरपत्यं चैत्रस्य गतः कर्तुं इच्छति भोक्तुं पश्य मुण्डं करोति पटं पश्य कुंभं करोति पापं पश्य गां ददाति वस्त्रं मैत्रस्य शाटी चित्रा गौर्यस्य ते स्तुहि इत्यादि मांच उदाजह्रुः तत्तु व्यपेक्षेवात्र नास्ति । कुतः पुनरेकार्थीभाव इत्यभिप्रायेण नेयम् । वस्तुतस्तु कृष्णं श्रितः दात्रेण छिन्नं यूपाय दारु राज्ञः पुरुष इत्यादीन्येव प्रत्युदाहरणानि व्यपेक्षायाः सत्त्वेपि एकार्थीभावादिति दिक् ॥ **संख्यापूर्वो द्विगुः ।** नाम्नो योऽन्वयः एकार्थीभावः संख्या पूर्वा यस्मिन् स समाससंज्ञो द्विगुसंज्ञश्च । समाससंज्ञाफलं समासप्रत्यययोरिति द्विगुसंज्ञाफलम् । एकत्वे द्विगुद्वंद्वाविति समाहारे द्विगुमुत्तरेण वक्ष्यति । परिशेषादयं तद्धितार्थे । ननूत्तरपदेपि द्विगुरस्ति पञ्च गावो धनमस्येति । मैवम् । तस्य स्वरार्थत्वात् । स्वरस्यात्र व्युत्पादनात् । पंचानां गवां समाहारः पंचगवम् । टाडका इत्यः । तद्धनमस्येति द्विगुगर्भबहुव्रीहिणा गतार्थत्वाच्च । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । चतुरो वेदानधीते चतुर्वेदः । द्वे पुराणे वेत्ति द्विपुराणः । अत्र तद्धितार्थस्य द्विगुनैवोक्तत्वात्तद्धिततद्धितार्थशब्दयोरप्रयोगः । संख्या किम् । पूर्वस्यां शालायां भवः पौर्वशालः । कर्मधारयादण् । पूर्वेति किम् । ऋषिसहस्रं सति द्विगौ ईप्स्यात् । यद्वा संस्कृतादिष्वर्थेष्वणादिः प्रत्ययो विधेयः । तस्य च लुग्बहुत्वे क्वचिदिति लुक् । क्वचिद्ग्रहणादपत्यार्थस्य सादेः प्रत्ययस्य च न लुक् । द्वैमित्रिः । द्वाभ्यां नौभ्यामागतो द्विनावरूप्यः पञ्चगवमयः । नन्वाद्ये पक्षेऽत्र पुरोडाशादेरन्यपदार्थत्वाद्बहुव्रीहिः प्राप्नोति । मैवम् । तद्धितार्थे समाहारे चान्यपदार्थे बहुव्रीहेरदर्शनात् । नाप्राप्तिन्यायेन बाधनात् । द्वयोः पुत्रो द्विपुत्रः । द्वौ च दश च द्वादश । द्वौ पुत्रौ यस्य स द्विपुत्र इत्यादौ परत्वात्तत्पुरुषद्वंद्वबहुव्रीहिसंज्ञा भवति ॥ **समाहारेऽत ईप्द्विगुः ।** अत्र योगत्रयम् । समाहार इति

आद्यः। यदि समाह्रियते इति समाहारशब्दः कर्मार्थको गृह्येत पंचाग्नयः।समाहृता इति च विगृह्येत । तदा समाह्रियमाणानां बहुत्वाद्बहुवचनं प्राप्नोति । तदा समाहारे द्विगुरेकार्थ इति वचनं कर्तव्यं स्यादतः समाहार इति भावार्थकः समाहारशब्दो गृह्यते । तस्य भावस्य च एकत्वादेकवचनमेव भवति । एकत्वे एव द्विगुद्वंद्वावित्यत्रायमेव गृह्यते । सर्वं वाक्यं सावधारणमिति न्यायेन एकत्व इति विशेषणोपादानाद्वा । एकत्व एव यो द्विगुरिति हि तदर्थः । तद्धितार्थः द्विगुस्तु नैवमनेकार्थत्वादतः स विशेषनिघ्न एव । औत्तराधर्य्यम् । राशीकरणं च समाहारः । पंचानामग्नीनां समाहारः पंचाग्नि । दशधेनु ।अष्टसमित् । ननु पंचाग्निनी पंचाग्नीनीति किं न भवति च कथं पंचाग्नि च पंचाग्नि च पंचाग्निनी । आदेश्च द्वंद्व इति आदेर्लोपः पंचाग्नि च पंचाग्नीनि अत ईबिति द्वितीयो योगः । द्विगुरित्यनुवृत्तं पञ्चम्या परिणम्यते । मंडूकप्लुत्यावतः स्त्रियामित्यतः स्त्रियामित्यनुवर्तते । वोर्गुणादित्यतो वेति च अत इति द्विगोर्विशेषणात्तदंतविधिः । अदंताद्विगोः स्त्रियामाब्वा स्यात् । विकल्पश्च व्यवस्थितः । पात्रयुगभुवनाद्यंतादपरिमाणांताद्विस्ताचितकंबल्यांताच्च न प्रमाणपुरुषकांडाताद्वा पंचानां ग्रामाणां समाहारः पंचग्रामी । पंचानां कंबलानां समाहारः पंचकंबली । पंचानामश्वानां समाहारः पञ्चाश्वी। पञ्चद्रोणी । पंचपणी । पंचशाणी । पंचसुवर्णी । पंचनिष्की । दशग्रामी । त्रिलोकी । ननु विप्रकीर्णानामेकत्र राशीकरणं समाहारार्थः स च दशानां माणां न संभवति, न एकत्र क्रियाणां समन्वयात् । अन्यदेशानामपिबुद्ध्या राशीकरणस्य संभवात्एकापूपं ददद्नेकं मन्वानः श्रद्धातिशयादपूपमहत्त्वाद्वा एकस्मिन् क्रियमाणं संभ्रममेकस्मिन्नपि करोतीत्यारोपितबहुत्वाश्रये समाहारे द्विगुः । द्वाभ्यामाढकाभ्यां क्रीताद्व्याढकीत्यादौ पूर्वेण विहितादप्यनेनेप् द्विगुरिति तृतीयो योगः । अत इत्यनुवृत्तं प्रथमया परिणम्यते । स्त्रियां च वेति चानुवर्तते । आबिति न । इति अनंतोत्तरपद आबंतोत्तरपदश्च द्विगुरदंतो भवति स्त्रियां च वा । अनो न लोपो भवति । आपश्च ह्रस्व इत्यर्थः । पंचानां तक्ष्णां समाहारः पंचतक्षी । पंचतक्षम् द्विमूर्द्धी द्विमूर्द्धम् । द्विदामी द्विदामम् । पञ्चप्रियपज्वी पंचप्रियपज्वम् । पंचप्रिय[illegible] पंच[illegible]जम् ।

सप्तखटी सप्तखट्वम् । त्रिविधी त्रिविधम् । त्र्यवयवा विद्या तामधीते त्रैविद्यः । कर्मधारयादण् त्र्यवयवो लोकस्तस्य नाथः । नवावयवको रसो नवरसः। तेन रुचिरा नवरसरुचिरा । समाहारे तु नवरसी । ननु च समाहारः समूहः । सच तद्धितार्थे भवति अतोऽपार्थकं समाहारग्रहणं तद्धितार्थ इत्येव सिद्धत्वात् । नैतदस्ति । पञ्चकुमारीत्यत्र समूहप्रत्ययस्य द्विगोर्लुगनपत्ये इति लुकि कृते लुक् । तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक् स्यात् । समाहारस्य पृथग्ग्रहणे सति तद्धितानुत्पत्तिरेवाख्यायत इति नैष दोषः इति प्राञ्चः। ननु तद्धितानुत्पत्तिपक्षे पञ्चेन्द्र इत्यादौ कथं स्त्रीप्रत्ययनिवृत्तिः । उच्यते। स्त्रीप्रत्ययान्तस्यैव तद्धितार्थवृत्तौ स्वार्थस्त्रीत्वस्य लिंगान्तरवृत्त्या निवृत्त अकृतव्यूहपरिभाषया निमित्तापायन्यायेन चास्त्रीप्रत्ययनिवृत्तिः । ननु तर्हि, पंचकुमारीशब्दस्यापि समाहारार्थवृत्तौ स्त्रीप्रत्ययनिवृत्तिः । स्यान्नैवम् उक्तप रिभाषाद्वयस्यान्यार्थे इति ज्ञापकादनित्यत्वात् । अतिगङ्ग इत्यादावकुरीत्या निवृत्तौ किं तेन।इत्थं हि समाहारग्रहणं व्यर्थम्।तद्धितग्रहणेनैव सिद्धत्वात्पंचकुमारीत्यानेयो निवृत्तिः । नव्यास्तु समूहसमाहारशब्दयोर्नैकार्थता समूहपर्याये समाहारस्याग्रहणप्रवृत्तिनिमित्तभेदाच्च । शुकानां समूह इत्यत्र शुकसंबंधी समूहो द्रव्यं प्रतीयते न क्रिया । पंचानामग्नीनां समाहार इत्यत्र तु अग्निकर्मकं समाहरणं क्रियाप्रवृत्तिनिमित्तं प्रतीयते न द्रव्यम् । प्रवृत्तिनिमित्तभेदे च पर्यायता न सम्भवति । नहि घट इत्यस्य घटनपर्याय इत्याहुः । एतेन समाहारस्य समूहरूपत्वात्तस्य च भेदनिबंधनत्वाद्भेदस्य संख्ययैव वाच्यत्वात्संख्यापूर्वपद एवायं द्विगुर्भवतीति माधवोक्तिः प्रत्युक्ता । भेदस्य संख्ययैव वाच्यत्वादित्यपि तुच्छम् । अयमस्मात्पृथक् घटः पटादन्यः घटः पटो नेत्यादौ संख्या विनापि भेदप्रतीतेः । भूरीणां पुत्रीणाम् । उभयोः पुत्रयोः तावतां पुत्राणां वा समाहार इत्यादौ संख्या विनापि तत्प्रतीतेः । यदपि संख्यापूर्वो द्विगुरिति क्वाचित्कोपपाठ इति माधवोक्तं तुच्छम् । द्वाभ्यामाढकाभ्यां क्रीता द्व्याढकीत्याद्यसिद्धापत्तेः । द्विगुं विना ईपो लाभात् । तव मते समाहारं विना द्विगुत्वाभावात् । परैरपि संख्या पूर्वो द्विगुरुदिति सूत्रणाच्च । ननु स्त्रियामित्यधिकारेण त्रण ईबित्यस्यानंतरं द्विगोरिति सूत्र्यताम् । मात्राला-

घवेऽपि प्रकरणशुद्धेः सत्त्वात् स्त्रीत्वालाभार्थमी ईबिति विभज्य ईर्भवति । स च ईपूरूपेणार्थेन चेत् तुल्यो यथा ईप् स्त्रियां भवति एवमीः प्रत्ययोपि स्त्रियां स्यादित्यादिक्लेशो न कर्तव्यः स्यादिति चेन्न । अनो नलोपः आबंतो वेति वक्तव्यापातात्।अत्र पाठे तूक्तरीत्या सर्वं सामंजस्यादिति दिक्।**इति द्विगुः॥**

**पूर्वेऽव्ययेऽव्ययीभावः ॥** नाम्नोरन्वये सति अव्यये पूर्वपदे सति समाससंज्ञा स्यादव्ययीभावसंज्ञा च। पूर्वग्रहणादेवाव्ययस्य पूर्वनिपातोऽन्यथाऽव्यय इत्येव सिद्धे किं तेन । यदि सप्तमीनिर्दिष्टे शब्दे पूर्व एव कार्यमित्युच्यते तर्हि पूर्वग्रहणं व्यर्थं स्यात् । तज्ज्ञापयति । सप्तमीनिर्दिष्टे परस्मिन्नेव कार्यं भवतीति।न च सप्तमीनिर्दिष्टे परस्मिन्पूर्वस्मिंश्च सति कार्ये प्राप्ते पूर्वस्मिन्नेवेति नियमार्थमिति वाच्यम्।सूत्रार्थवैरूप्यापत्तेः। नहि एकस्मिन्वाक्येऽर्थद्वयं संभवति । अत्र संख्यापूर्वः समाहार इत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । संख्यापूर्वो नदीवाचिनां समाहारोऽव्ययीभावसंज्ञ इति । पंचानां नदीनां समाहारः पंचनदम् । अत्र समासात्प्रागेव प्रत्यये पश्चादव्ययीभावाद्विभक्तेरम् सिध्यति । एवं सप्तगोदावरम् । सप्तगंगम् । द्वियमुनम् । अमादाविति योगो विभजनीयः । अम् आदिरिति पञ्चमीसमासः । प्रथमेति यावत् । अम् आदिर्यस्येत्यमादिर्द्वितीयादिः । प्रथमान्ते द्वितीयान्ते च पूर्वे नाम्नोरव्ययीभावः समासो भवति । उन्मत्ता गंगा यस्मिन्नुन्मत्तगंगं देशः । अत्र योग विभागसामर्थ्याद्बहुव्रीहिर्बाध्यते । पारे गंगायाः पारेगंगम् । मध्ये गंगायाः मध्येगंगम् । सहादित्वादेत्वम् । तिष्ठंति गावो यस्मिन्काले तिष्ठद्गु । वहद्गु । आयतीगवम् । इत्यादिः सहादिः । खलेयवम् । खलेबुसम् । ङेरलुक् । एकेन विपरीतं वृत्तमेकपरि । द्विपरि । विपरीतं वृत्तमित्यस्य समासे तदभावादप्रयोगः । शाकस्य लेशः शाकप्रति।द्वौ मुनी वंश्यौ द्विमुनि । त्रिमुनीत्यादि।

**अवधारणार्थे यावति च॥** पूर्वेणैव सिद्धे नियमार्थमिदम् । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे ' इति यावच्छब्दस्यानेकार्थत्वादवधारणे एव समास इति । यावंतः श्लोकाः यावच्छ्लोकं जुहोति । यावद्वेदं नमति। यावदमत्रमामंत्रयते । तद्धितांतेन विग्रहः । समासस्त्वव्ययेनेत्यस्वपदविग्रहोयम् अवधारणे किम् । यावद्दत्तम् । तावद्भुक्तम् । नावधारयामि कियन्मया भुक्त-

मिति । **यथाऽसादृश्ये ॥** शब्दस्याप्यव्ययत्वात्पूर्वेऽव्यय इत्यव्ययीभाव-सिद्धेः सादृश्यनिषेधार्थमिदम् । अत एवासादृश्ये इत्यकारप्रश्लेषः । संदेहार्थं सादृश्ये यथेत्यनिर्देशाच्च । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। तत्र योग्यता नामानुरूपता । यथा रूपस्य योग्यं यथारूपम्।वीप्सा-नाम पदार्थानां व्याप्तुमिच्छा । यथा विष्णुं प्रति यथाविष्णु । पदार्थानति-वृत्तिनाम पदार्थानतिक्रमः । यथा शक्तिमनतिक्रम्य यथाशक्ति । सादृश्ये किम् । यथा हरिस्तथा हरः। इत्यव्ययीभावः॥**अमादौ तत्पुरुषः॥**अम् द्वितीयैकवचनं गृह्यते। न तु अमो गत्यादिकर्तृवाची । आदिशब्दस्य व्यव-स्थार्थत्वात् । अम् आदिर्यस्य स अमादिः प्रत्ययः सुप्पर्यंतः । समुदायस्य तिरोहितावयवभेदस्यान्यपदार्थत्वेनाश्रयणात् एकवचनम् । इह पूर्वे इत्य-नुवर्तते । तत्र प्रत्ययमात्रस्य पूर्वत्वासम्भवात् । प्रत्ययग्रहणपरिभाषया वा-माद्यंतमिहामादिशब्देन गृह्यते । द्वितीयाद्यंते पूर्वपदे सति यो नाम्नो ऽन्वयः स समाससंज्ञस्तत्पुरुषसंज्ञश्च स्यात् । ग्रामं प्राप्तो ग्रामप्राप्तः । दात्रेण च्छिन्नो दात्रच्छिन्नः। यूपाय दारु यूपदारु । चोराद्भयं चोरभयम् । राज्ञः पुरुषो राज-पुरुषः। अक्षेषु शौंडः अक्षशौंडः।ईश्वरेऽधीनः ईश्वराधीनः । स्वार्थे इनः । ननु प्राप्तग्रामः आपन्नजीविक इत्याद्यपीष्यते तत्कथं सिध्यति । उच्यते । क्वचि-दमाद्यंतस्य परत्वाश्रयणात् । तच्चांत्यस्वरादिष्टिरिति ज्ञापकासिद्धम् । पिप्प-ल्या अर्द्धम् । अर्द्धपिप्पली।दंतानां राजा राजदंतः । ऋच अर्द्धम् अर्द्धर्चः। अर्द्धनावम् । टाडकाः। इत्यः । व्यपेक्षापक्षे तु वाक्यम् । ननु तत्पुरुष इति संज्ञा किमनया तया व्यवहारस्तु नास्ति । उच्यते । संज्ञाविधानबलाद्व्य-वहारोऽनुमातव्यः । तथाहि । परवल्लिंगं द्वंद्वतत्पुरुषयोः । तत्पुरुषो ह्युत्तर-पदप्रधानः । प्रधानतो लिंगवचनानि भवंतीति वचनं विनैव सिद्धम् । यस्तु पूर्वपदार्थप्रधानस्तत्पुरुषस्तत्र पूर्वपदस्येव लिंगे प्राप्तेऽनेन परपदस्येव लिंगं विधीयते । पिप्पल्या अर्द्धम् अर्द्धपिप्पली । कायस्य पूर्वं पूर्वकायः।ज्ञापकसिद्धं न सर्वत्रेति सिद्धांतः । प्राप्तापन्नालंप्रादिपूर्वसमासेन । प्राप्तजीविकः । आपन्न-जीविकः । अलंकुमारिः । निष्कौशाम्बिः । उपज्ञोपक्रमान्तस्तत्पुरुषस्तयोः प्राथम्यविवक्षायां क्लीबम् । वाल्मीक्युपज्ञं रामायणम् । नंदोपक्रमं द्रोणः ।

छायांतस्तत्पुरुषः। पूर्वपदार्थबाहुल्ये क्लीबम्। इक्षुच्छायम्। सेनासुराछाया-शालानिशांतोवेत्यादि नञि नञर्थनिपातो गृह्यते न प्रत्ययः। अधाविति ज्ञापकात्। नह्यत्र नञ्प्रत्ययः संभवति नञि पूर्वपदे सति नाम्नो य एकार्थीभावः स समाससंज्ञस्तत्पुरुषसंज्ञश्च स्यात्। नञ् द्विविधः पर्युदासार्थः प्रसज्यप्रतिषेधार्थश्च। आद्यस्य एकार्थीसमासः। व्यपेक्षायां वाक्यं तत्र चोत्तरपदेन नञोऽन्वयो न क्रियया।द्वितीयस्य तु क्रियायामेवान्वयो न नाम्ना।अनन्वयेपि क्वचित् नाम्ना समासः। इण्तन्यकर्तरीति ज्ञापकात्। कर्तरि न भवतीति तदर्थात्। तेन असूर्यं पश्यानि मुखानि। अपुनर्गेयाः श्लोकाः। अश्राद्धभोजी ब्राह्मण इत्यादि सिध्यति। इहाब्राह्मणादिशब्दः क्षत्रियाद्यभिधानमिष्यते तत्र जातिमात्रपरे ब्राह्मणशब्दे न विद्यते ब्राह्मण्यं यस्याऽसावब्राह्मणः क्षत्रियादिरित्यन्यपदार्थप्रधानः समासो भवति।तत्र नामापि बहुव्रीहावारंभादनेन तस्य बाधनादब्राह्मणको देश इत्यादि न सिध्यति। नहि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देषु अयं समासो न तद्वन्निष्ठेषु इति नियामकमस्ति। इह चाचार्याः हेमंत इति हेमंतस्य यद्वचनं तत्समासस्य प्राप्नोति लिंगे तु परवल्लिंगमिति वचनाद्दोषाभावः। इह च असर्वस्मै इत्युत्तरपदार्थस्योपसर्जनत्वात्पदादिकार्यं सर्वादिकार्यं न स्यात्। यदा तु असत् सामान्ये वर्तमानो नञ् ब्राह्मणादिभिर्विशिष्यते ब्राह्मणत्वेनासत् रूपान्तरेण तु सत् क्षत्रियादिरब्राह्मण इति तदा पूर्वपदार्थप्रधानः। तत्र नञर्थस्य प्राधान्यात् संख्यायोगः समासस्य न स्यात्। वाचनिकी तु परवल्लिंगता भवतु।स्यादेतत्। शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थं वाक्ये नञाचष्टे।समासे तु सत्त्वरूपं तेन सिद्धः। संख्यायोग इति एवमप्यपवादेनाव्ययीभावस्य बाधादमाक्षिकमित्यादि न सिध्यति। तस्य तु निर्मक्षिकमित्यादिरवकाशः। असः। असर्वस्मै इति च पूर्ववत्स्मड़ाद्यसिद्धिः। अस्तु तर्ह्युत्तरपदार्थप्रधानः। यद्येवमब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति। यद्युत्तरपदार्थप्रधानता तत्र हेतुः। इहापि तर्हि नञ् विशेषकः प्रयुज्यते कथं नञ्नामाविशेषकः स्यात्।अनियतगुणविशेषप्रतिपादनाय हि विशेषणं प्रवर्त्तते न तदुपघाताय। नञा च ब्राह्मणार्थः प्रतिषिध्यमानः सर्वात्मना प्रतिषिध्यते इति कथमसतः प्राधान्यं स्यात् तस्मादुत्तरप-

मिति । **यथाऽसादृश्ये ॥** शब्दस्याप्यव्ययत्वात्पूर्वेऽव्यय इत्यव्ययीभाव-
सिद्धेः सादृश्यनिषेधार्थमिदम् । अत एवासादृश्ये इत्यकारप्रश्लेषः । संदेहार्थं
सादृश्ये यथेत्यनिर्देशाच्च । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि
यथार्थाः। तत्र योग्यता नामानुरूपता। यथा रूपस्य योग्यं यथारूपम्।वीप्सा-
नाम पदार्थानां व्याप्तुमिच्छा । यथा विष्णुं प्रति यथाविष्णु । पदार्थानति-
वृत्तिनाम पदार्थानतिक्रमः । यथा शक्तिमनतिक्रम्य यथाशक्ति । सादृश्ये
किम्। यथा हरिस्तथा हरः। इत्यव्ययीभावः॥**अमादौ तत्पुरुषः॥**अम्
द्वितीयैकवचनं गृह्यते। न तु अमो गत्यादिकर्तृवाची । आदिशब्दस्य व्यव-
स्थार्थत्वात् । अम् आदिर्यस्य स अमादिः प्रत्ययः सुप्पर्यंतः । समुदायस्य
तिरोहितावयवभेदस्यान्यपदार्थत्वेनाश्रयणात् एकवचनम् । इह पूर्वे इत्य-
नुवर्तते । तत्र प्रत्ययमात्रस्य पूर्वत्वासम्भवात् । प्रत्ययग्रहणपरिभाषया वाऽ-
माद्यंतमिहामादिशब्देन गृह्यते । द्वितीयाद्यंते पूर्वपदे सति यो नाम्नो ऽन्वयः
स समाससंज्ञस्तत्पुरुषसंज्ञश्च स्यात् । ग्रामं प्राप्तो ग्रामप्राप्तः । दात्रेण च्छिन्नो
दात्रच्छिन्नः। यूपाय दारु यूपदारु । चोराद्भयं चोरभयम्। राज्ञः पुरुषो राज-
पुरुषः। अक्षेषु शौंडः अक्षशौंडः।ईश्वरेऽधीनः ईश्वराधीनः। स्वार्थे इनः । ननु
प्राप्तग्रामः आपन्नजीविक इत्याद्यपीष्यते तत्कथं सिध्यति । उच्यते । क्वचि-
दमाद्यंतस्य परत्वाश्रयणात् । तच्चांत्यस्वरादिष्टिरिति ज्ञापकासिद्धम् । पिप्प-
ल्या अर्द्धम् । अर्द्धपिप्पली।दंतानां राजा राजदंतः । ऋच अर्द्धम् अर्द्धर्चः ।
अर्द्धनावम् । टाडकाः। इत्यः । व्यपेक्षापक्षे तु वाक्यम् । ननु तत्पुरुष इति
संज्ञा किमनया तया व्यवहारस्तु नास्ति । उच्यते । संज्ञाविधानबलाद्व्य-
वहारोऽनुमातव्यः । तथाहि । परवल्लिंगं द्वंद्वतत्पुरुषयोः । तत्पुरुषो ह्युत्तर-
पदप्रधानः । प्रधानतो लिंगवचनानि भवंतीति वचनं विनैव सिद्धम् । यस्तु
पूर्वपदार्थप्रधानस्तत्पुरुषस्तत्र पूर्वपदस्येव लिंगे प्राप्तेऽनेन परपदस्येव लिंगं
विधीयते। पिप्पल्या अर्द्धम् अर्द्धपिप्पली । कायस्य पूर्वं पूर्वकायः।ज्ञापकमिदं
न सर्वत्रेति सिद्धांतः । प्राप्तापन्नालंप्रादिपूर्वसमासेन । प्राप्तजीविकः । आपन्न-
जीविकः । अलंकुमारिः । निष्कौशाम्बिः । उपज्ञोपक्रमान्तस्तत्पुरुषस्तयोः
प्राथम्यविवक्षायां क्लीबम् । वाल्मीक्युपज्ञं रामायणम् । नंदोपक्रमं द्रोणः ।

छायांतस्तत्पुरुषः। पूर्वपदार्थबाहुल्ये क्लीबम्। इक्षुच्छायम्। सेनासुराछाया-शालानिशांतोवेत्यादि नञि नञर्थनिपातो गृह्यते न प्रत्ययः। अधाविति ज्ञापकात्। नह्यत्र नञ्प्रत्ययः संभवति नञि पूर्वपदे सति नाम्नो य एकार्थीभावः स समाससंज्ञस्तत्पुरुषसंज्ञश्च स्यात्। नञ् द्विविधः पर्युदासार्थः प्रसज्यप्रतिषेधार्थश्च। आद्यस्य एकार्थीसमासः। व्यपेक्षायां वाक्यं तत्र चोत्तरपदेन नञोऽन्वयो न क्रियया।द्वितीयस्य तु क्रियायामेवान्वयो न नाम्ना।अनन्वयेपि क्वचित् नाम्ना समासः। इणूतन्यकर्तरीति ज्ञापकात्। कर्तरि न भवतीति तदर्थात्। तेन असूर्यं पश्यानि मुखानि। अपुनर्गेयाः श्लोकाः। अश्राद्धभोजी ब्राह्मण इत्यादि सिध्यति। इहाब्राह्मणादिशब्दः क्षत्रियाद्यभिधानमिष्यते तत्र जातिमात्रपरे ब्राह्मणशब्दे न विद्यते ब्राह्मण्यं यस्याऽसावब्राह्मणः क्षत्रियादिरित्यन्यपदार्थप्रधानः समासो भवति।तत्र नामाप्ते बहुव्रीहावारंभादनेन तस्य बाधनादब्राह्मणको देश इत्यादि न सिध्यति। नहि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देषु अयं समासो न तद्वन्निष्ठेषु इति नियामकमस्ति। इह चाचार्याः हेमंत इति हेमंतस्य यद्वचनं तत्समासस्य प्राप्नोति लिंगे तु परवल्लिंगमिति वचनाद्दोषाभावः। इह च असर्वस्मै इत्युत्तरपदार्थस्योपसर्जनत्वात्पदादिकार्यं सर्वादिकार्यं न स्यात्। यदा तु असत् सामान्ये वर्तमानो नञ् ब्राह्मणादिभिर्विशिष्यते ब्राह्मणत्वेनासत् रूपान्तरेण तु सत् क्षत्रियादिरब्राह्मण इति तदा पूर्वपदार्थप्रधानः। तत्र नञर्थस्य प्राधान्यात् संख्यायोगः समासस्य न स्यात्। वाचनिकी तु परवल्लिंगता भवतु।स्यादेतत्। शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थं वाक्ये नञाचष्टे।समासे तु सत्त्वरूपं तेन सिद्धः। संख्यायोग इति एवमप्यपवादेनाव्ययीभावस्य बाधादमाक्षिकमित्यादि न सिध्यति। तस्य तु निर्मक्षिकमित्यादिरवकाशः। असः । असर्वस्मै इति च पूर्ववत्स्मट्टाद्यसिद्धिः। अस्तु तर्ह्युत्तरपदार्थप्रधानः। यद्येवमब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति। यद्युत्तरपदार्थप्रधानता तत्र हेतुः। इहापि तर्हि नञ् विशेषकः प्रयुज्यते कथं नञ्नामाविशेषकः स्यात्।अनियतगुणविशेषप्रतिपादनाय हि विशेषणं प्रवर्त्तते न तदुपघाताय। नञा च ब्राह्मणार्थः प्रतिषिध्यमानः सर्वात्मना प्रतिषिध्यते इति कथमसतः प्राधान्यं स्यात् तस्मादुत्तरप-

दार्थप्राधान्यमिच्छताऽस्मिन् विषये नञनर्थकोऽन्वाख्यानसामर्थ्यात्तु साधुत्वमेति भूतस्यार्थवदनर्थकावयवस्य समासस्येति वाच्यम्।ततश्च ब्राह्मणमात्रस्यानयनं प्राप्नोति । नैष दोषः । निवृत्तपदार्थकोऽत्र ब्राह्मणशब्दः सा च निवृत्तिः स्वाभाविकी नञा द्योत्यते।कोर्थः। केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशान्मुख्यमेव ब्राह्मणमाचष्टे । नञ्प्रयोगेण तु क्षत्रियादौ सादृश्यादिना निमित्तेनाध्यारोपितं ब्राह्मण्यं न तात्त्विकमिति द्योत्यते ।तदेवं मुख्यो ब्राह्मणशब्दार्थो निवृत्तौ न त्वमुख्यः। क्षत्रियादिरिति न ब्राह्मणमात्रस्यानयनं नापि कस्यचिदानयनमिति सिद्धम् । उक्तं च । " प्राक्समासात्पदार्थानां निवृत्तिर्द्योत्यते नञा । स्वभावतो निवृत्तानां रूपाभेदादलक्षिता " इति ॥ दीक्षिताश्चाहुः।"आरोपितं नञ्द्योत्यं न ह्यसर्वोऽतिसर्ववत्"इति। अब्राह्मणशब्दादारोपितो ब्राह्मण इति बोधे अर्थाद्ब्राह्मणभिन्न इति पर्यवस्यतीति च । स्यादेतत् । अर्थप्रत्ययनाय शब्दः प्रयुज्यते । ब्राह्मणाच्चेन्निवृत्तः किं मुधा ब्राह्मणपदं प्रयुज्यते । तन्न । असति ब्राह्मणपदे नेत्येतावत्युच्यमाने कस्यार्थोत्र निवर्त्तयितुमिष्ट इति न ज्ञायते । ब्राह्मणपदे तु सति तदर्थस्य क्षत्रियादौ मुख्यसत्ताविरहः प्रतीयते । यद्वा सर्वे एते शब्दा गुणसमुदाये वर्तते। स्मर्यते च " तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारणम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः" इति । गौरः शुच्याचारः पिंगलकेश इत्यादयश्च धर्माः तदेषां समुदाये ब्राह्मणशब्दः । एवं क्षत्रियादिशब्देष्वपि द्रष्टव्यम्। एवं स्थिते समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तंत इति न्यायात् जातिहीने गुणहीने वा यदा ब्राह्मणशब्दो वर्तते तदा स्वाभाविकी जातिगुणनिवृत्तिर्नञा द्योत्यतेऽवशिष्टांशसद्भावप्रतिपादनाय ब्राह्मणशब्दप्रयोगः। यद्येवं द्वयोरपि भिन्नविषयत्वप्रसङ्गः।कथम्। यस्यांशस्य सद्भावं ब्राह्मणशब्द आह तस्याभावं नञाह। यस्य चाभावं नञाह न तस्य सद्भावं ब्राह्मणशब्द आह। नैष दोषः । द्वावप्येतौ समुदायावलंबिनौ कृताकृतवत्। तद्यथा एकदेशकरणाभ्यामेकमेव वस्तु कृतं चाकृतं भवति । तथेहाप्येकदेशविगमात्समुदाय एव निवृत्त उच्यते । एकदेशसद्भावाच्च । स एव सन्नभिधीयत इति सर्वमनवद्यम्।यद्वाऽभावो नञर्थः। अब्राह्मण इत्यस्य ब्राह्मणभिन्ने ब्राह्मणत्वाभाववान्वाऽर्थः । नचैवमसर्वस्मै

अस इत्यादौ नञर्थे उत्तरपदार्थस्योपसर्जनत्वात्सर्वादित्यदादिकार्यं न स्यादिति वाच्यम्। अचतुर्णामिति ज्ञापकात्। नह्यत्र संख्याया उपसर्जनत्वे रः संख्याया इति नुट् लभ्येत । इहानेको जन आगत इति द्व्यादिष्वेकत्वमारोपितं प्रतीयते। मुख्यं तु प्रतिषिध्यते। क्षत्रियादाविव ब्राह्मण्यमित्येकवचनमेव भवति । द्व्यादिसंख्या च प्रतीयते । तदेवमुत्तरपदार्थप्रधान इति स्थितम् । कथं तर्हि "पतंत्यनेके जलधेरिवोर्मयः"इति । उच्यते। अध्यारोपितैकत्वानां प्रकृत्यर्थतया तत्र वास्तवं बहुत्वाभिप्रायं वचनम् । यद्वा समुदायबहुत्वे बहुवचनं रथोऽश्वो गजश्च प्रत्येकमनेकस्ततोऽनेकश्चानेकश्चेत्यादिलोपात् । केचित् "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः"इति पठित्वा अब्राह्मणः अनश्वः अनुदरा कन्या अपशवो वान्ये गोअश्वेभ्यः अधर्म इत्युदाहरंति । तत्तु आर्थिकार्थकथनपरत्वेन नेयम् । अविघ्नमित्यादौ नञर्थप्राधान्येऽव्ययीभावः। अनुपलब्धिः अविवाद इत्यादौ तूत्तरपदार्थप्राधान्ये तत्पुरुष इति विभागः।प्रसज्यप्रतिषेधे तु नञः क्रिययैवान्वयः। त्वं पचसि । युवां पचथ इत्यादौ नञ्समभिहारे क्रियाया एव भेदप्रतीतेरनुभवसिद्धत्वात् भवति प्रयोगेपि तथैव न्याय्यत्वात्। घटो नास्ति।घटौ न स्तः। अहं तत्र नास्मीत्यादौ वचनपुरुषव्यवस्थादर्शनाच्चेति दिक् । **चार्थे द्वंद्वः॥** चस्यार्थश्चार्थस्तस्मिंश्चान्वाचयसमाहारेतरेतरसमुच्चये इति चार्थो न भेदः । यदा परस्परनिरपेक्षाःपदार्था एकस्मिन्सम्बधिनि समुच्चीयंते तदा समुच्चयः । यथाअहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदः" इति । दुर्मदो यथा सुराया न तृप्यति तथा यमो गवादीन्नयमान इत्यर्थः । अत्र नयतिक्रियायामेकस्यां गवादीनां समुच्चयः।गम्यमानत्वात्तु चशब्दस्याप्रयोगः। एवं राज्ञो गौश्चाश्वश्चेति द्रव्ये द्रव्ययोः पटो रक्तः शुक्लश्चेति गुणयोः रक्तः पटः कंबलश्चेति गुणे द्रव्ययोः समुच्चयः।यदा त्वेकस्य प्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदान्वाचयः। यथा भिक्षामट गां चानयेति । अत्र ह्यदर्शनादनानयन्नपि गाम्। अटत्येव भिक्षाम् । अनटंस्तु भिक्षां तु गामानयत्यटन्नपि नान्विष्य गामानयति । इतरेतरयोगस्तु परस्परसापेक्षाणामवयवभेदानुगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सति भवति । यथा देव-

दत्तयज्ञदत्ताभ्यामिदं कार्यमिति। नह्येकाकार्यंतितद्भवति उद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने भवतः। तादृशानामेवावयवभेदतिरोधानेन संहतिरूपेणान्वये तु समाहारः। यथा छत्रोपानहमिति संहतिप्रधानत्वात्त्वेकवचनः। समुच्चये परस्परानपेक्षत्वेपि गवादीनामेकक्रियाद्वारकं सामर्थ्यं दध्योदनादिवदस्त्येवेति। तन्न युक्तम्। दध्योदनादावेकत्वात्क्रियायाः। इह तु कर्मभेदात्क्रिया भिद्यते। भ्राष्ट्रमट मरुमटेत्यादौ भेदेनाटनभेदः। अन्वाचये त्वप्रधानमेव चार्थे वर्तते न प्रधानपदमिति। अनेकस्य चार्थे प्रवृत्त्यभावादपि समासाभावः। चार्थे वर्तमानयोर्नाम्नोर्नाम्नां च य एकार्थीभावः स समाससंज्ञो द्वंद्वसंज्ञश्च स्यात्। नाम्नामिति बहुवचननिर्देशो द्वंद्वबहुव्रीह्यर्थः। अन्यत्र तु द्वयोरेव समासः। रामश्च कृष्णश्च रामकृष्णौ। धवखदिरपलाशाः। समासेनोक्तार्थत्वाच्च शब्दाप्रयोगः। चशब्दस्याव्ययत्वेपि तदर्थे विधीयमानस्य द्वंद्वस्वभावादेव लिंगसंख्यायोगः कर्तृकार्ययोरित्यादिनिर्देशाच्च। अजहत्स्वार्थया चैकैकस्यानेकार्थाभिधायित्वमभ्युपेयमन्यथा गार्ग्यश्च वात्स्यश्च बैदश्च ते गर्गवत्सबिदाः। कौत्सश्च वाज्यश्च काश्यपश्च कुत्सवाजकश्यपाः। आत्रेयश्च भार्गवश्च वसिष्ठश्च अत्रिभृगुवसिष्ठाः इत्यादि न सिध्येत्। अपत्यबहुत्वे उत्पन्नस्य प्रत्ययस्यापत्यबहुत्वे वर्तमानस्य नाम्नोऽवयवस्य वा लुग्विधानादत्र तद्भावात्। जहत्स्वार्थायां तु अपत्यबहुत्वे वर्तमानस्य नाम्नोऽवयवस्यापत्यप्रत्ययस्य लुक् स्यादिति सूत्रार्थः। समुदायस्यापत्यबहुत्वे वर्तमानात्तदवयवस्य लुक्सिध्यति। अपत्यबहुत्वे किम्। काश्यपस्य प्रतिकृतयः। केनेयेका इति कः। लुग्बहुत्वे क्वचिदिति लुक्। काश्यपाः। प्रतिबहुत्वमत्र। एवं प्रियः गार्ग्यो येषां ते प्रियगार्ग्याः। अन्यपदार्थबहुत्वमत्र गार्ग्यश्च वात्स्यश्च देवदत्तश्च गार्ग्यवात्स्यदेवदत्ताः। अपत्यानपत्यबहुत्वेष्वपत्यबहुत्वम्। बहुत्वे किम्। गौतमश्च गालवश्च गौतमगालवौ। क्वचित्किम्। गार्ग्यकाश्यपगालवाः। और्वकौत्सदाक्षयः। पंडितो रामश्च कृष्णश्च सुंदर इत्यत्रेव विशेषणान्वयो न रामकृष्णौ इत्यत्र चशब्दप्रयोगः स्यादित्यत्रैव। केचित्तु भेदे द्वन्द्व इत्याहुः। तत्रेदं प्रष्टव्यम्। भेदे वस्तुतोसति वाच्येवेति। आद्येऽपि पदार्थभेदे सति उत्तरपदार्थतावच्छेदकभेदे सति। नाद्यः। राजपुरुषः अक्षशौंड इत्यादावतिप्रसङ्गात्।

द्विविधस्यापि भेदस्य सत्त्वात् । सति च द्वंद्वे एकत्वे द्विगुद्वंद्वाविति क्लीबता स्यात् । खंजपटुः । कुब्जकुणिरित्यत्र पदार्थतावच्छेदकभेदस्य सत्वाद्द्वन्द्वः स्यात् । तथाच इदुतोः पूर्वनिपातश्च स्यात् । कर्मधारये तु सत्यनियम इष्यते। अन्त्ये तु भेदे विशेषणत्वेन वाच्यविशेष्यत्वेन वा । नाद्यः । रामकृष्णौ भिन्नाविति प्रतीत्यभावात् । सहिताविति ज्ञानसद्भावाच्च । न द्वितीयः। रामकृष्णप्रतियोगिकभेद इति प्रतीत्यभावात् । किंच क्षामं वसानौ जायापती अग्निमादधीयातामित्यत्र स्त्रीपुरुषयोः पृथगग्न्याधानकर्तृत्वप्रसङ्गात् । सहितयोरग्न्याधानकर्तृत्वेष्टत्वात् । भेदस्य चार्थत्वाभावाच्च । भेदे विवक्षिते लाघवाद्भेदे द्वन्द्व इत्येव वक्तुमुचितत्वाच्च । किंच नीलघटावित्यत्र विशेष्यविशेषणभावो विवक्षितो न वा । नाद्यः । अवकाशेन कर्मधारयेण द्वन्द्वस्य बाधात् । कर्मधारयस्य पदार्थतदवच्छेदकभेदरहितस्यावकाशस्याभावात् । नान्त्यः । पदार्थभेदस्य सत्त्वेन तदवच्छेदककल्पनाया वैयर्थ्यात् । यत्तु पटुश्चासौ खंजश्चेति एकस्मिन्धर्मिण्यनेकधर्मसमुच्चयाच्चार्थसद्भावात्समानाधिकरणयोरपि द्वन्द्वसंज्ञाप्रसङ्गः। ततश्च द्वंद्वे यांत्यादिनियमः स्यादित्युक्तं हरदत्तेन । तन्न । इतरेतरादौ द्वन्द्वविधानात् । गामश्वं पुरुषमित्यादौ समुच्चये स्वयमेव तद्भावस्योक्तत्वाच्च । यदपि युगपदधिकरणवचने द्वन्द्वः । किमिदं युगपदधिकरणवचनम्।अधिकरणवर्तिपदार्थः अधिकरणे युगपदधिकरणवचनम् ।तत्र च द्वंद्वो भवति केन पुनर्द्वयोरर्थयोर्युगपद्वचनम् । एकैकेन पदेन । एतदुक्तं भवति । यावतां पदानां द्वंद्वो यदि तावतामन्योन्यार्थाभिधानं युगपद्भवति एवं द्वंद्वो भवतीति ।अत्र हि द्विवचनबहुवचनान्यथानुपपत्तिरेव प्रमाणमित्युक्तम्।तदपि न । द्विवचनबहुवचनोपपत्तेरन्यथैवोपपादितत्वात् । जहत्स्वार्थायां वृत्तौ तदभावात् । पक्षांतरेपि प्रथमप्रवृत्तस्य एकवचनस्य त्यागायोगात् । अन्यथा षष्ठीतत्पुरुषाद्युच्छेदापत्तेः । तत्रापि पूर्वपदस्यार्थे उपसंक्रमेण षष्ठ्याऽऽद्ययोगात् । उक्तं च फणिना । सेयं युगपदधिकरणवचनतादुःखा च दुरुपपादा चेति । जहत्स्वार्थायामव्याप्तेः । समासात्पूर्वमुत्पन्नस्य वचनस्य अन्तरङ्गत्यागायोगात् । षष्ठीतत्पुरुषाद्युच्छेदापत्तेश्च । दुःखा द्विवचनबहुवचनोत्पत्तेरन्यथासिद्धत्वात्प्रमाणांतराभावाच्च । दुरुपपादा अन्वर्था च । द्वन्द्वसंज्ञा

द्वावर्थौ अभिदधातीत्येकैकोस्मिन्निति द्वंद्वः । बहूनामप्युपलक्षणमिदम् । द्विशब्दस्य द्वित्वं पूर्वस्यामंतत्वम् उत्तरपदस्यादन्तत्वं च निपात्यते । पुंस्त्वमुपलक्षणम् "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" । मिति दर्शनात् द्वंद्वरहस्यमर्यादावचन व्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिष्वित्यादि सिद्धम् । ननु द्वन्द्वसंज्ञा किमर्था। प्रयोजनादर्शनात् । नच आदेश्च द्वन्द्व इति प्रयोजनम् । आदेश्च चार्थे इति सुपठितत्वात् । एकार्थे द्विगुद्वन्द्वावित्यपि न प्रयोजनम् । एकस्य संज्ञारंभाप्रयोजकत्वात् । उच्यते । संज्ञारंभसामर्थ्यात् प्रयोजनान्तराण्यपि ज्ञाप्यन्ते । परवल्लिंगं द्वंद्वतत्पुरुषयोः । द्वंद्वे प्रधान इदंताल्पस्वराद्यदंतानां पूर्वनिपातः । संख्याया अल्पीयस्याः । भ्रातुर्ज्येष्ठस्येत्यादिदेवतावाचिनां विद्यायोनिसम्बन्धवाचिनामृदंतानामुत्तरपदे आकारश्चेति दिक् इति द्वंद्वः। **बहुव्रीहिरन्यार्थे॥** बहुव्रीहिरिति योगो विभजनीयः । पूर्वोच्चारणसामर्थ्यात् । अन्ये पदार्थाभावार्थमप्रथमांतार्थं प्रथमान्यपदार्थं च । द्वौ त्रयो वा द्वित्राः । पंच षट् वा पंचषाः । द्विर्दश द्विदशाः । दक्षिणस्याः पूर्वस्याः अन्तरालं दक्षिणपूर्वा । उत्तरपूर्वा । कण्ठेकालः । उरसिलोमा । अप्सुयोनिः । केशेषुकेशेषु गृहीत्वा, मुष्टिभिर्मुष्टिभिर्हत्वा, बाहुभिश्च बाहुभिश्च इदं युद्धं प्रवृत्तं केशाकेशि, मुष्टीमुष्टि, बाहूबाहवि । कर्मव्यतिहारबहुव्रीहेरिप्रत्ययः । पूर्वपदस्य च दीर्घः । इप्रत्ययस्य क्त्वादिषु पाठादव्ययत्वम् । दशानां समीपे ये ते उपदशाः । आसन्ना विंशतेर्ये ते आसन्नविंशाः । अदूरे त्रिंशतो ये ते अदूरत्रिंशाः । अधिकाश्च चत्वारिंशतो ये ते अधिकचत्वारिंशाः । सह पुत्रेणेति सपुत्र इत्यादिषु तु तत्पुरुषेऽपि क्वचिदप्राद्यंतस्य परत्वमित्यनेनापि निर्वाहोस्ति । अन्यार्थे इति द्वितीयो योगः । अत्र नाम्नामित्यनुवर्तते । तच्च पदार्थकामित्युक्तम् । पदानां समासविधानात्तदपेक्षयाऽन्यपदमेव गृह्यते । तच्च द्वितीयाद्यंतव्याख्यानात् । अमादावित्यनुवृत्त्यविभक्तिव्यत्यये तु सम्बन्धाद्वा । समस्यमानं तु परिशेषात् प्रथमांतं द्वितीयाद्यंतस्यान्यपदार्थत्वे समस्यमानस्य द्वितीयाद्यंतस्यान्यपदार्थत्वे समस्यमानस्य द्वितीयाद्यन्तत्वासम्भवात् । प्रथमान्तमपि समानाधिकरणमेव गृह्यतेऽन्यस्यासंभवात् । अन्यपदार्थे वर्तमानानां प्रथमान्तानां पदानां पदयोर्वा एकार्थीभावः समाससंज्ञो बहुव्रीहिसंज्ञश्च भवति । नाम्नामिति

बहुवचननिर्देशस्तु द्वंद्वबहुव्रीहिसंज्ञयोर्बहूनामपि संग्रहार्थः । अन्यथा समास-इति अन्वर्थसंज्ञाविज्ञानादेकस्य च संक्षेपणासम्भवाद्द्वयोर्लाभे किं तेन पदेन । प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयते इति विभक्त्यर्थप्राधान्यात्तस्यैवान्यप-दार्थग्रहणेन ग्रहणं भवति । अत एव प्राप्तोदकोयं ग्राम इति ग्रामशब्दस्यानु-प्रयोगः। अन्यथा यावानेवार्थो ग्रामपदस्य तावताभिधाने गतार्थत्वान्न स्यात्। यथा द्वन्द्वे च शब्दस्य । यदा तु समासेन विभक्त्यर्थपदसम्बन्धा अभिधीयंते तदा विभक्तिर्मानप्रयोजितद्रव्यस्यानभिहिततद्वाचिनोनुप्रयोगः कस्मान्न स्यात्। यदि विभक्त्यर्थोभिधीयते कथं ग्रामादिभिः सामानाधिकरण्यं तल्लिङ्गसंख्या-योगो वा बहुव्रीहेर्भवति । प्राप्तोदको ग्रामः। उद्धृतौदना स्थालीति । उच्यते। विभक्त्यर्थस्य सम्बन्धादेराश्रितत्वेन गुणत्वात् अभेदोपचारात्सामानाधिकरण्य-माश्रयतश्च लिंगवचनानि भविष्यन्ति । शुक्लादिवत् । यथा शुक्लं वस्त्रं शुक्ला शाटी शुक्लः कम्बलः शुक्ला शुक्ला इति । नन्वेवं यथा शुक्लशब्देन कदाचिद्गुण उच्यते कदाचिद्गुणी । तथा बहुव्रीहावपि प्राप्नोति । नैषोस्ति नियमः । गुण-शब्देन कदाचिद्गुणमात्रमभिधीयते इति पट्वादिष्वदर्शनात् । नहि भवति देव-दत्तस्य पटुरिति । तद्वदत्रापि नित्यमेव गुणिनिष्ठता भविष्यति । एवमपि बहुव्रीहिणा विभक्त्यर्थस्याभिधानात्षष्ठ्यादयो न भवंति । तथा लिंगसंख्ययो-रप्यभिधानात्तयोर्वाचकाः प्रत्यया न प्राप्नुवन्ति। नैष दोषः। स्वार्थिका आबा-दयः स्त्रियां यद्वर्त्तते तस्मात्स्वार्थे आबादयो न भवन्तीति । तेन बहुव्रीहि-णाभिहिते स्त्रीत्वे भविष्यन्ति । समासे च बाह्यक्रियापेक्षायां कर्मादिशक्तिस्त-द्विहितस्य समासस्य नामार्थमात्रस्यैवैकत्वादुपयुक्ते इति कर्मादिगतैकत्वादि-प्रतिपादनाय वचनानि भविष्यन्ति । चित्रगुं पश्य, चित्रगुणा कृतमिति । एवमपि प्रथमा न प्राप्नोति । समासेन संख्याया अभिधानात् । न केवला प्रकृतिः प्रयोज्येति नियमाद्भविष्यति । अथवा लिङ्गसामान्यं संख्यासामान्यं बहुव्रीहिणाभिहितं न तु विशेषस्तत्रावश्यं विशेषार्थिना तद्वाची शब्दः प्रयोक्तव्यः। यद्वा अर्थग्रहणं तु कृत्स्नेपि पदार्थे यथा स्यात् । प्राधान्याद्विभक्त्यर्थमात्रे माभूत् । सह प्रकृत्यर्थेन विभक्त्यर्थेन विभक्त्यर्थे बहुव्रीहिणाऽभिधीयमाने न कश्चिद्दोषः । नचैवं बहुव्रीहिणोक्तार्थत्वाद्द्वंद्वे च शब्दस्येव बहुधनो ग्राम इत्यादौ

ग्रामादिपदस्यानुप्रयोगो न प्राप्नोतीति वाच्यम्। विभक्त्यर्थे प्रकृत्यर्थसामान्यस्य बहुव्रीहिणाभिधानात्। तद्विशेषमभिधित्सतस्तद्वाचिग्रामादिशब्दप्रयोगोपपत्तेः। केचित्तु अनगन्ये इति च्छित्त्वा अमाद्यन्तापेक्षयाऽन्या प्रथमा तेन प्रथमान्तं बहुव्रीहिसंज्ञमित्याहुः। इत्थं हि अमादाविति नानुवर्तनीयम्। अर्थात्तल्लाभात्। अर्थे इत्यनेनान्यपदार्थ एव ग्राह्यः। न स्वपदार्थः। तत्र समासान्तरविधानात्। अर्थग्रहणवैयर्थ्यापाताच्च। नहि अमादौ तत्पुरुष इत्यादावर्थे इत्युच्यते। भवति चार्थे समासस्तद्वदत्रापि भविष्यति। यद्वा अर्थे इत्यत्रान्येत्यनुवर्तनीयम्। अन्यस्याः प्रथमाभिन्नाया अर्थेऽन्यस्य समस्यमानपदाद्भिन्नस्यार्थे इति वा व्याख्येयम्। पदमिति किमर्थमपेक्ष्यते। वाक्यार्थे माभूदित्यर्थे। कश्चित्कंचिन्नद्यां सिष्णासुमाह संति नद्यां बहवो ग्राहा इति एतानि पदानि तस्मात्त्वं मा स्नासीरिति वाक्यार्थं गमयंति। तेषां बहुव्रीहिसंज्ञा प्राप्नोति। एवमस्त्यत्र गृहे धूम इति पदानि अस्त्यत्र गृहे वह्निरिति वाक्यार्थं गमयंति। प्राप्तमुदकं यमित्यस्य यत्कर्मकप्राप्तिकर्तृ उदकमिति बोधः। प्राप्तोदक इत्यस्य तु उदककर्तृकप्राप्तिकर्मीभूतो ग्राम इति बोधः। एवं प्राप्तानन्दः। ऊढो रथो येनेत्यस्य यदाश्रयवहनसाध्यदेशान्तरप्राप्त्याश्रयोर्थ इति बोधः। ऊढरथ इत्यस्य तु रथकर्मकवहनाश्रयोऽश्वः। छिन्नो वृक्षो येन यत्करणकद्वैधीभावाश्रयो वृक्षः। छिन्नवृक्ष इत्यस्य वृक्षाश्रयद्वैधीभावानुकूलव्यापाराश्रयः कुठारः। उपहृतः पशुर्यस्मै इत्यस्य यदुद्देश्यक उपहरणाश्रयः पशुरिति बोधः। उपहृतपशुः पशुकर्मकोपहारोद्देश्यो रुद्रः। एवं दत्तार्घ्यः सूयः। उद्धृतमन्नं यस्मादित्यस्य यदवधिकोद्धरणाश्रयोऽन्नमिति बोधः। उद्धृतान्न इत्यस्य तु अन्नकर्मक उद्धरणावधिः कटाहः। पीतमंबरं यस्य यत्सम्बन्धिपीताभिन्नमंबरमित्यर्थः। पीतांबर इत्यस्य तु पीताभिन्नांबरस्वीकारमित्यर्थः। एव चित्रगुरित्यस्य वीराः पुरुषा यस्मिन्नित्यस्य यदाधारसत्ताश्रयवीराभिन्नः पुरुष इति बोधः। वीरपुरुष इत्यस्य तु वीराभिन्नपुरुषसत्ताश्रयो ग्राम इति वृत्तिवाक्ययोर्बोधभेदस्य शक्तिस्वीकारमन्तरेणानुपपत्तेर्वृत्तौ शक्तिः स्वीकार्या। नच लक्षणया निवाहः। तदसम्भवस्य प्रागेवोक्तत्वात्। नीलमुज्ज्वलं शान्तं दीप्त वपुर्यस्येति बहूनां बहुव्रीहिः। इत्थं समा

साधिकरणानामप्रथमाविभक्त्यर्थे बहुव्रीहिरिति फलितम् । उच्चैर्मुखः । एवं करधनः । कंठकाल इति व्यधिकरणानां तु बहुव्रीहिरित्यादियोगेन क्रिया च वृत्तावन्तर्भूतेति सप्तम्या नानुपपत्तिः । केशाश्चूडा अस्य केशचूडः । सुवर्णमकारः । न विद्यमानः पुत्रोस्य अविद्यमानपुत्रः।न पुत्रोस्यापुत्रः।प्रपतितानि पर्णान्यस्य प्रपर्णः । प्रशब्दो यदा गतार्थे वर्तते तदा प्रपर्णः। उष्ट्रो मुखमस्य उष्ट्रमुखः । नहि प्राणी प्राण्यन्तरस्य मुखमुपपद्यते इति सामर्थ्यात्सादृश्यावगतिर्मुखे । नच मुखस्य सादृश्यं प्रसिद्धमिव मुखमस्येत्ययमर्थो भवति।अस्तिधनः। अस्तिक्षीराऽस्तीति तिबन्तप्रतिरूपकमव्ययं संज्ञाविधानात्प्रयोजनान्यनुमेयानि । प्रयोजनं विना संज्ञाविधानासम्भवात् । नञ्दुःसुभ्यः प्रजामेधाभ्यामस्।बहुव्रीहौ धर्मादेरन्।विशेषणसप्तम्यन्तक्तान्तसर्वादिसंख्यानांपूर्वनिपातः आहिताग्न्यादिषु वा पूर्वनिपातः व्यधिकरणानां न।पञ्चभिर्भुक्तमस्येति। प्रथमार्थेपि।न वृष्टे देवे गत इति येषां त्वेवंविधानामिष्यते ते पूर्वयोगे सङ्गृहीताः। अनन्तरसमीपादावप्यर्थे न । चित्रा गावो यस्येति वाक्यमपि तत्र न । अनभिधानात् । यस्येति षष्ठी स्वस्वामिसम्बन्धमेव बोधयति । नानंतर्य्यादि । न च तात्पर्ये सति बोध इष्यते तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वाभावात्।चित्रा गावो यस्यानंतराः समीपे वा इति तु प्रयोक्तुं शक्यम् । अर्द्ध अधिकमस्मिन्निति अध्यर्द्धः । अर्द्धस्तृतीयो येषु ते अर्द्धतृतीयाः । अत्रार्द्धस्याप्यन्यपदार्थत्वेन ग्रहणाद्बहुवचनम् तद्गुणसंविज्ञानोयं बहुव्रीहिः। तस्यान्यपदार्थस्य गुणाः विशेषणानि समस्यमानपदार्थास्ते संविज्ञायंते कार्यभाक्त्वेन गृह्यंतेऽस्मिन्निति तद्गुणसंविज्ञानः । अतोन्योऽतद्गुणसंविज्ञानः । तृतीयो भागोऽधिको येषु ते त्रिभागाधिकाः।वृत्तौ गतार्थत्वात्तृतीयस्याप्रयोग इति दिक्।**कर्मधारयस्तुल्यार्थे॥** कर्मधारय इति योगो विभजनीयः । बहुव्रीहिरित्यत्र हि शब्देन बहुव्रीह्यवयवो गृह्यते । समुदाये वृत्ताः शब्दा अवयवेपि वर्तंत इति न्यायात् । बहुव्रीह्यवयवे उत्तरपदे पूर्वयोः पदयोः कर्मधारयः । पूर्वोत्तरा दक्षिणा शाला प्रिया यस्य स पूर्वशालाप्रियः । कर्मधारये उक्तपुंस्कं पूर्वपदं पुंवद्भवति । ननु कर्मधारये पूर्वपदे बहुव्रीहावप्येतत् सिध्यति । सत्यम् । नायमस्ति नियमः । कर्मधारयं कृत्वैव बहुव्रीहिः कर्तव्य इति । यदा तु त्रिपदो बहुव्रीहिः क्रियते

तदा तु सिध्यतु । एतदर्थमिदम् । अत्रार्थे विधेयस्य प्रथमनिर्देशोप्यनुकूलः । अन्यथा तुल्यार्थे कर्मधारय इत्येवावक्ष्यत् । एवं बह्वचः तावत्यः कियत्यो वा विद्याः प्रिया यस्य स बहुविद्याप्रियः । तावद्विद्याप्रियः । ततस्तुल्यार्थ इति तृतीयो योगः । तुल्यशब्दश्च समानवाची । भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे प्रवृत्तौ य एकार्थीभावः स समाससंज्ञः कर्मधारयसंज्ञश्च स्यात् । विशेष्यविशेषणभावे सतीति यावत् । पूर्वनिपातेत्वनियमः । हसादिरिति लिङ्गात् । आदिश्चासौ हसश्चेति विग्रहे आदिहस इति स्यात् । विशेषणस्य पूर्वनिपातात् । हसादिरिति निर्देशाद्विशेष्यस्यापि पूर्वनिपातः सूचितः । लक्ष्यानुसाराच्च व्यवस्था । विशेष्यतेऽनेनेति विशेषणम् । शिष्ल विशेषणे । करणे—युट् । यत्साधारणाकारेण प्रतिपन्नं बहुप्रकारं वस्तु प्रकारांतरेभ्यो व्यवच्छिद्य एकस्मिन् प्रकारे व्यवस्थापयति तद्विशेषणं भेदकमिति चोच्यते । भिनत्तेः करणस्य कर्तृत्वविवक्षया वुण् व्यवस्थाप्यमाने तु विशेष्यं भेद्यमिति च । नीलमुत्पलं नीलोत्पलम्। अत्र हि नीलार्थो भ्रमरादिसाधारणरूपेण प्रतिपन्नः। उत्पलार्थेनोत्पले व्यवस्थाप्यते । उत्पलार्थोपि रक्तादिसाधारणरूपेण प्रतिपन्नो नीले व्यवस्थाप्यते इति भवति प्रत्येकमुभयं भावः । यत्र तु स नास्ति न तत्र समासो भवति । यथा तक्षकः सर्प इति । नहि तक्षकः सर्पत्वं व्यभिचरति । ननु व्यभिचरति क्रियानिमित्तकोऽपि तक्षकशब्दोऽस्ति तक्ष्णोतीति तक्षक इति।सत्यमस्ति।न त्वसौ नामधेयं न तुल्यकक्षतां गाहते द्रागेव रूढे प्रतिमाक्रियाशब्दे विलंबतेति हरदत्तः । तन्न । सर्पेऽपि अन्वर्थसंज्ञा स्यात् । तक्षति जीवितं तनूकरोति तक्षकः । यदि सर्पांतरेऽतिप्रसंगवारणाय योगरूढिः कल्प्यते । तर्हि रथकारेऽपि मनुष्यांतरेऽति प्रसंगवारणाय योगरूढिरस्तु । यदि रथकारे तक्षको जातिशब्दः तर्हि सर्पेऽपि तथैवास्तु ।"तक्षको नागवर्द्धक्योः"इत्यभिधानमपि समानम्।डित्थादिवत् संज्ञाशब्दानामपि शब्दत्वस्वीकारात् । कल्पभेदेन तक्षकाणामपि बहुत्वाज्जातिशब्दत्वमस्त्येव । तस्माद्बाहुलकादनभिधानाद्वा समासो नेति बोध्यम् । शिंशपाशब्दस्य फलेऽपि दर्शनाद्वृक्षव्यभिचाराद्भवत्येव समासः । नचात्र वृक्षप्रतीतिपूर्वका फले प्रतीतिःयेन सा बहिरङ्गा स्यात्। यथैव हि पंचालादयः शब्दाः

जनपदस्य साधारणा नान्योन्ययोगमपेक्षंते क्षत्रियाणां तद्भेदेतेऽपि । एवं हरीतकीवृक्षः । पाटलावृक्षः। यत्र द्रव्यगुणानां समासस्तत्र द्रव्यं प्रधानम् । अप्रधानं गुणः।द्रव्यं हि क्रियासिद्धौ साक्षादुपयुज्यते गुणस्तु द्रव्यावच्छेदद्वारेण। अतो गुणवचनस्यैव पूर्वनिपातो न द्रव्यवचनस्य । ननूत्पलशब्दोऽपि जातिशब्दो न द्रव्यशब्दः । यदि तु जातिविशिष्टे द्रव्ये पर्यवसानात् द्रव्यशब्दत्वं हंतैवं नीलशब्दोऽपि गुणविशिष्टे द्रव्ये पर्यवसानात् द्रव्यशब्दत्वं हंतैवं नीलशब्दोऽपि गुणविशिष्टे द्रव्ये पर्यवस्याति द्रव्यशब्दः । मैवम् । उत्पत्तेः प्रभृत्त्या विनाशि जातिद्रव्यं न जहाति शब्दे।न च द्रव्यव्यतिरेकेण जातिः प्रत्याय्यते। शाबलेयो बाहुलेयो गौरिति ।न तु शाबलेयस्य गौरिति । तस्माज्जात्यात्मकमेव द्रव्यं प्रतीयते इति जातिशब्दो द्रव्यशब्दत्वेन व्यवस्थाप्यते । गुणाः पुनः सत्येव द्रव्ये कदाचिदुपयन्ति कदाचिदपयंति । पटस्य शुक्लस्य इति व्यतिरिक्ता अपि द्रव्यात्स्वशब्दैः प्रत्याय्यंते इति न गुणात्मकं द्रव्यं भवति न गुणशब्दो द्रव्यशब्देन व्यवस्थापनमर्हति । अत एव श्वेतं छागमालभेतेति नोदनायां श्वेताभावे कृष्णच्छाग आलभ्यते न तु छागाभावे पिष्टपिण्डीमालभ्य कृती भवति । क्रियाद्रव्ययोः समासेऽप्येवमेव द्रष्टव्यं पाचकब्राह्मण इति। यत्र गुणशब्दयोः क्रियाशब्दयोः गुणक्रियाशब्दयोर्वा समासस्तत्रानियम एव भवति। खंजकुब्जः । कुब्जखंज इति। पाचकपाठकः पाठकपाचकः । खंजपाचकः पाचकखंज इति । शिंशपावृक्ष इति । द्रव्यशब्दयोरेवोपनिपातेऽपि वृक्षत्वस्य व्यापकत्वात्पुहाविषयत्वाद्दूरात्प्रथमत एवोपालम्भाच्च प्राधान्यम् शिंशिपात्वस्य तु विपर्ययादप्रधान्यमिति न तत्रानियमः । सुमेरुमहीभृत इति कथम्।न हि मेरुर्महीभृत्त्वं व्यभिचरति । निरंकुशाः कवय इति हरदत्तः। वस्तुतस्तु यज्ञयसुमेरुलंघनेइतिव्यभिचारदर्शनान्न दोषः। यदि तु पदार्थतावच्छेदकभेदमादाय द्वन्द्वोभ्युपेयते तर्हि कर्मधारयो दत्ताञ्जलिः स्यात् । अतो भिन्नार्थानामेकरूपेणैकत्रान्वयविवक्षायां द्वंद्वः विशेषणविशेष्यभावे तु कर्मधारय इति विवेकः। अथ प्रमाणप्रमेयेति कथं द्वन्द्वः। प्रमेयादन्येषां भेदाभावात्। उच्यते । शब्दपरत्वमाश्रित्य द्वंद्वं कृत्वाऽर्थे लक्षणाश्रयणीया । तथा च प्रमाणादिनिग्रहस्थानांतैः शब्दैर्वाच्यानां तत्त्वज्ञानादित्यर्थः।एवं युष्मदस्मत्प्रत्ययगोचरयोरित्यत्रापि

अर्थपरत्वे त्यदादीनीत्येकशेषः। त्वमामित्यादेशौच स्याताम्।एवं युष्मदस्मदोः षष्ठीत्यत्रापि। तारतम्यमित्यत्र तरतमयोः प्रत्यययोः केवलयोः प्रयोगाभावात् शब्दपरत्वमाश्रित्य द्वन्द्वे कृते भावप्रत्ययः।अर्थे च न्यूनाधिक्ये लक्षणो दैत्यदैते-यदनुजेंद्रारिदानवा इत्यत्र स्वरूपपरत्वाद्द्वंद्वः।स्वरूपस्य भिन्नत्वात्समानार्थत्वा-भावादिरूपाणामिति नैकशेषः।कर्मधारयसंज्ञाविधानसामर्थ्यात्तत्फलमनुमेयम्। कर्मधारये स्त्रीलिंगमुक्तपुंस्कं पुंवदिति।रक्ता चासौ लता रक्तलता।अत्र लौकिक-विग्रहे भेदद्योतकश्चशब्दो धर्मभेदद्योतनाय प्रयुज्यते । सर्वादिश्च धर्मभेदबो-धनाय ।अत्रार्थे स्थूला चासौ पृषती चेति । काद्रवेयेन वचनमनुकूलं तदभावे तु एकोऽसहायोऽच् एकाजिति नागेंद्रवचनमनुकूलम्।तथा कर्मधारये शाकपा-र्थिवादीनामुत्तरपदलोप इति च फलं शाकपार्थिव इति बहुव्रीहिगर्भः कर्मधा-रयः । देवपूजक इति षष्ठीतत्पुरुषगर्भः । तत्र पूर्वपदान्तर्गतमुत्तरपदं ग्राह्यं न तु कर्मधारयस्य पार्थिवादेर्लोपप्रसङ्गात् । इदं च शाकपार्थिवादीनां सिद्ध्यर्थमुत्तरपदलोप इति व्याख्यानाल्लभ्यते । क्वचित्तु मध्यपदलोप इति पाठः।तत्र सर्वपदस्य द्विपदात्मकविवक्षया मध्यत्वं न तु कर्मधारये मध्यत्वं त्रिपदस्य तस्याभावात् । संधिय्वोरित्यपि शाकेत्यस्य ज्ञापकमुक्तम्।अन्ये तु कैयटादयः। तौ पूर्वपदमेव विशिष्टाभिधायी शक्त्यन्तरस्वीकारात्तथा निष्कौशांबिः अति-माल इत्यत्र निरती गतक्रान्तार्थावृत्ती इत्याहुः । एवमेकाधिका द्व्यधिका त्र्यधिका अष्टाधिकाश्च दश । सहादित्वात्रयसौ एकादश द्वादश त्रयोदश अष्टादश । एवं द्वाविंशत्यादिः । षोडशेति षष उत्वं उत्तरपदादेष्टुत्वम् । एकोनविंशतिरेकान्नविंशतिः एकान्नविंशतिरित्यादेशौ वा। चत्वारिंशत् पंचा-शत् षष्टिसप्ततिनवतिषु।द्व्यादेरात्वादिर्वा । केचित्तु अत्र द्वंद्वमेवाहुः । एकश्च दश च एकादश । एकं विंशतिरित्यादौ समाहारः । क्लीबत्वं चानित्यत्वान्न तत्र लिङ्गम्।स्तोः श्चुः।ष्टुनाष्टुः युवोरित्यादीति दिक्॥ **दिक्संख्ये संज्ञायाम्॥** दिक् च संख्या च दिक्संख्ये । दिग्वाची संख्यावाची शब्दस्तुल्यार्थेन सह समस्यते स कर्मधारयः।पूर्वेण सिद्धनियमार्थमिदं संज्ञायामेवेति दक्षिणाशब्दो दक्षिणदिक्स्थिते वस्तुनि वर्तते अतः समानाधिकरणः । अन्यथा विद्ध्यर्थता स्यात् । न नियमार्थता । स चाग्निपदेन दानादेर्व्यावृत्तो वह्नौ व्यवस्थाप्यते ।

एवमग्निशब्दोऽपि चित्रकादेर्व्यावृत्तो दक्षिणादिक्स्थिते वस्तुनि व्यवस्थाप्यते। एवं परस्परविशेषणविशेष्यभावात् सिद्धः कर्मधारयः । एवं दक्षिणामूर्तिः । सप्तशब्दोऽपि सप्तत्वसंख्याविशिष्टे द्रव्ये वर्तते । आदेशतः सङ्ख्यासंख्येये इति वचनात् । ऋषिशब्दोऽपि संख्यांतराद्देदादेश्च व्यावृत्तः सप्तत्वे व्यवस्थाप्यते । सप्तशब्दः संख्येयांतरव्यावृत्तः ऋषौ व्यवस्थाप्यते ।एवं विशेष्यविशेषणभावे-कर्मधारयः । सप्तर्षयः । एवं सप्तयामाः । संज्ञायां किम् । पञ्च फलानि । दिक्संख्ये किम् । शूर्पणखा। कुंभपदी । पूर्वभागः।पूर्वसूत्रम्।पूर्वदेशः।उत्तरभाग इत्यादौ दिग्वृत्तित्वाभावान्न निषेधः।वार्तिकमिति तु माधवः । वाक्येन संज्ञा-नवगमान्नित्यसमासोयम् । ननु सर्वोऽपि समासो नित्य एवैकार्थीभावरूपेऽन्वये समासविधानात् । तत्र न वाक्यं नचैकार्थीभावसामर्थ्यं संज्ञाया भावा-भावाविष्येते इति फणिनो वचनात् । व्यपेक्षान्वये तु वाक्यमेव । एवंस्थिते नित्याया वृत्तेर्लक्षणमुच्यते । अविग्रहो नित्यसमास इति । समासग्रहणं वृत्ति-मात्रोपलक्षणं विवच्य वृत्त्यर्थो गृह्यतेऽनेनास्मिन्नस्माद्वेति विग्रहो व्यपेक्षा-वाक्यं न विग्रहो यस्य लोके प्रयुज्यते इति शेषः । यथाश्रुते त्वसंबद्धं स्यात् सर्वस्य वृत्तिपदस्य शास्त्रे विग्रहसत्त्वात् । दक्षिणोऽग्निरिति । उन्मत्ता गङ्गा यस्मिन्निति । खट्वारूढ इति च । अत्र वाक्येऽग्निविशेषो देशविशेषः क्षेपश्च नावगम्यतेऽतस्तत्प्रतिपादनार्थं वृत्तिरेव लोके प्रयुज्यते । वाक्यमपि न वृत्तेर्न सर्वात्मना तुल्यार्थं संभवति।क तु केनचिदंशेन । घटचिकीर्षा । घटकर्मोत्पादनेच्छेति यथा तथा।राजपुरुष इति राज्ञः पुरुष इत्यस्य न तुल्यार्थे कुंभकार इत्यादावव्याप्तेर्द्वितीयं लक्षणम् । अस्वपदविग्रहो वेति स्वस्य समा-सस्य पदानि तैर्विग्रहः । नास्ति स्वपदविग्रहो यस्य लोके प्रसिद्ध इति । स द्विविधः। समस्यमानसर्वपदघटितविग्रहरहितः एकपदघटितविग्रहरहितश्च। आद्यो यथा । कुंभं करोति।समस्यमानपदं तु कुम्भ ङस् कार सु इति समस्य-मानद्वितीयान्ततिबन्तघटितश्च विग्रहः । प्रकर्षेण नत्वा प्रणम्य प्रशब्दस्य धातुना समासः। आधिक्येन गत्वा अधिगमा द्वितीयो यथा।कृष्णस्य समीप-मुपकृष्णम् । समस्यमान उपशब्दो विग्रहस्तु समीपशब्देन । एवं शाकस्य-लेशः शाकप्रतीत्यादि । अतोऽन्योऽनित्यसमासः । इदं वस्तुकथनमात्र न तु

नित्यसमासोऽनित्यसमास इति शब्देन व्यवहारोऽस्ति न चानुमातुं शक्यमिति दिक् । अयमत्र सङ्ग्रहः । कृत्तद्धितसमासैकदेशयङाद्यन्तरूपाः पञ्च वृत्तयः । परार्थाभिधानं वृत्तिः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विधा लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । राज्ञः पुरुषः । अपरिनिष्ठितत्वादसाधुरलौकिकः । राजन् अस् पुरुषस् इति समासः षड्विध इति प्रायो वादः। द्विग्वव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिकर्मधारयभिन्नस्यापि नाम्नश्च कृतेति विधानात् । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः। अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । विशेष्यपूर्वः कर्मधारयः पूर्वपदार्थप्रधानः । विशेषणपूर्वस्तूत्तरपदार्थप्रधानो द्विगुरन्यपदार्थप्रधानो द्वन्द्व इत्यपि प्राचां प्रवादः प्रायोऽभिप्रायः सूचयति । उन्मत्त गंगमित्याद्यव्ययीभावेऽतिमालादौ तत्पुरुषे द्वित्रा इत्यादिबहुव्रीहौ दन्तोष्ठमित्यादि द्वंद्वे चाभावात्।अनेकपदत्वं द्वंद्वबहुव्रीह्योरेव ।"सिपां सिपा तिपां नाम्ना धातुनाऽथ तिपां तिपा।सिबन्तेनेति च ज्ञेयः समासः षड्विधो"बुधैः।सिपा राजपुरुषः।तिपेति तु श्लोकपूरणार्थमुक्तं न तु लोके उदाहरणम्।नाम्ना कुम्भकारः । धातुना कटप्रूः।अजस्रम्।तिपां तिपा पिबतखादतेति। तिपा सिपां कृतविचक्षण ऐकपद्यं एकविभक्तिकत्वं च समासप्रयोजनम् । नन्वेकविभक्तित्वमेतावतैवैकपद्यमपि सिद्धं विभक्त्यन्तस्यैव पदत्वात्। एवं तर्हि अलुक् समासे एकविभक्तित्वाभावेऽपि पदैक्यमस्तीति प्रतिपाद्यते । पूर्वनिपातसमासान्तप्रत्ययादिश्च प्रयोजनम्।**टाडकाः**॥टश्च अश्च डश्च कश्चते टाडकाः।समास इत्यनुवृत्तं सप्तम्या विपरिणम्यते । स चाधारे टादयश्चाधेयाः । समुदायस्यावयव आधेयो भवति। यथा वने आम्राः गङ्गायां जलमिति । यद्वा । समासे चिकीर्षिते नाम्नष्टाट्यो नाम चाविभक्तिकं तदन्ताद्विभक्तिं विधाय समासः समासार्थिनामसमासशब्देनोच्यते । समासार्थान्नाम्नष्टादय इति समासस्यान्तावयवाष्टादय इति सिद्धम्। तेन उपराजम् । उपसमिधमित्यादावदन्तादव्ययीभावादम् सिध्यति ।अन्यथाऽव्ययीभावात्परोऽयमकारो न तु अदन्त इत्यम् न सिध्येत । एवं पंचर्ची पंचापी पञ्चधुरीत्यत्रेप् सिध्यति । ट ईबर्थः । पद्माक्षी । वृत्तसक्थी । राजगवी । अ अकारोऽदन्तत्वफलकः। वाङ्मनसे। स्त्रीपुंसौ। मृगसक्थम्।महोक्षः।

डष्टिलोपार्थः । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः । चत्वारिंशतोऽधिकानि अधिकचत्वारिंशानि वर्षाणि चैत्रस्य । पञ्चषाः । पादौ च अष्ठीवन्तौ च पदष्ठीवम् । सहादित्वात्पादस्य पद् कः श्रवणार्थः । नन्वित्प्रयोजनाभावात् बहुकर्तृकः व्यूढोरस्कः अतिलक्ष्मीक इत्यादि ॥ **पुंवद्वा** । समासे सति समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे पूर्वं भाषितपुंस्कमनूङ् त्ययांतं पुंवद्भवति । रूपवती भार्या यस्य स रूपवद्भार्यः । तरतमचरट्कल्पदेशीयजातीयरूपपाशप्येषु शसि बह्वल्पार्थस्य । त्वतयोर्गुणवचनस्य ष्यण्भिन्ने पादौ स्वरादौ तद्धिते अनपत्यार्थे । ष्यणि अग्नायी देवता यस्य आग्नेयः । अपत्ये तु रोहिण्या अपत्यं रौहिणेयः । पुंवत्त्वे तु रौहितेय इति स्यात् । सर्वादेर्वृत्तिमात्रेकुक्कुट्यादीनामण्डादिषु । यङ् मानिनोर्न । प्रियादिषु पूरणार्थप्रत्ययान्ते अकतद्धिताभ्यां कोपधस्य संज्ञावाचकस्य पूरणार्थप्रत्ययान्तस्य वृद्धिनिमित्तस्यारक्तविकारार्थतद्धितस्य स्वाङ्गादीपोऽमानिनि जातेपरो यः प्रत्ययस्तदन्तं न पुंवत् । वाग्रहणादियं विविक्षा । तत्र तेनेदमितिवत् ॥ **ना** । न अ इति च्छेदः । नञीत्यनुवर्तते समासे सति नञो नस्य अः । अब्राह्मणः । ननु नञीति नानुवर्त्यं प्रतिपदो नञ्समास एव ग्राह्य इति चेन्न । अमक्षिकमविघ्नमित्यव्ययीभावेऽधनोऽविद्य इति बहुव्रीहौ चाव्याप्तेः । लक्षणप्रतिपदोक्तपरिभाषा त्वनित्या । नञि किम् । नक्रः नभ्राट् नमुचिरित्यादौ निषेधार्थनस्य समासश्चेति समासे मा भूत् । नेति किम् । नञ एवाकारो विधीयतां न वांत्यस्य स्यात् । ञस्यानुबन्धत्वादस्याविधाने प्रयोजनाभावात् षष्ठीनिर्दिष्टस्येत्यस्यानित्यत्वाच्च । सर्वस्य भविष्यति एवं तर्हि नञः अकारस्तदभावश्च विधीयते । लक्ष्यानुसाराच्च व्यवस्था । निषेधार्थनस्य तु समासो नावश्यकः । नलोपो नञ इत्यस्य स्थाने नञोऽशिति सुवचम् ॥ **अन्स्वरे** । नञः स्वरे परेऽनादेशो न च भवति । अनश्वः । अनप् । नाकः । नासत्यौ । नैकधेत्यादि । अनश्व इत्यादौ 'ङ्णृनः न' इति द्वित्वम् । अनञीत्यादिलिङ्गात् । तस्मान्नुडचीत्यस्य स्थाने 'अच्यन्' इति सुवचम् । ङमुट्तु अनचीति ॥ लिंगान्तेति दिक् ॥ **सहादेः सादिः** । उभयत्रादिशब्दः प्रकारे । प्रकारः सादृश्यम् । सहआदिः सदृशो यस्य सादृश्यं चाविहितादेशाश्रयत्वेन ग्राह्यम् । स आदिः सदृशो यस्य । सादृश्यं चाविहितादिश्यमा-

नत्वेन रूपेण ग्राह्यम् । सहादिषु आगमविपर्ययविकारलोपा विधीयन्ते।तदुक्तम्। "वर्णागमो गवेंद्रादौ सिंहे वर्णविपर्ययः । षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे" गोरग्वेत्यादिः। सर्वोऽप्यस्यैव प्रपञ्चः । हिंसेः सिंहः। कृतेस्तर्कः । कसेः सिकता । लोपविकारयोः पृथग्ग्रहणमवांतरभेदविवक्षया । तथा च लोपागमवर्णविज्ञानज्ञो हि सम्यग्वेदान् पालयतीति शेषवचनम् । यदादेशस्तद्वदित्यत्र त्वभेदेनापि व्यवहारः। हलादेरित्यस्यैव प्रपञ्चः । अनन्ताः सहादयश्च प्रयोगानुसारेण बोध्याः ॥ **आदेश्च द्वन्द्वे** । नाम्ना पूर्वत्र पदार्थकमपीहानुवृत्तं सदविभक्तिपरम् । तुल्यार्था इत्यत्र तु विभक्तिव्यत्ययेन वाक्यभेदेन च व्याख्येयम् । आदिरित्येकत्वं न विवक्षितं सूत्रे लिङ्गवचनमविवक्षितमित्युत्सर्गात् । आदेः प्रतियोगी अन्त्यो लभ्यते । द्वन्द्वे इति अर्थपरम् । समानानुपूर्वीकाणां भिन्नार्थानां तुल्यार्थानां च भिन्नानुपूर्वीकाणां च नाम्नां मध्ये आदेः आद्यो न चान्त्य आदेशः स्यात् । रामश्च रामश्च रामौ । रामश्च रामश्च रामश्च रामाः । घटश्च कुंभश्च कुंभौ । घटश्च कुंभश्च कलशश्च कलशाः । ननु पदानामंत्यं पदमेवादेशो विधीयताम् । मैवम् । सविभक्तिकस्यादेशे तस्य एव श्रवणप्रसङ्गात् । पूर्वविभक्तेर्लुगभावेन सविभक्तिकस्य नामत्वाभावेन च द्विवचनबहुवचनयोरनुत्पादात् । ननु द्वंद्वे कृते इत्यर्थोऽस्तु । मैवम् । सर्वे इत्यत्र ईविकल्पप्रसङ्गाच्च घटश्च । पंथाश्च घटपथावित्यत्राप्रत्ययदर्शनात् पंथानौ पंथान इत्यत्रापि स्यात् । करपादमित्यादावेकत्वदर्शनात् करौ कराः पादा इत्यत्रापि स्यात् । एवं स्रक् च ऋक् च स्रगृचे इत्यत्राप्रत्ययदर्शनादृचौ ऋच इत्यत्रापि स्यात् । अथ को द्वन्द्वार्थः । का नाम सहविवक्षा । ' अनुस्यूते च भेदानामेका प्रख्योपजायते । यदा सहविवक्षां तामाहुर्द्वंद्वैकशेषयोः, इति । अयमर्थः। यदा बहवोऽर्था एकस्यां बुद्धौ उपारूढा, यथा पुरोवस्थितस्य हस्तस्य पञ्चाङ्गुलयस्ते चैकस्मिन्गुणे क्रियायां वा तथैव विनियुज्यन्ते शोभना इति वा दृश्यंत इति वा तदा सहविवक्षा । तथाहि । आत्मनो या बुद्धिस्तां परत्र संक्रमयितुं प्रयोक्त्रा शब्दः प्रयुज्यते । यदि चावयवाः पृथक् पृथक् अवधारिताः स्युः यथा वातायनगतेन क्रमेण गच्छंतः ततो भिन्नैरेव शब्दैः प्रत्येकपर्यवसायिभिरेकवचनांतैरभिधीयेरन्।समुदायाकारत्वानुस्यूतावयवभेदैका बुद्धिस्तां परत्र संक्रमयितुमिच्छता तदनुरूपः शब्दः प्रयोक्तव्यः । न च तादृशस्य समुदायस्य

साधारणः कश्चिच्छब्दोऽस्तीत्यवयवशब्दैरेवासौ प्रतिपाद्य उपपद्यते चाव-यवशब्दैरेवाभिधानं समुदायसमुदायिनोरभेदात्। स चैकैक एवावयवशब्दे-ऽद्भूतावयवभेदसमुदायप्रतिपादनाद्द्विवचनान्तो बहुवचनांतश्च प्रवर्तते इति नैकवचनश्रवणप्रसङ्गः। स्यादेतत्। अयं योगो नारंभणीयो जातिनिर्देशेनैव गतार्थत्वात्। तथा हि। सर्वशब्दानां जातिरेव वाच्या लाघवात्। न व्यक्तिः गौरवात्। जातावसंभावितानि च कार्याणि वाहनदोहनादीनि जात्याक्षिप्तायां व्यक्तौ भवन्ति। जातेरेकत्वेऽपि तत्समानाधिकरणं द्वित्वबहुत्वसंख्यामभि-धातुं द्विवचनबहुवचनोत्पत्तिः संगच्छते। एवं हि अनेकशब्दप्रयोगाप्रसङ्गा-द्व्यर्थमेकादेशवचनम्। अथ व्यक्तिपक्षे वाहदोहादिकार्याणां व्यक्तावेव दर्शना-द्व्यक्तिरेव सर्वशब्दवाच्या। नचैवं तासामानन्त्याच्छक्तिग्रहासम्भवः। अवा-च्याया अपि जातेरुपलक्षणभावाभ्युपगमात। शक्तिग्रहकाले हि सामान्य-लक्षणप्रत्यासत्त्या सर्वासु व्यक्तिषु शक्तिग्रहसम्भवात्। विशिष्टं वाच्यमिति पक्षस्तु गौरवादेवोपेक्षितः। अत्र पक्षे एकेन शब्देन तंत्रेण सर्वासां व्यक्तीना-मभिधानसम्भवाद्व्यर्थं एकादेशारंभ इति। अत्रोच्यते। जातिपक्षे तावदयं योग आरब्धव्योऽनेकार्थानुरोधात। नहि रथावयवविभीतकदेवनेषु एका जातिरस्ति। एवं किरणचरणतुर्यांशेषु प्रयुज्यते च। अक्षाः पादा इति व्यक्तिपक्षेऽप्यारम्भणीयम्। तंत्रेण निर्वाहेऽपि सर्वत्र तंत्रेण प्रयोक्तव्यमिति-नियमाभावात्। भेदविवक्षया हि प्रत्यर्थशब्दनिवेशादनेकशब्दप्रयोगप्रसङ्गात् घटघटौ घटकलशाविति द्वंद्वोऽपि स्यादारब्धे त्वस्मिन् नाम्नामिवैकादेश विधानात् पदानां द्वन्द्वविधानात द्वन्द्वप्रसङ्ग एव नास्ति। द्वंद्वापवाद एका-देश इति तु कृत्वा चिन्तया नेयम्। केचित्तु यस्य लोप इत्यतो लोपग्रहण-मनुवर्त्यादेर्लोपमाहुः। तन्मतेऽपि शिष्यमाणं लुप्यमानार्थाभिधायीत्येकेन शब्देनानेकार्थाभिधानं न काचिदनुपपत्तिः। ननु च ये तावदेकार्थाभिधायिनः शब्दाः आद्रव्यत्वगोत्वादयो न तेषु द्विवचने नाप्येकादेशः। ये प्येकादेशाः ये त्वनेकार्थाभिनिवेशिनो गौः शुक्लः पाचक इत्यादयस्तेष्वनुस्यूतं किंचिदर्थगतं एकं गोत्वादिनिमित्तं वक्तव्यम्। अन्यथा सम्बन्धग्रहणासम्भवान्न गवादिषु तद्गता जातिर्निमित्तम्। तथा शुक्लादिष्वपि गुणमात्रनिष्ठेषु गुणिष्वेषु तु स्वग-

तथा जात्या व्यापकीभूतो गुणः । एवं पाचकादिष्वपि निःसामान्यानि सामान्यानीति सामान्येष्वपि निःसामान्यरूपं सामान्यमस्ति । अत्र भिन्नेष्वभिन्नप्रत्ययहेतुत्वम् । तावेतावित्यादौ परोक्षत्वप्रत्यक्षत्वादिकम् । अभावाश्चत्वार इत्यत्र निरुपाख्यत्वमित्यादि सर्वत्र द्रष्टव्यम् । अथ यदि नाम्नामेकादेशास्तर्हि कथं विभक्त्यन्तेन विग्रहः । वृक्षश्च वृक्षश्च वृक्षाविति । वृक्षश्च वृक्षौ च वृक्षा इति । यावता एकादेशवृत्तिर्नित्या नैतद्वृत्तिसमानार्थवाक्यं प्रत्येकमात्रविवक्षाऽतश्च प्रत्येकं विभक्तिर्यतोऽत्र भेदनिबन्धनः समुच्चयश्च शब्देन द्योत्यते । उच्यते । एकार्थीभावे वृत्तिः । व्यपेक्षायां तु वाक्यम् । तुल्यार्थे तु वाक्यं न सम्भवति । भिन्नार्थमपि किंचिन्मात्रसाधर्म्याद्वाक्यं भवत्येव । इह एकश्च एकश्च द्वौ च द्वौचेत्यादीनां संख्येयार्थानां नैकशेषोऽनभिधानात् । तद्वाचकस्य द्विचतुरादिशब्दस्य विद्यमानत्वाच्च गोत्वाश्वत्वे सामान्ये । ते च घटत्वं च सामान्यानीतिसूत्रानारम्भे न सिध्येत् । सामान्यानां निःसामान्यत्वान्निःसामान्यत्वं चानुगतप्रत्ययहेतुर्न वाच्यतावच्छेदकं विशेषादावतिप्रसक्तत्वात् । एवं विशेषा अभावा इत्यपि बोध्यम् । जननीवाचकस्य धान्यमायवाचकस्य च मातृशब्दस्य नैकादेशोऽनभिधानाद्विरुद्धत्वाद्वा मातरौ ते इत्युक्ते परिच्छेत्तुरप्रत्ययः।मातरौ तावित्युक्ते जनन्याः पयः पयो जरयतीत्यत्र नैकादेशः । पयःपयो नयतीत्यत्र च सहोक्तिसंम्भवात् । न हि कर्तृकर्मणोर्गौणमुख्यकर्मणोश्चैकरूपेणैकत्रान्वयः सम्भवतीति दिक् । चकारो भिन्नक्रमः द्वन्द्वे इत्यस्यानन्तरं द्रष्टव्यः । स च योगविभागेन पुनर्विधानार्थः च अत्र द्वन्द्वो भाविनि कृते चेत्यर्थः । ईषत्सदृशानां भिन्नलिङ्गानां सर्वथा विरूपाणां च क्वचिद्विध्यर्थं क्वचि द्विकल्पविध्यर्थं चेदं गार्ग्यायणश्च गार्ग्यश्च गार्ग्यौ । द्वन्द्वेऽल्पस्वरस्य पूर्वनिपात इति त्वनित्यम् । आधारभावयोरितिलिङ्गात् । गार्ग्यायणौ गार्ग्यश्च गर्गाः । अपत्यत्वसामान्येनेदम् । स्त्रीपुंरूपविशेषस्तु प्रकरणादिनाबोध्यः गार्ग्यायणगर्गापत्ययोर्वा सहनिर्देशस्तु प्रकरणादिना बोध्यः । स्वसा च भ्राता च भ्रातरौ । दुहिता च पुत्रश्च पुत्रौ । अत्रापि भ्रातृभगिन्योर्भ्रात्रोर्वा कन्यापुत्रयोर्वा पुत्रयोर्वा सहोक्तिः प्रकरणादिना बोध्या । शुक्लश्च शुक्ला च शुक्लं च समाहारद्वंद्वे शुक्लम् । अन्यत्र शुक्लानि क्लीबाक्लीबानां क्लीबानां

वा सहोक्तिस्तथा । माता च पिता च पितरौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ । अत्र मातापित्रोः पित्रोर्वा श्वश्रूश्वशुरयोः श्वशुरयोर्वा सहोक्तिस्तथा । देवदत्तश्च भवांश्च भवंतौ । भवांश्च अहं च आवाम् । त्वं च अहंच आवाम् । स च यश्च यौ । भवांश्च स च तौ । गावश्च गावश्च गावः । अश्वाश्च अश्वाश्च अश्वाः । महिष्यश्च महिषाश्च महिषाः । प्रकरणादिना स्त्रीणां पुंसां वैकादेशा बोध्याः । हंसी च हंसश्च हंसौ । ब्राह्मणी च ब्राह्मणश्च ब्राह्मणौ । स्त्रीपुंसयोः पुंसोर्वा सहोक्तिस्तथा । योगविभागस्येष्टसिद्ध्यर्थत्वादतिप्रसङ्गो नाशंक्य इति दिक् । **इति समासप्रक्रिया ॥प्रादिरुपसर्गः**। प्र आदिर्यस्य स प्रादिः । तद्गुणसंविज्ञानोऽयं बहुव्रीहिः । प्रकर्ष इति लिंगात् । न ह्यतद्गुणसंविज्ञानो यस्य धातोः प्राक् प्रयोगः सम्भवति । यत्तु कैयटेनोक्तं दंडी विषाणी चानीयतामित्यत्र तु संयोगासमवयलक्षणेन सम्बधिनि कार्ये विज्ञायमाने उपलक्षणस्याप्यन्तर्भावो भवतीति । यदपि हरदत्तेनोक्तं यत्र तु संयोगसमवाययोरन्यतरत्प्रवृत्तिनिमित्तं तत्र तत्स्वभावादेवोपसर्जनस्यापि कार्ययोगः । यथा दण्डिनमानय विषाणिनमानयेति । यदपि प्रक्रियाप्रकाशे उक्तम् । आदिशब्दोऽत्रावयववाची । अवयवावयविनोश्च समवायः सम्बन्धः । यत्र च समस्यमानपदार्थानां संयोगः समवायो वा सम्बन्धः । स तद्गुणसंविज्ञान इति । तत्रेदं वक्तव्यम् । न हि सर्वत्र तद्गुणसंविज्ञाने संयोगसमवाययोरेव प्रवृत्तिनिमित्तत्वं सम्भवति । प्रकृतसूत्रे एवाभावात् । नहि सर्वशब्दस्य विश्वादिभिः संयोगः समवायो वा भवति । निरवयवत्वादाकाशसमवेतत्वाच्च । सत्त्वे वा ज्ञापकोपन्यासवैयर्थ्यात् । न्यायोपन्यासवैयर्थ्याच्च । किं च "वृष्णयो वसुदेवाद्याः" "नंदाद्या ये व्रजे गोपाः" "पुष्कराद्यानि तीर्थानि गंगाद्याःसरितस्तथा" इत्यादावसंभवात् । न चात्रेष्टापत्तिः। नंदवसुदेवयोरदेवत्वस्य पुष्करस्यातीर्थत्वस्य गंगाया असरित्त्वस्य च प्रसङ्गात्। न च त्वयाप्यादिशब्दोऽवयवार्थ इति स्वीकारात्कथं समवायानुपपत्तिः । उच्यते । रथावयवकाष्ठस्येव विनापि समवायमवयवत्वस्वीकारात् । न हि परैरपि शब्दानां शब्दान्तरावयवत्त्वं शब्दान्तरैः संयुक्तत्वं चाभ्युपेयते । कस्तर्हि सर्वादीनां सम्बन्धः । आनन्तर्य्येण पठितत्वमेकबुद्धिविषयत्वं वेति गृहाण । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इत्यत्र हि प्रतिज्ञादयोऽनु-

मानवाक्यस्यावयवा इवावयवाः । न तु समवायिकारणानि गुणे गुणसमवायस्यानभ्युपगमाच्च । आकाशे शब्दसमवायस्याभ्युपगमाच्च । स्वमतेऽप्याकाशदेशः शब्द इति भाष्यादाकाश एव शब्दसमवायस्यौचित्यात् । ते "पदे वर्णा न विद्यंते वृत्तावयवा न च । वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन" इति वाक्यपदीयाच्चेति दिक् । उप समीपे सृज्यते उच्चार्यते वाचकस्येत्युपसर्गः । सृजेः कर्मणि घञ् । अन्वर्थसंज्ञा क्रियासंबद्ध इति लभ्यते । तदुक्तम् । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञा इति । यस्य धातोर्वाच्या क्रिया यत्क्रिया तया युक्ताः तं धातुमर्थं वा प्रति उपसर्गसंज्ञाः । यद्वा या क्रिया यत्क्रिया तया युक्ताः । तत्रार्थं क्रियाविशेषरूपं प्रतीत्यर्थम् । उपसर्गा ह्यर्थविशेषस्य द्योतकाः । न तु वाचकाः । "तदुक्तम् । उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते । विहाराहारसंहारप्रतीहारप्रहारवत्" । अन्यः धातुपाठपठिताद्भिन्नः प्रतीयते । धातुनैव उपसर्गेण द्योतकेन हेतुना । उपास्ते हरिम् । एकमास्थितौ । पूर्वान् महाभागतयाऽतिशेषे इत्यादौ सकर्मकक्रियाप्रतीतेः । तद्वाचक उपसर्गो विशिष्टं धातुर्वा । नाद्यः । अस्यादेः क्रियावाचकत्वाभावेन धातुत्वाभावात् । उपसर्गस्यापि न धातुत्वं क्रियावाचित्वेऽपि गणपठितत्वाभावात् । गणपाठ उपलक्षणमिति चेत् तर्हि उपसर्गादेव तिबादिभिर्भाव्यं नत्वास्यादेः । न द्वितीयः । विशिष्टस्य गणे पाठाभावेन धातुत्वाभावेन प्रत्ययाप्रसङ्गात् । पाठस्योपलक्षणत्वे समुदायस्यैवास्यादेः अट्द्वित्वादिप्रसङ्गात् । अतः परिशेषादंत्य एव शिष्यते । जयतीत्यादौ धातोर्जयवाचित्वं दृष्टं तस्यैव विजयते इत्यत्र विशिष्टजयवाचित्वं वक्तुं युक्तम् । दृष्टसामर्थ्यादुपसर्गस्य तु धातुं विना प्रयोग एव नास्ति । क्रियावाचित्वं तु दूरापास्तं स्वीकृतं परैरपि उपसर्गसंज्ञाबलात्तत्फलमनुमेयम् । तेन उपसर्गादस्तेर्यस्वरयोः सस्य षः । निष्यात् । निषंति । उपसर्गाद्गत्यर्थसेधतेर्न षः । गंगां विसेधति । उपसर्गाद्धन्तेरत्पूर्वस्य नस्य णः । प्रहण्यात् । उपसर्गादनितेर्नस्य णः । प्राणिणिषतीत्यर्थः । 'प्र आदिकर्मदीर्घेशे भृशसम्भवतृप्तिषु । वियोगशुद्धिशक्तीच्छाशांतिपूजाग्रदर्शने, ॥ १ ॥ आदिकर्मणि । प्रयातः । दीर्घे । प्रबला मूषकाः । ईशे । प्रभुर्देशस्य । भृशे । प्रवदन्ति दायादाः । संभवे । हिमवतो गंगा प्रभवति । तृप्तौ । प्रभुक्तमन्नम् ।

वियोगे । प्रोषितः । शुद्धौ । प्रसन्नमुदकम् । शक्तौ । प्रसक्तो विप्राय । इच्छायाम् । प्रार्थयते कन्याम् । शांतौ । प्रशांतोऽग्निः । पूजायाम् । प्रांजलिः स्थितः । अग्रे । प्रवालम् । दर्शने । प्रलोकयति ॥ १ ॥ वधे गतौ दर्शने च विक्रमाभिमुखे भृशे ॥ अधीनमोक्षणप्रातिलोम्यकेषु परा मतः ॥ २ ॥ वधे । पराहतः । गतौ परागतः । दर्शने । परादृष्टः । विक्रमे । पराक्रान्तः । अभिमुखे । परावृत्तः । भृशे । पराजितः । अधीने । पराधीनः । मोक्षणे । पराकृतः । प्रातिलोम्ये । पराङ्मुखः ॥ २ ॥ अपो वियोगे निकृतौ विपरीते निदर्शने ॥ आनन्दे वर्जने चौर्ये चारणे सम्यगीरितः ॥ ३ ॥ वियोगे । अपयाति । निकृतौ । अपकृतं कृतवान् । विपरीते । अपशब्दः । निदर्शने । अपदिशति । आनंदे । अपहसति । वर्जने । अपत्रिगर्ताद्वृष्टो देवः । चौर्ये । अपहरति । चारणे । अपसरति ॥ ३ ॥ संयोग ऐक्यप्रभवसत्यप्रत्यक्षसिद्धिषु ॥ भूषाश्लेषस्वीकरणक्रोधाभिमुखवाचि सम् ॥ ४ ॥ संयोगे । सङ्गतः पुत्रेण । ऐक्ये । संवदंति सख्यः । प्रभवे । संभवत्यग्निः काष्ठे । सत्ये । गां संजानाति । प्रत्यक्षे । संपश्यति । सिद्धौ । संसिद्धिः । भूषायाम् । संस्कृता कन्या । आश्लेषे संधत्ते । स्वीकारे । संगृह्णाति । क्रोधे । संक्रुद्धः । अभिमुखे । संयाति ॥ ४ ॥ वेदधिष्ठानसामीप्यपश्चाद्भावानुबन्धने ॥ साम्याभिमुखहीनेषु विसर्गे लक्षणे त्वनुः ॥ ५ ॥ वेदे । अनुवाकमधीते । अधिष्ठाने अनुष्ठानम् । देशे । सामीप्ये । अनुमेघं वर्षति । पश्चात् । अनुरथम् । भावानुबन्धने । अनुशयः । साम्ये । अनुकृतिः । अभिमुखे । अनुवत्सो मातरं धावति । हीने । अन्वर्जुनं योद्धारः । विसर्गे । अनुज्ञातः । लक्षणे । अनुवनमसतां गतिः ॥ ५ ॥ ज्ञानावलंबशुद्धीषदर्थे व्याप्तिपराभवे ॥ अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥ ६ ॥ ज्ञाने । अवगतोऽर्थः । अवलंबे । अवलंब्य यष्टिं गच्छति । शुद्धौ । अवदातम् । ईषदर्थे । अवलंब्यते । व्याप्तौ । अवकीर्णम् । पराभवे । अवज्ञम् । वियोगे । अवयातः ॥ ६ ॥ निर्वियोगात्ययादेशातिक्रमे लाभनिश्चिते ॥ वियोगे । निःसंगां ब्रवीति । अत्यये । निर्मेघम् । आदेशे । निर्दिष्टम् । अतिक्रमे । निष्क्रांतः । लाभे । निर्दिष्टः । निश्चिते । निश्चितम् । दुरीषदर्थे कृच्छ्रेऽर्थे कृशासंपत्तिसंकटे ॥ ७ ॥ ईषदर्थे । दुर्गतिः कृच्छ्रार्थे । दुर्जयः । कृशे । दुर्बलः । असंपत्तौ । दुर्गतः । संकटे । दुर्दिनम् ॥ ७ ॥

नानावियोगातिशयभृशमोहेशवाङ्मृधे ॥ पैशून्यास्मरणे भूषेषदर्थानभिमुख्यके ॥ ८ ॥ अनवस्थामुखे शौर्यदर्शने विरुदाहृतः ॥ नानार्थे यथा । विचित्रा सूत्रस्य कृतिः पाणिनेः । वियोगे । वियुक्तः । अतिशये । विकीर्णः । भृशे । वितटा नद्यः । मोहे । विमनस्कः । ईशे । विभुः । वाङ्मृधे । विवदते । पैशून्ये । विगायति । अस्मरणे । विस्मृतः । भूषायाम् । विभूषितः । ईषदर्थे । विलेपितः । अनभिमुख्यके । विमुखः । अनवस्थायाम् । विभ्रांतः । मुख्ये । विशिष्टः । शौर्य्ये । विक्रांतः । दर्शने । विलोकयति ॥ आङिच्छाभयवाक्येषदर्थाश्लेषादिकर्मणि ॥ ९ ॥ बंधनेऽभिविधौ शाठ्यकृच्छ्रसामीप्यसंश्रये ॥ अभिमंत्रनिवृत्त्याशादानानुभवविस्मये ॥ १० ॥ प्रतिष्ठादेशमर्यादास्पर्द्धामुख्योर्द्धकर्मणि ॥ इच्छायाम् । आकांक्षति । भये । आबिभेति । वाक्ये । आजानाति । ईषदर्थे । आताम्रमुखः । आश्लेषे । आलिङ्गति । आदिकर्मणि । आरभते ॥ ९ ॥ बन्धने । कवचमाबध्नंति । अभिविधौ । आकुमारं यशः । शाठ्ये । आचरति कपटेन । कृच्छ्रे । आहतः । सामीप्ये । आसन्ना वयम् । संश्रये । आवसथः । अभिमंत्रे । आमंत्रणम् । निवृत्तौ । आधावति । आशायाम् । आशास्ते । आदाने । आदत्ते । अनुभवे । आशीतम् । विस्मये । आ एवं किल तत् ॥ १० ॥ प्रतिष्ठायाम् । आस्पदम् । आदेशे । आदिष्टः । मर्यादायाम् । आभक्तेर्दुःखम् । स्पर्द्धायाम् । आह्वयंते रथिनो रथिनः । मुख्ये । आगच्छति । ऊर्द्धकर्मणि । आरोहति पर्वतम् ॥ राश्यधस्तु भृशादेशनित्यकौशलबंधने ॥ अन्तर्भावे समीपे निर्दर्शनोपरमाश्रये ॥ ११ ॥ राशौ । निकरो मणीनाम् । अधः । निपतति । भृशे । निगृहीतः । आदेशे । निदर्शितम् । नित्ये । निविशते । कौशले । निपुणः । बन्धने । निबद्धः । अंतर्भावे । निवीतमुदकं सिकताभिः । समीपे । निकृष्टः । दर्शने । निदर्शनम् । उपरमे । निवृत्तः पापात् । आश्रये । निलयः ॥ ११ ॥ अधिरध्ययनैश्वर्यवशित्वस्मरणाधिके ॥ १२ ॥ अध्ययने । उपाध्यायादधीते । ऐश्वर्ये । अधिपतिः । वशित्वे । अधीनः । स्मरणे । मातुरध्येति । अधिके अधिकृतम् ॥ १२ ॥ अपिः संभवगर्हाशीर्मृतिभूषासमुच्चये ॥ संभवे । अपि योजनमस्ति । गर्हायाम् । अपिपापिनः । आशिषि । भद्रमपि । मृतौ । मरणमपि । भूषायाम् । अपिनह्यति हारम् । समुच्चये ।

तदपि ॥ विक्रमातिक्रमेऽबुद्धाभृशार्थातिशयेष्वतिः ॥ १२ ॥ विक्रमे । अतिरथः । अतिक्रमे । अतिक्रामति । अबुद्धे । अतिगहनम् । अभृशार्थे । अतितप्तम् । अतिशये । अति मनुते ज्ञानम् ॥ १२ ॥ प्रशंसानुमते पूजाभृश कृच्छ्रशुभेषु सुः॥प्रशंसायाम्।सुरूपः।अनुमते । सुकृतम् ।पूजायाम् । सुसाधुः । भृशे । सुतप्तः । कृच्छ्रे । सुदुष्करः । शुभे । सुगंधः ॥ उत्प्राबल्यवियोगोर्द्ध्वकर्मलाभप्रकाशने ॥ आश्चर्ये मोक्षणेऽभावे चलप्राधान्यशक्तिषु ॥ १४॥ प्राबल्ये । उद्बलः । वियोगे । उद्गच्छति । ऊर्द्ध्वकर्मणि । उत्तिष्ठतिशयनात् । लाभे । उत्पन्नम् । प्रकाशने । उच्चरति । आश्चर्ये । उत्सुकः । मोक्षणे । उद्गतोऽश्वः । अभावे । उत्पथः । चले । उत्कः । प्राधान्ये । उद्दिष्टः । शक्तौ । उत्साहः ॥ १४ ॥ अभिःपूजाभृशार्थेच्छाव्याधिसाम्याभिमुख्यके । सारूप्यवचनाहारस्वाध्यायेषु निरूपितः ॥ १५ ॥ पूजायाम् । अभिवंदते गुरुम् । भृशार्थे । अभियुक्तः।इच्छायाम् । अभिलिप्सते। व्याधौ । अभिस्पंदो व्याधिः । साम्ये । अभिजातः । आभिमुख्यके । अभिमुखम् । सारूप्ये।अभिरूपः । वचने ।अभिधानम् । आहारे। अभ्यवहरति । स्वाध्याये अभ्यस्यति ॥ १५ ॥ सादृश्यादानहिंसांगीकृतौ प्रतिनिधौ क्वचित् ॥ व्याध्याभिमुख्ययोर्व्याप्तौ वारणे प्रतिरुच्यते ॥ १६ ॥ सादृश्ये । प्रति देवदत्तस्य। आदाने । प्रतिगृह्णाति । हिंसायाम् । प्रतिहंति । अङ्गीकृतौ प्रतिज्ञानम् । प्रतिनिधौ । अभिमन्युरर्जुनतः प्रति । व्याधौ । प्रतिश्यायः । आभिमुख्ये । प्रतिसूर्यं गच्छति । व्याप्तौ । प्रतिकीर्णं पांशुभिः । वारणे । प्रतिषिद्धः१६॥ परिः समंततोभावव्याप्तिदोषकथासु च॥ भूषाश्लेषे पूजने च वर्जने वसनेऽशुभे ॥ १७ ॥ समंततो भावे । परिभ्रमति । व्याप्तौ । परिगतोऽग्निः ग्रामम् । दोषकथायाम् । परिवादः । भूषायाम् । परिष्करोति कन्याम् । आश्लेषे । परिष्वजते । पूजने । परिचरति गुरुम् । वर्जने । परि त्रिगर्त्तेभ्यो वृष्टो देवः । वसने।परिधत्ते वासः । अशुभे।परिदेवनम्॥१७॥उपः सामीप्यसामर्थ्यव्याप्त्याचार्यकृतौ मृतौ ॥ दोषदानक्रियावीप्सारम्भाध्ययनपूजने ॥ कृष्णाचार्यैः कृताः श्लोका उपसर्गार्थसंग्रहे ॥ १८ ॥ सामीप्ये । उपकुंभम् । सामर्थ्ये । उपकरोति मित्रेभ्यः । व्याप्तौ । उपकीर्णः पांशुभिः ।आचार्यकृतौ । उपदिशति-

शिष्येभ्यः । मृतौ । उपरतः । दोषे । उपघातः । दाने । उपहरत्यर्थं देवदत्ताय । क्रियायाम् । उपचारः। वीप्सायाम् । देवंदेवमुपचराति । आरंभे । उपक्रमते भोक्तुम् । अध्ययने । उपाध्यायादधीते । पूजने । उपचितः पिता पुत्रेण ॥ १८ ॥ **इति सोदाहरणोपसर्गवृत्तिः॥प्राग्धातोः** । नियमार्थमिदम् । स किं संज्ञानियमो वा प्रयोगनियमो वा। संज्ञानियमे तु प्रादयो धातोः प्रागेव प्रयुज्यमाना उपसर्गसंज्ञा इत्यर्थः । प्रयोगनियमे तु ये उपसर्गसंज्ञास्ते धातोः प्रागेव प्रयोक्तव्या इत्यर्थः । तत्राद्येऽनर्थकं वचनम् । एषां प्राक् प्रयोग एव नेष्यते । न पुनरप्रयुज्यमानानां संज्ञायां किंचिदनिष्टमापद्यते । किंचानुकरणं चानितिपरमित्यनितिपरग्रहणमनर्थकं स्यात् । व्यवहितस्यानुकरणस्य प्रयोग इष्ट एव । संज्ञा तु नास्ति प्रयोजनाभावात् । प्रयोगनियमे तु प्रागेव धातोरनुकरणस्य प्रयोगः साधुः स्यात् । न तु इति शब्देन व्यवहितस्येत्यनितिपरमिति वक्तव्यम्। अतः प्रयोगनियम एवायम् । ननु यत्र लोकैः संकीर्णप्रयोगः । गौर्गवीति तत्र साधुपरिज्ञानाय शास्त्रमर्थवत् यत्र त्वसंकीर्ण एव प्रयोगो न तत्र शास्त्रकृत्यमस्ति । न च कश्चित्प्रपचतीति प्रयोक्तव्ये पचतिं प्रेति प्रयुंक्ते । मैवम्। लोके विपरीतप्रयोगाभावेऽपि वेदादौ विपरीतप्रयोगदर्शनात् । लोकेऽपि विपरीतप्रयोग आशंक्येत तद्वारणार्थमिदम्। यद्यपि आविश्चक्षुषोऽभवदस्नाविवरागः । निष्कौशांबिरित्यादौ यद्यप्यप्रयोगः नासावुपसर्गसंज्ञः। उपसर्गसंज्ञायस्यतस्यैव प्रयोगो नियम्यते नान्यस्य। किंच कूलमुद्रुज इत्यादौ नाम्नश्च कृतेति कर्मोपसर्गयोः समासे पूर्वनिपाताव्यवस्था स्यात्तत्र व्यवस्थार्थं चेदमारंभणीयम् । यद्येवं सुखेन कटः क्रियते । सुकटंकराणि दुष्कटंकराणि वीरणानीत्यत्र सुदुःसोः प्राग्धातोः प्रयोगः प्राप्नोति । कटंसुकराणीति । खलः खित्करणमिदानीं किमर्थं स्यात् । अनव्ययं हि मुच्यते । खित्करणसामर्थ्यादव्ययस्य भवतु । यद्वा । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् सुकरशब्दे परतः कटशब्दस्य भविष्यति । उच्यते । संज्ञानियम एवात्राश्रयणीयस्तेन सुकटंकराणीत्यत्र संज्ञाभावे प्राक्प्रयोगो न दुष्यति । ईषत्कर इत्यत्र यद्यनुपसर्गप्रयोगे खल् तथात्रापि भविष्यति । नह्यत्रोपसर्गसंज्ञानिमित्तः कश्चित्कार्यविशेषोऽस्ति । प्रयोगनियमार्थमिदमिति

हरदत्तमाधवोक्तिश्चिन्त्या । धातुग्रहणमनर्थकम् । कुतः प्रागित्यपेक्षायाम् । यत्क्रियायुक्ताः प्रादयस्ततः प्रागिति विज्ञास्यते । नैवं शक्यम् । इहहि कर्तु प्रेच्छति प्रचिकीर्षतीति सवाच्येच्छया प्रशब्दस्य योगे इति सस्येव प्राक् । प्रशब्दः प्रयुज्येत । धातुग्रहणात्तु धातोरेव चिकीर्षतः प्रयुज्यते । नन्वेवम-प्रादिरुपसर्गौ धाताविति सूत्रमस्तु धातोपरेधात्वर्थेऽन्वये सतीत्यर्थोऽस्तु । अन्वर्थसंज्ञाबलाच्च यत्क्रियायुक्ता इति लभ्यते । उच्यते । प्रागित्ययं योगः । अत्र धाताविदनुवृत्तं पञ्चम्या विपरिणम्यते । प्राक्शब्दस्यान्यादित्वाभ्युपग-मात् । तथा च प्रादिभिन्नानि नामानि धातोः प्राक् प्रयोज्यानि । तानि च ऊर्यादीनि च्विडाजंतानि अनुकरणं चानितिपरम्। आदरानादरयोः सदसती। भूषणेऽलम् अंतरपरिग्रहे । कणे मनसी श्रद्धाप्रतीघाते । पुरोऽव्ययम् । अस्तं च । अच्छगत्यर्थवदेषु । अदोऽनुपदेशे । तिरोंतर्द्धौ । वाकृत्रि। उपाजेऽन्वाजे । साक्षात्प्रभृतीनि च । अनत्याधान उरसिमनसी । मध्येपदेनिवचने च । नित्यं हस्ते पाणावुपयमने । प्राध्वं बंधने । जीविकोपनिषदावौपम्ये । कारिका । ऊरीकरोति । शुक्लीकरोति । पटपटाकरोतीत्यादि । नाम्नश्च कृता समासः । नाम्नः पदस्येत्यर्थः । कृदन्तेनान्वयात् पदस्य हि पदेनान्वयो नापदेन पदार्थोऽपि कारकग्राह्यं न तु नामार्थो नापि सम्बन्धसामान्यम् । कृदंतोपस्थापितक्रियायामन्वयानुरोधात् । कारकस्यैव हि क्रियायामन्वयः संभवति । कृतेत्यनेन कृत्संज्ञकः प्रत्ययो गृह्यते न तु कृंतति करोति वा । प्रत्यया-प्रत्यययोः प्रत्ययस्यैवेति परिभाषाया प्राधान्येन च प्रत्ययस्य च केवलस्य प्रयोगाभावात् सप्रकृतिको गृह्यते । कृत्प्रत्ययार्थे कारके उपपदार्थस्य कारकस्यान्वयासंभवात् । विशेषणीभूतक्रियायामेवान्वयः कृदन्वयः । तृतीया तु सहादियोगं विनाऽपि तदर्थमात्रविवक्षायां भवति । अत्र कृता इति कृदन्तमात्रेण समासो न तु सिबंतेन । अन्यथा कृते इत्येवावक्ष्यत् । यद्वा । इदमपि न ब्रूयात् । नाम्नामित्येवानुवर्तयेत् । नन्वेवमपि नाम्न इति व्यर्थं नाम्नामित्यनुवृत्त्यैव निर्वाहात्।मैवम् । नाम्न इत्यभावे चकारोऽपि व्यर्थः । तथा च । प्रादीनामेव कृता सह समासः स्यात् । अनन्तरस्येतिन्यायात् । तथा च कारकस्य उपसर्गस्य प्रादेश्च नाम्नां च अविभक्तिकेन कृदन्तेन समास इति फलितोऽर्थः । अवि-

भक्तिकेनेति किमर्थम् । शृणु । कथं कच्छेन वा पिबति व्याजिघ्रति । आतोडः । नाम्नीति डः । कच्छ अस् प, वि आ घ्र इत्यलौकिकं वाक्यम् । अत्र प घ्र शब्देन समासः । यदि तु सिबंतेन समासः स्यात् । तर्हि पूर्व मन्तरङ्गत्वादाप् स्यात् । पघ्रशब्दयोर्जातिवाचिकत्वाभावेन नेयोऽप्रसंगात् । समासे तु कृते समुदायस्य जातिवाचिकत्वेन न जातेरितीप् । न त्वाबंतेनापि समासे जातिरितीबस्तु न । तत्रात इत्यनुवृत्तेः तच्चावश्यमनुवत्यम् । तित्तिरिः । आखुरित्यादिव्यावृत्त्यर्थम् । ननूपसर्गत्वेनैव सिद्धेः प्रादीनां पृथगनुवृत्तिः किमर्था । सत्यम् । उपसर्गसंज्ञाभावेऽपि समर्था विगताः अस्माद्विसेवकः । प्रगतो नायकोऽस्मात्प्रनायकः । यत्क्रियायुक्ता इति । सिंचि नियश्च प्रति नोपसर्गत्वम् । कुंभं करोति कुंभ अस् कारेत्यत्र समासे कृते समुदायस्य जातिवाचकत्वादीप् । ततोऽपत्ये ण्यणि समुदायादेर्वृद्धिः । कौंभकारेय इति। कारशब्दादीपि तु आदिवृद्ध्यर्थं यत्नान्तरमास्थायं स्यात् । कृद्ग्रहणे उपसर्गकारकपूर्वस्यापि ग्रहणं तेन नखनिर्भिन्नः । नकुलेन स्थितं नकुलास्थितम् । अवतप्तेन कुलास्थितम् । लुकि त्ववतप्तेनकुलस्थितम् बालेन मूत्रितं बालमूत्रितम् । प्रवाहेबालमूत्रितं प्रवाहबालमूत्रितम् । अथ कथं प्रणम्य विधायेत्यादि । अन्योन्याश्रयप्रसङ्गात् । समासे सति क्यप्क्यबन्तेन समासः । उच्यते । समासे क्यप् । तत्र चिकीर्षित इत्यध्याहारान्नदोषः । समासे सतीति पक्षे ससमासश्चेति योगविभागात्समासः । यद्वा । वृद्धकुमारीवरन्यायेन तेनैव धातुना समासः । पश्चात्कोपवादः क्यप् । यद्वा । समास इत्यधिकारे पुनः समासग्रहणं धातुनापि समासार्थम् । एवम् । ऊरीकृत्य शुक्लीकृत्य पटपटाकृत्य सत्कृत्य असत्कृत्य अलङ्कृत्येत्यादिपूर्वभागे पदं गृह्यते समासप्रत्यययोः । अलुक् क्वचिदिति सामान्यापेक्षज्ञापकात् । राजानमाप्नोति राजापः । समिदाधाय वागादाय इत्यादिफलसत्त्वात् । विशेषसंज्ञारहितं समासमात्रमनेन विधीयते । द्विगव्ययीभावादिविशेषसंज्ञानामनुवृत्तेः । माधवस्तु कृता समासः । नाम्नश्चेति व्यत्यासेन सूत्रं पठति । यदपि । समासाधिकारे पुनः समासग्रहणं विकल्पनिवृत्त्यर्थम् । पूर्वसमासेविकल्पज्ञानार्थं चेत्याह । तन्न । व्यपेक्षैकार्थीभावभेदेनैव सिद्धत्वात् । यदपि । तथा नाम्नश्च कृतेत्येकयोगे कार्ये पृथग्योगकरणं

कृताऽन्यत्रापि समासमातिपत्त्यर्थम् । अनुव्यचलदित्याह । तदपि न । मागुक्तरीत्या तस्य सिद्धत्वात् । अनुव्यचलदित्यस्य लोकेऽनिष्टत्वात् । स्वारातिरिक्तमयोजनाभावाच्च । यदपि स्याद्यधिकारादिह योऽलुगित्याह । तन्न । अव्ययीभावाद्विभक्तेर्लुगित्यधिकारात्स्यादेरित्यनुक्तत्वाच्च । **चादिर्निपातः**॥ च आदिर्यस्य स चादिः । आदिशब्दो व्यवस्थार्थः । मकारार्थे इत्यन्ये । तेनानुक्तानामपि सङ्ग्रहः सिध्यति । निश्चयेन पतन्त्यनेकेष्वर्थेषु द्योतकत्वान्निपाताःज्वलादेर्ण तदुक्तं नागनाथेन को हि धातुमातिपदिकमत्ययनिमित्तानामर्थान् वक्तुं शक्नुयादिति । 'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः। अनेकार्थाः स्मृतास्सर्वे पाठस्तेषां निदर्शनम्'इति केचित्। ननु किमर्थं निपातसंज्ञा विधीयते । औनिपात इति सन्धिनिषेधार्थमिति चेन्न । औ अव्ययमित्येव तस्य सिद्धत्वात् । तथा चैकस्वरोऽव्ययः सन्धिं न माप्नोतीति । एवं तर्हि स्वरादीनामग्रहणार्थं निपातसंज्ञाविधानम् । स्वरादीनां निपातसंज्ञा न क्रियते । तेनैकस्वराणां स्वरादीनां सन्धिर्भवत्येव । यत्तु । अन्वर्थसंज्ञाविज्ञानार्थं महती संज्ञा क्रियते इत्युक्तम् । तन्न । किमर्थं संज्ञा क्रियते इति मश्ने अन्वर्थसंज्ञाविज्ञानार्थमित्यस्यानुत्तरत्वात् । य्वौ वा । ह्रस्वो वेत्यादौ व्यवस्थितविकल्पाश्रयणेनैव सिद्धत्वान्निपाता द्योतकाः स्वरादयश्च वाचका इत्यस्मिन्मते फलभेदसत्त्वाच्च । च पुनरादौ।वा विकल्पे।ह स्फुटपादपूरणयोः । हि निश्चये । अहह खेदे । एवं अवधारणे । एवमङ्गीकारे । नूनं निश्चये । पृथक् भिन्नार्थे । विना ऋते अन्तरेण वर्जनार्थे । स्वस्ति कल्याणे । अस्ति सत्तायाम् । दोषा नक्तं रात्रौ । मृषा मिथ्या असत्ये । मिथः अन्योन्यार्थे । अथ अथो आनन्तर्ये । ह्यः पूर्वदिने । श्वः परदिने । उच्चैः उच्चे । नीचैः नीचे । स्वर् स्वर्गे । अन्तर्मध्ये । मातः पुनर् भूयस् पौनःपुन्ये । आहोस्वित् वितर्के । अन्तरा मध्ये । अलं भूषायाम् । कृतं वारणे । ईषदल्पे । किल खलु वै निश्चये। आरात् दूरान्तिकयोः । भृशमत्यर्थे । यत् यत्कारणे । तत् तत्कारणे । शश्वत् सातत्ये । अ संबोधने । आ भयाश्चर्ययोः । इ ई भर्त्सने । उ ऊ दुःखवितर्कयोः । ऋ ॠ ऌ ॡ गानस्तोभे ए सम्बोधने । ऐ आश्चर्ये । ओ भवत्यर्थे । औ अङ्गीकारे । श्रौषट् वौषडिति हविर्दाने । तत्क्षणे सद्यः । अस्मिन् दिने अद्य । अस्मिन् क्षणे अधुना इदानीं साम्प्रतं संप्रति । पूर्वस्मिन् दिने पूर्वेद्युः ।

अन्यस्मिन् दिने अन्येद्युः । प्र प्रकर्षे । परा निराकरणे । अप अपगतार्थे।सम् सम्यगर्थे । अनु पश्चादर्थे । अव स्थितिज्ञानयोः । निर् निर्गतार्थे । दुर् दुःखे। अभि आभिमुख्ये । वि विशेषार्थे । आङ् समानार्थे । नि निधाने । अति अतिशये । अधि अधिके।अपि सम्भावनायाम् ।प्रति वीसायाम् । परि वर्जने। उप समीपे।श्रत् श्रद्धायाम् । अन्तर् मध्ये । आविर् प्राकट्ये । सुः पूजायाम् । प्रणम्य शिरसादेवं लक्ष्मीकान्तं जगद्गुरुम्।बह्वर्थानां त्वव्ययानां कंचिदर्थं वदाम्यहम्॥ १॥स्वरिति स्वर्गपरलोकयोः।अन्तरिति मध्ये । प्रातरिति प्रत्यूष—श्वस्तनेऽपि। पुनरिति अप्रथमविशेषयोः । सनुतरित्यन्तर्द्धाने । उच्चैसिति महति । नीचैसित्यल्पे । शनैसिति क्रियामान्द्ये । ऋधगिति सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्य । ऋते इति वर्जने। युगपदित्येककाले। मनागिति ईषदर्थे। ईषदित्यल्पे । जोषमिति सुखमौनयोः । तूष्णीमिति मौने। बहिसिति बाह्ये। अवासिति बहिरर्थे । समयेत्यंतिकमध्ययोः। निकषेत्यंतिके। स्वयमित्यात्मनेत्यर्थे । वृथेति व्यर्थे । नक्तमिति रात्रौ । नञिति निषेधेषदर्थविक्षेपेषु । तदन्यतद्विरुद्धतदभावेष्वपि । हेताविति निमित्तार्थे । इद्धेति प्राकाश्ये । अद्धेति स्फुटावधारणयोः । तत्त्वातिशययोरित्येके । सामीत्येतदर्द्धजुगुप्सितयोः। सनेति नित्ये । उपधेति भेदे ।सनादिति नित्ये। सनदित्यपि । तिरसित्यन्तर्द्धौ तिर्यगर्थे परिभवे च । अन्तरेति मध्यविनार्थयोः । अन्तरेणेति वर्जने । ज्योगिति कालभूयस्त्वप्रश्नयोः । कमिति वारिमूर्द्धानंदसुखेषु । शमिति दुःखोपशमे । सहसेत्याकस्मिकाविमर्शयोः । विनेति वर्जने पृथगर्थे च । नानेत्यनेकविनार्थयोः । स्वस्तीति पुण्याशीः क्षेममङ्गलप्रत्यभिवादेषु । स्वाहेति देवदाने । स्वधेति पितृदाने । अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु । वषडिति हविर्दाने । अन्यदित्यन्यार्थे । अस्तीति सत्तायाम् । उपांश्विति अप्रकाशोच्चारणरहस्ययोः। क्षमेति क्षान्तौ । विहायसेति विपदर्थे । दोषेति रात्रौ । मिथ्येति वितथे। मुधेति व्यर्थार्थे । पुरेति चिरातीतभविष्यदासन्नेषु । मिथो इति रहःसहार्थयोः । विरहान्योऽन्यार्थयोरपि । मिथसिति रहोन्योन्यार्थयोः । प्रायसिति बाहुल्ये । मुहुसिति पुनरर्थे । प्रवाहुकमिति समकालार्थे । उर्द्धे प्रवाहिकेति पाठान्तरम् । आर्यहलमिति बलात्कारे । आर्येति प्रतिबन्धे । हल-

मिति निषेधविवादार्थयोरिति शाकटायनः। अभीक्ष्णमिति अनारते पुनरर्थे च। साकं सार्द्धमित्येतौ सहार्थे। नमसिति नतौ। हिरुगिति वर्जने। मेध्य हिंसायाम्। धिगिति निन्दाभर्त्सनयोः। अथेति मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु।अम् शैघ्रेऽल्पे च। आमित्यङ्गीकारे। प्रतामिति ग्लानौ। प्रशामिति समानार्थे। प्रतानिति विस्तारे। मा इति निषेधे। माङिति निषेधाशङ्कयोः। चेति अन्वाचयसमाहारेतरेतरसमुच्चयविनियोगतुल्ययोग्यतावधारणहेतुषु पादपूरणेऽपि। वेति विकल्पानवक्लृप्त्युपमानद्वन्द्वसमुच्चयेषु। अहेति विनियोगे। आचारातिक्रमपूजयोरपि। एवमिति प्रकृतपरामर्शप्रकाराथोंपदेशनिश्चयाङ्गीकारेषु। नूनमिति वितर्केऽर्थे निश्चये च। शश्वदिति सार्वकाल्ये। पौनः पुन्यनित्यसहार्थेष्वपि। कुदिति प्रश्नवितर्कप्रशंसासु। कुवदिति भूर्यर्थे प्रशंसायां च। नेदिति शङ्कायाम्। प्रतिषेधसमुच्चयेष्विति शाकटायनः। चेदिति यद्यर्थासाकल्याप्यर्थोपमानासंपत्तिषु। कच्चिदिति अभीष्टप्रश्ने च। यत्रेति अनवक्लृप्त्यमर्षगर्हाश्चर्येषु। नहेति प्रारम्भे। हन्तेति हर्षानुकम्पावाक्यारम्भविकारेषु। दाननिश्चययोरपि। माकिमिति निषेधवर्जनयोः। नकिमित्यौपम्ये च। यावत्तावदित्येतौ साकल्यावधिमानावधारणेषु। त्वै इति विशेषवितर्कयोः। न्वै इति पाठान्तरम्। द्वै इति वितर्के। नारै इति दानादरयोः। श्रौषट् वौषडिति शब्दार्थौ। तुमिति तुंकारे तथाहि इति निदर्शने। खल्विति निषेधवाक्यालङ्कारजिज्ञासानुनयेषु। नियमनिश्चयहेतुविवादेष्वपि। किलेतिवार्त्तारुचिप्रकरणसम्भाव्यहेत्वतिरस्कारालीकेषु।तथेति सादृश्ये।समुच्चयाभ्युपगमयोरपि स्मेति अतीते पादपूरणे च।अस्मीति अहमित्यर्थे।अकारादयो यथासम्भवे सम्बोधनभर्त्सनानुकम्पापादपूरणप्रतिषेधेषु वर्तते।आङिति ईषदर्थाभिविधिमर्यादाक्रियायोगेषु। उदिति अप्यर्थे। उञिति संतर्कसम्बोधनपूरणेषु। ओकमित्याश्रये। आदहेति हिंसोपक्रमकुत्सनेषु। आतंकेति कुत्सनविनाशयोः। प्रतिग्रहेऽपीति शाकटायनः। वेलायामिति कालपरिमाणे। मात्रायामिति अल्पपरिभाषणे। यथेति योग्यतावीप्सापदार्थानातिवृत्तिसादृश्येषु। किमिति पृच्छाजुगुप्सयोः। ईषदर्थातिशययोरपि। यदिति हेतौ। यमिति यद्यर्थे। हाहा इति विस्मयविषादशोकजुगुप्सार्त्तिषु।ह इति विनियोगक्रमपाद-

पूरणेषु । हे है पाट् प्याट् एते चत्वारोऽपि सम्बोधनार्थाः । अहो इति विकल्पे चेदर्थेऽपि । अथो इति अथवत् । अन्वादेशेऽपि । नन्विति प्रश्नावधारणानुज्ञेच्छामंत्रेषु। वाक्यारम्भादावपि । मन्ये इति वितर्के । नहीत्यभावे । उताहो इति विकल्पे । असीति त्वमित्यर्थवाक्यालङ्कारयोः । ब्रूहीति । प्रैषानुज्ञाऽवसरेषु । नतु इति निषेधे । इति हेतुप्रकारप्रकर्षे। एवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतिवक्ष्यमाणपरामर्शमतेषु । इवेतीषदर्थोपमाप्रेक्षावाक्यालङ्कारेषु । ओमित्यभ्यादानाभ्युपगमसमाध्यर्थेषु । फडिति विघ्ननिराकृतौ । वषडिति व्याख्यातम् । यदिति पक्षान्तरेषु । हो इति सम्बोधने । इहीति तिङन्तप्रतिरूपकम् । गच्छेत्यर्थे । तदिति हेतौ । आहोस्विदिति आहोवत् । उपरीत्युपरिष्टादित्यर्थे । समिति सर्वतोभावे । कमिति अनर्थकं पादपूरणे च। आमिति प्रतिवचनावधारणयोः । हिमिति स्तोभवचनः । वामिति युवामित्यर्थे । सुकमित्यतिशये । शुकमिति शैघ्र्ये । अनुकमिति वितर्के । न हि कमिति निषेधे । वामिति व्याख्यातम्।सत्वमिति प्रश्नप्रतिषेधसत्येषु । ऋतमिति सत्यार्थे । नोचिन्नचेदिति निषेधे । जात्विति कदाचिदर्थे । कथमिति प्रकारप्रश्ने । कुत इति प्रश्ननि ह्नवयोः । कुत्रेति देशप्रश्ने । अनु अवेति उपसर्गप्रतिरूपकौ अनु अव इत्येतयोरर्थे वर्त्तेते । हा हौ है इति त्रयोपि शोभार्थाः । शंबडिति अन्तः करणे आभिमुख्येऽपि । व इति पादपूरणहिंसाप्रातिलोम्येषु । दिष्ट्येत्यानन्दे । सद्धजनदर्शनप्रातिलोम्येष्वित्येके । पश्विति सम्यगर्थे । सहेति सार्द्धमित्यर्थे । अनुषगिति आनुपूर्व्ये । भाजगिति शैघ्र्ये । अङ्गेति सम्बोधने। द्रांक् स्त्रागिति झटित्यर्थे । अरे इति नीचसम्बोधने । चट् चाट् इति प्रियवाक्ये । हुमिति अनिच्छाभयभर्त्सनकोपेषु । कुं लुं खुं इति मंत्रस्तोभवचनः । वै फट् पादपूरणे विशेषेऽपि । भूयसिति पुनरर्थे । अलमिति व्याख्यातम् । सुष्ठु प्रशंसायाम् । पुरसिति अग्रे पूर्वदेशपूर्वकालयोश्च । आशु इति क्षिप्रे । तर्हीति विशेषेऽपि । रहसित्येकान्ते। सपदीति क्षिप्रार्थे । ऊर्यादयोऽप्यङ्गीकारे विस्तारे च ।अर्थकथनं चैषामुपलक्षणं वेदितव्यम् ।तथा चोक्तम्।"निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।अनेकार्थाः स्मृताः सर्वे पाठस्तेषांनिदर्शनम्" ॥ इत्यव्ययार्थाः समाप्ताः । एषामर्थानां

निपाता द्योतका न तु वाचकाः।नियमेन पदस्यानन्तरं प्रयुज्यमानत्वादुपसर्गवत् । यानि ह वाचकानि पदानि तानि यथेष्टं प्रयुज्यन्ते । राज्ञः पुरुषः पुरुषो राज्ञः । आहर पात्रं पात्रमाहरेति । साक्षात्क्रियते । नमस्क्रियते । अलंक्रियते। ऊरीक्रियते हरिरित्यादौ कर्मणि लकारेण कर्मीभूतस्य हर्यादेरभिधानसिद्धये धात्वर्थं प्रति कर्मत्वस्य वाच्यत्वात् । धातोः सकर्मकक्रियावाचकत्वे स्थिते निपातानां द्योतकस्यैव न्याय्यत्वात् । निपातत्वं न प्राखण्डोपाधिरूपं जातिरूपं शब्दस्वरूपं वेति चत्वारि प्रत्येकं पर्यवसन्नम्। केवलानामप्रयोगेण अन्यदपि प्रादिव विजयते इत्यत्र धातोर्विशिष्टजये इव घटश्चेत्यत्र समुच्चितघटे घटशब्दस्यापि लक्षणायाः संभवात् । किं च । चादीनां वाचकत्वे समानाधिकरणप्रातिपदिकार्थयोरभेदान्वये इति व्युत्पत्तिर्निपातेतरविषयकतया विना प्रमाणं संकोचनीया स्यात् । स्याच्च समुच्चयादिशब्दयोग इव चादियोगेऽपि घटादेः षष्ठी । किं च समुच्चयादिपदैरुपस्थिते यथा विशेषणसम्बन्धस्तथा चादिभिरुपस्थितेऽपि स्यात् । द्योतकत्वपक्षे तु पदार्थैकदेशत्वान्न तत्र विशेषणान्वयः । अपि च "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव" इत्यादौ उस्रसदृशैः शरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यादिरर्थः । स च उस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य च तात्पर्यग्राहकत्वे सत्येव लभ्यते । इवार्थस्योस्रेणान्वये प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकताऽपि भज्येत । इवशब्दात्तु तृतीया दुर्लभा । लिङ्गसङ्ख्याकारकानन्वयेनासत्त्वार्थकत्वात् । एवमप्युस्रादिभ्यस्तृतीयाया अनन्वयस्यानुद्धाराच्च । नन्वेवं नञ्तत्पुरुषस्योत्तरपदार्थप्राधान्यमित्यादिसिद्धान्ता भज्येरन्निति चेन्न । पूर्वपदद्योत्यं प्रति प्राधान्यमिति तदर्थात् अचतुर्णामिति प्रयोगस्यात्रानुकूलत्वात् । द्योत्यार्थेनैवार्थवत्तेति नामसंज्ञासिद्धिः । तदुक्तम् । "चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः । क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः" इति । "तयोरर्थाभिधाने हि व्यापारो नैव विद्यते । यदर्थद्योतकौ तौ तु वाचकः स विचार्यते" इति दिक् ॥ **तत्रादिर्विभक्त्यर्थे** । प्रकारार्थे । आदिशब्दो गणाभावात्।विभक्तीनामर्थोऽभिधेयमपादानादिस्तस्मिन् तत्रादिर्निपात्यते इति शेषः । सभवान् । तत्रभवान् । ततोभवान् । तंभवंतम् । तत्रभवंतम् । ततोभवंतम् । तेनभवता । तत्रभवता । तते

भवता तस्मैभवते । तत्रभवते । ततोभवते । तस्माद्भवतः । तत्रभवतः । ततोभवतः । तस्यभवतः । तत्रभवतः । ततोभवतः । तस्मिन् भवति । तत्रभवति । ततोभवति । यस्मिन् यस्यां वा यत्र । यस्माद्यस्या वा यतः । बहुषु बह्वीषु वा बहुभ्यः बह्वीभ्यो वा बहुतः । सर्वस्मिन् सर्वस्यां वा सर्वत्र । अमुष्मिन् अस्यां वा अमुत्र । द्विभवद्युष्मदस्मद्भ्यो न आदिशब्देन प्रकारार्थेनाग्रहणात् । अत्र त्रतसौ प्रत्ययौ टेरदंतत्वं निपात्यते । बह्वीशब्देत्वीकारलोपः । ननु प्रकृतेष्टेरत्वं न निपात्यं त्यदादेष्टेरिति सिद्धत्वात् । स्यादावित्यादिशब्दस्य प्रकारार्थत्वांगीकारात् । मैवम् । एतस्मादस्या वा अतः । कस्मात्कस्या वा कुतः । इह इतः । कपुत्रेत्यादौ प्रकृतिप्रत्ययनिपातनं विनाऽनिर्वाहात् । एवं स्थिते स्यादावित्यत्रादिशब्दः प्रकारार्थो न युक्तः । उभयोः उभयत्र उभाभ्याम् । उभयतः । अत्रोभशब्दस्योभयादेशः । यद्वा । अव्ययविकन्यायोऽभ्युपेयः । अवेर्मांसमिति विग्रहः । अविकशब्दात्तु ताद्धितः आविकमिति । एवमुभाभ्याम् । उभयोरिति विग्रहः । प्रत्ययस्तूभयशब्दात् । एवमुभौ प्रकारौ उभयथा । तस्मिन्काले तदा । ननु विभक्त्यर्थे निपातनमुक्तं कथं प्रकारे काले च निपातनं क्रियते । उच्यते । सद्योणादयः प्रादेश्च तथेतिकालप्रकारयोरुपलक्षणम् । माधवस्तु विभक्त्यर्थ इत्यस्यायमर्थः । विभक्तयश्चार्थश्च विभक्त्यर्थम् । तत्र विभक्तिशब्देन सामर्थ्यात्तदर्थो लक्ष्यते । अर्थशब्देन च विशिष्टोऽर्थः कालादिरित्यादि ॥ **सद्य आदिः काले ॥** अत्राप्यादिशब्दः प्रकारे निपात्यते इति शेषः । पूर्वत्र देशकालादिविशिष्टोर्थो विभक्त्यर्थो गृहीतः । इह तु कालविशिष्ट एव विभक्त्यर्थो गृह्यते । माधवस्तु पूर्वयोगे तु विभक्तिशब्दसांनिध्याद्विभक्त्यर्थविशिष्टः कालादिरर्थः । इह तु केवल एव कालोर्थ इति ततोऽस्यभेद इत्याह । तन्न । अत्रापि विभक्त्यर्थान्वितस्य कालस्य ग्रहणात् । समानेऽहनीति विगृहीतत्वादन्यथा समानमह इति विगृहीतं स्यात् । अस्मिन्नहन्यद्य । इदमोऽश् द्यप्रत्ययः । पूर्वस्मिन्नहनि पूर्वेद्युः । अन्यस्मिन्नहनि अन्येद्युः । पूर्वस्मिन्देशे पूर्वस्माद्देशात्पूर्वो वा देशः पुरस्तात् । पुरः । अवस्तात् । अवः । अधस्तात् । अधः । दक्षिणस्यां दिशि दक्षिणाहि । दक्षिणेन । उत्तरेण । उत्तराहि । ऊर्ध्वे देशे उपरि ।

उपरिष्टात् । द्वौ प्रकारौ द्विधा । द्वैधम् । एवं त्रिधा । त्रेधा । त्रैधम् । यद्यपि तन्त्रादयस्तद्धितेष्वेव पठितुं योग्याः प्रकरणानुरोधात् तथापीहाव्ययसंज्ञार्थं पुनः पाठे तु गौरवमसंगः । ये तु तद्धितेषु पठिता वदादयस्तेऽव्ययसंज्ञार्थं चादिषु स्वरादिषु वा बोध्याः । शस् तु कारकाद्विधीयमानस्तन्त्रादिर्बोध्य इति दिक् ॥ **तदव्ययम्** ॥प्रादि ऊर्यादि चादि । तन्त्रादिपरामर्शार्थं तद्ग्रहणम् । अनन्तरस्येति न्यायेन सद्यआदय एव गृह्येरन् । अव्ययमिति महासंज्ञाकरण-मन्वर्थविज्ञानार्थं न व्येति विविधत्वं स्त्रीपुंनपुंसकलक्षणं लिंगभेदमेकत्वद्वित्व-बहुत्वरूपं सङ्ख्याभेदं वा गच्छतीत्यव्ययम् । ननु कारकभेदमपि न गच्छति तत्कथं नोच्यते । शृणु । स्वर्गतः उच्चैः क्रांतः । स्वः पश्य । सिंहनादं विन-द्योच्चैरित्यादौ कारकभेदोऽवगम्यते । तदुक्तम् ।"सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्"इति श्रुतिः लिंगसंख्या-कारकाभावपरा । न तु लिङ्गादिसद्भावपरा। अलिङ्गमसङ्ख्यमव्ययमिति प्राचां सूत्रानुरोधात् । शब्दनिर्देशे तु नाव्ययसंज्ञा । ईषद्दुःसुषु नञीति निर्देशात् । अन्येषामपि शब्दानां स्वपरत्वेनार्थकार्यं दृश्यते । इदमोयं युष्मदस्मदोरिति यथा । अत्र नाम्न इत्यनुवृत्त्य प्रथमया विपरिणम्य विशेष्यमभ्युपेयम् । चादि-स्वरादीनि तु विशेषणानि । विशेषणेन तदन्तविधिस्वीकारात् । परमोच्चैः । परमस्वारित्यादावव्ययसंज्ञा सिध्यति । उच्चैरतिक्रान्तोऽत्युच्चैः । अत्युच्चैसौ । अतिस्वः । अतिस्वरौ । अतिस्वरः । इत्यादौ तु न महासंज्ञाकरणबलात् । मुख्यामुख्ययोरिति न्यायाच्च । तुमुन्क्त्वादेस्तु सूत्रपाठस्थेन तदव्ययमिति द्वितीयसूत्रेणाव्ययसंज्ञा॥ **अथ स्फोटनिरूपणम्**॥स्फुटत्यभिव्यक्तो भवत्य-र्थोऽस्मादिति स्फोटः । अर्थज्ञानजनक इत्यर्थः । तस्य चाष्टौ भेदाः । वर्ण-स्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोट इति पञ्च व्यक्तिस्फोटाः । वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजाति-स्फोट इति त्रयो जातिस्फोटाः । तेषु वाक्यजातिस्फोटः, सिद्धान्तोऽन्ये कल्पिताः।साधुशब्दान्तर्गता वर्णा वाचका इति वर्णस्फोटवादिनः। वेद राम-आहान्यत् इत्यादिप्रयुज्यमाने मविसर्गतादय एव बोधकाः । तेषामेव शक्ति-त्वात् । न तु तैः स्मृताः तिप्स्यादयः । तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः ।

अहन् ब्रह्मेत्यादौ लोकरूपस्यादेशस्य बोधकत्वासंभवाच्च । किं तु तैः स्मृताः स्यादयो वाचकाः । आदेशानां भिन्नतया परस्परव्यभिचारित्वात् । कार्ये द्वितीयेत्यादिशास्त्रानुगुण्याच्च । नह्यादेशेषु विसर्गामादिष्वनुशासनमुपलभामहे इत्याहुः । अत्रोच्यते । व्यवस्थानुरोधात् प्रयोगान्तर्गता एव वाचका न तु स्मृताः। राम इत्यादौ क्षिप्रं विदुषोऽपि बोधात् । न च तेषां विसर्गादिषु शक्तिभ्रमाद्बोधः । तस्य भ्रमत्वे मानाभावात् । आदेशिनामपि तत्तद्वैयाकरणैः स्वेच्छया भिन्नभिन्नानामभ्युपगमात्कः शक्तोऽत्रेति व्यवस्थानापत्तेश्च सर्वेषां शक्तत्वगौरवं व्यभिचारश्चास्त्येव । आदेशानां प्रयोगान्तर्गततया नियतत्वाद्युक्तं तेषां शक्तत्वम् । तथा चादेशिस्मरणकल्पना नेति लाघवम् । किंच व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः । स च श्रूयमाणविसर्गादिष्वेवेति एव वाचका इत्यर्थः । स्थानिना बोधकत्वं देवसीत्यतोऽपि बोधः स्यात् । तादृशबोधे देवोबोधेत्यादिसमभिव्याहारोऽपि । कारणमिति । चेत्तर्ह्यावश्यकत्वादस्तु तादृशसमभिव्याहारस्यैव वाचकत्वशक्तिः । अन्यथा सेर्वाचकत्वसमभिव्याहारस्य कारणत्वं चेत्युभयं कल्प्यमिति गौरवं स्यात् । तथा च तादृशसमभिव्याहार एव समभिव्याहृता वर्णा वेत्यत्र विनिगमकाभावात्प्रयोगान्तर्गता वर्णा वाचका इति सिध्यतीति भावः। अथ समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकता सिध्यति। प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धविरुद्धत्वात्।प्रत्येकवर्णानामर्थवत्त्वेननामत्वापत्तौ नाम्नो नो लोप इति धनं वनमित्यादौ नलोपापत्तेश्च । एतच्चरमवर्णे एव वाचकत्वशक्तिः । शक्तेर्व्यासज्यवृत्तित्वे मानाभावात् । पूर्वपूर्ववर्णानुभवजन्यसंस्काराश्चरमेणार्थधीजनने सहकारिण इति न तन्मात्रोच्चारणादर्थधीरिति वर्णस्फोटवादिनां मतान्तरदूषणायोक्तम्।रामोस्तीति वक्तव्ये राम इत्यनंतरं घटिकोत्तरमकारोच्चारणे अर्थबोधापत्त्या तादृशानुपूर्व्या एव शक्ततावच्छेदकत्वौचित्यात् । विभक्त्यंतं पदमिति परिभाषितपदस्य वाचकत्वस्वीकर्तॄणां मते । घटेनेत्यादौ घटे इति प्रकृतिर्नेतिप्रत्ययः, घट इति प्रकृतिरेनेति प्रत्यय इति विभागस्य "सर्वे सर्वपदादेशाः"इति स्वीकारे विशिष्य प्रकृतिप्रत्यययोर्ज्ञानासंभवान्न वाचकत्वमित्यर्थः । यथा बहुवचनस्य वस्रसाविति समुदाय-

स्यादेशविधानान्नात्र तद्विभागः सम्भवतीत्यर्थः । विभक्त्यन्तचयरूपवाक्येऽप्येवम्।हरेऽव विष्णोऽवेत्यादौ पदयोरेदोतोत इत्यकारलोपशि सति न तद्विभागः सुज्ञानः । तथा च प्रत्येकपदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्दबोधात्तत्राप्यानश्यिकैव शक्तिरिति भावः।वस्तुतः। पदैः पदार्थवाक्येनवाक्यार्थबोधः इति पदार्थशक्तिः ।पदेष्विव वाक्यार्थशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ। ननु वाक्यार्थस्यापूर्वत्वात्कथं तत्र शक्तिग्रह इति चेन्मैवम् । पदेऽपि अन्वयांशे शक्तिरिति पक्षेऽपि तद्ग्रहसंभवस्तुल्यः।यदि च पदशक्तिः पदार्थे ज्ञाता अन्वयांशे चाज्ञातोपयुज्यत इति कुब्जशक्तिवादस्तदा ममापि वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्य इति भावः।ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थे पदस्य तद्ग्रह इति च तुल्यं प्रकृतेऽपि मनसा वाक्यस्य वाक्यार्थेऽपि शक्तिग्रहसम्भवात्।वस्तुतस्तु समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं तद्ग्रहः। आवापोद्वापाभ्यां परं प्रत्येव तद्ग्रह इति बोध्यम् । ननूक्तपक्षद्वयमनुपपन्नम् । उपपत्तेरभिव्यक्तेर्वा कदासंभवेन वर्णसमूहे रूपपदज्ञानासम्भवात् । तथा च सुतरां तत्समूहरूपवाक्यज्ञानासम्भव इति चेन्न । उत्तरवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वम् । तथा तदुत्तरकाले उपस्थितविशिष्टतदवत्त्वं तस्मिन् सुग्रहमिति । तादृशानुपूर्वीघटितपदस्येव वाक्यस्यास्यापि सुग्रहत्वात् । "पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन"इति वाक्यप्रदीपे ।अखण्डपदवाक्यस्फोटावुक्तौ । अयं भावः।वाक्यं पदं वाऽखण्डमेव। नतु वर्णसमूहः । अनन्तवर्णकल्पने मानाभावात् । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठं तत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव ककारो गकारइत्यादिप्रतीतिवैलक्षण्यसम्भवात् । नचैवं वायुसंयोग एव वाचकोऽपि किं न स्यादिति वाच्यम् । प्रत्यक्षोपलभ्यमानककारादेव वाचकत्वस्यानुभवसिद्धत्वात । तथा च वाचकत्वान्यथानुपपत्या तदेवेदं पदं तदेवेदं वाक्यं सोऽयं गकार इति प्रतीत्या च स्फोटोऽखण्डः सिध्यति।ननु तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगानां प्रत्येकव्यञ्जकत्वं समुदितानां वेति विकल्पगणसम्भवात् इति चेदुच्यते। प्रत्येकमेवसंयोगाभिव्यञ्जकाः। परन्तु केचिद्गत्वेन केचिदौत्वेन

केचिद्विसर्गत्वेनेत्यनेकैः प्रकारैः।अत एव वर्णानां तदतिरेकः स्वीकारोऽप्युप-पद्यते। एवं चाव्यवहितोत्तरत्वसम्बन्धेन षत्वं टकारे गृह्यते। एतादृशप-दज्ञानकारणताया अविवादात्। पर्यायेषु तु प्रत्येकं स्वीकारः सर्वसंमतः। नन्वेवं शास्त्राप्रमाणाप्रसङ्गः। पदस्याखण्डत्वात् शास्त्रस्य च प्रकृतिप्रत्यया-भ्यां पदव्युत्पादनमात्रार्थत्वादिति दिक्। उच्यते। यथा भृगुवल्ल्यामन्नप्राण-मनोविज्ञानानन्दात्मककोशपञ्चकव्युत्पादनं शुद्धब्रह्मबोधनाय। एवं प्रकृति-प्रत्ययादिव्युत्पादनं वास्तवस्फोटव्युत्पादनायैवेति। ननु प्रत्यक्षस्य स्फोटस्य श्रवणादितोऽपि बोधसम्भवान्न शास्त्रं तदुपाय इति चेन्न। उपायस्योपाया-न्तरादूषकत्वात्। तथा च व्याकरणाभ्यासजन्यज्ञाने वैजात्यं कल्प्यते। मन्त्रजन्यमिवार्थस्मरणे। तस्य च ज्ञानस्य यज्ञादीनामन्तः शुद्धाविव शरीरा-दिशुद्धावुपयोगः। साक्षात्परंपरया वा स्वर्गमोक्षादिहेतुत्वं च। तदुक्तं प्राक् "तद्द्वारमपवर्गस्य" इति। ननु स्फोटस्य वर्णजातीनां च नित्यतया ककार उत्पन्न इति न स्यात्। वायुसंयोगनिष्ठजातेः स्फोटे भाने कादिप्रती-तीनां भ्रमत्वापत्तिरिति चेत्। उच्यते। उदात्तत्वादि न वर्णनिष्ठं तस्य नित्यत्वात्। नित्यत्वमपि स एवायमिति प्रत्यभिज्ञानात्। न च प्रत्यभि-ज्ञानं गत्वादिजातिविषयकं व्यक्त्यंशाभेदस्यापि भासमानस्य विना बाधं त्यागायोगात्।न चोत्पत्तिविनाशप्रतीतिर्बाधिका प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेर्वर्णेष्वनुभवासिद्धत्वात्। अत एव वर्णमुच्चारयतीति ज्ञानव्यवहारौ नतूत्पादयतीति। उच्चारितत्वं च ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम्। किं च व्यञ्जकध्वनिनिष्ठोत्पत्त्यादेः परंपरया वर्णनिष्ठत्वविषयत्वेनाऽप्युपपत्तेः साक्षाद्वर्णविषयत्वस्वीकारो न युक्तः। परंपरया वर्णनिष्ठत्वस्वीकारान्न भ्रमत्वं साक्षात्सम्बन्धे तु भ्रमत्वम्। ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पनेति लाघ-वम्। न च वर्णस्थले ध्वनिसत्त्वे मानाभावः। तदुत्पादकशंखाद्यभावेन तद-सम्भवश्चेति वाच्यम्। ककाराद्युच्चारणस्थले तत्तत्स्थानस्य जिह्वया ईषदन्त-रयाते वर्णाऽनुत्पत्तेर्ध्वन्युत्पत्तेश्च दर्शनाज्जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्व-निजनकत्वकल्पनात्तस्य वर्णोत्पत्तिस्थलेऽपि सत्त्वात्। तवैव प्रतिबन्धप्रति-बन्धकभावकल्पना विपरीता स्यादिति गौरवं विपरीतम्। एवं परस्परविरो-

धातुदात्तत्वह्रस्वत्वदीर्घत्वादिकमपि न वर्णनिष्ठं युक्तम् । इत्थं पञ्च व्यक्तिस्फोटाः जातिस्फोटशक्यत्व इव शक्त्वे जाते लाघवमीक्ष्यताम् । औपाधिको वा भेदो रक्तवर्णानां तारमन्दवत् । अयमर्थः । वर्णास्तावदावश्यकाः । उक्तरीत्या सोयं गकार इति योऽयं गकारः श्रुतः सोऽयं हकार इत्यपि स्फोटस्यैक्यत्वात् । गकारोऽयं न हकार इत्यनापत्तेश्च । किं च स्फोटे गत्वाद्यभ्युपेयं न वा । आद्ये तदैव गकारोऽस्तु । वर्णनियतावादिभिरतिरिक्तगत्वानङ्गीकारात् । तथा चातिरिक्तस्फोटकल्पन एव गौरवम् । अंत्ये गकारादिप्रतीतिविरोधः । वायुसंयोगवृत्तिर्ध्वनिवृत्तिर्वा वैजात्यमारोप्य तथा प्रत्यय इति चेन्न । प्रतीतेर्बाधकं विना भ्रमत्वासंभवात् । अस्तु वा वायुसंयोग एव गकारोऽपि तस्यातींद्रियत्वं दोष इति चेद्धर्मवदुपपत्तेरिति कृतं स्फोटेन । तस्मात्संत्येव वर्णाः । परं तु न वाचका गौरवात् । अकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद्वाचकत्वस्यापि युक्तत्वाच्च । इदं हरिपदमित्यनुगतप्रतीत्या हर्य्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्तदवच्छेदकतया च जातिविशेषस्यावश्यकल्प्यत्वात् । न च वर्णानुपूर्व्येव प्रतीत्यवच्छेदकत्वयोर्निर्वाहः। घटपटत्वादेरपि संयोगविशेषविशिष्टमृदा आकारादिभिश्चान्यथासिद्ध्यापत्तेः । तस्मात्सा जातिरेव वाचिका तादात्म्येन तदवच्छेदिका चेति । ननु सरो रस इत्यादौ जात्योः सत्त्वादर्थबाधभेदो न स्यादित्यत उक्तम् । औदः कारणीभूतजायस्येति नातिप्रसङ्ग इति भावः । उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह । वर्णानामितीत्येके । अन्ये त्वाहुः । अखण्डपदवाक्यस्फोटयोर्वर्णा न संत्येव तत्प्रतीतिस्तु सादृश्यनिबन्धना । ककारादिव्यञ्जकः कण्ठादिजन्यो ध्वनिरस्ति तत्सदृशः पदवाक्यव्यञ्जको ध्वनिरस्ति । अनेन सादृश्येन ककारादिप्रतीतिर्न तु वास्तवी । तच्च पदं वाक्यमेव हरिपदमिदं हरिपदमिति प्रत्यभिज्ञानात् । अस्मिन्पक्षे हरिपदत्वादिजातिर्नावश्यकी व्यक्तिभेदाभावात् । यदि तु प्रत्युच्चारणं पदवाक्यभेदोऽभ्युपेयते इदं त्वदीयं पदं वाक्यं मदीयं चेति प्रतीतेः । तदा हरिपदत्वादिजातिरभ्युपेया । अत एवाखण्डपदवाक्यस्फोटस्तज्जातिस्फोटश्चेति द्वयमभ्युपेयते । अत्रायं निष्कर्षः । अखण्डवाक्य पक्षे तदेवेदंवाक्यमिति प्रत्यभिज्ञानात्तस्यैकत्वात्तत्र जातिर्नाभ्युपेयते। यदि तु

प्रत्युच्चारणं भेदोऽभ्युपेयते प्रत्यभिज्ञा तु जातिविषया तदाऽखण्डवाक्यनिष्ठैका जातिः स्वीकार्या। सैव वाचिका लाघवात् । अन्ये पक्षास्तु प्रक्रियादशायां तत्र तत्रोपयुज्यन्ते । अष्टाप्येते नित्या उत्पत्त्यादेरभावात्। ननु जातः शब्दो नष्टः शब्द इति प्रतीतेः कथं शब्दस्य नित्यत्वमिति चेन्न। तत्प्रतीतेर्व्यञ्जकध्वनिविषयत्वेनान्यथासिद्धत्वम् । यस्त्वयोक्तः शब्दो नष्टः स एवायं मयोच्यते। इति प्रत्यभिज्ञानाच्च । न च जातिविषया सा व्यक्तेरभेदप्रत्यभिज्ञानात् लाघवाच्च । अन्यथा तावतां प्रागभावानां प्रध्वंसानां च स्वीकारे गौरवम्। ननु त्वयाऽप्यभिव्यञ्जकध्वनेस्तेऽभ्युपेया इति तुल्यं गौरवमिति चेत् ।उच्यते। वर्णानामभिव्यञ्जकध्वनिरस्तावत्त्वयाऽप्यभ्युपेयः । स एवादृष्टादिसहकारेण वर्णाभिव्यञ्जकोऽस्माभिरङ्गीक्रियते । ननु मया वर्णात्मक एव ध्वनिरुच्यते इति चेन्न। ध्वनिवर्णयोर्भेददर्शनात्।अतिकोलाहले दूरे वा वर्णानुपलब्धावापि ध्वनिग्रहणदर्शनात् । अभेदे तु वर्णानुपलब्धौ ध्वनेरप्यनुपलब्धिप्रसङ्ग इति संक्षेपः । नामरूपे व्याकरवाणीति श्रुत्युक्तो वाच्यवाचकरूपो द्विविधो ब्रह्मणो विवर्तः । आद्यः शास्त्रान्तरे विचारितः । अन्त्यः शब्दशास्त्रे । तथा च । ध्वनिविशेषावच्छिन्नं ब्रह्मैव वाचकं व्यक्तिविशेषावच्छिन्नं वाच्यमिति फलितम्। इत्थं च वेदान्तव्याकरणयोरेक एव सिद्धान्त इति दिक् ॥

हाटकेशपुरस्थायीविनायकसुतोऽकरोत् ॥
रघुनाथाभिधो व्याख्यां समासानां च नागरः ॥

इति सरस्वतीसूत्रविवरणे लघुभाष्ये रघुनाथकृतौ समासविवरणं समाप्तम् ॥ इति पूर्वार्द्धसूत्राणि ॥ राधाकृष्णौमंगलमदौ भवेताम् ॥ श्रीहरयेनमः ॥

ओम् ॥ श्रीः ॥

---

पुस्तक मिलनेकापता-
खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" छापाखाना-मुंबई.

श्रीगणेशाय नमः ।

# अथ लघुभाष्योत्तरार्द्धम् ।

नमामि विघ्नराशीनां हर्तारं जानकीयुतम् ।
राघवेंद्रं प्रथमतो भूत्यै भवतु सोऽचिरात् ॥ १ ॥
गोपिकावल्लभं नत्वा गिरं भट्टोजिदीक्षितम् ।
विभक्तीर्दश वक्ष्येऽहं मुनित्रयमताश्रयाः ॥ २ ॥
स्यादयः कथिताः पूर्वं स्त्रीसामासिकतद्धिताः ।
प्रख्याता अथ कथ्यंते त्रिसयङ्यक्कृदादयः ॥ ३ ॥

**धातोः** । इति अधिकारोऽयं प्राङ् नाम्नो य इत्यतः । स्यादेतत् । किमर्थोऽयमधिकारो न तावन्नामव्यावृत्त्यर्थः । स्यादिभिरेव बाधात् । तक्रकौण्डिन्यन्यायेन तेषां विशेषविधानात् । यत्तु । औपगवः पचातिरूपामित्यादौ विभक्त्यंतस्यापि प्रकृतित्वात् । तथा च लुक्सूत्रे प्रत्ययग्रहणमुपपद्यते तदेवं प्रकृत्यंतरव्यवच्छेदार्थम् । अवश्यं धातुः प्रकृतिर्वक्तव्येति माधवेनोक्तम् । तन्न । प्रकृत्यर्थस्य प्रत्ययार्थस्य चानन्वयात् । तथा हि । प्रकृत्यर्थौ हि द्रव्यं कारकं च आख्यातार्थौ कर्तृकर्मणी तयोर्ह्यन्वयो नास्ति कारकाणां क्रिययैवान्वयविधानात् । दृष्टांते[1] हि प्रकृत्यर्थप्रत्ययार्थयोः संबंधबोधका विभक्तिः । लुप्तायामपि तस्यां शिष्यमाणेन तदर्थबोधनं वृत्तित्वाच्च शक्त्यंतरकल्पनं च भवति तिबाद्यंते च न तथेति सिबंतव्यावृत्तिर्न फलम् । अत एव तिबाद्यंतव्यावृत्तिरपि न, पचतीत्यत्रैकेन तिपा एकाश्रयिकायां क्रियायां बोधितायामपरेणान्याश्रयायाः क्रियाया बोधनस्याऽशक्यत्वात् । प्रथमेनैव संख्याकारकादेरभिहितत्वेन द्वितीयस्य प्रयोगाप्रसंगाच्च । प्रथमस्य समासप्रत्यययोरिति लोपे तु तदर्थस्यानवबोधाच्च । कर्तृद्वयादिप्रतिपिपादयिषायां तु पचत इत्यादेरेव प्रयोगस्य युक्तत्वात् । अतस्तिबंतव्यावृत्तिरपि न फलं तिबंतनिवारणार्थम् । अयमधिकार इदमपि न फलं यदपि किंचाधिकारार्थमपि धातोर्यथा स्यात् धातूप-

१ 'नियमात्' इति पाठः० । २ स्याद्यंते इति पाठान्तरम् ।

सर्गसमुदायस्य माभूत् प्रकर्त्तुमिच्छतीति माधवेनोक्तम् । तदपि न चुरादौ संग्रामङ् युद्ध इति विशिष्टपाठेन धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षित उपसर्गसमाकारं पूर्वपदं पृथक् क्रियत इति ज्ञापितेन गतार्थत्वात् । अन्यथा। स्वमनायत उदमनायत प्रात्यचिचत् प्राढिढत् इत्यादौ दोषस्य दुर्द्धरत्वात्। तज्ज्ञापकमित्थं वर्णनीयं सोपसर्गाच्चेत्प्रत्ययस्तर्हि संग्रामङ एव । एवं व्यर्थोऽधिकारः । इति चेत् उच्यते । ऊरीकरोति, शुक्लीभवति, सहायीस्यात्। इत्यादौ ऊर्य्यादिच्च्व्यंतयोः धातोः प्राक् प्रयोगस्य नियतत्त्वेन विशिष्टात्प्रत्ययोत्पत्तिर्दुर्वारा । तथा चाड् द्वित्वयोर्दोषः स्यादित्यधिकार इति दिक् ॥

**वर्त्तमाने–**

| | | |
|---|---|---|
| तिप् । | तस् । | अंति । |
| सिप् । | थस् । | थ । |
| मिप् । | वस् । | मस् । |
| ते । | आते । | अन्ते । |
| से । | आथे । | ध्वे । |
| ए । | वहे । | महे । |

तिबाद्येकं पदम्, अष्टादश वा पदानि । व्यापार इति शेषः । व्यापारः क्रिया, सा च धातोर्वाच्या । सा त्रिविधा, अतीतानागतवर्त्तमानभेदात् । तत्र वर्त्तमानक्रियावृत्तेर्धातोस्तिबादयः । ते च द्योतका भवन्ति । वर्त्तमानक्रियाया धातुनैवोक्तत्वात्।एवमतीतादिष्वपि ज्ञेयम् । यदि तु सद्य आदिरित्यतः काल इत्यनुवर्त्तते वर्त्तमाने काले वाच्ये तिबादय इति व्याख्यायते तदा वाचकतापक्षोऽपि भवति कालस्य धातुनानभिहितत्त्वात् । कालोऽष्टद्रव्यातिरिक्तं नवमं द्रव्यमिति वैशेषिकादिमतम् । ईश्वरस्यैव मूर्त्तिभेदः काल इति वेदांतिमतम् । प्रधानस्यैवावस्थाभेद इति सांख्यादिमतम् । पक्षत्रयेऽपि तस्यैकत्वात् वर्त्तमानादिभेदाभावेऽपि वर्त्तमानादिक्रियोपाधिवशात् वर्त्तमानादिव्यपदेशो बोध्यः । ये तु प्रसिद्धपरिमाणां सूर्यादिक्रियां अप्रसिद्धपरिमाणक्रियाया अवच्छेदिकां कालमाहुः । सूर्यस्योदयाचलसंयोगादारभ्यास्ताचलसंयोगपर्यंता क्रिया दिनमुच्यते । अस्ताचलसंयोगादारभ्योदयाचलसंयोगपर्यंता क्रिया रात्रिरित्युच्यते । तदावृत्त्या तु पक्षमासादिव्यवहारः

कालस्याप्यनित्यत्वानेकत्वात् तेषां मुख्य एव वर्त्तमानादिव्यपदेशः । अथ को वर्त्तमानो नाम । उच्यते । लोकप्रसिद्ध एव । तदुक्तं फणिना । लोकत एवैतत्सिद्धं नहीदं लोकाद्भिद्यते यदीदं लोकाद्भिद्येत तर्हि यत्नार्हं स्यादिति। लौकिका हि प्रारब्धापरिसमाप्तं वर्त्तमानं व्यवहरंति । मार्कंडेयश्चिरं जीवति तस्य हि जन्मतः प्राणधारणमद्याप्यपरिसमाप्तमिति तिबादिप्रयोगः । न तु अजीवीत् जीविष्यति वा । चतुर्युगसहस्रांतं ब्रह्मणो दिनं वर्तते न त्ववृतत् वर्तिष्यते वेति । विंशत्यादिवर्षपर्यंतं वेदाध्ययनेऽपि अधीत इति प्रयुज्यते न त्वध्ययीत अध्येष्यते वा । ये तु भूतभविष्यद्भिन्नो वर्त्तमान इत्याहुः तन्मते वर्त्तमानभविष्यद्भिन्नो भूतः भूतवर्त्तमानभिन्नो भविष्यन्नित्यपि स्यात्ततश्चान्योन्याश्रयदोषप्रसंगः । यत्तु संप्रति वर्त्तमान इति कालापसूत्रं वर्त्तमानसंज्ञाविधायकं तत्तुच्छं लोकत एव सिद्धत्वात् । तदुक्तं भगवता पाणिनिना । कालोपसर्जने च तुल्ये । वर्त्तमानादिकालसंज्ञा अप्रधानमुपसर्जनमिति च न वक्तव्यं अर्थस्यान्यप्रमाणत्वात् । तस्यार्थस्य लोक एव सिद्धत्वात् । अथ पर्वतास्तिष्ठंति भूरस्तीत्यादौ कथं वर्त्तमानतादि प्रारब्धापरिसमाप्तत्वाद्यभावात् । उच्यते । सृष्टिसंहारश्रुतिप्रामाण्यस्वीकर्त्तॄणां मतेऽत्राप्यस्ति वर्त्तमानत्वं कल्पादौ प्रारब्धायाः स्थितेरत्रापरिसमाप्तित्वात् । तस्थुः पर्वताः भविष्यति भूरित्यादौ त्वतीतानागतकल्पावादाय भूतभविष्यत्त्वे बोध्ये । मीमांसकमते त्वनुपपत्तिः । भूतानां सृष्टिप्रलयानंगीकारात्। न कदाचिदनीदृशं जगदित्यभ्युपगमात् । वैशेषिकमते आकाशोस्तीत्यनुपपत्तिः आत्मास्तीति सर्वेषां मतेप्यनुपपन्नम् । अत्र माधवः । इह पर्वतादिस्थित्यादेः सर्वदाभावात् स्वतो भूतत्वाद्ययोगेपि कालत्रयवर्त्तिनां राज्ञां भूतादिभेदभिन्नपालनादिक्रियाभेदात्तस्थुः पर्वताः नलनहुषादिकाले स्थास्यंति कल्किविष्णुकालेपि तिष्ठंतीदानींतनभूपकाले इति भूतत्वादियोग इत्याह । आत्मनस्तु देहाद्युपाध्यतीतत्वादिनाप्यतीतत्वादिसंभवोस्ति । अथ वर्त्तमानग्रहणं मास्तु सामान्येन तिबादयो विधीयंताम् । अतीतानागतयोः सिस्यपौ बाधकौ स्यातां विशेषविधानादिति चेत् । उच्यते । वर्त्तमानसमीपे भूते भविष्यति च तिबादिसिद्ध्यर्थं वर्त्तमानग्रहणं तद्ग्रहणसामर्थ्याद्गौणस्यापि वर्तमानस्य ग्रहणं भवति । अन्यथा भूतत्वभविष्यत्तयोः सत्त्वात्।

तत्र सिस्यपावेव स्याताम् । कदा गमिष्यसि, एष गच्छामि, गमिष्यामि वा, कदागतोसि, अयमागच्छामि । अयमागमं वा । वर्त्तमानत्वं क्रियाया-मन्वेति न फलेन तदाश्रयेण कर्त्तरि । यदि फले अन्वियात् मासात्पूर्वं पक्के ओदने इदानीं पचतीति प्रयोगः स्यात् विक्लित्तेर्वर्त्तमानत्वात् । न तु अयाक्षीदिति । यदि फलाश्रये अन्वियात् तर्हि मासानंतरं वर्त्तमाने-ग्रामे ग्रामं यातीति प्रयोगः स्यात् । फलं संयोगः तदाश्रयस्य संयोगग्रामस्य वर्त्तमानत्वात् न तु ग्रामं यास्यतीति । यदि तु कर्त्तरि अन्वियात् तर्हि मा-सात्पूर्वं पाकं कृतवति मासानंतरं वा पाकं करिष्यति पुरुषे दृष्टे इदानीं पचतीति प्रयोगः स्यात् । कर्तुः पुरुषस्य विद्यमानत्वात् न तु अयाक्षीत्त्यक्ष्यतीति वा । अयमत्र संग्रहः । क्रियाफलयोर्बोधको धातुः तत्र धातुत्वेन सर्वानुगतेन क्रियाबोधकत्वं धातोः प्रातिस्विकेन रूपेण भूत्वप-चित्त्वादिना फलबोधकत्वं कालः संख्या । कारकं चाख्यातार्थः । तत्र तिबादि-त्वेन कालोर्थः । तिप्तसान्तित्वेन एकत्वद्वित्वबहुत्वरूपसंख्यार्थः । आत्वेन-भावकर्मणी अर्थः । आत्वेन यत्वेन च कर्त्रर्थः । तत्र फलस्य कर्मणि अन्वयः । फलाश्रयस्य कर्मत्त्वात् व्यापारस्य कर्तरि अन्वयः । धातूपात्तव्यापाराश्रयस्य कर्तृत्वात् संख्यायास्तु कर्तरि प्रत्यये कर्त्तर्यन्वयः । कर्मणि प्रत्यये कर्मणि कालस्य क्रियायां कर्तृकर्मणी क्रियाविशेषणे । क्रिया तु विशेष्या । इदं तु शाब्दिकमीमांसकयोस्तुल्यम् क्रिया प्रत्ययार्थ इति मीमांसकाः । प्रत्ययार्थ-स्यैव प्राधान्यमिति नियमात् । कर्त्तृकर्मणी त्वाक्षेपलभ्येन त्वाख्यातवाच्ये । वैयाकरणास्तु धात्वर्थक्रियाक्रियावचनस्यैव धातुत्वादित्याहुः । ननु प्रत्य-यार्थप्राधान्यनियमोपि कीदृशः । यः प्रत्ययार्थः स प्रधानमेव, यत्प्रधानः स प्रत्य-यार्थ एवेति वा । नाद्यः । स्त्रीप्रत्यये स्त्रीत्वस्य प्रत्ययार्थस्य प्राधान्याभावात् । प्रत्ययार्थस्य कालस्य संख्यायाश्च प्राधान्याभावात् । नांत्यः । स्त्रीप्रत्ययांते प्रधानस्य द्रव्यस्य प्रत्ययार्थत्वाभावात् । शुक्लतरः, विद्वद्रूपः, पचतितमाम्, भिषक्पाश इत्यादौ प्रत्ययार्थस्यातिशयादेः प्राधान्यादर्शनात् । अप्रत्यया-र्थस्य राजपुरुष इत्यादौ पुरुषादेः प्राधान्यदर्शनाच्च । कर्तृकर्मणोराख्यातार्थ-त्वे आद्भुवि कर्मणीति कर्त्तरि पंचेति सूत्रं मानमस्ति । क्रियायास्तदर्थत्वेन

१ यास्यमाने, इति पाठान्तरम् ।

मानमस्ति । किंच कृतवान् भोक्तुं पक्त्वेत्यादौ क्रियाप्रतीतिरस्ति तत्र धातुरप्यस्ति । तेन धातोरेव क्रियावाचित्वं युक्तं नत्वाख्यातस्य कृदंते आक्षेपलभ्या क्रिया इति चेत् । तर्हि आख्यातांतेपि तथैवास्तु, न चाक्षिप्तायाः क्रियायाः प्राधान्यं न स्यादिति वाच्यं घटादिशब्दैर्वाच्याया जात्याक्षिप्ताया व्यक्तेः प्राधान्यदर्शनात् । सत्त्वप्रधानानि नामानि क्रियाप्रधानमाख्यातमिति वचनाच्च प्राधान्यसंभवात् । किंच कर्तुरवाच्यत्वे आख्यातोक्तसंख्याया अनन्वयप्रसंगात् । अवाच्ये कर्त्तरि यद्यन्वयः स्यात्, तर्ह्यविशेषात्कर्मादावपि स्यात् । मम मते तु आख्यातार्थे कारके आख्यातार्थसंख्याया अन्वयः संभवति, समानप्रत्ययोपात्तत्वात् । किंच । उक्तानुक्तव्यवस्था च न स्यात् । सर्वत्राख्याते तस्यानभिहितत्वादिति दिक् । तार्किकास्तु प्रथमांतविशेष्यकं बोधमाहुराख्यातस्य च यत्नमर्थं यत्नार्थककरोतिना सहाख्यातविवरणात् । कर्तुश्चावाच्यतां कृतिमतो वाच्यत्वापेक्षया कृतेर्वाच्यत्वं लाघवात् । अवच्छेदकं कृतित्वरूपं सामान्यं लघु लभ्यते इत्याहुः । मत्वर्थलक्षणया च संसर्गमर्यादया कृतिमान् देवदत्तो लभ्यत इत्याहुः । उच्यते । अस्मन्मते कर्त्ता वाच्यः स च धातूपात्तव्यापाराश्रयः व्यापारस्तु धातुनैवोक्तः,आश्रयमात्रं प्रत्ययार्थः,आश्रयत्वं त्ववच्छेदकं, तच्चाखंडोपाधिरूपमतो नास्माकं गौरवगंधोपि । किंच तव मते लक्ष्यतावच्छेदकस्य गौरवेपि न दोषः । शक्यतावच्छेदकस्य तु दोष इत्यत्र विनियमकं नास्ति बीजाभावात् । अत उभयोरपि गौरवं लाघवं वास्तु । किंचास्मन्मते कृतिरपि धातुनैवोक्ता परं तु न कृतित्वेन किं तु व्यापारत्वेन । कृतेरपि व्यापारविशेषरूपत्वात् । अतः सा न प्रत्ययार्थोन्यलभ्यत्वादनन्यलभ्यस्यैवशब्दार्थत्वांगीकारात् । अपि च करोतेर्यत्नार्थकत्वं यदुक्तं तदपि न करोतिरुत्पादनार्थ इति वक्ष्यते । केवलयत्नार्थत्वेन यततिवदकर्मकता स्यात् । करोतिना सर्वाख्यात एव विवरणादित्यप्युक्तमयुक्तम् । नहि करोतिराख्यातानां विवरणम् । किंतु । धातोराख्यातस्य आख्यात एव विवरणम् । पचति पाकं करोति शेते शयनं करोति । यदपि प्रथमांतपदेनैव कर्त्ता लभ्यते तदपि न । देवदत्तपदेन देवदत्तत्वेन देवदत्त उपस्थाप्यते न कर्तृत्वेन । प्रथमायापि न नामार्थमात्रे विधानात् । अन्योक्ते प्रथमापि न संभवति । तव मते

कर्तुराख्यातेनोक्तत्वाभावात्कर्तरि तृतीयैव स्यादाख्यातेनानुक्तत्वात् । अन्योक्त इति उक्ते कर्तरि प्रथमा विधीयते । न च कर्तृनिष्ठसंख्याया अभिधानात् कर्त्ताप्यभिहित एवेति वाच्यम् । मुख्याभिधाने संभवति गौणोक्तत्वग्रहणस्यान्याय्यत्वात् । क्वचित्संख्योक्ता गृह्यते क्वचिच्च कर्त्तेति शास्त्रार्थस्य वैरूप्यप्रसंगाच्चेति कृत्तद्धितसमासैः संख्याया अनभिधानात् । किंच कर्तुरवाच्यत्वे नाम्नि चेति पुरुषव्यवस्था न स्यात् । समानाधिकरणे युष्मदादौ सति मध्यमादि विधीयते । आख्यातेन युष्मदस्मदोः सामानाधिकरण्यं कर्तुर्वाच्यत्वे सत्येव संभवति । नान्यथा । न च युष्मदि सति मध्यम इति व्याख्येयमिति वाच्यम् । त्वां पश्यति पश्यामि वेत्यत्रातिव्याप्तेः । न च । युष्मदि कर्तरि सति मध्यमो भवतीति वाच्यम् । त्वया मया वा पच्यत इत्यत्रातिव्याप्तेः । किंच । रथो गच्छतीत्यदावप्रसक्तिः स्यात् कृत्यभावात् । न चात्र व्यापारे लक्षणेति वाच्यं गौरवात् । शक्यसंबंधो लक्षणेति शक्यं संबंधश्चोभयं ज्ञातव्यम् । मन्मते तु शक्तमात्रं ज्ञातव्यमिति लाघवम् । लक्षणापि नाधुनिकी किंतु निरूढा वाच्या । भूस्तिष्ठति आपो गच्छंतीत्यादिप्रयोगस्यानादित्वात् । निरूढलक्षणा च शक्तितो नाममात्रेण भिन्ना न वस्तुत इति दिक् ।

## विधिसंभावनयोः–

| | | |
|---|---|---|
| यात् । | याताम् । | युस् । |
| यास् । | यातम् । | यात । |
| याम् । | याव । | याम । |
| ईत । | ईयाताम् । | ईरन् । |
| ईथास् । | ईयाथाम् । | ईध्वम् । |
| ईय । | ईवहि । | ईमहि । |

धातोर्यादादयः प्रत्ययाः स्युर्विधिसंभावनयोर्वाच्ययोः । इत्ययं वाचकतापक्षः । न चात्र पक्षे विध्यादिनार्थेन कर्त्राद्यर्थबाधः विरोधाभावात् । किंच कर्त्रादिरपि निरवकाशः । न च तिबादाववकाशः न्यायसामान्येन विद्ध्यादिवत् वर्त्तमानत्वभूतत्वादेरपि तिबादिदिवादिवाच्यत्वात् । न चैवं धात्वर्थं प्रति वर्त्तमानत्वादेः प्रत्ययार्थ

तया विशेष्यत्वं स्यादिति वाच्यम्। कर्त्रादावपि तुल्यत्वात् । ननु, प्रत्ययार्थ-प्राधान्यमौत्सर्गिकमप्याख्याते त्यज्यते इति चेत् तर्हि तत एव नोक्तदोषावकाश इति । यद्वा । विधिसंभावनयोर्वर्त्तमानाद्धातोर्यादादयः प्रत्ययाः स्युः । विध्याद्यर्थस्य विशेष्यस्य प्रकृत्यर्थविशेषणत्वे द्योतकतापक्षोऽयं संभवति । तत्रेयमुपपत्तिर्विध्यादेः प्रत्ययार्थत्वं नोचितम्। तथा सति कर्त्रादिरर्थस्य प्रत्ययांतरे चरितार्थस्य विध्यादयोर्था बाधकाः स्युः । न च प्रत्ययांतरेपि वर्त्तमानत्वादिभिर्बाधात् कर्त्रादिरप्यनवकाशत्वाद्बाधकः स्यादिति वाच्यम् । वर्त्तमानादेरपि धात्वर्थताया अभ्युपगमात् । ततश्च प्रत्ययांतरे सावकाशस्य कर्त्रादेर्यादादिभिरभिधानं न स्यात् । ततश्च द्विवचनबहुवचने न स्याताम् । अबादयश्च न स्युः । पुरुषव्यवस्था च न स्यात् । उक्तत्वप्रयुक्ता प्रथमा च न स्यादिति विपूर्वाद्धाञोंतर्भावितण्यर्थान्नङ्कीति भावे किः । विध विधाने इत्यस्मादंतर्भावितण्यर्थाद्वा किः । विधानं वेधनं वा विधिः । अनुष्ठापनं कारणाप्रवर्तनेति यावत् । यादादिवाच्या सा धात्वर्थस्य विशेषणीया । शिष्यो गुरुशुश्रूषको भवेत् । एकशिष्याश्रया गुरुनिष्ठप्रीतिजननानुकूला या क्रिया तद्विषया प्रेरणेति विशेष्यपक्षः । प्रेरणाविषया एकशिष्याश्रया गुर्वाश्रयप्रीतिजननानुकूला क्रियेति विशेषणपक्षः । उभयथापि क्रियाप्रधानमाख्यातमित्यस्य न कश्चिद्विरोधः यादाद्यभिधेयायाः प्रवर्तमानाया अपि क्रियारूपत्वात् । द्योतकतापक्षेप्येवं क्रियाद्वयमपि धात्वर्थ एव । विशेषणविशेष्यभावे तु कामचारः । प्रवर्तना तु श्रुतिस्मृतिपुराणवाक्यनिष्ठा तत्कर्त्रीश्वरमनुव्यासादिनिष्ठा। लौकिकवाक्येषु तु पित्रादिवक्तृनिष्ठा प्रवर्तनातेनप्रवृतेरिष्टसाधनत्वमनुमीयते । इयं वेदाध्ययनादिप्रवृत्तिर्यदिष्टसाधनमीश्वरादिभिर्वेदादिभिर्वा कार्यमाणत्वात् । पित्रादिकार्यमाणभोजनादिप्रवृत्तिवत् । या प्रवृत्तिरीश्वरादिभिः कार्यमाणा न भवति सा मदिष्टसाधनमपि न भवति ब्रह्मवधसुरापानादिप्रवृत्तिवत् । केचित्तु इष्टसाधनत्वं विध्यर्थमाहुः । तन्न । वेदाध्ययनादौ पित्रादिभिः प्रवर्तिता एव बालाः प्रवर्तमाना दृश्यंते । न तु इष्टसाधनताज्ञानात् आदौ तेषां तदसंभवात् । किंच । आख्यातस्य यत्नोऽर्थःप्रथमांतविशेष्यकश्च बोधः तत्रेष्टसाधनस्य विशेष्यत्वं न संभवति

प्रथमांतपदेनानुपस्थानात् । विक्लित्तौ यत्ते वान्वये तु प्रत्ययार्थप्राधान्यस्वीकारस्य त्यागप्रसंगात् । अन्नं पचेत् । अन्नाभिन्नाश्रया या विक्लित्तिस्तदनुकूला एकाश्रया क्रिया तद्विषया प्रवर्त्तना, प्रेरणाविषयभूतौदनाभिन्नाश्रयकविक्लित्यनुकूलैकाश्रया क्रियेति वा बोधः । अन्नं पाचयेत् । अन्नाभिन्नाश्रयकाविक्लित्यनुकूला या क्रिया तद्विषयैकाश्रया क्रियेति प्रवर्तना तद्विषया प्रवर्त्तना । प्रवर्तनाविषया अन्नाभिन्नाश्रयकविक्लित्यनुकूलभावना तद्विषया भावना । अन्नं पापच्येत । अन्नाभिन्नाश्रयकाविक्लित्यनुकूलातिशयिता या क्रिया तद्विषया प्रेरणा, प्रवर्तनाविषयाऽन्नाभिन्नाश्रयकविक्लित्यनुकूलातिशयिता भावना । अन्नं पिपक्षेत । अन्नाभिन्नाश्रयकविक्लित्यनुकूला क्रिया तद्विषयेच्छा तद्विषया प्रेरणा प्रवर्तनाविषयाऽन्नाभिन्नाश्रयकविक्लित्यनुकूला क्रिया तद्विषयेच्छेत्यादिः । संपूर्वकाद्भवतेश्चौरादिकाद्वा प्रेरणे स्वार्थे वा ञिः । भावे युट् । यद्वा । अस्मादेव ज्ञापकाण्ण्यन्ताद्युः । ततः स्त्रियामेवेति विशेषः । संभावना कल्पना ऊहः स चोत्कटैककोटिकः । संशयः स्थाणुर्वा पुरुषो वेत्यादौ तु सर्वाः कोटयः समत्वेन भासंते । भवेद्वेदविद्ब्राह्मणत्वादित्यादौ तु वेदवित्त्वा वेदवित्त्वकोटयोर्वेदवित्कोटिरेवाधिका । अयमेव संशयसंभावनयोर्भेदः । ब्राह्मणत्वादिति हेतुस्तु व्यभिचारित्वान्न निश्चायकः अवेदविदामपि ब्राह्मणानां दर्शनात् अब्राह्मणानामपि क्षत्रियाणां वेदविदां दर्शनात् । वेदावाप्त्यनुकूलभावनाश्रय एकोऽपरोक्षोर्थस्तदाश्रयात्मधारणानुकूला या भावना तद्विषया ब्राह्मणत्वहेतुका संभावना ब्राह्मणत्वहेतुका या संभावना तद्विषया वेदावाप्त्यनुकूलभावनाश्रयापरोक्षैकार्थनिष्ठात्मधारणानुकूला भावनेति वा बोधः । एवं भवेदयं बलवान् क्षत्रियत्वात् । भवेदयं धनवान् वैश्यत्वात् । भवेदयं सेवकः शूद्रत्वादित्यादावपि बोध्यम् । अन्यत्र तु निमंत्रणामंत्रणाधीष्टेष्वपि यादादिर्विहितः तत्र निमंत्रणमावश्यकेर्थे प्रवर्तना । यत्राप्रवर्तमानस्य प्रत्यवायः श्राद्धभोजनादौ दौहित्रादेर्यथा । आमंत्रणमिच्छया प्रवर्तनं यत्राप्रवर्त्तनेपि प्रत्यवायः मंगलभोजनादौ दौहित्रादेर्यथा । अधीष्टं सत्कारपूर्वकं प्रवर्तनं अध्ययनादौ गुर्वादेर्यथा । तन्न । विधिग्रहणेनैव संग्रहात् प्रवर्त्तनायास्सर्वत्रानुगतत्वात् । **तदुक्तं वाक्यपदीये** । "न्यायव्यु-

त्पादनार्थं च प्रपंचार्थमथापि वा । विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥ अस्तिप्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया" ॥ इति ॥ संप्रश्नप्रार्थनवति कर्तरि यादादिर्विधेय एव । तत्र संप्रश्नः अहं वेदमधीय उत शास्त्रमित्येवंभूतविचारः । एवं प्रयागं गच्छेय मुतकाशीम् । अहं गार्हस्थं कुर्यामुत संन्यासमित्यादिष्वपि प्रार्थना याञ्चा । भोजनं लभेय भो दक्षिणां प्राप्नुयां भो कन्यां वहेयम् । अत्र विधिसंभावन-योरिति **योगं विभज्य** तिबादीननुवर्त्य विध्यादिष्वपि तिबादयो विधेयाः । यवाग्वाग्निहोत्रं जुहोति । पशुना यजते । यादादावित्यत्र वर्त्तमाने इत्यनुवर्तमानेपि यादयो विधेयाः । इच्छेत् । इच्छति । वष्टि । उश्यात् ॥

**आशीः प्रेरणयोः—**

| | | |
|---|---|---|
| **तुप् ।** | **ताम् ।** | **अंतु ।** |
| **हि ।** | **तम् ।** | **त ।** |
| **आनिप् ।** | **आवप् ।** | **आमप् ।** |
| **ताम् ।** | **आताम् ।** | **अन्ताम् ।** |
| **स्व ।** | **आथाम् ।** | **ध्वम् ।** |
| **ऐप् ।** | **आवहैप् ।** | **आमहैप् ।** |

एतयोर्द्योत्ययोर्वाच्ययोर्वा धातोस्तुबादयः।आशीःप्रेरणयोः प्रत्ययार्थत्वे वाच्यपक्षो भवति । आशीःप्रेरणयोर्वर्त्तमानाद्धातोरिति पक्षे तु द्योत्यपक्षो भवति । तत्रापि विशेष्यत्वं विशेषणत्वं वेति द्वैतम् । आशासनमाशीः आङः शासुरिच्छायां संज्ञायामकर्तरीत्यनुवर्तमाने स्त्रियां क्किरित्यधिकारे संपदादेः क्विप् चेति क्विप् । अयमेव निर्देशस्तस्य वचनस्य सत्त्वे प्रमाणम्।अस्मादेव निपा-तनात्क्विपि आत इः । ननु शासेरित्यनेनेत्वमस्तु न परस्मैपदिनः शासे-स्तत्र ग्रहणात् । अन्यथा आशास्त इत्यादावपि स्यात् । आशिषीति निर्देशात्किलात्परस्य धातोः सस्य षः । स च । शासिवसिघसीनां भवति । ज्ञापकासिद्धं न सर्वत्रेति । उस्रः किरणः उस्रः गौरित्यादौ वसेरौणादिकेरकि संप्रसारणे रूपम् प्रपूर्वादीर्गतावित्यस्मात्प्रेरणार्थण्यंतादंतर्भावितण्यर्थाद्वा भावे युर्युट् वा । प्रेरणा प्रवर्तना । विधिशब्दार्थ एव । आशीश्च प्रेरणा च आशीःप्रेरणे

तयाः । आशासनं चाप्राप्तस्यैव भवतीत्यप्राप्तप्रार्थनमाशीः सा च स्वस्य परस्य च संभवति । स्वस्य परस्येष्टार्थशंसनं वाशीरिदमप्यप्राप्तविषयमेव संभवति । आयुष्मान् भवतु भवान् मतुप्प्रत्ययस्यातिशयोर्थः । अतिशयितायुःप्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणक्रिया तद्विषया शुभाशंसा । शुभाशंसाविषय भूता दीर्घायुःप्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणक्रियेति चार्थः । अत्रायुर्विषयाशीः फलति । पुत्रवंतौ भवंतौ भवताम् । पुत्रसंबन्धानुकूला द्विभवदर्थाश्रयात्मधारणक्रिया तद्विषया शुभाशंसा शुभाशंसाविषयभूता पुत्रसंबंधानुकूला द्विभवदर्थाश्रयात्मधारणक्रियेति वार्थः । वयं वेदमध्ययामहै । वेदाक्षरावाप्त्यनुकूला बह्वस्मदर्थाश्रयाध्ययनक्रिया तद्विषया शुभाशंसा शुभाशंसाविषयभूत वेदाक्षरावाप्त्यनुकूला बह्वस्मदर्थाश्रयाध्ययनाक्रियेति वार्थः । अध्ययनायोद्यतो भव साधो । साधुसंबोध्यकाध्ययनफलकोद्योगवदेकयुष्मदर्थाश्रयात्मधारणक्रिया तद्विषया प्रवर्तना।प्रवर्तनाविषयभूताध्ययनफलकोद्योगवदेकयुष्मदर्थात्मधारण क्रियेति वार्थः । ज्योतिष्टोमेन स्वर्गकामो यजताम् । स्वर्गप्राप्त्यनुकूला ज्योतिष्टोमसंज्ञिका यागकरणिकैकस्वर्गकामपुरुषाश्रया भावना तद्विषया प्रवर्तना । प्रवर्तनाविषयभूता स्वर्गप्राप्त्यनुकूला ज्योतिष्टोमसंज्ञकयागकरणिकैकस्वर्गकामपुरुषाश्रया क्रियेति वार्थः । यद्यपि याड़ादितुबादयो न कालविशेषे विहिताः तथापि भविष्यत्कालोऽत्र गम्यतेऽतीतवर्तमानयोर्विध्याद्यसंभवात् । यत्तु शब्दं कुर्वाणेपि नरे विरामाशंकायां शब्दं कुर्वेति वर्तमानेपि विधिः संभवतीत्युक्तम् । तन्न । तत्रापि भाविशब्दविषयत्वाद्विधेर्न वर्तमानशब्दविषयता । विधिग्रहणेऽनुवर्तमाने पुनः प्रेरणोपादानमाधिकसंग्रहार्थम् । तेनातिसर्गप्राप्तकालयोरपि तुबादिः सिध्यति । प्रैषस्तु विधिरेव । त्वं गंगां गच्छ । **अतिसर्गस्तु** तादिच्छया प्रवर्तना । तवेच्छा चेद्गंगां गच्छ । केनचित्कंचित्प्रत्युक्तं मध्याह्नकालस्त्वयावक्तव्यो मम तदा गंगा गंतव्याऽस्तीति । स आह प्राप्तस्ते कालस्त्वं गंगां गच्छेति दिक् ॥ तुह्योस्तातङ्ङाशिषि वा ॥ तुश्च हिश्च तुही तयोः । तातङो ङित्वेपि नांत्यादेशः । ज्ञापकसिद्धं न सर्वत्रेति ङिदंतस्येत्यस्याप्रवृत्तेः । किंचानन्यार्थङितो ङित्वमंत्यादेशं प्रयोजयति । अत्र तु ब्रूतान्मृष्टाद्दुष्टादित्यादौ गुणवृद्धिप्रतिषेधे संप्रसारणे चरितार्थत्वा-

न्ङित्वस्य नांत्यादेशता। ननु तुप् ताद् तां अंतु हि ताद् तं तेत्येव कुतो न पठ्यते इति चेन्मैवं मेरणेऽतिप्रसंगात् । नहि आशिषि तात्मेरणेनेति व्यवस्था लभ्यते किंच नाम्नि च युष्मदि चास्मदि च भागैरिति बहुवचनोपात्ता त्रयो भागा विधेयाः ॥ तत्र न ज्ञायते चतुर्भिः को भागस्त्रिभिः को वेति व्यवस्था न सिध्येदिति दिक् ।

अनद्यतनेऽतीते–

| | | |
|---|---|---|
| दिप् । | ताम् । | अन् । |
| सिप् । | तम् । | त । |
| अमिप् । | व । | म । |
| तन् । | आताम् । | अंत । |
| थास् । | आथाम् । | ध्वम् । |
| इ । | वहि । | महि । |

अनद्यनेतीते काले द्योत्ये वाच्ये वा धातोर्दिबादयः।अस्मिन्नहनीत्यद्य।सद्य आदित्वात् इदमःअद्यप्रत्ययश्चाहनीत्यर्थे निपात्यते।तद्धितोक्तत्वात्प्रथमा।अद्यशब्द वाच्यः कियान्कालः । अतीतरात्रेरंतिमं यामद्वयमागामिन्याः प्रथमयामद्वयं मध्यवर्ती दिवसः सकलः एषोऽद्यशब्दवाच्यः कालः । केचित्तु।अरुणोदयादारभ्यारुणोदयपर्यंतः कालः । अन्ये तु । सूर्योदयादारभ्य सूर्योदयपर्यंत इत्याहुः । लौकिकानां 'ह्योऽद्य श्व' इति तत्रैव व्यवहारदर्शनात् । अद्यभवोऽद्यतनः । त्यतनाविति तनः । अद्यतनः कालस्त्रिविधः । अतीतो वर्तमानोऽनागतश्च । अतीते तत्राद्यतने भूते सिः । अद्यतने वर्त्तमाने तिबादिः । अद्यतनेऽनागते त्यादौ भविष्यति स्यप् । नास्त्यद्यतनो यस्मिन्निति बहुव्रीहिरिति । तस्मिन् ह्यस्तने काले दिबादिरर्थादपरोक्षे । परोक्षे णादिविधानात् । यद्वा । अद्यतनादन्योऽनद्यतन इति नञ्तत्पुरुषः। अन्स्वरे इत्यन्।नाम्नो न-इति नलोपश्। तनविधानसामर्थ्यात् । एवमपि ह्यस्तनो लक्ष्यते।नन्वद्य ह्यो भुक्ष्महीत्यत्रातिप्रसंगः अद्यतनाद्भिन्नस्य 'ह्य' इत्यस्य सत्त्वात् इति चेत् । मैवम् । परत्वात्सेः संभवात् दिबादेरवकाशो ह्यस्तनः कालः । ह्योऽभवत्त्वत्पुत्रः । सेरवकाशोऽद्यतनोऽतीतः अभूद्वृष्टिरिति । उभयविवक्षायां द्वयोः प्रसंगे परत्वात्सिर्भवति ।

अत्रानद्यतन इति योगं विभज्य तिबादीननुवर्त्यानद्यतने तिबादयो विधेयाः। अनद्यतनोऽतीतोऽनागतश्च ग्राह्यः। तेन यजतिस्म इयाज वा युधिष्ठिरः। योऽन्नं ददाति दाता वा स स्वर्गं याति याता वेति सिद्धम्। ननु 'ह्यस्तने' इति वक्तुमुचितं लाघवात्। उत्तरार्थताप्यस्य नास्ति 'ह्यस्तने' इत्यस्यैवान्वयसंभवादिति चेत्। सत्यम्। नञोक्तमनित्यमित्यद्यतनेपि परोक्षेणादिविध्यर्थमिदम्। "बहु जगद पुरस्तात्तस्य मत्ता किलाहम्" "सुप्तोऽहं किल विललाप" अत्र मद्यनिद्रादोषेण स्वनिष्ठक्रियाया अप्यननुसंधानात्पारोक्ष्यम्। ननु बहुव्रीहिपक्षेऽद्यतने दिबादिः प्राप्नोति। अद्यतनेऽद्यतनाभावादिति चेत् न। निषेधस्य प्रसक्तपूर्वकत्वात् अद्यतनेऽनद्यतनस्य प्रसंगाभावान्निषेधाभावः। यद्वा। अद्यतने व्यापकेऽद्यतनस्य व्याप्यस्य सत्त्वात्। दिवसे प्रहरोऽस्ति, प्रहरे मुहूर्तः, मुहूर्ते घटिकाः। ह्योऽभवत्त्वत्पुत्रः। गतदिवसाधारिका युष्मदर्थजन्यपुत्राश्रयात्मधारणानुकूलातीता क्रिया। वेदमध्यैत बटुः। एकबट्वभिन्नाश्रयका वेदमात्यनुकूला चिरातीताऽध्ययनक्रिया। अहमोदनमपचम्। एकास्मदर्थाभिन्नाश्रयौदनोत्पत्त्यनुकूला चिरातीता पाकक्रिया। यूयं घटमकुरुत। बहुयुष्मदर्थाभिन्नाश्रया घटोत्पत्त्यनुकूला चिरातीतोत्पादनेति दिक्॥

परोक्षे--

| | | |
|---|---|---|
| णल्। | अतुस्। | उस्। |
| थल्। | अथुस्। | अ। |
| णल्। | व। | म। |
| ए। | आते। | इरे। |
| से। | आथे। | ध्वे। |
| ए। | वहे। | महे। |

अनद्यतनातीतपरोक्षार्थक्रियावृत्तेरिति द्योतकतापक्षः। अक्ष्णः परः परोक्षः। टाडका इत्यः यस्य लोपः। अक्षादिंद्रियात्पर इति वा क्वचिदमाद्यंतस्य परत्वमिति पंचम्यंतस्य परत्वं सहादित्वात्परशब्दस्यौकारोऽस्मादेव निपातनाद्वा। विक्लित्त्यनूकुलव्यापारसंतानोऽधिश्रयणांतः पच्यर्थः क्रियाशब्दवाच्यः। तस्य समुदायस्य युगपदुत्पत्त्यसंभवादाशुविनाशित्वाच्च प्रत्यक्षत्वं न संभवति यद्यपि तथाप्येकैकव्यापारस्य

प्रत्यक्षत्वात् तत्समुदायेपि प्रत्यक्षाभिमानो लौकिकानाम् । यत्र त्वेकोऽवयवो न प्रत्यक्षस्तत्र क्रिया परोक्षेत्युच्यते । अन्ये त्वाहुः । यद्यपि क्रिया सर्वा परोक्षैव प्रत्यक्षेण सा सर्वा समुदायीकृता निर्दर्शयितुं न शक्यते देशांतरप्राप्त्यादिफलेन त्वनुमीयते, तथापि तदनुकूलशक्तिमतां व्यापारा-विष्टानां साधनानां पारोक्ष्यमिह विवक्षितं तेषां प्रत्यक्षत्वेऽपि प्रत्यक्षत्वम् । तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेपि णबादिर्भवत्येव । अयं पपाच त्वं पेचिथेति । एवं स्वव्यापारस्यापि वर्त्तमानतादशायां व्यासंगादिना स्वयमप्रतिसंधाने ततः कार्येणानुमितौ भवत्येव । अहं विललापेति वत् । नाहं कलिंगान् जगामेत्यत्र तु पापभयात्स्वयमनुष्ठितापि क्रियाऽपलप्यतेऽतस्तस्या अभाव-प्रतिपादनात्परोक्षता । अतो वैचित्त्यापह्नवयोरिति न वक्तव्यं भवति । रामो राज्यं चकार । प्रजापालनाद्यनुकूलैकरामाभिन्नाश्रया चिरातीतापरोक्षा क्रिया । त्वमीशमश्वमेधेनेयष्ट । एकयुष्मदर्थाश्रया ईशपूजनानुकूलाऽश्वमेधसंज्ञिकयज्ञ-करणिका चिरातीता परोक्षा क्रिया । अनद्यतने किम् । ग्रामांतरे घटोऽभूत् । अत्र घटभवनं परोक्षमतीतमपि न चिरातीतम् । अतीते किम् । अयमन्नं भोक्ता । अत्र भुजेः भविष्यदनद्यतनत्वेप्यतीतत्वाभावः । न चात्र विशेषवि हितैस्तादिभिरेव बाधः स्यादिति वाच्यम् । अपरोक्षे तादीनां सावकाशत्वा-त्परोक्षे णबादिभिरेव बाधसंभवात् । परोक्षे किम् । रामो राज्यमकरोदिति हनुमद्वाक्यम् । घटोऽभवदिति तु घटोत्पत्तिश्चिरातीतापि न परोक्षा । यत्तु उत्तमपुरुषे णबुत्तमोवेति ज्ञापकात्प्रयोग इति तन्न । वैचित्यादौ तस्य सावकाशत्वादिति दिक् । **द्विश्च** ॥ णबादीत्यनुवृत्तं सप्तम्या विपरिणम्यते धातोर्द्विर्वचनं भवति णादौ परे सति । द्वौवाराविति द्विः ॥ द्वित्रिचतुर्भ्यः क्रियावृत्तौ सुः ॥ कृत्वसोऽपवादः । अनेनैव निर्देशेनेदं वचनं ज्ञाप्यते । अत्र क्रियावाचकं विना क्रियावृत्तेरसंभवाद्वचनमित्यध्याह्रियते । तच्च कृदंतं तदपेक्षया धातोरिति कर्मणि षष्ठी । धातोर्द्वे उच्चारणे कर्त्तव्य इत्यर्थः । यद्वा द्वेरिति संख्यामात्रवाचकात् द्विशब्दाल्लिंगार्थे इति सिः । द्व्येकयोरितिवत् । अन्यथा द्व्येकेष्विति स्यात् । धातोरिति गुणगुणिसंबंधे षष्ठी । धातोर्द्वित्वं भवतीत्यर्थः । अत्र द्विःप्रयोगो द्विर्वचनं नत्वादेशः । सत्यादेशे तु तोसेत्यादौ

तुतोषेत्यादि रूपं स्यात् । कृतस्य सत्त्वात् शब्द एव द्विरावर्तते नत्वर्थः । द्विश्चेति विधेयसहचरितेन चकारेण विधेयांतरं समुच्चीयते । तच्चोक्तस्या- संभवादनुक्तं गृह्यते । तेन दयतेर्दिग्यादेशे द्वित्वं नेति लक्ष्यानुरोधादन्यदपि भवति । पिप्ये इत्यादि । परोक्षे इति योगं विभज्य दिबादीननुवृत्त्य परोक्षे दिबादयो विधेयाः । तेन शश्वदकरोत् चकार वा । अनंतरस्येति न्यायेनोक्त- णादियोगेनैव द्वित्वं न विदोनवानामिति विहितणादियोग इति दिक् ॥

## आशिषि—

| | | |
|---|---|---|
| यात् । | यास्ताम् । | यासुस् । |
| यास् । | यास्तम् । | यास्त । |
| यासम् । | यास्व । | यास्म । |
| सीष्ट । | सीयास्ताम् । | सीरन् । |
| सीष्ठास् । | सीयास्थाम् । | सीध्वम् । |
| सीय । | सीवहि । | सीमहि । |

स्वस्य परस्य चेष्टार्थस्य शंसनमाशीः । तस्यां वाच्यायां धातोर्यादादयः । यद्वा प्रार्थ्यमानक्रियावृत्तेर्धातोर्यादादय इति वा । आशीर्यादादेः पं कित् । ननु ङित्त्वेनैव गुणादिनिषेधः सिद्ध इति चेत् न । 'इज्यात्, सुप्यात्' । इत्यादौ संप्रसारणार्थत्वात् । आशीरिति किम् । स्वप्यादिति विध्यादौ माभूत् । यादादेः किम् । स्वयं तु इत्यादौ संप्रसारणं यथा न स्यात् । पं किम् । यक्षीष्ट केशा वो मंगलं क्रियासुः । ब्रह्मविष्णुमहेशाभिन्नाश्रयका बहुयुष्मदर्थ- संबंधमंगलोत्पत्त्यनुकूला योत्पादना तद्विषयाशंसना । आशंसाविषयोत्पा- दना वेति बोधः । भगवन् त्वं नो मंगलं कृषीष्ठाः । एकभगवदर्थसंबोध्यका- बह्वस्मदर्थसंबंधिदुःखनाशनेन स्वरूपसुखाभिव्यक्त्यनुकूला योत्पादना तद्विषया शंसा । आशंसाविषयभूतोत्पादनेति वा बोधः । अहं वेदमध्येषीय । एकास्मदर्थाभिन्नाश्रया वेदाक्षरावाप्त्यनुकूला याऽध्ययनक्रिया तद्विषयाशंसा । आशंसाविषयभूताऽध्ययनक्रियेति वा बोधः ।

श्वस्तने–

| | | |
|---|---|---|
| ता | तारौ | तारस् । |
| तासि । | तास्थस् | तास्थ । |
| तास्मि । | तास्वस् । | तास्मस् । |
| ता । | तारौ । | तारस् । |
| तासे । | तासाथे । | ताध्वे । |
| ताहे । | तास्वहे । | तास्महे । |

अद्यतनं दिनं विहायागामिदिने श्वःशब्दो वर्त्तते । तत्र भवः श्वस्तनः कालः । तस्मिन्वाच्ये धातोस्तादयः । यद्वा । श्वस्तने व्यापारे वर्त्तमानाद्धातोस्तादयः । श्वो भविता राज्यं कुमारस्य । चिरागामिदिनाधारा एकराज्याभिन्नाश्रयकाऽऽगामिकालभाविनी आत्मधारणानुकूला क्रियेत्यर्थः । त्वं सुखं गंतासि । एकयुष्मदर्थाभिन्नाश्रया सुखोत्पत्त्यनुकूलाऽऽगामिदिनभाविनी गतिक्रियेति बोधः । वयं वेदमध्येतास्महे । बह्वस्मदर्थाभिन्नाश्रयका वेदाक्षरावात्यनुकूलाऽऽगामिदिनभाविनी अध्यनक्रियेति बोधः ॥ **आद्भुवि कर्मणि** ॥ भवनं भूः । संपदादित्वाद्भावे क्विप् । तस्यां भुवि शुद्धे धात्वर्थे साध्यरूपे भावे घञर्थस्तु सिद्धरूपो भावः स्वार्थे आदिति फलितम् । फलाश्रयः कर्म । फलं च धातुनैवोक्तमित्याश्रयमात्रमाख्यातार्थः । अनन्यलभ्यत्वात् । न च प्रथमांतेनैवाश्रयो लब्ध इति वाच्यम् । 'घटः क्रियते' इत्यत्र घटत्वेनैव घटस्योपस्थानात् नत्वाश्रयत्वेन । आश्रयत्वं त्वखंडोपाधिरूपमवच्छेदकम् । यद्वा । आश्रयमेव वाच्यं अभेदेन तदेवावच्छेदकं च । भावेऽकर्मकाद्धातोरात्कर्मणोऽसंभवात् । सकर्मकात्तु कर्मण्यात् । ननु सकर्मकाद्भावेऽपि प्राप्नोति ततश्च घटं क्रियते देवदत्तेनेत्यपि स्यादिति चेत् । मैवम् । द्विश्चेत्यतश्चोनुवर्त्तते । सोऽवधारणार्थः । सकर्मकाद्धातोःकर्मण्येवात् न भावे । ननु तर्हि भाववत्कर्त्तर्यपि न स्यादिति चेत् न । मध्येपवादन्यायात् । न्यायश्चायं लाघवमूलकः । निषेधस्योपस्थितेनैव निषेध्याकांक्षायाः पूर्त्तौ अनुपस्थितं न ग्राह्यमिति लाघवम् । अथ किमर्थमिदमारभ्यते । पूर्वयोगैस्तिबादयो विहिता एव । नचार्थविशेषलाभार्थमिदम् । अनिर्दिष्टार्थाः

प्रत्ययाः स्वार्थे भवंतीति भावार्थस्य लाभात् । अप्कर्तरीति कर्तुः इणूतन्यकर्तरीति कर्मणश्च लाभात् । मैवम् । अस्य नियमार्थत्वात् इणूतन्यकर्तरीति सर्वाणि कारकाण्यभिधेयत्वेन प्राप्तानि संज्ञायामकर्तरीत्यत्र यथाप्राप्तानि तथात्रापि तत्र नियमोऽनेन क्रियते कर्मण्येवात् नान्यस्मिन्नर्थे । इत्थं भावेऽप्राप्तौ सत्यां भुवीत्युक्तं तथापि कर्त्तर्य्यप्राप्तौ कर्तरि पं चेत्युक्तम् । नियमपक्षेपि नार्थनियमः । क्रियते कर्मणि आदेव न तु पम् । यत एवकारस्ततोऽन्यत्रावधारणमिति सिद्धांतादर्थस्य नियमो भवति नतु प्रत्ययस्य । तेन कारकांतरे प्रत्ययस्यानिवारणाद्दुष्टोऽयं पक्षः । अतः प्रत्ययनियमोऽत्र क्रियते । आत्कर्मण्येव भवति न करणादौ । अर्थस्यानियतत्वात्तत्र कृत्प्रत्यया भवंत्येव । अर्थनियमेपि । वचनात्कृतः स्युरिति सुवचम् । अथ भुवि कर्मण्यादिति वक्तुं युक्तम् । विधेयस्य पश्चान्निर्देशस्यौचित्यादिति चेत् । उच्यते । आदिति योगविभागेनान्यस्मादपि धातोराद्विधीयते तेन 'जिज्ञासते' शुश्रूषते, सुस्मूर्षते, दिदृक्षते, इत्यादि सिद्धम् । ज्ञाश्रुस्मृदृशामित्यादि न वक्तव्यं भवति । अथ भूकर्मणीत्येव वक्तव्यम् । किं पृथङ्निर्देशन । उच्यते । कर्त्तरीति योगो विभज्यते । भुवीति तु तृतीयया विपरिणम्यते । कर्मणीत्यनेन कर्मस्था क्रिया गृह्यते । तुल्ये इति त्वध्याह्रियते । कर्मस्थया भुवा क्रियया तुल्यक्रिये कर्तर्याद्भवति । काष्ठं भिनत्तीत्यत्र काष्ठस्य या क्रिया विदारणाश्रयत्वरूपा सैव काष्ठं भिद्यते । स्वयमेवेत्यत्र तस्मिन्कर्तृभूतेऽपि भवति । यक्चतुर्ष्वित्यत्र यगिति प्रथमोच्चारणाद्यगिति योगो विभजनीयः । तत्र कर्मणि कर्तरीत्यनुवर्त्य कर्मकर्त्तरि यगपि विधेयः। लक्ष्यानुसाराद्योगविभागादिष्टसिद्धिरिति सिद्धांताच्चतुर्ष्वेव सः । इणू तु इणूतनीत्यत्र वक्ष्यते । एतावाद्यकौ कर्मस्थभावकानां कर्मस्थक्रियाणां च धातूनां च भवतः । न कर्तृस्थभावकानां कर्तृस्थक्रियाणां च । यत्र कर्मणि दृष्टे क्रियाऽनुमातुं शक्यते ते कर्मस्थक्रियाः । ततोऽन्ये कर्तृस्थक्रियाः । यथा पक्वेषु तंडुलेषु भिन्नेषु च काष्ठेषु दृष्टेष्वदृष्टः कर्तृव्यापारोऽनुमीयते । तदुक्तम् । "कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ॥ आशासेर्भावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥ १ ॥" यदप्याधारभावयोरित्यत्र भावशब्दे

न क्रियापि गृह्यते तथाप्यत्र भेदो विवक्षितः । पृथगुपादानात् । परिस्पंद-रूपो धात्वर्थः छिदादिः क्रिया । अपरिस्पंदरूपो विक्लित्यादिर्भावः । पचति ओदनं भिनत्ति काष्ठं च देवदत्तः । पच्यते ओदनः भिद्यते काष्ठं च स्वय-मेव । यद्यपि काष्ठानि पचंति स्थाली पचतीत्यादौ साधनाधारयोरपि कर्तृत्वं दृश्यते तथापि तत्र न यगातावविधानात् । क्रियते घटः स्वयमेवेत्यत्र करोतेरपि कर्मकर्त्ता दृश्यते । स चोत्पादनार्थत्व एव संभवति न तु यत्ना-र्थत्वे । यत्नस्य ज्ञानेच्छादिवत्कर्तृस्थत्वात् । आशास्ते घटं ना । आशास्ते घटः स्वयमेव । गच्छति ग्रामं ना । गच्छति ग्रामः स्वयमेव । घटग्रामयो-र्दृष्टयोर्नहि पुरुषव्यापारोऽनुमातुं शक्यते इति कर्तृस्थत्वं क्रियायाः ॥

॥ कर्त्तरि पं च ॥ कर्तरि वाच्ये धातोः पं चादात् । देवदत्तः पचाति । पेनोक्तत्वात्कर्तरि प्रथमा । ननु भावकर्तृष्वाद्विधानात्कथं निर्णयः । मैवम् । प्रयोगान्निर्णयसंभवात् । आस्ते शेते पुरुषः इत्यत्र कर्तरि प्रथमादर्शनात्क-र्त्तर्यात् । शय्यते, आस्यते पुरुषेणेत्यत्र कर्तरि तृतीया दर्शनात् भावे आत् । चक्रे करिष्यते वा घटं कुलाल इत्यत्र कर्त्तर्यात् । चक्रे करिष्यते वा घटः कुलालेनेत्यत्र कर्मणि आत् । कर्मणि प्रथमायाः कर्तरि तृतीयायाश्च दर्शनात् । कृषीष्ट कर्त्तेत्यत्र त्वनिर्णय एव । यथा रामाभ्यामित्यत्रानिर्णयः । कृतं देह्यागत इत्यादि सहोक्तौ तु तृतीयादेर्निर्णय एव । केचित्तु । अकर्म-काद्यकूसहित आत् । भावे सकर्मकाद्यकूसहित आत्कर्मणि ताभ्यामप् लुक् । यनमादिसहित आत्कर्तरीत्यादि नियामकमाहुः । तन्न । कर्मकर्तरि व्यभि-चारात् । भिद्यते कुशूलः स्वयमेवेत्यत्र यकूसहितस्यातः कर्त्तरि विधानात् । ‘ पच्यते ओदनेन, भिद्यते काष्ठेन ’ इत्यादौ भावे च दर्शनात् । ननु कर्त्तृग्रह-णं किमर्थम् । भावकर्मणोः पूर्वेण विधानात् परिशेषात् कर्तर्येव पं भवि-ष्यति । अत्राह माधवः । ननु पं चेत्येवास्तु सूत्रम् । माकारि कर्त्तृग्रहणम् । न चाद्भुवीत्यतो भावकर्मणी अनुवर्त्तेयातामिति वाच्यम् । योगांतरारं-भात् । अन्यथाऽपाद्भुवि कर्मणीत्येव सिद्धत्वान्न चार्थांतरं संभवतीति पारिशे-ष्यात्कर्तर्य्येव स्यादिति किं कर्तृग्रहणेन । एवं तर्हि भावनिवृत्यर्थं कर्तृग्रहणम् । अन्यथा निर्दिष्टार्थत्वाद्भाव एव स्यात् । अपूकर्तरीति ज्ञापकात्कर्त्तरि स्या-

दिति चेत् कर्तर्येव यथा स्यात्कर्मकर्तरि माभूदिति कर्तृग्रहणमिति । तन्न । धात्वर्थेन कारकाणामाक्षेपात्तत्र प्राप्तौ तद्वारणार्थं कर्तर्येव प्रमिति नियमार्थम् । कर्तृग्रहणस्य संभवात् । अस्मदुक्तरीत्या कर्मकर्तर्यप्राप्तिविधेः संभवात् । त्वदुक्तरीत्या काष्ठानि पचंतीति करणे कर्तरि स्थाली पचतीत्याधारे कर्तरि चाप्रसंगात् ॥ यक्चतुर्षु ॥ चतुःशब्दश्चतुष्टयसंख्याविशिष्टस्य वाचकः । संख्येयविशेषाकांक्षायां वचनानि संबध्यंते तेषां चतुष्टयाभावात् । वचनानां त्रित्वात् । नापि प्रथममध्यमोत्तमाः पुरुषाः संबध्यंते तेषामपि तथात्वात्।अतोऽत्र विभक्तयः संबध्यंते । न च तत्र चतसृषु स्यादिति वाच्यम्। चतुर्ष्विति सामान्ये नपुंसकनिर्देशस्य संभवात् । तदुपहंतुं शक्यमितिवत्। यद्वाऽऽख्यातप्रकरणात् चतुर्विधेष्वाख्यातेष्वित्यर्थः । तत्र वर्तमानार्थत्वमेका विधा।विधिसंभावनार्थत्वमित्यपरा।आशीःप्रेरणार्थयोरित्यन्या। अतीतानद्यतनार्थत्वमिति चतुर्थी । यद्यपि सप्तविधा आख्याता उक्ताः प्राक्, तथापि प्रथमातिक्रमे कारणाभावादादितश्चत्वारो ग्राह्याः । अत्राव्यवहितमपि कर्तरीति नानुवर्तते । उत्तरत्र कर्तृग्रहणादन्यथाऽनेनैव तत्सिद्धौ किं तेन। अतो भुवि कर्मणीति चानुवर्तते । तच्च तत्र यकोऽभिधेयमाख्यातेनैवोक्तत्वादनन्यलभ्यस्यैव शब्दार्थत्वाभ्युपगमात् । अतस्तन्निमित्तविशेषणं भावार्थकेषु कर्मार्थकेषु च। चतुर्ष्विति । अत्र तंत्रादिना वाक्यभेदेन वा द्वितीयोऽप्यर्थो ग्राह्यः।भावकर्मार्थकेषु चतुर्षु परतः इत्येकोऽर्थः । कर्मकर्त्रर्थेषु चतुर्ष्वित्यपरः। चतुर्ष्विति निर्देशेन नामसंज्ञाप्रवृत्तिकाले नामांत्यस्य रेफस्य सुपि परे न विसर्ग इति ज्ञापितम् । तेन गीर्षु पूर्षु, दोष्षु, सजूःष्वित्यादि सिद्धम् । एतदर्थमेव चतुर्ष्विति सामान्यनिर्देशः कृतोऽन्यथा चतसृष्वित्युक्ते इदं न ज्ञाप्येतेति दिक् ॥ **अप्कर्तरि** ॥ अत्रापि कर्तरीति नापोभिधेयमाख्यातोक्तत्वात्। किन्त्वनुवृत्तस्य चतुर्ष्वित्यस्य विशेषणं कर्त्रर्थेषु चतुर्षु धातोरप्प्रत्ययः। नन्विह कर्तृग्रहणं किमर्थम्, भावकर्मणोर्यक्विधानात् पारिशेष्यात्कर्तुर्लाभादिति चेत्। न। इह कर्त्रग्रहणे यको भावकर्मणोर्विधानासंभवात् । सन्निधानात्कर्तर्येव विधानसंभवाच्च । अपः पित्त्वमपित्तादिर्ङिदिति ङित्त्वाभावार्थम् । अन्यथा भवतः । नयतः--इत्यादौ ङित्त्वाद्गुणो न स्यात् । विधेयस्य

प्रथमोच्चारणं तु योगविभागार्थम् । कर्मणि कर्तरीति चानुवर्त्तते । कर्मकर्तरि चतुर्षु धातोरप्प्रत्ययः । क्वचिद्भवति यकोपवादः । तेन गणयति गणं गोपालः । गणयति गणः स्वयमेव । केषांचिन्मते गणयतेः कर्मकर्त्तर्याद्वा । गणयति गणयते गणः स्वयमेव । कारयति घटं प्रभुः । कारयते घटः स्वयमेव । चिकीर्षति घटं कुलालः। चिकीर्षते घटः स्वयमेव । अलंकरोति कन्यां पिता । अलंकुरुते कन्या स्वयमेव । ब्रवीति कथां विद्वान् । ब्रूते कथा स्वयमेव । गां दोग्धि गोधुक् । दुग्धे गौः स्वयमेव । प्रस्तौति गां गोपः । प्रस्नुते गौः स्वयमेव । नमति दंडं दंडी । नमते दंडःस्वयमेव । अंतर्भावितण्यर्थावेतौ गिरति ग्रासमत्ता । गिरते ग्रासस्स्वयमेवेत्यादि सिद्धम् । केचित्तु सन्निधानासन्निधाने नानुवृत्तिप्रयोजके किंत्विष्टत्वानिष्टत्वे प्रयोजके । यक्चतुर्ष्वित्यत्रानिष्टत्वात्कर्त्तरीति नानुवर्त्तते इष्टत्वाद्धुविकर्मणीति चानुवर्तते अतोऽत्र पारिशेषात्कर्त्तरीति लब्धे पुनः कर्तृग्रहणमन्यत्रापि कर्तरि यगातोविधानार्थम् । तेन सृज्यते स्रजं भक्तः । युज्यते ब्रह्मचारी योगम् । तप्यते तपस्तापस इति सिद्धम् । अत्र सृजति युनक्ति तपतीति प्राप्तामिति दिक् ॥ **अदादेर्लुक्** ॥ अद आदिर्यस्य स अदादिस्तस्माददादेः । अद भक्षणे इत्यारभ्य दिवुक्रीडेत्यतः प्राक्तनः समुदायोऽदादिशब्देन गृह्यते । तस्य चानुद्भूतावयवभेदस्यान्यपदार्थत्वेन विवक्षणाददादेरित्येकवचनम्। पूर्वसूत्रादप् इत्यनुवर्तत्ते । तच्च षष्ठ्या विपरिणम्यते । तस्य लुग्विधीयते । अत्र चतुर्ष्वित्यस्यानुवृत्तिस्तु नोपयुज्यते चतुर्ष्वपोऽभावात् । अत्र तद्गुणसंविज्ञानबहुव्रीहेराश्रयणादत्तेरप्यपो लुक् । अपः किम् । अद्यते । एवमग्रेपि ॥ **ह्वादेर्द्विश्च** ॥ हुआदिर्यस्य स ह्वादिस्तस्य । द्वौ वारौ इति द्विः । द्वित्वविशिष्टवाचकात् द्विशब्दात्क्रियायाः सुः आवृत्तौ । सा च योग्यताबलादुच्चारणक्रिया गृह्यते । लुक्यनुवृत्तं सप्तम्या विपरिणम्यते । ह्वादेरिति कर्मणि षष्ठी । उच्चारणक्रियायाः कर्मत्वात् । तथा च लुकि सति ह्वादिर्द्विर्वारमुच्चारणीय इति फलितम् । द्विःप्रयोगो द्विर्वचनमिति सिद्धांतो, न तु स्थाने द्विर्वचनमिति । लुकि किम् । हूयते । अत्र चकारोऽधिकः पूर्वेणापो लुकोऽनेन द्विर्वचनस्य विधानसिद्धत्वात् । चकारोऽनुक्तसमुच्चयार्थः । तेन भीह्रीभृहुवामामि

द्वित्वमित्त्वं च सिध्यति ॥ **दिवादेर्यः** ॥ दिव आदिर्यस्य स तस्माद्यप्रत्ययो भवति कर्त्रर्थेषु चतुर्षु परेषु । अत्रानुक्तसमुच्चयार्थश्चकारोऽनुवर्तते। तेन भ्राशभ्लाशभ्रमक्रमत्रसत्रुटिलषो यो वा । अनुपसर्गाद्यसः संपूर्वाच्चेति बोध्यम् । यद्वा भ्राशादयो धातवः दिवादिषु पुषादिभ्योऽन्यत्र पाठ्याः। आदर्हा आदर्हेषु । यार्हाः यार्हेषु । उभयार्हाः उभयार्हेषु । अर्थाश्च तत्तद्गुणोक्ता अत्रापि ग्राह्याः । वा भ्राशेति सूत्रारंभे यथा यसु संयसु इति च पाठ्यम्। यसुपाठेन सिद्धे संपूर्वपाठस्तु नियमार्थः। संपूर्वादेव यः। न उपसर्गांतरपूर्वात्। अपु भ्वादिपाठाद्भवति। येन नाप्राप्तिन्यायेनापोपवादोऽयं यः । चतुर्षु किम् । दिदेव । कर्त्रर्थेषु किम् । दीव्यते । यद्यपि ये यकि च समानं रूपं तथाप्यर्थे पदे च विशेषः ॥ **स्वादेर्नुः** ॥ सुरादिर्यस्य स स्वादिस्तस्मान्नुः प्रत्ययो भवति कर्त्रर्थेषु चतुर्षु । सुनोति । चतुर्षु किम् । सुषुवे । कर्त्रर्थेषु किम् । सूयते सोमो भवता । श्रुश्रवणे । स्वादिष्वेव पाठ्यः । दृशादेः पश्यादिरिति श्रृभावः । तक्षू तनूकरणे।अक्ष व्याप्तावेतौ स्वादिष्वपि पाठ्यौ भ्वादिषु च। तेन तक्ष्णोति । तक्षति । अक्ष्णोति । अक्षतीत्यादि सिद्धम् ॥ **तुदादेरः** ॥ तुद् आदिर्यस्य स तथा तस्मात् अप्रत्ययः कर्तरि चतुर्षु । अप्रत्ययस्यापि त्तादिरिति ङित्वान्न गुणः । तुदति । किंच । अप्रत्यये सति वादीपोः शतुरिति नुम्विकल्पः । तुदती । तुदंती । अपि तु नित्यं नुम् । पचंती ।अथ रियति । धियति--इत्यत्र अप्रत्यये सति गुणः कुतो न । ननु धातोरुपधाया गुणो विधीयते अत्र तु इकारो न धातोरुपधेति च उपधाया इत्यवयवषष्ठीत्वात् । उपधाभूतस्य च धात्ववयवत्वात् गुणप्राप्तेः सत्त्वात् । उच्यते । अंत्याद्वर्णात्पूर्वस्योपधात्वेनांत्यस्यापि धात्ववयवस्यैव ग्रहणात् अप्रत्ययस्य चाधात्ववयवत्वान्न दोषः । यद्वा अंतरंगबहिरंगयोरंतरंगं बलवदिति परिभाषाश्रयणात् । इप् तु अप्रत्ययमात्रापेक्षत्वादंतरंगः । गुणस्त्वप्प्रत्ययमाख्यातं चापेक्षमाणो बहिरंगः । एवमशुश्रुवदुदुवादित्यादौउवपि बोध्यः ॥ **रुधादेर्नम्** ॥ रुध आदिर्यस्य स रुधादिस्तस्मान्नम्प्रत्ययो भवति कर्तरि चतुर्षु । रुणद्धि । चतुर्षु किम् । रुरोध । कर्तरि किम् । रुध्यते । ननु रुदादेरिति भाव्यमंतर्वर्तिविभक्त्याश्रयणेन पदत्वात्

समिदाधानमितिवदिति चेत्सत्यम् । स्पष्टार्थं पदकार्याकरणम् । अन्यथा रुदिः आदिर्वा रुधिः आदिर्वा संदेहः स्यात् । ननु व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात् रुधिरादेर्ग्रहीष्यते इति चेत् । एवं तर्हि क्वचिदर्वांतरं पदकार्यं नेति ज्ञापितम्।क्षीरस्य पानं क्षीरपाणम्।सुरापाणाः प्राच्याः।शरवणमित्यादावेकपदत्वप्रयुक्तं णत्वं भवति । समासे क्वचिदैकपद्यं णत्वहेतुरिति त्वस्मादेव लब्धम् । स्यादेतत् । नम् किं प्रत्यय आगमो वा । नाद्यः । रुधादेरिति पंचम्याश्रयणात् परः स्यान्नतु मध्ये । न च मित्वसामर्थ्यादंत्यात्स्वरात्परो भविष्यतीति वाच्यम् । नमित्यस्य नम इत्यत्र विशेषणे मित्वस्योपक्षीणत्वेनासामर्थ्यात् । अन्यथा नम इत्यत्र नादित्युक्ते यत्नानां पावनानामित्यादावपि नलोपापत्तेः । न च दीर्घे कृते।नशब्दात्परस्याभावात्नातिप्रसंग इति वाच्यम् । परत्वान्नलोपस्यैव प्रसंगात्।नांत्यः । आगमत्वे मध्यविधानसंभवेऽप्यपो दुर्वारत्वात्प्रत्ययस्यैव हि प्रत्ययांतरमपवादो भवति नत्वागम इति । उच्यते।मित्वसामर्थ्यादंत्यात्स्वरात्परोऽयं नम् । न च विशेषणे उपक्षीणं तद्विशेषणार्थं अनुबंधांतरस्यैव सुवचत्वात् । नमि मध्ये सति परत्वस्या नवरुद्धत्वेनाप् स्यादिति वाच्यम् । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौडिन्यायेति न्यायेनेति तक्रदानेन दधिदानमिव नमा बाध्यते इति सुवचत्वात् । सत्यपि संभवे बाधनं भवतीत्यभ्युपगमात् । यद्वा । अवादिभिराख्यातानां कर्त्रर्थे बोधनीये साहाय्यं क्रियते तच्च प्रतिपदोक्तेन नमैव कृतमित्यपो न प्रयोगो वैयर्थ्यादिति दिक् ॥ **तनादेरुप्** ॥ तन आदिर्यस्य स तस्मात् उप्प्रत्ययो भवति कर्तरि चतुर्षु । तनोति । चतुर्षु किम् । ततान । कर्तरि किम् । तन्यते । नन्वेवं नलोपशिश्वादेरितिवत्तादेरिति भाव्यमिति चेत् न । स्पष्टार्थे नलोपाकरणात्।अन्यथा तादेरित्युक्ते तनादेर्वा तकारादेर्वा संदेहः स्यादथ व्याख्यानतो विशेषप्रतिपत्तिरिति न्यायात्संदेहाभाव इतिचेत् तर्हि क्वचिन्नलोपाभावो ज्ञाप्यते । सन् आदिर्येषां ते सनादयः। वृषू वर्षकं वसु यस्य वृषन्वसुः। वृषाश्वो यस्य स वृषणश्व इत्यादौ नलोपो न । यद्वा । तन आदिर्यस्य उच्चारणार्थोऽकारः।एवं रुध आदिर्यस्येत्यपि। अथोपः पित्त्वं किमर्थम्।नच नूप इत्यत्र विशेषणार्थम्। नुश्च उश्चेति द्वंद्वे न्वोरिति । उश्च नुश्चेति द्वंद्वे उन्वोरिति निर्देशेन वा निर्वाहात् ।

नुप्रत्ययसाहचर्यात्प्रत्ययस्यैवोकारस्य ग्रहणम्।न च नुधातुरेव ग्राह्यस्तस्य गुण इत्येव सिद्धत्वात्प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति न्यायाच्च । मैवम् । अपित्तादिर्ङिदिति ओर्ङित्त्वेन करोति कुरुत इत्यादौ गुणाप्रसंगात्। न च ङित्यदुरिति ज्ञापकात् करोतेर्गुणो भवति । गुणं विनाऽकारासंभवादिति वाच्यम् । घर्णोतीत्यादौ गुणाप्रसंगादिति दिक् ॥ **ना क्र्यादेः** ॥ क्रीरादिर्यस्य स क्र्यादिस्तस्मान्ना प्रत्ययः कर्त्रर्थेषु चतुर्षु । क्रीणाति । चतुर्षु किम् । चिकाय । कर्त्रर्थेषु किम् । क्रीयते । प्रत्ययस्यादावुच्चारणं योगविभागार्थम् । ना इति योगो विभज्यते । "स्वादेर्नुः" इत्यतो नुरित्यनुवर्तते। धातोर्ना प्रत्ययो भवति नुश्च कर्तरि चतुर्षु । अत्र च स्तंभु स्तुंभु स्कंभु स्कुंभुस्कुञ् एतेएव धातवो गृह्यंते लक्ष्यानुसारात्। स्तभ्नाति स्तभ्नोतीत्यादि । एते सौत्राश्चत्वारः पठ्यंते क्र्यादिषु । पठ्येरंस्तदापि नुविधानार्थं योगविभागः कर्त्तव्यः । क्र्यादेर्नेति पठित्वा । तत्र नोरनुवर्तते । नुः सर्वेभ्यः क्र्यादिभ्यः स्यात् ॥ **हसादानहौ** ॥ धातोरित्यनुवृत्तस्य हसादिरित्यनेन विशेषणात्तदंतविधिः । हसांताद्धातोरानः स्याद्धौ परे । नापवादः । स्तंभ्वादिभ्योपि हौ परे ना प्राप्तस्तस्यापवाद आनो भवति । गृहाण । बधान । स्तभान । नुस्तु भवत्येव । येन नाप्राप्त्यभावेन आनस्य तदपवादत्वाभावात् । यदि तु क्र्यादेरित्यनुवर्त्यते। हसांतात्क्र्यादेरिति व्याख्यायते स्तंभ्वादिभ्यो न प्राप्नोति तेषां सौत्रत्वेन क्र्यादित्वाभावात् । यदि तु तेपि क्र्यादिषु पठ्यंते तदा न कापि क्षतिः ॥ **त्यादौ भविष्यति स्यप्** ॥ तिरादिरस्य तस्मिन् भविष्यत्यर्थे वर्तमानाद्धातोः स्यप्प्रत्ययो भवति । त्यादौ परे सति इति भविष्यत्वं द्योत्यम् । धातोः स्यप्प्रत्ययो भवति भविष्यति काले तिबादौ परे । अत्र पक्षद्वयेऽनुवादसामर्थ्यात्तिबादिः । यद्वा । धातोर्भविष्यति काले तिबादिः तस्मिंश्च परे स्यबिति । पक्षे तु तिबादेर्वाच्यं भविष्यत्त्वम् । कर्तृकर्मभावास्तिबादीनामर्थाः संत्येव । ननु भविष्यतीति शत्रंतात्सप्तमी । शतरि तु स्यप् प्रत्ययो नास्ति त्यादौ तद्विधानात् । मैवम् । शतृशानयोरपि तिप्वदित्यपदेशात्स्यप्प्रत्ययो भवति । यद्वाऽस्मादेव निपातनाच्छतरि स्यप्प्रत्ययो भवति । शानस्याप्युपलक्षणम् । तेन यक्ष्यन्यक्ष्यमाणः । भोज्यन्भोक्ष्यमाण

इत्यादि सिद्धम् । तुम् तदर्थायां भविष्यतीत्यत्राप्येवं करिष्यति । त्यादौ किम्—कर्त्ता । भविष्यति किम्—अत्ति ॥ **दिबादावट्** ॥ प्रत्ययाधिकारेप्ययमागमष्टित्वसामर्थ्यात् । प्रत्ययत्वे दिबादौ परे धातोः परः स्यात्तथा च टित्वं व्यर्थं स्यात् । प्रयोजनाभावात् । आगमी चास्य धातुरेव षष्ठीनिर्देशात् न तु विकरणः । षष्ठ्यभावात् । ननु दिबादाविति सप्तमी । तत्र चाव्यवहिते तस्मिन् परे धातोरटा भाव्यमबादिव्यवधाने न प्राप्नोति । न च वचनसामर्थ्याद्भविष्यतीति वाच्यम् । अजुहोदित्यादौ लुप्तविकरणे चरितार्थत्वात् । न च परत्वादट्विकरणस्य नित्यत्वादटि कृते चाकृते च प्राप्तेः । यत्तु अबप्यनित्यः । शब्दांतरप्राप्तेः । कृतेऽटि अभू इत्यस्य । अकृते च भू इत्यस्य । द्वयोरप्यनित्ययोः परत्वादडेवादौ भवतीति माधवेनोक्तम् । तन्न । शब्दांतरस्य प्राप्नुवन्विधिरनित्यो भवतीति सिद्धांतात् शब्दांतरात्प्राप्नुवन्निति सिद्धांताभावात् अभू इत्यस्य भू इत्यस्य चेत्यत्र षष्ठ्यप्यशुद्धा । अपोधात्वनवयवत्वात् भू इत्यस्मादिति पंचम्या उचितत्वात् । उच्यते । शब्दमात्रापेक्षत्वादंतरंगोऽट् । विकरणस्तु कर्त्राद्यपेक्षणाद्बहिरंगः । अंतरंगबहिरंगयोरंतरंगं बलवदित्यादावट् । यद्वा । दिबादावडिति सूत्रं तंत्रादिना व्याख्येयम् । एकेनाव्यवहिते दिबादावट् । द्वितीयेन व्यवहितेपि येन नाव्यवधानोतन्न्यायात् । यद्वा । दिबादावडित्यत्राबादीननुवर्त्य वाक्यभेदेन व्याख्येयम् । दिबादौ परे धातो रट् । त्यादावितिवत् । ण्यादाविति वक्तुमुचितम् । दिबादौ किम् हंति—जुहोति ॥ **स्वरादेः** ॥ स्वर आदिर्यस्य तस्य धातोरट् भवति दिबादौ परे । औहत । ऐक्षत । नन्वत्र दिबादावडित्यट् विहित एव । किमर्थमिदम् । सत्यम् । अस्यारंभसामर्थ्याद्द्वितीयोऽट् विधीयते । ननु द्वयोरटोः प्रथमतः सवर्णे दीर्घ एवास्तु । ततश्च एक्षत, ओहतेति स्यात् । मैवम् । द्वितीयाद्विधानवैयर्थ्यप्रसंगात् । न च एकस्मिन्नेटि कृते तेन धातोस्स्वरादित्वावरोधात् द्वितीयस्य कथं प्रसंग इति वाच्यम् । यदागमास्तद्गुणीभूता स्तद्ग्रहणेन गृह्यंते इति न्यायेनाड्विशिष्टस्यैव धातुत्वात् । नन्वटि कृते सर्वेषां स्वरादित्वाद्द्वितीयोऽट् स्यात् । नचाद्योच्चारणे स्वरादित्वं विवक्षणीयमिति वाच्यम् । औष्टं ऐज्यतेत्यादावप्रसंगात् । उच्यते । अटं विना स्वरादित्वमिह

विवक्षितम्। स्वरादेरिति वचनसामर्थ्यात्। अन्यथा दिबादावडित्यस्याग्रेऽट् चेत्येव सूत्रमस्तु। दिबादौ परे द्वितीयोऽट् भविष्यति किं स्वरादिग्रहणेन। नन्वैज्यतौप्यतेत्यादौ प्रथममंतरंगत्वाद्दिबादावट्। ततो यक्। ततो यजादित्वात्संप्रसारणम्। ततो धातोः स्वरादित्वेपि द्वितीयोऽट् न स्यात्। प्रथमाटा स्वरादित्वस्याग्रहणात्संप्रसारणस्वरस्य त्वादित्वाभावादिति चेत्। न अट्संप्रसारणयोरादेशे कृते तस्य यदादेशन्यायेन धातुग्रहणाद्वितीयाटः संभवात्। स्वरादेः किम्। अभवत्। दिबादौ किम्। ईहते॥ **स्यप् क्रियातिक्रमे** ॥ क्रियाया अतिक्रमः अनिष्पत्तिः असिद्धिरिति यावत्। भविष्यतीत्यनुवर्त्तते। उत्तरसूत्राद्भूत इति च। भूते भविष्यति चार्थे वर्त्तमानाद्धातोर्दिबादिः प्रत्ययो भवति क्रियानिष्पत्तौ गम्यायां दिबादौ च परे स्यप् भवति। यद्वा। धातोः परः भूते भविष्यति चार्थे वाच्ये दिबादिर्भवति। तस्मिंश्च परे स्यप्। क्रियातिक्रमे गम्ये स्यब्विकरणत्वादनर्थकः। त्यादावित्यादावपि। एवं सिरपि। कालस्तु धातोर्व्याख्यातस्य वार्थः। कर्त्रादिकं तु आख्यातस्यैव। यद्वा। भविष्यति भूते इति च नानुवर्त्तनीयम्। परिशेषाल्लब्धत्वात् वर्त्तमान क्रियाया अतिक्रमासंभवात्। यदि कृष्णमनंस्यत्सुखमयास्यत्। कृष्णकर्मिका एकाश्रया नतिः तदभावप्रयुक्ता सुखकर्मिका एकाश्रया भूता भविष्यंती वा या प्राप्तिस्तदसिद्धिः। यदि प्रयागमगमिष्यत्तदामोदकमभक्ष्यत्। प्रयागकर्मिका एकाश्रया भूता भविष्यंती वा या गतिस्तदभावप्रयुक्तमोदककर्मकैकाश्रया भक्ष्यक्रियाया असिद्धिः। यदि सुवृष्टिरभविष्यत्तदा सुभिक्षमभविष्यत्। सुवृष्ट्याश्रयात्मधारणानुकूला भूता भविष्यंती वा या क्रिया तदभावप्रयुक्ता सुभिक्षाश्रयात्मधारणानुकूला क्रियाया असिद्धिः। क्रियातिक्रमे किम्। सुवृष्टिरभूत्। सुभिक्षमभूत्। सुवृष्टिर्भविष्यति। सुभिक्षं भविष्यति। दिबादौ किम्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं न नमतः सुखं न प्राप्तमिति क्रियानिष्पत्तिरस्ति। स्यप्ग्रहणं चिंत्यम्। त्यादावित्यतोऽनुवृत्तिसंभवात्। अट्त्वागमत्वात्स्यपोऽनुवृत्तेर्न व्यवधायकः। एवं स्यप्ग्रहणं व्यर्थमिति चेत्। न। योगविभागार्थम्। तेन शत्रादौ क्वचित्स्यप् भवति। भविष्यन् भोक्ष्यमाण इत्यादि॥ **भूतेसिः** ॥ अभूदिति भूतः। अकर्मकत्वात्कर्तरि क्तः। स्वसत्तया

कालं व्याप्तवान् । भूतसामान्यार्थे वर्तमानाद्धातोर्दिबादिर्भवति । धातोः परः भूतसामान्येऽर्थे दिबादिर्भवति । तस्मिंश्च परे सिप्रत्ययो भवति । अभूद्वृष्टिः। सिसहितस्य दिबादेर्भूतसामान्योऽर्थः । अबादिसहितस्य तु भूतविशेषोऽनद्यतनोऽपरोक्षः । भूतानद्यतनपरोक्षो णबादेः । विशेषेऽपि यदि सामान्यविवक्षा विशेषाविवक्षा तदा सिर्भवत्येव। अभून्नृपो दशरथ इति । विशेषविवक्षायां तु अभवन्नृपो दशरथो बभूवेति वा । भूते किम् । अस्ति । दिबादौ किम् । आगच्छामि । वर्त्तमानसमीपे भूते एष आगच्छामीत्यादौ वर्त्तमानत्वारोपात् तिबादिर्भवति न दिबादिरिति दिक् ॥ **नव पं पराण्यात्** ॥ प्रत्येकं अष्टादशवचनात्मका दशविधा आख्याता उक्तास्तेषां नव नव वचनानां संज्ञे विधीयेते । तिबादीनामाद्यानि नव वचनानि पसंज्ञानि । पराणि नव आत्संज्ञानि । पराणीति परशब्देन नवपमित्यत्राद्यानीति लभ्यते । अत्र केचित्पात्शब्दाभ्यामवयवाभ्यां परस्मैपदात्मनेपदशब्दाववयविनावाक्षिप्येते । तौ च संज्ञात्वेन विनियुज्येते इत्याहुस्तन्न । तयोरनावृत्तेः । दादेः पे । णित्पे । आतोतोदनतः । आद्भुवि । इत्यादौ पात्छब्दयोरेवानुवृत्तिर्दृश्यते लाघवाच्च पात्छब्दावेत्र संज्ञे । ननु परस्मैपदात्मनेपदशब्दाभ्यामन्वर्थत्वेन परगामिक्रियाफले आत्मगामिक्रियाफले इत्यर्थौ लभ्यते । पात्छब्दाभ्यां स कथं लब्धव्य इति चेत् । न । विवक्षया निर्वाहात् । नहि बिभर्त्ति । बिभृते । रुणद्धि । रुंद्धे । क्रीणाति । क्रीणीते । इत्यादावन्यन्नियामकम् । नहि । "कमलवनोद्घाटनं कुर्वते ये" इत्यादावात्मगामिफलं लभ्यते । याजको यजति । यजमानो यजते । इत्यत्रैव परगामित्वात्मगामित्वफलं लभ्यते । तत्तु कल्पसूत्रबलात् शिष्टाचारबलाद्वा बोध्यम् । व्यर्थोतः समुदायाक्षेप इति दिक्॥**नाम्नि च युष्मदि चास्मदि च भागैः**॥ अत्र पात्छशब्दावनुवृत्तौ सप्तम्या विपरिणमयितव्यौ । आद्भुवीत्यादेः कर्मणीति कर्त्तरीति चानुवर्त्तते । नामादिशब्देन विभक्त्यंतं गृह्यते । त्रिकपक्षेऽविभक्तिकेन कर्त्राद्यभिधानासंभवात् । पंचकपक्षो वा ग्राह्यः । प्रकरणात्तिबादयो दशविधा आख्याता गृह्यंते । नामाद्यर्थे कर्तरि कर्मणि च विहितानां तिबादीनां धातोर्यानि नव नव वचनानि तानि त्रिभिर्भागैर्विभज्य प्रयोक्तव्यानि यथा

संख्येन। नामार्थे कर्तरि प्रयुक्तेऽप्रयुक्ते च प्रथमो भागः प्रयोक्तव्यः। स पचति। तौ पचतः। ते पचंति॥ स पचते। तौ पचेते। ते पचंते। अप्रयुक्ते—पचति। पचतः। पचंति॥ पचते। पचेते। पचंते॥ नामार्थे कर्मणि--ओदनः पच्यते। ओदनौ पच्येते। ओदनाः पच्यंते॥ अप्रयुक्ते-पच्यते। पच्येते। पच्यंते॥ पं तु कर्मणि नास्ति। युष्मदर्थे कर्तरि—त्वं पचसि। युवां पचथः। यूयं पचथ॥ त्वं पचसे। युवां पचेथे। यूयं पचध्वे॥ अप्रयुक्ते—पचसि।पचथः। पचथ॥ पचसे। पचेथे। पचध्वे। युष्मदर्थे कर्मणि प्रयुक्ते—त्वं दुःखी क्रियसे रोगैः। युवां दुःखिनौ क्रियेथे। यूयं दुःखिनः क्रियध्वे॥ अप्रयुक्ते—क्रियसे। क्रियेथे। क्रियध्वे॥ अस्मदर्थे कर्तरि प्रयुक्ते-अहं पचामि। आवां पचावः। वयं पचामः॥ अहं पचे। आवां पचावहे। वयं पचामहे॥ अप्रयुक्ते—पचामि। पचावः। पचामः॥ पचे। पचावहे। पचामहे॥अस्मदर्थे कर्मणि प्रयुक्ते—विरागैः सुख्यहं क्रिये। आवां क्रियावहे।वयं क्रियामहे। अप्रयुक्ते—क्रिये। क्रियावहे। क्रियामहे॥ त्वया पच्यते। मया पच्यते। इत्यत्र युष्मदाद्यर्थे आख्यातस्य विधानाभावान्न मध्यमोत्तमौ। ननु आख्यातानां वर्तमाने तिप्तसित्यादिनाऽऽङ्क्ववीत्यादिना च कर्तरि कर्मणि च सिद्धत्वात्किमर्थमिदमारभ्यते। सत्यम्। नामार्थयोः कर्तृकर्मणोर्मध्यमावपि। प्राप्नुतः। युष्मदर्थयोः प्रथमोत्तमौ। अस्मदर्थयोः प्रथममध्यमावपि। अतो नियमार्थमिदमारभ्यते। नियमार्थत्वेपि न नामादिनियमः। नामार्थे कर्तरि कर्मणि प्रथम एव। युष्मदर्थे मध्यम एव। अस्मदर्थे उत्तम एवेति यत एवकारस्ततोऽन्यत्रावधारणमिति नामाद्यर्थकर्त्रादिनियमो भवति। न च स पक्ता। त्वं पाचकः।अहं पचे। इत्यत्र तृवुणादयो न स्युरिति। नामाद्यर्थकर्त्रादिनियमादिति वाच्यम्। वचनसामर्थ्यात्त्र्यादयो भविष्यंति। यद्वा सजातीयापेक्षो नियमः।नामार्थे कर्त्रादौ प्रथम एव भवति न मध्यमोत्तमाविति। उच्यते। भावे आख्याते सर्वे भागाः स्युः। नामार्थकर्त्रादौ विहितत्वाभावात्। अतो भागनियमोऽत्राश्रीयते। प्रथमो नामार्थकर्त्रादावेव। मध्यमो युष्मदर्थकर्त्रादावेव। उत्तमोऽस्मदर्थकर्त्रादावेव नान्यत्रेति। अस्मिन्पक्षे नामाद्यनियमात्तस्मिन् कर्त्रादौ तृवुणादयो भवंत्येव। नन्वस्मिन्पक्षे भावे प्रत्यये कोपि पुरुषो

न स्यान्नामाद्यर्थे कर्त्रादौ आख्यातस्य विधानात् भावे चाख्याते तदभावात् वचनाच्चेत्सर्वेपि स्युरविशेषादिष्यते च प्रथम एव ' मैवम् । नामार्थस्य कर्तृत्वाद्यभावेपि वचनबलात्प्रथम एव स्यात्प्रथमातिक्रमे कारणाभावान्न- मध्यमोत्तमौ । प्रथमस्याप्येकवचनमेव । तावता वचनं चारितार्थम् । द्वित्व- बहुत्वयोरभावान्न द्विवचनबहुवचने स्तः । यत्तु उष्ट्रासिका आस्यंते । उष्ट्रकर्तृकासनसदृशान्यासनानीत्यर्थः । हतशायिकाः शय्यंते । हतकर्तृक- शयनसदृशानि शयनानीत्यर्थः । यत्तु नागनाथवचनप्रामाण्यात् स्वीक्रियते एकवाक्यतया विधिपक्षोऽप्यस्ति । तथाहि । वर्त्तमाने तिबित्यादीनां आब्रुवीत्यादेः । नास्तिचेत्यस्य चैकवाक्यतया वर्तमानाद्यर्थवृत्तेर्धातोर्ना- माद्यर्थकर्त्रादौ तिबादीनां पातोर्नव वचनानि त्रिधा विभक्तानि एकत्वाद्यर्थे क्रमेण प्रयोक्तव्यानीति । अत्रापि पक्षे भावे उक्तरीत्या प्रथमस्यैकवचनमेव भवति । अथ भागैरिति बहुवचनेन त्रिभिरेवेति कथं लभ्यते । कपिंजलाना- लभेतेत्यत्र वाक्ये कपिंजलानिति बहुवचनेपि एकस्मिन् द्वयोश्च बहुत्वाभा- वात् । प्रथमबहुत्वस्य त्रिषु लाभात् त्रय एव गृह्यंते । न चतुःपंचादयो यथा तथा भागैरित्यत्रापि त्रय एव भागा गृह्यंते । नाधिकाः । नन्विह भवान् पचत्वित्यत्र मध्यमः प्राप्नोति । भवद्युष्मच्छब्दयोरेकार्थत्वादिति चेत् न । तयोरत्र भेदात् । अलिंगः संबोधनविषयश्च युष्मदर्थः । भवदर्थस्तु लिंगवान्नच संबोधनैकविषयः । यथैव हि माणवकाधीष्वेत्यत्राभिमुखीभावो गम्यते एवं त्वमधीष्वेत्यत्रापि ॥ **उक्तंच** ॥ "संबोधनार्थः सर्वत्र मध्यमैः कैश्चिदिष्यते ॥ तथा संबोधने सर्वां प्रथमां युष्मदो विदुः" इति । त्वद्रूपः । त्वत्कल्पः । त्वत्तरः । पचसि । एवं मद्रूपः । मत्कल्पः । मत्तरः । पचामीत्यत्र तरादेर्विशेषणत्वे- नाकर्तृत्वात् युष्मदस्मदर्थस्यैव कर्तृत्वान्मध्यमोत्तमौ स्तः । अतित्वं प्रियत्वं पचति । अत्यहं प्रियाहं पचतीत्यत्र पूर्वपदार्थयोः प्राधान्येन कर्तृत्वात् । युष्मदस्मदर्थयोर्गौणत्वेन कर्तृत्वाभावात् न मध्यमोत्तमौ । एवमत्वं त्वं संपद्यते त्वद्भवतीत्यादावपि । च्व्यंते हि संघीभवंति ब्राह्मणाः । इत्यनुरोधेन प्रकृतेः कर्तृत्वम् । विकृतेः कर्तृत्वे तु संघीभवति ब्राह्मणाः इति स्यात् । अत्रापि युष्मदस्मदर्थयोर्विकृतित्वेनाकर्तृत्वम् । **तदुक्तम्** । "यदा च्व्यर्थे

विनिर्देश्ये भवतो युष्मदस्मदी ॥ द्वयोरपि तयोर्योगे न धातोर्मध्यमोत्तमौ ॥ प्रकृतेर्विकृतेर्वापि ह्येकदा प्रतिपादने ॥ वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु ॥ " अत एव मृद्घटा भवंति । ओदनस्तंडुला भवंतीति प्रयुज्यते। स च त्वं च पंडितौ भवथः । अहं च स च त्वं च पंडिता भवामः। इत्यत्र त्रयाणां नामाद्यर्थानां कर्तृत्वेन प्राप्तावपि परत्वान्मध्यमोत्तमौ भवतः। तदुक्तम् । "एकदा चेत्क्रियाकालसंबंधप्रतिपादनम् ॥ धातोर्नामादिषूक्तेषु यः परः स पुमान्भवेत् ॥ " परत्वं च विधायकसूत्रापेक्षया न प्रयोगापेक्षया ग्राह्यम्। अस्मदर्थस्यैकत्वेपि समुदायाश्रिता संख्या ग्राह्या।तदुक्तम्।"द्वयोर्नाम्नां बहूनां वा यदि वाक्ये समुच्चयः ॥ नामत्रयाश्रिता संख्या कृत्तिबाद्योर्विशेषणम् "। सच त्वं च अहं चेति सहविवक्षायां तु आदेश्च द्वंद्वे इति आद्ययोर्लोपे ऽस्मदः शेषत्वादुत्तमो भवति। संख्या तु समुदायाश्रिता भवति । प्रत्येकं कर्तृत्वविवक्षायां तु स पंडितो भवति। त्वं भवसि। अहं भवामि । अत्र चकाराः किमर्थाः। शृणु। नामार्थे कर्त्रादौ प्रथमः। चादकर्त्रादौ भावे प्रथमः। तत्र द्वित्वबहुत्वयोरभावाद्द्विवचनबहुवचने न स्तः। प्रथमातिक्रमे कारणाभावादेकत्वाभावेप्येकवचनं भवति । तत्र विधानसामर्थ्यात् युष्मदर्थे कर्त्रादौ मध्यमः। चादुत्तमोऽपि क्वचित् । अस्मदर्थे कर्त्रादावुत्तमः। चान्मध्यमोपि । तेन परिहासे। मन्योपपदान्मध्यमः । स सर्ववचनांतः। मन्यतेर्धातोरुत्तमः। स एकवच्चेति संगृहीतं भवति। त्वं इति मन्यसेऽहमोदनं भोक्ष्ये इति स्थितम् । तत्र त्वं इति मन्येऽहमोदनं भोक्ष्यसे भुक्तस्सोतिथिभिः । एवं त्वं युवां यूयं वा मन्ये। अहमोदनं भोक्ष्यसे, आवां भोक्ष्येथे। वयं भोक्ष्यध्वे। एते एवं प्रयोगाः परिहासे एव भवंति । तिङस्त्रीणि त्रीणीत्यत्र तिङो भागैरिति वक्तुं शक्यम् । कपिंजलाधिकरणन्यायेनात्मनेपदपरस्मैपदयोस्त्रयो भागाः कर्त्तव्याः। आद्यस्तु प्रथमो भवत्येव। द्वितीयोपि मध्यमो भवत्येव। तृतीयस्तु उत्तम इति स्वीकारात्। युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः, इत्यस्य स्थाने युष्मदि मध्यमः इति सुवचम् । युष्मदर्थे वाच्ये इति तदर्थः। चार्थे वाच्ये द्वंद्व इतिवत् । एवं च नाम्नि प्रयुज्यमानेपि प्रथम इति कातंत्रसूत्रेपि प्रयुज्यमानेऽपीति व्यर्थम् ।

नामार्थे वाच्ये प्रथम इत्यर्थे प्रयुक्ताप्रयुक्तशब्दार्थान्तर्भावात् । यदपि युगपद्वचने परः पुरुषाणामिति कातंत्रसूत्रं तदपि न । उक्तरीत्या परत्वेनैव निर्वाहादिति दिक् ॥ **णित्पे** ॥ पे परे सिर्णिद्भवति । णू इद्यस्य स णित् अणितं णिद्वदित्याह । णिद्वदिति गम्यते । परत्र प्रयुज्यमानः परशब्दो विनापि वतिंवत्यर्थं गमयति । अवसिष्ठं वशिष्ठ इत्याह । वसिष्ठवदिति गम्यते । अयं च कार्यस्य प्राधान्यात्कार्यातिदेशः । कार्यार्थत्वादितरेषामतिदेशानाम् णितः कार्यमतिदेष्टव्यं नास्ति।णिति यत्कार्यं तदतिदिश्यते ननु आतोणप्डौ । इणः । तनोलोप इत्यादि णितः कार्यं कुतो नातिदिश्यते । मैवम् । णविणूशब्देन विहितं न तु णिच्छब्देनेति नादिश्यते । यद्वा । सामान्यातिदेशे विशेषो नातिदिश्यते । णविणू तु णिद्विशेषः । यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्यत्र यद्वसिष्ठे गोतमे च तन्नातिदिश्यते । किंतु ब्राह्मणसामान्यस्य । तथात्रापि णिति यद्दृष्टं कार्यं तदतिदिश्यते । अंत्यस्य नामिन उपधायाअतश्च वृद्धिश्च भवति । अकारस्य तु यत इति परत्वाल्लोपः । आतश्च सत्यामसत्यां वा वृद्धौ नास्ति विशेषः । संध्यक्षरं त्वंत्यं नास्ति । अवोढाम् । अवोढेत्यादौ तु वृद्धिं कृत्वौद्विधीयते इति सकृत्प्रवृत्त्या चरितार्था वृद्धिः पुनर्न प्रवर्तते । नामधातूनां तु कैश्चिद्विकल्पेन वृद्धिरिष्यते । कविरिवाचारीत । अकवायीदकवयीत् । भूरिव अभवीत् । अभावीत् । अगवीत् । अगावीत् । अतो हसादेर्लघोर्वदिव्रजिल्रांतभिन्नस्य सेटि सौ पे वृद्धिं वेच्छंति । अगदीत् । अगादीत् । अरदीत् । अरादीत् । अतः किम् । अदेवीत् । हसादेः किम् । मा भवानटीत् । लघोः किम् । अतक्षीत् । सेटि किम् । अनात्सीत् । सौ किम् । गदिता । पे किम् । अनभिष्ट । वदीत्यादि किम् । अवादीत् । अव्राजीत् । अफालीत् । अचारीत् ॥ ह्म्यंतक्षणश्वसजागृश्व्येदितां वृद्धिं सेटि सौ नेच्छंति । अरहीत् अचमीत् । अहयीत् । अक्षणीत् । अश्वसीत् । अजागरीत् । अश्वयीत् । अकटीत् । चानुवृत्त्या इदं सर्वं ग्राह्यम् । शास्त्रातिदेशपक्षेऽपि धातोर्नामिनः, अत उपधायाः इत्यनयोरतिदेशादुक्तलक्ष्यसिद्धिर्निर्बाधैवेति दिक् ॥ **अनिटोऽनामिवतः** ॥ अनुपधाभूतस्यात उपधाभूतस्य नामिनश्च पूर्वेण वृद्धिर्न सिध्येदितीदमारभ्यते।

अतः कार्यातिदेश एवायम् अनिट अनामिवत इति च च्छेदः। द्वयमिदं धातोर्विशेषणम्। यद्यपि धातुः सर्वोप्यनिडेव तस्येड्विधानाभावात्। तथापि न इट् यस्मात्परस्य प्रत्ययस्येति व्याख्येयम्। णादेरनिट्त्वं न ग्राह्यम्। क्राद्यष्टभ्यो भिन्नात्परस्य तस्य सेट्त्वात्। तस्मात्तादिष्वनिट्त्वं ग्राह्यम्। अश्च नामी च अनामिनौ तौ। अस्य द्वंद्वांते श्रूयमाणो वतुः प्रत्येकं संबध्यते। अवतो नामिवत इति। अवत्वं इति चानुपधाकारेण ग्राह्यम्। उपधाया अतः पूर्वेण सिद्धत्वादंत्यस्य यत इति लोपविधानात्। अस्कांत्सीत्। अप्राक्षीत्। अत्राक्षीत्। अचिकीर्षीदित्यत्र त्वलोपः। अनैक्षीत्। अरौत्सीत्। अवैषीत्। अतौषीदिति तु पूर्वेणापि सिध्यति। न च परत्वादनेन विधेयस्यै-केन विरोधाभावात् परेणेत्यस्याप्रवृत्तेः। ननु वतुग्रहणं मास्तु। अनामिन इत्येवोच्यताम्। विधानबलाच्च पूर्वस्याविषयेऽस्य प्रवृत्तिर्भविष्यति। न च मञ्समासः स्यात्। अनिटो धातोः सिर्णिदित्युक्ते नामिवतोपि प्रसक्तावना-मिन इति निषेधः स्यादिति वाच्यम्। अनिटोऽत इति वक्तुं शक्यत्वात्। मैवम्। अचिकीर्षीदित्यादौ लोपं बाधित्वाऽतो वृद्धिप्रसंगात्। अकारांतस्य धातोरिति संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। अंतस्य तु नामिनः पूर्वेण सिद्धत्वात्तद्वतो ग्रहणं भविष्यति। नन्वत्र वतुर्न प्राप्नोति मान्तोपधात्तद्विधानादिति चेत्। न। क्वचिदमांतोपधादपि वात्विनौ स्तः इत्यनेन ज्ञापनात्। तेन तडित्वानित्यादि सिद्धम्। यद्वा यत्र मोपधत्वं भावि तत्र वतुर्भवतीत्यनेन ज्ञाप्यते। तेन शमोस्यास्तीति शमी। शम्यस्यास्तीति शमिवान्। दमिवानित्यादि सिद्धम्। क्षामिवानित्यादौ तु मत्वस्या सिद्धत्वेन भाविनोपि मोपधत्वस्याभावान्न वतुमतोरेव वतुरादेश इति पक्षे तु नामिवत इत्यत्र युक्त एव वतुः। नलोपे कृते मोपधत्वस्य सत्त्वात्। ननु ज्वलनवद्वानित्यादौ मत्वर्थीयान्मत्वर्थीयो नास्तीत्युक्तत्वादिन्नंतात्कथं वतुरिति चेत्। न। अनामिवत इति समुदायस्येन्नंतत्वाभावात्। यद्वा। मत्वर्थीयाद्विरूपो मत्वर्थीयो भवतीत्यनेन ज्ञाप्यते। तेन दंडिमती शाला; कुंजरवान् ग्राम इत्यादि सिद्धम्। पे इत्येव। नेह। अरंक। अस्वंक। वेटा-मपींड्भावपक्षे ग्रहणं भवति अताक्षीदित्यादि अकारप्रश्लेषाभावे त्विदं न

सिद्धयेत् । नामिवत एव ग्रहणात् । नन्वनिट इत्येवास्तु । मास्तु नामिवत इति । स्वरादेरित्यतः स्वरेत्यनुवर्त्य तत्र च मत्वर्थलक्षणा ग्राह्या । ततश्च स्वरमतोऽनिटो धातोः सिर्णित् कार्यकृदित्यर्थ इति चेन्नामिवत इत्यस्योत्तरार्थत्वात् । एवं तर्हि अनिट इत्यस्याप्युत्तरार्थत्वसत्त्वाद्योगविभागो मास्तु । अनिटो नामिवतो हशषांतात्सगित्येक एव योगोऽस्तु । णित्पे । इयं तु सामान्येनानुपधाकारस्यांत्यानंत्यनामिनश्च णित्कार्यातिदेशार्थो व्याख्यायतामिति चेत् । न । अतौत्सीत्, अनैक्षीदित्यत्रेव अगोपीत् । असेधीदित्यत्रापि नामिनो वृद्धिप्रसंगात्तर्ह्यनिटो धातोर्वृद्धिर्न सेट इति । नियामकमास्ति । अस्तु तर्हि योगविभागः । स च नियमार्थो व्याख्येयः । नामिवतश्चेदनिट एवेति सेटो न भविष्यतीति चेत् । न । अजैषीत् । अक्षैषीदित्यादिर्न सिध्येत् । विपरीतनियमस्यापि सत्त्वे अनिटश्चेदनामिवत एवेत्यरांक्षीदित्यादौ न स्यात् । विधिनियमसंभवे विधित्वकल्पनस्य लघुत्वाच्च । अतो णित्पे इति योग उक्तार्थ एव । अनिट इत्यत्र स्वरानुवृत्तौ नामिवत इत्युत्तरार्थमेव । अकारप्रश्लेषश्च न कार्यः प्रयोजनाभावात् । स्वराननुवृत्तौ नामिवदित्यस्यात्रापि संबंधः कार्यः । अकारप्रश्लेषश्चेति दिक् ॥ **हशषांतात्सक्** ॥ हश्च शश्च षश्च तेऽन्ते यस्य तस्मात् । अत्रांतग्रहणं चिंत्यम् । हशषादिति पाठ्यं तेन च धातोर्विशेषणादंतलाभः । हांतात् शांतात् षांतादनिटो नामिवतो धातोः परः सक्प्रत्ययः स्यात् भूतमात्रार्थे दिबादौ परे । सेरपवादः । अमिक्षत् । अधुक्षत् । तृहू तृंहू हिंसायाम् । अतृक्षत् । वेटोपीडभावे अनिटत्वाद्ग्रहणम् । अक्रुक्षत् । अमृक्षत् । अद्विक्षत् । अकृक्षत् । हशषेति किम् । अरैत्सीत् । अनैक्षीत् । अनिटः किम् । अग्रहीत् । अमेक्षीत् । अमोषीत् । नामिवतः किम् । अधाक्षीत् । अदाङ्क्षीत् । दिबादौ किम् । द्वेष्टि । लेढि । भूतमात्रार्थे किम् । अलेट् । अद्विष्टाम् । अद्यतनत्वस्यापि सत्त्वात् न भूतमात्रार्थतापि इतीह न संबध्यते । न्यविक्षतेत्याद्यसिद्धिप्रसंगात् ॥ **दुहदिहलिहगुहूभ्यः तुवयोर्वाति सक्** ॥ अधुक्षत् । अधुग्ध । अदुग्धाः । अधुक्षथाः । अधुग्ध्वम् । अधुक्षध्वम् । अदुह्वहि । अधुक्षावहि । एतच्चानुवृत्त्या बोध्यम् । चं द्वितीयमनुवर्त्य कृषमृशस्पृशतृपदृशां वा सग्विधेयः । को गुणप्रतिषेधार्थः । ननु तृंहेः इडभावे सक्

प्राप्नोति । नामिवत्त्वात् । पाणिनीयमते तु न प्राप्नोति । शलइगुपधादिती-गुपधत्वाभावादिति चेत् । न । तेषामपीगुपधत्वादलोंत्यादित्यत्रालूग्रहणे जाति-ग्रहणात् । अपृक्त एकाल्प्रत्यय इत्यत्र एकग्रहणेनैतत् ज्ञापितम् । वर्णग्रहणे जातिग्रहणमिति । यथा विद्वांसावित्यत्र सांतसंयोगस्योपधाया दीर्घो भवति । तथेदमपि शलइगुपधादित्यत्र शलइग्वत इति सूत्रयितुमुचितमित्य-भिप्रायेण भगवत्या नामिवत इति सूत्रितम । यदि तु ज्ञापकसिद्धं न सर्व-त्रेति जातिग्रहणं नेष्यते तदा नामिवत इति सामान्यशब्दस्य विशेषपरत्वं लक्षणीयम्।नामिवत्त्वं हि आदिमध्यांतनामिना भवतीति सामान्यशब्दः नाम्यु-पधत्वं तूपधानामिनैव भवतीति विशेषः । तदा अतांक्षीत् अस्पार्क्षीदिति रूपमिति दिक् ॥ 'श्लिष आलिंगने' इत्यस्य पुषादित्वादङ् प्राप्नोति । तद्बा-धकसको विधानार्थं श्लिष इति वचनं कर्तव्यम् । स चालिंगनेऽनालिंगने च ङस्य बाधकः प्राप्तः । इष्यते च पे आलिंगने सक् । अन्यत्र ङः । आति तु पूर्वेण सगेव प्राप्तो नसिरत आलिंगने इति नियमार्थं वचनांतरं कर्त्तव्यम्। आलिंगन एव सक् नान्यत्रेति । आश्लिक्षत् रामः सीताम् । अनालिंगने तु समाश्लिषज्जतु काष्ठम् । न चेणमप्ययं बाधेतेति वाच्यम् । पुरस्तादपवादा अनंतरान् विधीन् बाधंते नोत्तरानिति परिभाषणात् । उपस्थितलाघवमूलकं चेदम् बाधकस्यानंतरेणैव बाध्याकांक्षापूर्त्तौ व्यवहितग्रहणं न न्याय्यम् । आश्लेषि सीता रामेण । आश्लिक्षाताम् । आश्लिक्षंत । सिपक्षे आश्लेषि । आश्लिक्षताम् । आश्लिक्षत । आश्लिष्ठाः । आश्लिढ्वम् । आश्लिक्षि । पुषादि-पाठस्त्वनालिंगनेऽङविधानार्थः ॥ **ञेरङ् द्विश्च** ॥ ञेरिति प्रत्ययो गृह्यते। प्रत्ययग्रहणे यस्मान्स विहितस्तदादेस्तदंतस्य ग्रहणमिति ञ्यंताद्धातोः कर्तरि भूतमात्रेर्थे दिबादौ परेऽङ् प्रत्ययो भवति । सेरपवादः । अचीकरत् । अजिघ्रपत् । कर्तरि किम् । अकारायिषातां घटौ कुलालेन । अप्कर्तरि इत्यतो मंडूकप्लुत्या कर्त्तरीत्यनुवर्तते । भूतमात्रार्थे किम् । अकारयत् । दिबादौ किम् । कारयति । ङकारो ङि लघाविति विशेषणार्थः । द्विरिति वाक्यांतरम् । अत्राङित्यनुवृत्तं सप्तम्या विपरिणम्यते । क्रियावृत्तेर्गणनार्थो द्विशब्दात्सुः । तेन गम्यमाना वचनरूपा क्रियाऽऽक्षिप्यते । ततश्चाङि परे

ञ्यंतस्य धातोर्द्विर्वचनं भवतीत्यर्थः । तच्च नित्यत्वात् ञिलोपे कृते प्रवर्तते । उदाहरणं तु प्रागुक्तम् । वाक्यद्वयबलेन अङ्द्विर्वचनयोः समावेशस्य सिद्ध-त्वाच्चोऽन्यर्थः । अतश्चेति वाक्यांतरम् । श्विद्रुश्रुकमिभ्यो ञ्यंतेभ्योप्यङ् कर्तरि भूतमात्रार्थे दिवादौ । द्विश्च । अशिश्रयत् । अदुद्रवत् । अशुश्रवत् । अस्मादेव चकारादनुवर्तिताद्वा । धेट्श्विभ्यां वाङ् । अदधत् । अशिश्वियत् ॥ **लित्पु-षादेर्ङः** ॥ लृ इत् यस्य स लित् । पुष आदिर्यस्य स पुषादिः । अनुद्भूतात्र-यवः समुदायोऽन्यपदार्थ इत्येकवचनम् । लिच्च पुषादिश्चानयोः समाहारः लित्पु-षादि । क्लीबत्वस्यानित्यात्वान्नुमो वा पुंस्त्वम् । लितो धातोः पुषादेश्च ङः प्रत्ययो भवति भूतमात्रार्थे दिवादौ परे । अगमत् । अपिषत् । अशमत् । भूते इति किम् । अगच्छत् । दिवादौ किम् । गच्छति । पे किम् । समगत । अविक्षत् । द्युतादे रित्यपि वक्तव्यम् । मैवम् । द्युताद्यो लितएव पाठ्याः । अनुदात्तेत्त्वार्थं कश्चिदनु बन्धः पठनीय एव स लृकार एव पाठ्यः । यत्रापि वृतुस्यंद्रादौ इड्विकल्पा-र्थे उवर्णः पठितस्तत्रापि ङार्थः लृकारोपि पाठ्यः । यद्वा । अङनुवृत्तिसत्त्वे ङविधानं योगविभागार्थम् । नचाङि सति द्विर्वचनप्रसंग इति वाच्यम् । सन्नियोगशिष्टन्यायेन ञेरङि सति द्विर्वचनं न त्वस्मिन् । यथा परोक्षणा दियोगे द्विर्वचनं भवति । ननु विदो नवानामित्यादि विहितैर्योगे । न चाङि लघौ ह्रस्व उपधाया इत्यस्य प्रसंगः । लित्पुषादेर्दीर्घोपधत्वाभावात् । द्वित्वाभावेन पूर्वस्येत्वाप्रसंगाच्च । अतो धातोर्ङ इत्यनेन सूत्रेण लक्ष्यदर्शनाद्द्युतादेर्ङो विधी-यते न धातुमात्रात् । किंचास्यतिवक्तिख्यातीनां लित्त्वेन निर्वाहः । आति ङ स्याप्रसंगात् । निरास्थत । ब्रूञ् अवोचत । अख्यत । किंच । लिपिसिचिह्वां लित्त्वेन पे निर्वाहेप्यातिविकल्पार्थं वचनारंभप्रसंगात् । ङ इति योगविभागे तु सिद्धमिष्टम् । पुषादिर्दिवाद्यंतर्गणो ग्राह्यः । लित्साहचर्य्याल्लितो हि प्राये-णानिटस्तत्साहचर्यात्पुषोप्यनिट् ग्राह्यः । स च दिवादिस्तुदादिर्गणो ग्राह्यः । न भ्वादिः । न सेट्त्वात् क्र्यादिः । न चुरादिः ञिना व्यवधानाच्च ॥ **इरितो वा** ॥ इरिद्यस्य स तस्मात् इरितो धातोर्वाङ्प्रत्ययो भवति भूतमात्रार्थे दिवादौ पे । सेरपवादः । अरुधत् । अरौत्सीत् । अविजत् । अवैक्षीत् । भूतमात्रार्थे किम् । अवेवेक् । अवेविक्ताम् । दिवादौ किम् । रुणद्धि । वेवेक्ति । अत्र वर्तमानसमीपे

भूते तिबादिविधानादस्ति भूतमात्रार्थता। पे किम् । अरुद्ध। अविक्त। इरितः किम् । अचेतीत् । ननु जॄस्तंभुम्रुचुम्लुचुग्रुचुग्लुचुग्लुंचुश्विभ्यो ङो विधेयः इरित्त्वाभावात् इति चेत् । सत्यम् । जॄषू इर् टुओश्विइरित्यादिपाठे एव लाघवं न तु वचनारंभे । यद्वा । द्विश्चेति चमनुवर्त्य तमनुक्तसमुच्चयार्थंव्याख्यायैतेऽपि ग्राह्या इति दिक् ॥ **इणतन्यकर्त्तरि** ॥ अत्र त्रीणि वाक्यानि । विधेयस्यादौ पाठात् । प्रथममिणिति । तत्र सीष्टेत्यादि तेत्यादि स्यपूसीति चानुवर्त्य सप्तम्या विपरिणमनीयम् । उत्तरसूत्रादकर्तरीत्यपकृष्य भावकर्मणी ग्राह्ये । ततश्च सीतास्यपूसिषु परेषु भावे कर्मणि चार्थे धातोर्वेण् प्रत्ययः। धातोरित्यनेन स्वरांतानां हन्ग्रहदृशां च ग्रहणम् । योगविभागादिष्टसिद्धिरिति स्वीकारात् । भाविषीष्ट । भविषीष्ट। भाविता। भविता । भाविष्यते। भविष्यते । कारिषीष्ट।कृषीष्ट । कारिषीयास्ताम्।कृषीयास्ताम् । कारिता । कर्त्ता। कारिष्यते। करिष्यते। अकारिष्यत । अकरिष्यत । अकारिषाताम्।अकृषाताम्। घानिषीष्ट। वधिषीष्ट । घानिता । हंता । घानिष्यते । हनिष्यते । अघानि । अवधि । ग्राहिषीष्ट। ग्रहीषीष्ट। ग्राहिष्यते। ग्रहीष्यते। अग्राहिषाताम् । अग्रहीषाताम् । दर्शिषीष्ट । द्रक्षीष्ट । कारिषीष्ट। कारयिषीष्ट । स्वरांतेत्यादि किम्। पक्षीष्ट । पक्ता । भावे कर्मणीति किम्। करिष्यति । अकार्षीत्। सीष्टेत्यादि किम । चकृषे । चकृढ्वे। शिश्यिढ्वे । तनीति द्वितीयं वाक्यम्।धातोरिण्प्रत्ययो वा भवति तनि परे। उत्तरवाक्ये अकर्तरीति पर्युदासादिह कर्त्तरीति लभ्यते । वेत्यनुवर्तते व्यवस्थितविकल्पत्वात्पदेरिण् नित्यम्।दीपजनबुधपूरितायिप्यायिभ्यो वा । अपादि । अदीपि । अदीपिष्ट । अजनिष्ट । अबोधि। अबुद्ध । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट । अकर्तरीति तृतीयं वाक्यम् । कर्तुरन्योऽकर्त्ता तस्मिन् धातोरिण् प्रत्ययो भवति भावे कर्मणि चार्थे तनि परे। अभावि। अपाचि भिस्सा। अकारि घटः। तनि किम् । अकृषाताम् । भावे किम् । अकृत घटं कुलालः । नकारं विना ते इत्युक्तौ तु तेत्यादौ मध्यमेऽतिप्रसंगः स्यात् ॥ **लोपः** ॥ तनीत्यनुवृत्तं षष्ठ्या परिणमनीयम् । इणिति तु पंचम्या। इणः परस्य तनो लोपः। उदाहरणं तु प्रागेवोक्तम् । ननु तन इति षष्ठीनिर्देशेंत्यस्य लोपः स्यादिति

चेन्न । आदेरित्यनुवृत्त्यादेरपि लोपविधानात् । यद्वा । 'लोपो ह्रस्वाज्झसे' । इत्यतो लोप इत्यपकृष्यते । तेन द्वयोर्लोपः । यद्वा । लुप्यत इति लोपः । कर्मणि घञ् । तनीति तु प्रथमया परिणम्यते तेन तन् लुप्यत इत्यर्थः । षष्ठ्यभावात्सर्वस्य लोपः । क्वचित्तु लुगिति पाठः । तत्र सर्वत्र तनो लुग्भवति । इणः किम् । अभविष्ट । तनः किम् । भाविषीष्ट ॥ **दिस्योर्हसात्** ॥ हसात्परयोर्दिस्योर्लोपः । अहन् । अनेनेक् । हसात् किम् । अभवत् । दिस्योः किम् । अत्ति । दिप्सहचरितस्य सेर्ग्रहणान्नेह । अत्सि । ननु संयोगांतलोपेनैव गतार्थमिदम् । सत्यम् । इदमेव ज्ञापयति । रात्सस्येति सूत्रमस्ति । तेनाविभर्भवानित्यादौ संयोगांतलोपो नस्यादित्यस्यारंभः । सिग्रहणं तूत्तरार्थम् । ननु अरोदीत्, अरोददित्यत्रातिप्रसंगः । हसात्परत्वात् अडीटोः सतोरपि दिसित्वानपायात् । यदागमास्तद्ग्रहणेन गृह्यंते इति न्यायात् । मैवम् । अर्थवत्त्वाभावात् कर्तृसंख्यार्थयोर्दिस्योर्ग्रहणात् । अडीटोः सतोः समुदायस्यार्थवत्त्वेन दिस्योरानर्थक्यात् । यद्वा । यदागमा इति न्यायेन विभक्तित्वं प्रत्ययत्वं गृह्यते । नहि दित्वं सित्वम् । इरुच्चारणार्थः । इत्वसत्वजातिवत्त्वस्य समुदायेऽभावात् । दिस्योस्तु हसात्परत्वाभावात् ॥ **अद्रुदादेरट्** ॥ रुद आदि र्यस्य अच्च रुदादिश्चानयोः समाहारः । अत्तेः रुदादेश्च परयोर्दिप्सिपोरडागमः । आदत् । आदः । अरोदत् । अरोदः । स्वपूश्वसूअनूजक्षा एवम् । अदिति किम् । अयौत् । दिस्योः किम् । अत्ति । रोदिति । माधवस्तु दिवादावडित्यस्मात्परमदो दिस्योरिति सूत्रमस्तीत्याह । तन्न । गौरवात् । अत्र त्वड्मात्रं कर्तव्यम् । रुदादेरडिति तु त्वयापि वक्तव्यमेव । दिस्योरिति त्वनुवृत्तिलभ्यम् ॥ **अस्तेरीट्** ॥ रुदादेरित्यनुवर्त्तते । अद्ग्रहणं तु निवृत्तम् । क्वचिदेकदेशोप्यनुवर्तत इति स्वीकारात् अस्तेरिति तु तंत्रादिना व्याख्येयम् । तेन विद्यमानास्तेरिति लभ्यते । रुदादेश्च परयोर्दिस्योरीडागमः । आसीत् । आसीः । अरोदीत् । अरोदीः । एवं स्वपूश्वसूअनूजक्षाः । विद्यमानात्किम् । अस्तेर्भूरित्यादेशे माभूत् । अभूत् । दिस्योः किम् । अस्तिः । अस्तेः किम् । अदात् । सेः । अत्रास्तेरित्यनुवर्तते । तच्च सेर्विशेषणम् । विद्यमानात्सिप्रत्ययात्परयोर्दिस्योरीडागमः । अचेतीत् । अचेतीः । विद्यमानात्किम् । अदात् । अत्र प्रत्ययळ

क्षणेन सेः परत्वमस्ति । विद्यमानादिति विशेषणान्नेट् । सेः किम् । अरुधत् । ङात् परयोर्माभूत् । दिस्योः किम् । अचेतिष्टाम् । योगविभाग उत्तरार्थः ॥ **लोपोह्रस्वाज्झसे** ॥ ह्रस्वात्परस्य सेर्लोपो भवति झसे । अकृत। ह्रस्वात्किम् । अनेष्ट । झसे किम् । अकृषाताम् । सेः किम् । अशिश्वियत्। अत्र लोप इति योगो विभज्यते । सगिति स्वरे इति चानुवर्तते । सको लोपो भवति स्वरे परे । अधुक्षत। अधुक्षाताम् । अधुक्षंत । केचित्त्वत्र स्वरे नानुवर्तयंति । लोप इति चानुवर्तयंति । क्वचित्सर्वस्य सको लोपः तुवयोरात्येव । अदुग्ध । अधुक्षत । अदुग्धाः । अधुक्षथाः । अधुग्ध्वम् । अधुक्षध्वम् । अदुह्वहि । अधुक्षावहि । इत्यादि सिध्यतीत्याहुः ॥ **इट ईटि** ॥ इटः परस्य सेर्लोपः स्यादीटि । अचेतीत् । अलावीत् । इटः किम् । अचैषीत् । ईटि किम् । अलाविष्टाम् ॥ **झसात्** ॥ झसात्परस्य सेर्लोपो झसे। अरौद्धाम् । अगौप्ताम् । झसात्किम् । अचेष्ट । झसे किम् । अरौत्सुः । सेः किम् । अरुधताम् । ङस्य माभूत् ॥ लोपोह्रस्वझसाज्झसेरिति पठितुं युक्तम् । पृथक्करणं चिंत्यफलम् ॥ **दादेःपे** ॥ दा आदिर्यस्य स दादिः । तस्मात्सेर्लोपः पे परे । डुदाञ् दाण् दो इत्येतेषां दाशब्देन ग्रहणम् । दाप्दैप्देङां तु न लक्ष्यानुसारात् । अदात् । धाञ्-अधात् । अस्थात् । इण्—अगात् । पिबति—अपात् । अभूत्। शाछासाघ्राधेड्भ्यस्तु वा । शो--अशात् । अशासीत् । छो—अच्छात् । अच्छासीत्। षो—असात् । असासीत् । अघ्रात् । अघ्रासीत् । अधात् । अधासीत् । दादेः किम्। गै—अगासीत् । पे किम् । अदित । अधित। सेः किम् । दास्यति ॥ **मेऽटः** ॥ मे इति योगो विभजनीयः । सिरित्यनुवर्तनीयम् । माशब्दे प्रयुज्यमाने सिर्भवति । स च दिबादिपरो दृष्टो दिबादिपर एवात्र भवति । ननु भूते सिरिति सिर्विहित एव। किं पुनर्विधानेनेति चेत् ।सत्यम् । स भूते सिर्विहितः। कालांतरे त्वनेन विधीयते । तेन सर्वेषामाख्यातानां विषये सिर्भवति । माशब्दयोगे माशब्दोऽव्ययं नास्तीति माशब्दो गृह्यते । प्रयोगे ङकाराश्रवणाङ्किदङिदा । व्याकरणांतरानुरोधाङ्कि देव वा ग्राह्यः ॥ अट् इति द्वितीयो योगः ॥ मे इति लोप इति चानुवर्तते । माशब्दे प्रयुज्यमाने सत्यटो

लोपः । मा भवान् भूत् । मा भवत् । मे किम् । नाभवत् । अटः किम् । मा प्रभूत् । प्रस्य लोपो न ॥ **ओर्वा हेः** ॥ उवर्णात्परस्य हेर्लोपः । वेति न विकल्पार्थम् । किंतु प्रत्ययसंबंधिनोऽसंयोगपूर्वादित्यस्यार्थस्य प्रतिपादनार्थम् । उकारश्च प्रत्ययावयवः प्रत्ययरूपश्च गृह्यते । सुनु । तनु । प्रत्ययसंबंधिनः किम् । युहि । रुहि । असंयोगपूर्वात् किम् । शक्नुहि । ओः किम् । क्रीणीहि । हेः किम् । तनुथः ॥ **अतः** ॥ हेर्लोपः । भव । अतः किम् । युहि । रुहि । तपरः किम् । याहि । हेः किम् । भवतः । तातङोपि स्थानिवद्भावेन हित्वात् प्राप्तोवेत्यनुवृत्त्या व्यवस्थितविकल्पाश्रयणान्न । यद्वा । तद्भावो न्यायसिद्धो ज्ञापकसिद्धो वा उभयथा तातङि हित्वं नायाति।यद्वा । सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति न तातङो लोपः । तातङोवकाशस्तु । अत्तात् । हिलोपस्यावकाशः प्रेरणार्थे तातङ्भावपक्षे । आशिषोर्थे तातङ्पक्षे तूभयप्रसंगे परत्वात् पूर्वविप्रतिषेधाद्वा तातङ् ॥ **अदे** ॥ अच्च एचेति पृथक् पदे अनुकार्यानुकरणयोरभेदविवक्षया विभक्त्यनुत्पत्तिः । अत इतीहानुवृत्तषष्ठ्या परिणम्यते । अतो लोपोऽति एति च । पचंति । पचे । अतः किम् । ब्रुवंति । ब्रुवे । तपरः किम् । यांति । गै । च्यवंते, च्यवे, इत्यत्र च्यु अ अंते ए इति च स्थिते लोपात्परत्वाद्यद्यपि गुणः प्राप्तस्तथापि नित्यत्वादलोपेऽत्र कृते ङित्परत्वाद्गुणो न स्यात् । मैवम् । प्रत्ययलक्षणेन गुणसंभवात् । युत इत्यादौ तु लुकि न तन्निमित्तमिति न गुणः । यद्वा । प्रकृतिप्रत्ययाश्रितत्वेन पूर्वं पूर्वमंतरंगमिति चांतरंगत्वेन गुणः । अदे किम् । भवाति । आख्यातप्रकरणात्पूर्वोत्तरत्राख्यातस्यादेशविधानाच्चादादिरदादिश्चाख्यातप्रत्यय एव ग्राह्यः नेह देवात्र हे । देवैषा । यत्तु माधवेनोक्तम् । धातुप्रत्ययेषु यस्य लोप इत्यस्याप्रवृत्तिरनेन ज्ञाप्यते । तन्न । तद्धितप्रकरणादेव तस्यात्राप्रवृत्तेः सिद्धत्वात् ॥ **व्मोरा** ॥ व् च म् च व्मौ तयोः परयोरत आ भवति । भवामि । भवावः । भवामः । अतः किम् । चिनुमः । व्मोः किम् । भवथः । भवथ । उक्तरीत्या नेह।रामवायुः ॥ **आदाथ इः** ॥ आच्च आच्च आदात् तस्य । आते आताम् आथे आथाम् इत्येतेषां टिं विहायानुकरणम्। अतः परस्य आत आथश्चाऽऽ इर्भवति । एधेते ।

एधेताम् । एधेथे । एधेथाम् । आदाथः किम् । भवाव । भवाम । आ किम् । अंत्यस्य माभूत् ॥ अतः किम् । ब्रुवाते । ब्रुवाथे । तपरः किम् । गाते २ । अंतरंगत्वादपः सवर्णे दीर्घे कृते पुनः सवर्णे दीर्घः ॥ **या** ॥ अनुकार्यानुकरणयोरभेदविवक्षयाऽविभक्तिको निर्देशः । अतः परो या इर्भवति । भवेत् । भवेताम् । षष्ठ्याभावान्नांत्यादेशः । जसीतिवत् । अतः किम् । युयात् । तपरः किम् । यायात् । या किम् । भवताम् । **यामियम्** ॥ अतः परो यामियं भवति । भवेयम् । अतः किम् । युयाम् । तपरः किम् । यायाम् । याम् किम् । भवति ॥ **युस इट्** ॥ अतः परस्य युस इडागमः । भवेयुः । टित्त्वादयमागमोऽन्यथा इरित्येवानुवर्त्तयेत् । इड्ग्रहणं च नाकरिष्यत् । **ओर्व्मोर्वा लोपः** ॥ उकारप्रत्ययस्य उकारांतप्रत्ययस्य चासंयोगपूर्वस्य वा लोपः वमोः परतः । ओर्वाहेरित्यतो वेत्यनुवर्तते । तस्य चासंयोगपूर्वस्य प्रत्ययस्येत्यर्थः । सुन्वः—सुनुवः । सुन्मः—सुनुमः । तनुवः—तन्वः । तनुमः—तन्मः । सुनोमि, तनोमीत्यत्र तु परत्वाद्गुणो भवति । प्रत्ययस्य किम् । युवः । युमः । असंयोगपूर्वस्य किम् । शक्नुवः । तक्ष्णुमः । वमोः किम् । सुनुतः । ओः किम् । अकृष्वहि ॥ **कृञो ये** ॥ कृञः परस्योप्रत्ययस्य लोपो य वमोश्च । कुर्यात् । कुर्वः । कुर्मः । अत्र वमोरित्यनुवृत्तिसामर्थ्यान्नित्यो लोपः । माधवस्तु । "कृञो ये" इत्यत्र कृञ इति योगविभागः कर्तव्यः । तत्र ओर्व्मोर्लोप इत्यनुवर्तते । तेन विकल्पो योगविभागसामर्थ्यादित्याह । ये किम् । कुरुतः । कृञः किम् । सुनुयात् । ओः किम् । अकृष्वहि ॥ **ङित्यदुः** ॥ कृञोत उत्स्यान्ङिति उपि परे । गुणे कृते कृञोऽल्लभ्यते । कुरुतः । कुर्वंति । अत्र "य्वोर्विहसे" इति दीर्घो न संज्ञापूर्वकत्वात् । कृञः किम् । भवतः । ङिति किम् । अकरवम् । अत् किम् । ऋतः । गुणे कृते रेफस्य वा माभूत् । तपरः किम् । अकार्ष्व । कुरुत इत्यादौ यथा द्वाभ्यां व्यवधाने भवति तथाऽत्रापि स्यात् । किंच । तपरत्वमुकारार्थमपि । उकारे कृते उब्निमित्तो गुणो माभूत् । ओरित्यनुवृत्तौ तु उकरणं तपरत्वार्थमेव । तपरत्वमसंदेहार्थमिति माधवः । तन्न । ङित्य उरिति पाठेऽपि संदेहाभावात् ॥ **नातः** ॥ ना अत इति छेदः । येतिवन्नेत्यविभक्तिकम् । नाप्रत्ययस्यातो लोपो ङिति

हसे । ईविधानात्परिशेषास्वरे लोपः। क्रीणंति। क्रीणते। ना किम्। यांति। ङिति किम्। अक्रीणम्। आतः किम्। येतीकारवत्सर्वस्य माभूत्। यदि तु नेति षष्ठी व्याख्यायते तर्हि द्वेरित्यत्रार्थं स्पष्टार्थमिहैव कृतम्। आत इति षष्ठीव्याख्यानक्लेशो माभूत् ॥ **ई हसे** ॥ नाप्रत्ययस्यात ईः स्यात् ङिति हसे। क्रीणीतः। क्रीणीहि। ङिति किम्। क्रीणासि। हसे किम्। क्रीणंतु। ना किम्। यातः ॥ **द्विस्तौ** ॥ द्वे उच्चारणेऽस्येति द्विः। अस्मादेव ज्ञापकान्मत्वर्थीय इः। यस्य लोपः। यद्वा द्विर्वचनमस्यास्तीति मत्वर्थीय इः। अव्ययस्य तद्धितयस्वरयोष्टिलोप इति टिलोपः। कृत्वोर्थसुप्रत्ययांतस्याव्ययत्वात्। एतस्य वचनस्य सत्त्वेऽयं च निर्देशो लिंगम्। बहिर्भवो बाह्यः, सौव इत्यादीनि च सिध्यंति। यद्वा। द्विरकारि। ञिर्ङित्करणे। स्वंतस्य टिलोपः। औणादिक इप्रत्यये ञिलोपः। यद्वा द्व्येकयोरित्यत्रैव संख्यामात्रवचनो द्विशब्दोस्ति संख्येयार्थत्वे तु द्व्येकेष्विति स्यात्। तस्य च मत्वर्थलक्षणया द्वित्ववान् धातुर्गृह्यते द्वित्वं चोच्चारणं विना न संभवतीति तदाक्षिप्यते। त्यदाद्यत्वं तु न भवति गौणत्वात्। द्विसमुच्चारितस्य धातोरात ई लोपौ ङिति। मिमीते। मिमते। जिहीते। जिहते। द्वेः किम्। वातः। वांति। ङिति किम्। जहाति। धातोः किम्। हाहै। माधवस्तु द्वे रूपे विद्येते यस्यासौ द्विस्तस्मात् द्वेरिति सहादिरिति द्विमच्छब्दस्यास्त्यर्थे मत्वंतस्यात एव लिंगात् द्विरादेश इत्याह। यत्तु शुक्लगुणवान् शुक्ल इति। शुक्लवच्छब्दस्य शुक्लादेश इत्याह। तन्न। अभेदोपचारेण अइका इत्यप्रत्ययेन वा सिद्धत्वात् ताविति किमर्थम्। ईलोपयोरनुवृत्तेः सत्त्वात्। मैवम्। अनंतरत्वादीरनुवर्तेत। नलोप इति। ननु तर्हि द्वेश्चेति पाठ्यम्। अनंतरत्वादीश्चाल्लोपोऽनुवर्तते। मैवम्। ङिति हसे लोपः ङिति स्वरे ईरिति विपर्ययस्यापि संभवात्। तावित्युक्ते तु यादृशौ पूर्वत्र दृष्टा तावेवात्र स्त इति न दोषः ॥ **नमसोऽस्य** ॥ नम् च अस् च अनयोः समाहारो नमस्। तस्य नमिति प्रत्ययो गृह्यते प्रतिपदोक्तत्वात्। न धातुर्लाक्षणिकत्वात्। तस्य हि आदेः ष्णः स्न इति कृते नमिति रूपम्। प्रतिपदोक्तं शीघ्रं बुद्ध्यारूढं भवति। लाक्षणिकं तु लक्षणानुस्मरणद्वारेणेति विलंबोपस्थितिकत्वान्न गृह्यते। प्रत्ययाप्रत्यययोर्ग्रहणे संभवति सति प्रत्ययग्र-

हणस्य न्याय्यत्वात् । तस्य प्राधान्यात् असिति प्रत्यय औणादिको गृह्यते । उणादीनां तु क्वचिद्व्युत्पत्तिकार्याभावात् । अत एव कंसेन नय इति न भवति । धातुरपि 'असु दीप्तौ' 'असु क्षेपणे' न गृह्यते । विकरणस्य व्यवधानेन ङित्परत्वाभावात् । नमो विकरणस्य ङितोऽसंभवात् । यथा तिबादेर्ङितः ग्रहणं तथाऽसूधातोरप्येतादृशोऽसू भुव्येव । नन्वस्तेरपि कथं ग्रहणम् । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव स्वीकारादिति चेन्न । एतद्वचनस्य न्यायस्य वात्राभावात् । अस्यैव साक्षात् ङित्परत्वसंभवाच्च । यद्वा । अस्तेरीडित्यत अस्तेरित्यनुवर्त्त्य अस्तेरिति रूपस्य प्रकृतिभूतो योसिति व्याख्यानात् । माधवस्तु । ननु किमयं नमिति नत्यर्थो धातुर्गृह्यते विकरणो वा । युक्तं तत्रास्तिधातुसाहचर्याद्धातुग्रहणमिति । तन्न । असूधातोर्ग्रहणमिति निर्णयाभावात् । असूप्रत्ययग्रहणस्यापि संभवात् । यदपि सत्यं अस्तेस्त्व- नपि भ्वादेशेन प्रयोगाभावादविषयो विभक्तिचतुष्टयमस्य सूत्रस्य निमित्तम- नुमीयत इत्युक्तम् । तदपि न । भविता,भविष्यत इत्यादौ स्थानिवद्भावेनास्तित्वा- दकारस्य च श्रूयमाणत्वात् शास्त्रप्रवृत्तिसंभवात् ङित्परत्वाभावादिति तु वक्तुं युक्तत्वात् णबादियादाद्योः किन्त्वं न ङित्त्वम् । सिस्योस्तु तादिपर्युदासात् न ङित्त्वं स्यपस्तु पित्त्वात्तदपि न चात्र ङित्यनंतरो । नमतिः संभवति अपा व्यवधानात् । नमंतीत्यादावप्यल्लोपस्य तद्भावात्तदवश्यमेव व्यवधान- मित्युक्तं एवमेवास्तेरपि वक्तुमुचितम् । यदपि नापि येन नाव्यवधानमिति न्यायस्याप्ययं विषयः, वचनस्य विकरणग्रहणेनापि चरितार्थत्वादित्युक्तम् । तदपि न । धातुग्रहणे हेतुत्वेनोक्तस्य साहचर्यस्यादूषितत्वात् । प्रत्ययग्रहणे हेतोरप्रतिपादनाच्च । यदपि न चात्रापि धात्वक्षरेण व्यवाय इत्याशंक्य विधि- काले एवमस्येत्संज्ञातः प्रागल्लोपात् । पश्चाच्च मित्त्वेनांत्यस्वरात्परत्वमित्युक्तम् । तदपि न । विधिकाल इत्यस्य सूत्रे एवेत्यर्थः प्रयोगे वा । नाद्यः । सूत्रे ङित्परत्वासंभवात् । मस्येत्संज्ञातः प्रागल्लोपविधानात् । मकारव्यवस्थान स्यापरिहरणीयत्वाच्च । नांत्यः । मस्येत्संज्ञाभावेनांत्यस्वरात्परत्वासंभवात् धातोः परत्वप्रसंगात् । अक्षरेणेत्यप्यसंगतम् । हससहितस्वरस्याक्षरत्वांगीकारात् । द्वात्रिंशदक्षरा अनुष्टुबिति व्यवहारात् धातुवर्णेनेति वक्तुं युक्तत्वाच्च । यदपि

सूत्रेष्वेवं नमस इति मकारनिर्देश उपपद्यते । अन्यथा नास इत्येव वाच्यं स्यादित्युक्तम् । तदपि न नासधातोर्ग्रहणप्रसंगात् । किंच धानायै इत्यादौ नाप्रत्ययाकारस्यापि लोपप्रसंगात् । न आस इति छेदेन आसेः परस्य नस्य नस्यासीनायेत्यादौ अल्लोपस्य संभवात् । रुंधः । रुंधंति । स्तः । संति । नमसः किम् । भवतः । अपो न लोपः । ङिति किम् । रुणद्धि । अस्ति । अस्य किम् । अस्तेरंत्यस्य माभूत् । अत्रास्येति चिंत्यम् । नात इत्यत्र नास्येति पठितुं युक्तम् । अस्येत्यस्योत्तरत्रानुवृत्तिसंभवात् । एवं च धात्ववयवेन व्यवधानात्त्वन्मते कथं नमो ङित्परत्वम् । मैवम् । नमः ङित्परत्वाविवक्षणान्नमः प्रकृतिभूतस्य धातोर्ङित्परत्वस्य विवक्षणात् धातोर्ङिति परे इति दिक् ॥ **सि सः** ॥ अस्ग्रहणमनुवर्तते न नम् । सकाराभावात् । अस्तेः सस्य लोपः सकारे असि । व्यतिसे । अत्रोर्वाहेरित्यतो हेरित्यनुवर्तते शब्दाधिकारश्चायं ह्ए इति छेदः । अस्तेः एकारसंबंधिनः सस्य ह् स्यादिति वाक्यभेदेन व्याख्येयं एकारसंबंधश्च । ततो व्यवहितपूर्वत्वम् । तेन व्यतिहे इति सिद्धम् । अस्तेः किम् । वस्सि । सि किम् । अस्ति । सः किम् । अस्य माभूत् । नचास्य पूर्वेणैव सिद्धः पित्यसिद्धत्वादिति दिक् ॥ **आतोंतोदनतः** ॥ अंति, अंते, अंतु, अंताम्, अंतेत्येतेषां पंचानां टिं विहायाप्राग्भावस्यानुकरणम् । आदिति तु अंत्यानां नवानां संज्ञेत्युक्तम् । आत्संबंधिनोऽनकारात्परस्यातोऽद्भवति । रुंधते । सुन्वताम् । आतः किम् । युवंति । अंतः किम् । रुंधाताम् । अनतः किम् । एधंते । तपरः किम् । गाते । गा अ अंते इति स्थिते प्रकृत्या सहांतरंगत्वादपः सवर्णे दीर्घः पश्चादत् । अनत इति पर्य्युदासो लाघवात् । प्रसज्यप्रतिषेधे त्वनन्वितसमासो वाक्यभेदश्चाश्रितः स्यात् ॥ **द्वेः** ॥ पूर्ववत्प्रक्रिया । द्विरुक्ताद्धातोः परस्यांतोऽद्भवति तिबार्थमिदम् आति पूर्वेण सिद्धम् । जुह्वति । जहति । नेनिजति । द्वे किम् । युवंति । अंतः किम् । जुहुतः ॥ **अन उस्** ॥ द्विरुक्तात्परस्यान उस् भवति । अजुहवुः । अनेनिजुः । द्विरुक्तात्किम् । अब्रुवन् । अनः किम् । अजुहवम् । उसित्यावर्तनीयम् । लोप आत इति चानुवर्तनीयम् । उस्याकारस्य लोपः । अदुः । अधुः ॥ **स्याविदः** ॥ सिश्च आश्च विच्चैषां समाहारः स्याविद् तस्मात् । अत्र वाक्यत्रयम् सेरित्याद्यम् ।

तत्र सिप्रत्ययो गृह्यते प्रत्ययाप्रत्यययोरिति न्यायात् विकरणव्यवधानाद्धातोः परस्यानो संभवाच्च। अचेतिषुः। अत्रास्तेरित्यनुवर्त्य विद्यमानात्सेरिति व्याख्यानान्नेह । अभूवन् । प्रत्ययलक्षणेन सेः परत्वात्प्राप्तिः । सेः किम् । अतन्वन् । अनः किम् । अचेतिष्टाम् । आ इति द्वितीयं वाक्यम्। आकारात्परस्यान उस् । अदुः । यदि त्वत्र वाक्ये सिग्रहणमनुवर्तते सेः आकाराच्च परस्यान उस् । प्रत्ययलक्षणेन सेः परत्वं, श्रुत्या चाकारात्परत्वं, तदेदं नियमार्थं भवति । प्रत्ययलक्षणेन सेः परस्य यदि भवति तर्ह्यादंतादेवेति । अत्र पक्षेऽनद्यतने न भवति प्रथमवाक्यरीत्या तु भवति तेन विकल्पः फलितः । अपुः । अपान् । चेत्यनुवृत्त्या द्विषोपि संग्रहः । अद्विषुः । अद्विषन् । आतः किम् । अदुहन् । अतः किम् । अदात् । विद इति तृतीयं वाक्यम् । विदेः परस्यान उस् । अविदुः । भूतमात्रे तु सेरित्यनेनैव सिद्धं पुनर्विद्ग्रहणमनद्यतनेऽन उस्विधानार्थम् । विदेः किम् । अदिहन् । अनः किम् । अवेदम् । अत्र सेर्विद इति सूत्रणीयं, तत आत इति सूत्रणीयं, ततो णल्डाविति । इत्थं चाकारग्रहणं न कर्तव्यमिति लाघवं एवं कुतो न कृतमिति चिंत्यम् ॥ **आतो णल्डौ** ॥ आत इत्यनेन धातोर्विशेषणात्तदंतविधिः । आदंतादाकाररूपाच्च धातोः परो णल्डौ भवति । ददौ । डौ- अ इवाचचारेति विग्रहे अ णबिति स्थिते अस्य द्वित्वं आभ्वोरित्यात्वं सवर्णदीर्घः अनेन डौ । आतः किम् । निनाय । तपरः किम् । क इवाचचार चक आदित्युक्ते तु स्यात् । अत्र आ इति पंचमीनिर्देशे युक्तो व्यर्थस्तः । चकेत्यादौ यदि परत्वाल्लोपस्तदादिति निर्देशेपि न क्षतिः । णप् किम् । ददाथ । अ डौ इत्येवास्तु । तर्हि मध्यमपुरुषबहुवचने एव स्यात् । निरनुबंधकग्रहणे न सानुबंधकस्येति न्यायात् । तर्हि ण इत्येवास्तु । तर्हि ज्वलादेर्णप्रत्यये । अवश्यायः, अवसाय इत्यादावेव स्यात् । एकानुबंधग्रहणे न द्व्यनुबंधकस्येति न्यायात् । तर्हि अबित्येवास्तु । न च गाते इत्यादावेव स्यात् । गा अंते इति स्थिते अपः सवर्णदीर्घो जायते । एकानुबंधकन्यायात् । अतो णबित्युक्तम् । न च पकारादन्येन द्वितीयानुबंधेन सिद्धिः। उत्तमपुरुषे णित्वाभावे कित्कार्यप्रसंगात् चकरेत्यादौ चक्रेत्यादि स्यात् । अथ डकारः किमर्थः औरेव विधीयताम् । आवि कृते आतो युक्प्रसंगः । न

च णित्त्वाभावान्न सः । स्थानिवद्भावात्स्थानिवत्त्वे चेदं ङग्रहणमपि ज्ञापकम् । इत्थं आतो युगिति सूत्रेण कृतोरिति व्यर्थं तस्मिन्नेव सूत्रे ङौ एतस्य ङित्त्वेनैव सिद्धत्वात्॥**आदनुदात्तङित्तः**॥अनुदात्तश्च ङ् च अनुदात्तङौ ताविती यस्य धातोः सोऽनुदात्तङित्तस्मात् । द्वंद्वांते श्रूयमाण इच्छब्दः प्रत्येकमभिसंबध्यते ॥ यत्तु माधवः ॥ निर्देशस्य सौत्रत्वादल्पस्वरस्यापि ङ्शब्दस्य परनिपात इत्याह ॥ तन्न । ङस्य हसांतत्वात् । स्वरांतत्वे तु एत्वेऽनुदात्तङेत इति स्यात् । स्वरितेत इतिवत् द्वयोः स्वरांतयोर्मध्येऽल्पस्वरस्य ग्रहणात् । ण्यायनणित्यादिज्ञापकसिद्धं हि तत् । ज्ञापकसिद्धं न सर्वत्रेति देवतेदमर्थे इत्यादिना च तस्यानित्यत्वाच्च अनुदात्तङितश्च धातोरात् । एधते । शेते । अनुदात्तङित इति किम् । भवति । अन्यपदार्थत्वेन धातोराश्रयणम् । अगमत् । अशिश्रियत् । ङाङोर्ङित्त्वेपि धातुत्वाभावादान्न । यत्तु माधवः : नचैवं यङंतादपि न स्यादिति वाच्यम् । ङित्त्वस्य यङि कृतार्थत्वेनासमुदायार्थत्वात् अवयवे हि चरितार्थं लिंगं समुदायस्य विशेषकं न भवतीत्याह । तन्न । यङंतस्यापि धातुत्वेन पूर्वपक्षस्योक्तिसंभवाभावात् । यदपि एवं तर्हि प्रायोविवक्षया धातोरित्युक्तं तदपि न । यङंतस्य धातुत्वेन प्रायोविवक्षयेत्यस्यासंभवात् । यदपि ङाङोस्तु परस्मैपदप्रवृत्त्यनंतरं प्रवृत्तेन ङित्त्वेन ङित्त्वेपि आत्मनेपदं न भवति इत्युक्तं तदपि न। ङाङोर्धातुत्वाभावेन तदंतादातः प्राप्तेरेवाभावात् । यदपि सूत्रे चादिति नामैकदेशेनापि सर्वनाम लक्ष्यते भामा सत्यभामा भीमो भीमसेन इति यथेत्युक्तम्। आत्पशब्दयोरेव संज्ञात्वेन विधानात्तयोरेव सर्वत्रावृत्तिदर्शनात् । आत्मनेपदपरस्मैपदशब्दयोः क्वचिदप्यदर्शनाच्च दृष्टांतोपि विषमः।भीमभीमसेनशब्दयोः पृथक्संज्ञात्वेन विनियोगात्समुदायस्य विनियोगेपि पूर्वोत्तरपदयोर्लोपविधानाच्च । यद्यपि अनुदात्तङित आदिति वक्तुं युक्तं लाघवाद्विधेयस्य पश्चाद्ग्रहणस्य युक्तत्वाच्च । तथापि योगविभागार्थं विपरीतग्रहणम्।धातोः क्वचिदाद्भवति । को जानीते । मुंडो भीषयत इत्यादि सिद्धम् । अथ किमर्थमिदमारभ्यते वर्तमाने तिबित्यादिना दशविधा आख्याता विहिता एव तेषामाद्भुवीत्यादिनाऽर्था अप्युक्ता एवेति चेत् । उच्यते । आद्भुवीत्यादिनाख्यातानामर्थनियमः कृतः धातुमात्राद्भा-

वकर्मणोरादेवेति । तेन धातोर्भावकर्मणोः पं नेत्यर्थनियमः सिद्धः कर्तरि पं चेत्यनेन कर्तरि आत्पे विहिते तत्र किं धातुमात्रात् कर्तरि ते भवतः किं वा कस्माच्चिदिति संदेहः । तत्र प्रकृतिनियमार्थेयं चतुःसूत्र्यारभ्यते । अनुदात्तङित आदेवेति निविशादेरादेवेति यत एवकारस्ततोऽन्यत्रावधारणमिति प्रकृतिनियमः फलितो भवति तेनैभ्यः पं न । निविशादेः । निपूर्वो विशः नेः पर इति च निविश अ इत्युच्चारणार्थः। निविश आदिर्यस्य तस्मात् असंदेहार्थं वा पदकार्यस्य वारणमन्यथा निबिडादेरित्युक्ते विशिरित्युक्ते बिड्भेदन इति वा संदेहः स्यात् । आदिशब्दः प्रकारे। तेन निविशप्रकारा निविशसदृशा उपसर्गपूर्वा धातवो गृह्यंते। व्यवस्थावाचिग्रहणं तु न निविशादिगणाभावात् । निविशते अत्र निरुपसर्गो गृह्यते। धातोः पूर्वोच्चारणात् । नेह । नयति । यत्कुलं तन्निविशति विजयते । नेह। वेति यत्कुलं तद्विजयति। पराजयते । नेह ।पराजयंति। दूरामानोत्तमाः पराः आदत्ते । नेह । आयच्छति । आयाति । अनतीति अतेर्डः अः स्त्रियामपि । आ शक्तिर्ददाति। वाक्यस्मरणयोर्वाकारः।अनुक्रीडते। संक्रीडते। नेह। बालमनुक्रीडति बालेन सह क्रीडतीत्यर्थः॥ **ञित्स्वरितेत उभे** ॥ ञ इत् यस्य स ञित्, स्वरित इत् यस्य स स्वरितेत्, ञिच्च स्वरितेच्चानयोः समाहारः ञित्स्वरितेत् तस्मात् उभे पदे। आत्तु सन्निहितमेव। पं तु णित्प इत्यतः परामृश्यते। यद्वा। आदित्यनेनैव पमाक्षिप्तं परस्य पूर्वापेक्षत्वात् पूर्वाण्येव पसंज्ञानीत्याक्षिप्यंते । माधवस्तु । क्रमस्तु न भवति। ञित आत्मनेपदं स्वरितेतः परस्मैपदमिति सूत्रारंभसामर्थ्यात् । अन्यथा हि ञितां ञः स्थाने ङकारोपदेशेन ङित इत्येव सिद्धमात्मनेपदं स्वरितेतस्तु परतोन्यदित्येव परस्मैपदमपि सिद्धं किमस्यारंभेण ।यदि तु ञितां पं स्वरितेत आदिति क्रम उच्यते तर्हि ञितां ञकारत्यागेन ये सिद्धे स्वरितेतामनुदात्तेत्त्वपाठेनापि सिद्धे किं सूत्रेणेत्याह। इदं चार्थसाम्यपक्ष उक्तं उभयशब्दस्य द्व्यर्थाभिधायित्वात् । शब्दतः साम्यपक्षे तु यथा संख्याप्राप्तिरेव नास्ति । उभे इत्येकः शब्दः ञित्स्वरितेत इति द्वौ । यद्वा । नात्र यथासंख्यवचनमस्ति । किं तु ज्ञापकसिद्धम्। ज्ञापकसिद्धं न सर्वत्रेति न भविष्यति । यद्वा । सूत्रेणोपस्थितक्रमस्य बाधकं विना बाधो

न युक्तोऽत्र तु लक्ष्या सिद्धिर्बाधात्त्यज्यते । अत्र चानुबंधद्वयं त्याज्यं एकेनैव निर्वाहात् । ञितोपि स्वरितेत एव पाठ्याः । स्वरितेत उभे इति च सूत्रणीय-मिति चेन्न । डुकृञित्यस्य स्थाने डुकृञ् अ इत्यादिपाठे गौरवमसंगात् । तर्हि स्वरितेतो ञित एव पाठ्याः । ञित उभे सूत्रणीयमिति चेन्न । रुधिरित्यादौ रुधिरञ् तनुञ् इति पाठे गौरवमसंगात् । नचेरिति त्यक्तुं शक्यः । ङार्थं तस्यावश्यकत्वात् । उकारश्च उदितोवेति इडिकल्पार्थं आवश्यकः । एवं पूर्वसूत्रेऽपि ङितोऽनुदात्ता न पठितुं शक्याः । शीङित्यादौ शी अ इत्यादि-पाठे गौरवमसंगात् । नचानुदात्ता ङितः पाठ्याः एधङित्यादौ गौरवात् । अकारस्योच्चारणार्थस्यावश्यकत्वात् । नचाकारो न पाठ्यः । एधङ् इत्येव पाठ्यम् । एवं तर्हि ङित्त्वेनैव सिद्धे यदनुदात्तेत्त्वं करोति तज्ज्ञापयत्यस्ति चेहानुदात्ते-त्त्वमयुक्तं कार्यांतरमपि । तच्चानुदात्तेतश्च हसादेर्युः शीले इति । तेन विचक्षण इत्यादि सिद्धं चक्षिङोऽनुदात्तेत्त्वात् । न चैवं चक्षिङो ङित्त्वे व्यर्थं अनुदात्ते-त्त्वमयुक्तं कार्यमनित्यमिति ज्ञापनार्थत्वात् । तेनापगतावित्यादेरयतीत्यादि सिद्धम् । कश्चिच्चक्षिङित्यत्रेकारविशिष्टः पाठः सोयुक्तः नुम्प्रसंगात् । न चांते इदितो नुम्विधीयते इदित इत्यत्रांतग्रहणाभावात् गृहीते वा तस्मिन्नितों-त्यत्वसंभवात् । आद्युच्चारणेंते इति पाठे तु गौरवमेव दोषः । अतोऽकारविशि-ष्ट एव पाठो युक्तः । अत्र चानुदात्तङित इतिवत्स्वरितञित्पाठो युक्तो लाघवात् । अत्र माधवः । आत्पशब्दाभ्यामात्मनेपदपरस्मैपदसंज्ञे गृह्येते । ते चान्वर्थे । आत्मने कर्त्रे फलबोधकं पदमात्मनेपदम् । परस्मै कर्त्रे फलबोधकं पदं परस्मैपदम् । तेन कर्तृगामिनि फले आत्मनेपदं परगामिनि फले परस्मैपदमित्याह । तन्न । उभे ग्रहणवैयर्थ्यप्रसंगात् । तथा हि ञित्स्वरितेत एतावदेव सूत्रमस्तु आदिति चानुवर्तनीयम् । तेन कर्तृगामिनि क्रियाफले आत्मनेपदम् अन्यत्र परतो न्यदिति परस्मैपदं किमुभयग्रहणेन । परत इति तस् निर्देशोर्थद्वयसंग्रहार्थः । परस्माद्धातोः परस्मिंश्चार्थे इति । अन्यथा परादित्येव ब्रूयात् । किं तसा । अन्वर्थता च परेषामपि न संमता । स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्याहुः । अन्यथान्वर्थत्वादेव तस्मिंल्लब्धे किं कर्त्रभिप्राये क्रियाफले इत्यनेन । नच क्रियाफलस्य कर्तृगामित्वं शाब्दबोधे भासते । पचतीत्यस्य हि एकाश्रितो

विक्लित्यनुकूलो व्यापार इति हि बोधः । न चात्र फलस्य कर्तृगामित्वं परगामित्वं वावगम्यते । न संभवत्यपित्करोति कुरुते वा घटमित्यत्र घटनिर्माणफलस्य कुलालादन्यगामित्वस्यासंभवात् । एवं सृष्टिं चकार चक्रे वा ईश इत्यत्र जगन्निर्माणफलस्येश्वरेऽसंभवाच्च । नन्वेवं यष्टा यजते ऋत्विग्यजतीत्यादिप्रयोगव्यवस्था कथमिति चेत् । शृणु । श्रुतिबलात् । तथा हि । ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रुत्या यजमाने आत्मनेपदं प्रयुक्तम् । होतर्यजेति श्रुत्या ऋत्विगिति परस्मैपदं प्रयुक्तं तदनुयायी लोकोपि तथैव प्रयुंक्ते । तस्माद्यजोऽन्यत्र पदद्वयं यथेष्टं प्रयोक्तव्यमिति दिक् ॥ **परतोऽन्यत्** ॥ परस्मादिति परतः तत्रादिर्विभक्त्यर्थ इति पंचम्यंतात्तसू । परादन्यदित्युक्तेपि मात्रालाघवं नास्ति परत्वस्य सावधित्वात् । अवध्यपेक्षायामनुदात्तङित इत्यादयः संबध्यंते अन्यत्त्वस्यापि सापेक्षत्वात् आडुभे चेति संबध्यते । अनुदात्तेतो ङितो निविशादेः ञितः स्वरितेतश्च धातोः परतोऽन्यस्माद्धातोः केवलादातः आत्पाभ्यां च केवलं पं भवतीत्यर्थः । भवति । अत्ति । अनुदात्तेत इत्यादि किम् । स्पर्धते । च्यवते । अत्रानुदात्तेतः ञित्स्वरितेतश्चेत्यनुवर्त्त्य वाक्यभेदेन तेभ्योपि पं विधेयं क्वचित् । अनुक्तमप्यूहति पंडितो जनः । अनुकरोति । पराकरोति । अभिक्षिपति । परिमृष्यति । प्रवहतीत्यादि सिद्धम् । अत्रेदमवधेयम् । आङुवि कर्मणीत्यस्ति तस्याग्रे कर्तरि पमिति सूत्रणीयम् । तस्याग्रेऽनुदात्तङित इति निविशादिरिति स्वरितञित इति सूत्रणीयं पमिति च । न चानुदात्तङित इत्यत्र पमित्येवानुवर्ततेति वाच्यम् । तस्य पूर्वेण प्राप्तस्य यस्यापवादत्वात् । स्वरितेत्यत्र तु आत्पे अनुवर्तेते । न च पमात्रमेवानुवर्ततेति वाच्यम् । सूत्रारंभस्य वैयर्थ्यप्रसंगात् । कर्त्तरीत्यनेन तस्य सिद्धत्वात् । न चादित्येवानुवर्तेत सूत्रारंभस्य वैयर्थ्यप्रसंगात् । कर्तरीत्यनेन तस्य सिद्धत्वात् । स्वरितञितामपि अनुदात्तेत्त्वस्य सुपठत्वात् पमित्यनेन तूहतीत्यादि सिद्धम् । एवं चकारग्रहणमुभेग्रहणं न कर्तव्यं भवतीति कुतो न कृतमिति चिंत्यमिति दिक् ॥**अपित्तादिर्ङित्**॥ पू इत् यस्य स पित् ता आदिर्यस्य स तादिः पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः । नञीति समासः । ङित् ङिद्वदित्यर्थः । अङितं ङिदित्याह ङिद्वदिति गम्यते । अब्रह्मदत्तं ब्रह्मदत्त

इत्याह ब्रह्मदत्तवदिति गम्यते। यथा अत्र पर्युदासबलात् पित्तादिभिन्नः प्रत्यय एव गृह्यते न धातुः तेन दैपूदापूतिपूतपृभिन्नस्यधातोर्ङित्त्वं न । सति हि ङित्त्वे आत्स्यात् । यद्वा । एधशीङादेरनुदात्तङित्त्वकरणान्न धातोर्ग्रहः अन्यथाऽस्मादेव ङित्त्वादाति सिद्धे किं ङित्त्वादिना। ननु ङिदिति मास्तु किदिति पाठ्यम्।उत्तरसूत्रे न कर्तव्यमिति लाघवम्।गुणादिनिषेधस्तूभयत्र तुल्य इति चेन्न। स्वपितः, वक्तः, इत्यत्र यजादित्त्वात्किति संप्रसारणप्रसंगात् कुरुत इत्यत्र ङित्यदुरित्यस्याप्रसंगात् । अन्यथा चक्रतुरित्यादावतिप्रसंगात् । कुरुत इत्यत्रैवोभयव्यवधानसत्त्वात् । नन्वत्रादिग्रहणं व्यर्थं अपित्ताङिदित्येव युक्तं सिसतासीत्यत्रैव नवानां ग्रहणं भविष्यति । न च सिस्योर्ग्रहणार्थं तदिति वाच्यम् । सिस्योरिति लिंगात्तयोर्ङित्त्वाभावात् । एवं तर्ह्युत्तरार्थं तत् अपिदित्ययं पर्युदासे नञ् । नञोक्तमनित्यमिति स्वीकारात् । सचानित्यः । ततश्च कुटादेः । कुडंतात्परः ञित् णिद्भिन्नः प्रत्ययो ङित् । विजेरिडादिः प्रत्ययो ङिद्भवति उर्णोः पर इडादिर्वा । उद्विजिता, कुटिष्यति, और्णवीत् । और्णुवीदित्यादि सिद्धम् । ननु त आदिर्यस्येति कुतो न विग्रहः । मैवम् । व्याख्यानानुसाराल्लक्ष्यानुसाराद्व्याकरणांतरानुसरणाच्च । किं च तशब्देन विग्रहे तिप्तयोरनुवाददोषः स्यात्। पित्त्वेन सिद्धत्वात् । ताशब्देन विग्रहे तु नायं दोषः । अथ सादेः कृतां चानेन ङित्त्वं कुतो नेति चेत् । मैवम् । यङ्-नङोर्ङित्करणाज्ज्ञापकात् । नानिटि स इति सूत्रारंभाच्च । अतः परिशेषात् तिबादीनां चतुर्विधानामाख्यातानां तद्विकरणानां चानेन ङित्त्वं नान्येषां तेन बिभरांचकारेत्यादावाप्तो न। यत्तु माधवः । अपित्तादिरिति तदन्यार्थेन नञा समासः । अत एव च प्रसज्यप्रतिषेधान्नञो यथेष्टं संबंध इत्याह । तन्न । परस्परविरोधात् यद्यन्यार्थे नञ् तर्ह्युत्तरपदे संबंधो न क्रियया । यदि प्रसज्यप्रतिषेधे नञ् तर्हि क्रियया संबधो नोत्तरपदेन। यदपि ङित्पिन्न भवति पिच्च ङिन्न भवतीत्यर्थात् ब्रूताद्भवतीत्यत्र तातङि स्थानिवद्भावप्राप्तपित्त्वनि-षेधात् पिदाश्रयोऽब्रादावितीप् न भवतीत्याह । तदपि न। तातङ्पित्त्वस्य तद्भ्रावेन लब्धस्य ज्ञापकसिद्धं न सर्वत्रेत्यनित्यत्वादत्रानंगीकारात् । किं च तातङो ङित्त्वस्यानन्यार्थस्य सत्त्वेन तद्विरुद्धस्य पित्त्वस्याप्रवृत्तेः ।

अतिदेशो हि उपदेशविरुद्धं स्वकार्यं न निवर्तयति। यथा क्षत्रिये ब्राह्मणकार्यातिदेशः क्षत्रियकाय न निवर्तयति। किं च तातङो ङित्त्वं तु व्यर्थमेव हौ त्वनेनातिदेशेन सिद्धं तत्कथं तत्र पित्कार्यप्रवृत्तिं सहेतेति दिक्॥

**णादिः कित्**॥ ण आदिर्यस्याष्टादशात्मकस्य समुदायस्य स णादिः। कित् किद्वत्। पूर्ववदतिदेशोयम्।पूर्वसूत्रादादिग्रहणमनुवर्त्य वाक्यभेदेन व्याख्येयम्। णाद्यादिः किदिति। तेन यादादेरपि कित्त्वं सिद्धम्। न च सीष्टादावतिप्रसंगः शंक्यः सिस्योरिति ज्ञापकात्। ननु किद्ग्रहणं किमर्थं पूर्वसूत्रान्ङिदित्यनुवृत्तिसत्त्वात्। मैवम्। ईजतुरित्यादौ संप्रसारणाभावप्रसंगात्।चक्रतुरित्यादौ ङित्यदुरित्युत्वापत्तेश्च। अथ णादिग्रहणेन ज्वलादेर्णः इत्यादयः कुतो न गृह्यंते। मैवम्। क्रुकिपोः कित्त्ववैयर्थ्यप्रसंगात्। बभूविथ, बभूवेत्यत्र पित्त्वात्कित्वाभावेपि न क्षतिः। प्रतिपदोक्तेन वुका गुणवृद्ध्योर्बाधसंभवात्। ननु ऋदुपधानां कित्त्वपरत्वाद्गुणः स्यात्। मैवम्।प्रत्ययमात्रापेक्षत्वेन कित्त्वस्यांतरंगत्वात्। धातुलघुनाप्युपधासापेक्षत्वेन गुणस्य बहिरंगत्वात्। प्रायशो दृश्यतामिहेति कित्त्वेन गुणस्य बाधसंभवाच्च। ईजतुः। जुहुवतुः। णादिः किम्। स्वप्यात्। अपित्किम्। इयष्ठ। यादादौ इज्यात्। अत्र केचित् णादिरिति योगं विभज्यादिशब्दं च प्रकारार्थमाश्रित्य ङिदिति चानुवर्त्यान्येषामपि प्रत्ययानां ङित्त्वं विधाय कुटितेत्यादि सिद्धमित्याहुः। ऋसंयोगान्न। ऋश्च संयोगश्च ऋसंयोगं तस्माण्णादिः किन्न। जजरतुः। ममंथतुः। वव्रश्चतुः। णादिः किम्। मथ्यात्। शीर्य्यात्। ऋसंयोगात्किम्। ऊदतुः। ऊयतुः। केचिदत्र आर्तिं प्रश्लिष्यंति। ऋ अतुरिति स्थिते अकित्त्वाद्गुणे कृते द्वित्वे च आरतुरित्यादि सिद्धमित्याहुः। अन्ये त्वर्त्तिर्न प्रश्लेष्यः। ऋ अतुरिति स्थिते द्वित्वे र इत्त्यत्वे ऋ अरित्यरि च कृते तस्य पूर्ववद्ग्रहणेन ग्रहणादाभ्वोरित्याकारे सिद्धमारतुरित्याहुः।अत्रादिग्रहणमनुवर्त्य तंत्रेण द्वितीयोपि वाक्यार्थः कर्तव्यः। ऋदंतात्संयोगादेर्णादिर्न कित्। सस्मरतुः। जह्वरुरित्यादि सिद्धम्। नञोक्तमनित्यमिति। शश्रतुःदद्रतुरित्यपि। अत्र ऋहसादिति सूत्रयितुमुचितम्।तत्र ऋश्च हसौ च ऋहसं, तस्मात्। एवं संयोगांतस्य लोप इत्यत्रापि हसांतस्य लोप इति सूत्रयितुमुचितम्। हसावंते यस्येति विग्रहः। क्त्वा सेट्

किन्न । कित्कार्यं न करोतीत्यर्थः । देवित्वा, पठित्वा क्त्वा किम् । ईजिव । ऊचिम । सेट् किम् । मुक्त्वा । गत्वा । नेत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । सेट् क्त्वा किन्न । क्वचित्किद्भवतीत्यर्थः । द्युतित्वा, द्योतित्वा । रुचित्वा, रोचित्वा । वचित्वा, वंचित्वा । लुपित्वा, लुंपित्वा, इत्यादि सिद्धम् । क्तो वा । क्त इति क्तवत्वेकदेशस्याप्युपलक्षणम्, यद्वा क्त इत्यनेन सोपि गृह्यते । न च अर्थवद्ग्रहणेनानर्थकस्येति क्तवतोर्ग्रहणं नेति वाच्यम् । तस्या अनित्यत्वस्य बहुश आवेदितत्वात् । अत्र क्तग्रहणेन कितस्तशब्दस्य ग्रहणं विवक्षितं तेन तगपि गृह्यते । सेट् क्तो वा किन्न भवति । विकल्पश्चायं व्यवस्थितः । तेन शीङ्स्विदिक्ष्विदिमृदिमृषिधृषिभ्यो नित्यमकित् । अन्येभ्यो वा । शयितः । शयितवान् । स्वेदितवान् । स्वेदितः । क्ष्वेदितः । क्ष्वेदितवान् । धर्षितः । धर्षितवान् । मर्षितः । मर्षितवान् । रुचितः । रोचितः । द्युतितं, द्योतितमित्यादि । क्तः किम् । रुरुचिषे । सेट् किम् । गतम् । अतिशये हसादेर्यङ् द्विश्च । अतिशयनमतिशयः । अतिपूर्वाच्छीङो भावे "स्वराद:" इत्यः । यद्यपि कर्तृकर्माद्यर्थोप्यतिशयशब्दोस्ति तथापि स नेह गृह्यते कर्तृकर्मणोराख्यातेनोक्तत्वात् करणादेरप्रतीतेश्च । अतिशयो द्विविधः । पौनःपुन्यं भृशार्थश्च । आद्यो यथा । कस्यचिद्बहुशस्ताडने दंडे च जाते लोका आहुरस्य दंडातिशयो जात इति । तत्र पौनःपुन्यं गम्यते द्वितीयो यथा । 'पूर्वान्महाभागतयातिशेषे' इत्यत्र भक्त्या पूर्वातिक्रमणं नाम भक्तेर्भृशीभावः । भक्त्या भृशो भवतीति गम्यते । स चातिशयः प्रकृत्यर्थविशेषणः । अतिशयविशिष्टक्रियावचनादिति । एवं चातिशयो यङो द्योत्योर्थः । शुक्लतर इत्यादौ प्रकर्षस्तरबादेर्यथेति मिश्राः । एके तु अतिशये यङो वाच्योर्थः । सस्येच्छा यथाऽणादेरपत्यार्थो यथा । स च व्यापारस्य विशेषणं विशेष्यो वा । क्रियाप्राधान्यस्य धात्वर्थप्रधानस्य वा निर्वाहात् । यङंतस्यापि धातुत्वात् हस आदिर्यस्य स हसादिस्तस्माद्धातोर्यङित्येको वाक्यार्थः । द्विरित्यपरं वाक्यम् । तत्र धातोरित्यनुवर्तते । स न यङः प्रकृतिभूतो ग्राह्यः अटाट्यते इत्याद्यसिद्धिप्रसंगात् । किं तु यङंतो धातुर्गृह्यते तत्र हसादेराद्यस्यैकस्वरस्य द्विर्वचनम् । स्वरादेस्तु द्वितीयस्य । चेति तृतीयं वाक्यम् । अतिशये हसादेर्यङ् द्विर्वचनम् । सूचिसूत्रिमूत्रिभ्योऽनेन यङ् । किमर्थमिदं पूर्वेणैव सिद्धत्वादिति

चेत्सत्यम् । नियमार्थमिदम् । अनेकस्वरेभ्यो यदि भवति तर्ह्येभ्य एव । तेन जागर्ति दरिद्राति चिकीर्षतीत्यादिभ्यो न । तंत्रादिना पूर्ववाक्याभ्यामपि च शब्दः संबध्यते, अतिशये चेति ।चशब्दस्यायं स्वभावो यस्याग्रे पठ्यते तादृशं द्वितीयमुक्तमनुक्तं वा समुच्चिनोति । अत्र त्वनुक्तसमुच्चयः गत्यर्थेभ्यः कौटिल्य एव। लुपसदचरजपजभदहदंशगॄभ्योधात्वर्थगर्हायामेव नातिशये । हसादेश्चेत्यत्रानुक्तं धात्वंतरं समुच्चिनोति अटत्यर्त्यशूर्णुभ्यो यङिति नैघत्यादिभ्यः।कात्यायनसंवादात् पापठ्यते वेदं चैत्रः । वेदाक्षरग्रहणानुकूलः एकचैत्राभिन्नाश्रयको वर्तमानोऽतिशयविशिष्टो व्यापारः । व्यापारातिशयो वेति बोधः । ब्रह्म जाज्ञायते सुधीः।ब्रह्माश्रया अज्ञाननिवृत्त्यनुकूल एकसुध्यभिन्नाश्रयकोऽतिशयविशिष्टो व्यापारः व्यापारातिशयो वेति बोधः । अटाट्यते बालः । बालाभिन्नाश्रयको वक्रगत्यनुकूलो वर्तमानो व्यापारः । ऋ येति स्थिते नञोक्तमनित्यमिति । निषेधाभावाद्गुणे कृते यशब्दस्य द्वित्वे हसादिः शेषे आत इति दीर्घे । अरार्य्यते॰ अटाट्यते । अशास्यते । ऊर्णोस्तु रेफं त्यक्त्वा णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वे यङीति गुणः । ऊर्णोनूयते । सोसूच्यते।सोसूत्र्यते । मोमूत्र्यते । अतिशये किम् । पठति । हसादेः किम् । भृशमीक्षते । धातोः किम् । प्रपठति– भृशम्।उपसर्गविशिष्टान्माभूत्।उपसर्गस्य द्वित्वाटौ स्याताम्। धातोरेकाचो हलादेर्यङित्यत्र एकाज्ग्रहणं सुत्यजं सूच्यादिग्रहणस्य नियमार्थत्वसंभवात् । अथ हलादेरित्यपि त्याज्यमट्यादिग्रहस्य नियमार्थत्वात् । क्रियासमभिहार इत्यस्य स्थानेऽतिशये इति पाठ्यं लाघवात्। एकार्थीभावेऽन्वये तु वृत्तिर्व्यपेक्षायां तु वाक्यमिति व्यवस्था ॥ अत्र मिश्राः । अथ कथं यङंतादात्मनेपदं भवति कथं च न स्यात् ङितो धातोरात्मनेपदमुच्यते। यश्चात्र धातुः स ङित् नचायं समुदायस्यानुबंधः । यश्च ङित् प्रत्ययो नासौ धातुः। यत्र चावयवे कृतं लिंगमचरितार्थं तत्र समुदायस्य विशेषकम् ।अयं ङकारस्तु बेभिद्यते इत्यादौ गुणनिषेधादौ चरितार्थः। कश्चिदाह । क्रियासमभिहारेऽयङित्यकारोत्र प्रश्लिष्यते सचानुदात्तोऽनुनासिकः प्रतिज्ञायते।तत्रानुदात्तत्वमवयवे चरितार्थं समुदायस्य विशेषकं भवति अनुदात्तेतश्च हलादेरिति युच् न भवति । जुचंक्रम्येत्यत्र चंक्रम्य, दंद्रम्य, ग्रहणाल्लिंगादिति स वक्तव्यः। अथ कथं ऋतेरीयङंतादात्म

नेपदं भवति । सोपि हि ङकारो गुणनिवृत्तौ चरितार्थ इति स चेत् ब्रूयात् तस्याप्यादित इकार ईकारो वाऽनुदात्तः प्रश्लिष्यत इति प्रतिब्रूयादिति चेत्। न। इकारे नुम् प्रसज्येत। ईकारे श्वीदितो निष्ठायामितीण्निषेधः स्यादिति । नैष दोषः । नुम्विधौ गोः पादांत इति अतोऽतग्रहणमनुवर्तते तेनांत इकारः इत्संज्ञको येषां तेषां नुम्।श्वीदितो निष्ठायामित्यत्राप्येकाच इत्यनुवर्तते।सत्यम्। प्रतिविहितमायुष्मता मुधा पुनरयं प्रयासः । तथा हि । अनुदात्तङित इत्यत्र न धातुग्रहणमस्ति। ततः किम्।इदं ततो भवति।प्रत्ययमेव ङितमाश्रित्यात्मनेपदं सिद्धं भवति । न चैवमशिश्रियदित्यादौ चङाङ्भ्यामपि प्रसंगः। प्रागेव विकरणेभ्योऽनुदात्तङित इत्येतत्प्रकरणं प्रवर्ततेऽन्यथा वर्तते इत्यादौ विकरणव्यवधानान्नियमो न स्यात्। यथा च प्रागेव विकरणेभ्योऽनुदात्त नियमः प्रवर्त्तते । अत्र वृत्ते तु नियमेभ्यो विकरण इति । तथा तत्रैव प्रतिपादितमित्यलमियतेत्याहुः । अत्रोच्यते । ङितो धातोरित्युक्तं तत्र प्रष्टव्यं किमत्र नास्ति धातुत्वं ङित्त्वं वा । नाद्यः । सनाद्यंता धातव इति धातुत्वसंभवात् ङित्त्वस्य श्रूयमाणत्वाच्च। यच्च नायं समुदायस्येति तन्नोभयानुबंधसंभवात् । यथा सुपः परोऽसुपीति निर्देशादवयवानुबंधः सुप्तिङंतमिति समुदायानुबंधः, तथा ङित्त्वस्याप्यवयवानुबंधत्वाद्गुणनिषेधादिकार्यं समुदायानुबंधत्वादात्मनेपदं च सेत्स्यति । यत्त्वयं ङकारस्त्विवति तन्न । गित्त्वेनापि तत्सिद्धेः । क्ङितीत्यत्र गकारप्रश्लेषात् । न च ग्रहादेः संप्रसारणार्थं ङित्त्वं स्यात् तत्रापि गकारप्रश्लेषात् । यरोनुनासिक इति ङकारे कृते मात्परत्वेन हलोयमामिति लोपात् । यद्वा । ङगयोः संयोगसंज्ञामाश्रित्य संयोगांतलोपसंभवात् । अंतर्वर्तिन्या विभक्त्या पदत्वसत्त्वात् संयोगांतस्य पदस्य लोप इत्यर्थसंभवाच्च । सन्यङोरित्यत्र सन्यगोरिति सुवचत्वादित्थं प्रयोजनांतराभावान्ङित्त्वमात्मनेपदार्थमेव।यथा वा क्यङ्णिङोर्ङित्त्वम् न च नःक्ये णेरनिटीत्यत्र द्व्यनुबंधकत्वेन सामान्यग्रहणार्थं तदिति वाच्यम् । अनुबंधांतरेणापि तत्सिद्धेः । इत्थमयङीत्यत्राकारप्रश्लेषेणानुदात्तत्वसंपादनं व्यर्थमेव । यदपि ऋतेरीयङित्यादि तदपि न ।ङित्त्वस्यात्मनेपदार्थत्वात्। न च गुणनिषेधार्थं तत्। कित्त्वेन गित्त्वेन वा तत्संभवात् । इत्थमिकारप्रश्लेषोपि व्यर्थः । यदपि अनुदात्तङिदि-

त्यादि तत्राप्युच्यते। प्रत्ययं ङितमाश्रित्यात्मनेपदं प्रत्ययाद्भवति समुदायाद्वा। नाद्यः। तस्यैवांतरंगत्वेन प्रत्ययात्पूर्वमट्प्रसंगात् यङ एव द्वित्वप्रसंगाच्च। सन्यङोरिति षष्ठ्याश्रयणात्। नांत्यः। समुदायस्य ङित्त्वाभावस्य त्वयैवोक्तत्वात्। यदपि धातोरिति नास्ति तदपि न। भूवादय इति तस्यानुवृत्तेस्सत्त्वात् आह्वण इत्यत्राचीत्यस्य यथा अननुवृत्तावपि। तेन धातोराक्षेपसंभवात्। इको झलित्यत्र सना यथा। यदपि अशिश्रियदित्याद्युक्तं तदपि न। ङित्त्वभागित्वेन प्रथममेवात्मनेपदप्रवृत्तिसंभवात्। शदेः शित इत्यत्र भाविनं शितमाश्रित्यात्मनेपदं यथेति प्रत्ययस्यैव ङित्त्वमाश्रित्यात्मनेपदविधाने यद्व इवाचरति सुत्वेवाचरति तृष्णगिवाचरतीत्यत्रापि स्यात् नङादेर्ङित्त्वात्। मन्मते तु उपदेशे यो ङित् तदंताद्धातोरिति व्याख्यानान्न दोषः। धातोः क्विबंतत्वेन ङिदंतत्वाभावात्। किं च चुकुटिषतीत्यत्र स्यात् कुटादित्वेन सनो ङित्त्वात्। मन्मते। सन औपदेशिकं ङित्त्वं नास्तीति दिक्। गत्यर्थानां कौटिल्ये यङित्युक्तं तत्कौटिल्यं फलस्य व्यापारस्य वा विशेषणम्। एवं लुपादीनां गर्हा। जंगम्यतेऽश्वो मार्गम्। अश्वाभिन्नाश्रयकः मार्गाभिन्नाश्रितवक्रगत्यनुकूलो वर्तमानो व्यापारः। मार्गाभिन्नाश्रयसंयोगानुकूलो वक्रो व्यापार इति वा। लोलुप्यते वनं चैत्रः। चैत्राभिन्नाश्रयो वनाभिन्नाश्रयितकुत्सितच्छेदनानुकूलो वर्तमानो व्यापारः वनाभिन्नाश्रयच्छेदनानुकूलः कुत्सितो व्यापार इति वा। लुपादिषु यो गत्यर्थस्तस्माद्गर्हायामेव यङ्। कौटिल्यस्यावकाशो जंघन्यते। गर्हायामित्यस्यावकाशः सासद्यते वृक्षः। कुत्सितस्वावयवविभागानुकूल एकवृक्षाभिन्नाश्रयको वर्तमानो व्यापारः। सासद्यते मार्गं चैत्र इत्यत्रोभयप्रसंगे परत्वाद्गर्हायां यङ्। एवमन्यदपि बोध्यम्॥ **इच्छायामात्मनः सः**॥ इष्टिरिच्छा। इहैव सूत्रे निपातनाद्भावे इषेरः। छंश्चांतादेशः। इषिकर्मार्थवाचकाद्धातोरिच्छायां स प्रत्ययः। तच्चेदिष्यमाणमिच्छाकर्तुरात्मसंबंध्येव भवति। द्विरित्यनुवृत्तं भिन्नवाक्यं धातोरित्यनुवर्तते। धातुश्च न स प्रकृतिभूतो गृह्यते किं तु सांतः। प्रत्येतुमिच्छति प्रतीषिषति। इणः सः। स धातुरिति धातुसंज्ञा। स्वरादेः पर इति सस्य द्वित्वम्। यः स इति पूर्वस्येत्वम्। ननु इषिकर्मार्थे तिकस्माल्लब्धम्। शृणु। इच्छायाः कर्मनियतत्वादिषिकर्मेति लब्धं धातोः प्रत्ययविधानात्त

दर्थत्वं च लब्धम् । पक्तुमिच्छति पिपक्षति । तुम् तु स्वार्थिकः साध्यावस्थां क्रियामाह । स च लौकिके वाक्ये प्रयुज्यते । केवलस्य धातोः प्रयोगानर्हत्वात् । अलौकिके तु धातुमात्रं प्रयुज्यतेऽतस्तुमः कथं लोप इति नाशंक्यम् । पचनेनेच्छतीत्यत्रापि सोस्तु । करणस्यापि क्रियायामपेक्षणादिति चेन्न । वैषम्यात् । कर्म हि प्रथममपेक्षणादंतरंगम् । अव्यभिचाराच्च । करणं तु विपरीतं अंतरंगेणैव विधेराकांक्षापूर्तौ बहिरंगे प्रवृत्तिरयुक्ता । किं चानभिधानादपि न । पिपक्षतीत्युक्ते पचेरिच्छा कर्मतैव प्रतीयते । न करणता । यथा राजपुत्र इत्युक्ते राजन्य एव पुत्रः प्रतीयते न तत्समीपवर्त्यन्यदीयः । केचित्त्वाङ्गुवि कर्मणीत्यनुवर्त्त्य पंचम्या विपरिणमय्य कर्मणो धातोरित्याहुः । यत्तु येन हेतुना पचनेनेच्छतीति वाक्यं भवति तेनैव हेतुना वृत्तिरपि प्राप्नोतीत्युक्तम् । तन्न । ऋद्धस्य राज्ञः पुरुष इति वाक्यवत् वृत्तेरपि प्राप्तेः । धात्वर्थस्य कर्मत्वं तु फलावच्छिन्नस्य व्यापारस्य व्यापारसहितस्य फलस्य वा । आत्मशब्दस्तु न चेतनद्रव्यवाची तथासति आत्मन इतीच्छाशब्दयोगे कर्त्तरि षष्ठी स्यात् । ततश्चात्मकर्तृकायामिच्छायामित्यर्थः स्यात् । तथा चात्मग्रहणं व्यर्थं स्यात् । इच्छाया आत्मकर्तृकत्वाव्यभिचारात् । व्यर्थविशेषणतापत्तेः । कर्मणि षष्ठीति पक्षे तु असंभव एव स्यात् । न स्वात्मनो द्रव्यस्यासाध्यत्वाद्धात्वर्थत्वं कुत्रापि संभवति । क्रियाया एव तत्संभवात् । अतः परव्यावृत्त्यर्थः स्वशब्दस्य पर्यायोऽयमात्मशब्दः । संबंधसामान्ये च षष्ठी । आत्मनः स्वस्येत्यर्थः । स्वशब्देनात्रैषिकर्त्तैव गृह्यते । इच्छायाः क्रियारूपत्वेन कर्तारं विनाऽनुपपन्नत्वात् कर्तुराक्षेपात् इच्छाकर्तैष्यमाणं वस्तु । यदि स्वसंबंधित्वेनैवेच्छति तदा धातोः प्रत्यय इत्यर्थः । शिष्याणां पठनमिच्छति गुरुरित्यादौ सो न । शिष्याणां स्वसंबंधित्वेपि पठनस्य साक्षात्स्वसंबंधित्वाभावात् । इच्छायां किम् । भोक्तुं जानाति । धातोः किम् । प्रतिष्ठासते । अत्र हि प्रशब्दसमभिहारे गतिः प्रतीयते । गतिश्च धातोरेवार्थे । यद्यपि प्रशब्दं विना गतेरप्रतीतेर्द्योतकत्वेनावश्यापेक्षत्वात् विशिष्टस्य कर्मत्वाद्विशिष्टात्प्रत्ययोपपत्तिः स्यात् । तथा चाङ्द्वित्वयोर्दोषः स्यात् तन्निवृत्त्यर्थं धातुग्रहणम् । धातोः कर्मणः समानकर्तृका-

दिच्छायां वेति सूत्रे कर्मण इति व्यर्थम् । उक्तरीत्या तल्लाभसंभवात् । समानकर्तृकादित्यपि व्यर्थम् । आत्मन इत्यनेनैव तल्लाभात् । उत्तरसूत्रे च तन्न पाठ्यमिति लाघवाच्च वेत्यपि व्यर्थम् । एकार्थीभावे वृत्तिः । व्यपेक्षायां तु वाक्यमिति । तत्फलस्य सिद्धत्वात् । अथ पूर्वसूत्राच्चोऽनुवर्तते स इच्छायामित्यस्याग्रे योज्यः । अनुक्तसमुच्चयोऽर्थः सः तेनाशंकायामपि सप्रत्ययः । नदी वृक्षमुन्मुमूलयिषति । वृष्टिराजिगमिषति । अन्ये तु चेतनारोपात्सः पाषाणादीनां संबोधनवदित्याहुः । तन्मते चकारो भिन्नं वाक्यम् । नक्त्वेत्यतो नेति इच्छायां स इति चानुवर्तते । प्रत्ययग्रहणपरिभाषया सशब्देन सांतं गृह्यते तेनेच्छासांतात् पूर्वोक्तं नेत्यर्थः । चिकीर्षितुमिच्छति । स्वार्थसांतात्तु इच्छायां भवत्येव । जुगुप्सिषति । मीमांसिषत इति । अत्र णादिः किदित्यतः किदिति नेति चानुवर्त्त्य वाक्यभेदेन व्याख्येयम् । स किद्भवति । न च भवति लक्ष्यानुसाराच्च व्यवस्था । तेन रुरुदिषति । विविदिषति । मुमुषिषति । जिघृक्षति । सुषुप्सति । पिप्रच्छिषति । तृंहू । तितृक्षतीत्यादौ गुणाभावसंप्रसारणनलोपाः सिध्यंतीति दिक् ॥ **गुब्भ्यः** ॥ बहुवचनमाद्यर्थम् । गुप्तिज्किद्मान्बधदान्शान्भ्यः सप्रत्ययः धातोश्च द्विः । इच्छायां पूर्वेण सिद्धत्वादर्थांतराभिधानाच्च स्वार्थे विधिरयम् । गुप्तिजी मानवधी च अनुदात्तेतः । दान्शानौ स्वरितेतौ । अवयवे चरितार्थं लिंगं समुदायादात्सप्रवर्तकम् । जुगुप्सते । आगमजमनित्यमिति नेट् । नानिटि से इति न गुणः । तितिक्षते । चिकित्सति । मीमांसते । बीभत्सते । दीदांसति । शीशांसति । आयः गुब्भ्य इत्यनुवर्तते । शब्दाधिकारश्चायम् । तेन गुपूधूपविच्छिपणिपनिभ्य आयः । अनिर्दिष्टार्थत्वात्स्वार्थे पणिपन्योरनुदात्तेत्त्वम् । आयाभावे चरितार्थमित्यायांतान्नात्मवर्त्तत इति । आभ्यां चाय स्तुताविवेष्यते । गोपायति । धूपायति । विच्छायति । पणायति । पनायति । अत्रानुक्तसमुच्चयार्थश्चोनुवर्तते । तेन ऋतेरीयङ् । ऋतीयते । कमेर्णिङ् । कामयते । वानप्यायादिः । गोपायांचकार । जुगोप । ऋतीयांचक्रे । आनर्त । कामयांचक्रे । चकमे । इति सिद्धम् । नाम्नो यः । इषिकर्मार्थकान्नाम्न इच्छायां यः तदिष्यमाणं यदीच्छाकर्तुः स्वसंबंधि भवति । पुत्रीयति । घटीयति । ननु कर्मण इति कस्माल्लब्धमिति चेत् ।

शृणु । इच्छायाः सकर्मकत्वेनाक्षिप्तस्य कर्मणो नामार्थेनाभेदसंबंधाल्लब्धम् । ननु पुत्रेण पुत्राय वेच्छतीत्यादावपि कुतो न। तेषामपीच्छायामन्वयस्य संभवादिति चेत् । न । बहिरंगत्वात् । कर्म हि प्रथमाकांक्षितत्वादंतरंगमव्यभिचारि च। करणादि तु पश्चादपेक्षितत्वाद्बहिरंगं व्यभिचारि च। न हि सर्वत्रेच्छायाः करणादिरस्तीति नियमोस्ति । अंतरंगे कर्मणि चरितार्थे बहिरंगे करणादौ प्रवर्त्तितुं नार्हति । अप्रतीतेश्च । नहि पुत्रीयतीत्युक्ते करणादिः कश्चित्प्रत्येति । यद्वा आङ्क्वीत्यतः कर्मणीत्यनुवर्त्य कर्मणि वर्तमानान्नाम्न इति व्याख्यानाल्लब्धं आत्मन इत्यनुवर्तते स च चेतनद्रव्यवचनो न ग्राह्यः । घटीयतीत्यादावप्रसंगात् । घटादेरचेतनत्वात् । परव्यावृत्त्यर्थः स्वशब्दपर्यायो गृह्यते इच्छया च क्रियात्वेन स्वाश्रयः कर्ताक्षिप्तः । सचेदिष्यमाणं वस्तु स्वसंबंधित्वेनापेक्षते तदात्मनः स्वसंबंधित्वं च साक्षाद्ग्राह्यम् । यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न यः । यजमानपुत्रस्य साक्षात्स्वसंबंधित्वाभावात् । ननु स्वस्य पुत्रं परस्य दासमिच्छतीत्यत्र कुतो न । पुत्रस्य स्वसंबंधित्वादिति चेन्न । इष्यमाणेन रूपेण स्वसंबंधित्वस्य विवक्षणात् । तच्चात्र दासत्वं न तत्स्वसंबंधि । ननु नाम्न इति किमर्थम् । धातोः पूर्वेण स विधानात् । परिशेषान्नाम्नो लाभात् । न च सिचंतमप्यायास्यतीति वाच्यम् । क्षत्यभावात् । न च वाच्यति, मरुत्वतीत्यादौ कुत्वजबादिप्रसंग इति वाच्यम् । अप्ययोरादित्यत्र जबाकरणेन ये पदकार्याभावस्य ज्ञापितत्वात् । राजीयतीत्यत्र तु ज्ञापकसिद्धं न सर्वत्रेति न लोपः सिध्यति । नाम्नो यपक्षे तु कुत्वाद्यभावो युक्त एव । न चात्र पक्षे राजीयतीत्यत्र नलोपाप्रसंगः । ओर्वमोरित्यतो लोप इति कृञो ये इत्यतो ये इति ऋसंयोगादित्यतो नेति चानुवर्त्य वाक्यभेदेन व्याख्येयम् । नेति स्वरूपपरम् । शब्दाधिकारात् षष्ठ्या विपरिणमयितव्यम् । तेन नाम्नो नस्य लोपो य इति लाभात् । इत्थं व्यर्थं नाम्न इति चेत् । उच्यते । एकत्वस्य विवक्षणार्थं नामग्रहणं तेनानेकस्मान्नाम्नः पदाद्वा न यः । महांतं पुत्रमिच्छति । किं च महापुत्रीयतीति स्यात् । तच्चेष्टमेव यद्ययं विग्रहः । महान्पुत्रो महापुत्र इति । महांतं पुत्रमिति विग्रहस्तु नेष्टम् । नन्वत्र कर्मत्वाभावादेव

न भविष्यति। मैवं कर्मत्वस्य सत्त्वात्। क्रियाजन्यफलाश्रयः कर्म। क्रियात्रेच्छा। तज्जन्यं फलमिष्टत्वं तच्च समुदायाश्रितम्। नहि पुत्रमात्रमिच्छति नापि महत्त्वमात्रं किं तु विशिष्टम्। एवं तर्हि विशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनात् न समुदायाद्यः। इदं च न्यायसिद्धानुवादकं नत्वपूर्ववचनम्। तथा हि पुत्रस्य प्रत्ययार्थेन सहैकार्थीभावरूपोऽन्वयो विशेषणेन तु व्यपेक्षारूपः। न चैकस्य विरुद्धमन्वयद्वयं संभवति। ऋद्धस्य राज्ञः पुरुष इत्यत्र राज्ञा यथा। पुत्रीयतीत्यत्र तु समुदायशक्तौ प्रविष्टो विशेषणीभूतस्य पुत्रस्य न विशेषणान्वयः संभवति। पदार्थः पदार्थेन युज्यते नत्वेकदेशेनेति सर्वतंत्रसंमतम्। ननु नामपक्षे कर्मत्वे सत्यपि तद्वाचकविभक्त्यभावात्प्रत्ययो न भविष्यतीति चेत्। न। त्रिकपक्षे तथात्वेऽपि पंचकं नामार्थ इति पक्षे नाम्नैव कर्मणो विधानाद्विभक्त्यनपेक्षणात्। ननु द्योतकत्वेन विभक्तिरपेक्षितेति चेत् न। यत्रानेकसंभवस्तत्रकारकविशेषद्योतनार्थं विभक्तेरपेक्षणात्।अत्र तु कर्मैव कारकम्। यथा पिपक्षति पचतीत्यत्र विक्लित्तिरेव कर्म। पश्य मृगो धावतीत्यत्र मृगकर्तृकं सरणं दर्शनं कर्म न कारकांतरमस्ति अतो विभक्त्या निर्वाहः। तथात्रापि। एवं तर्हि उत्तरार्थम्। नाम्न इच्छायांकिम्। पुत्रं जानाति। आत्मनः किम्। शत्रोः पुत्रमिच्छति। कर्मणः किम्। पुत्रस्येच्छति॥ **ईचास्य** ॥ ये इत्यनुवृत्तं सप्तम्या विपरिणम्यते। ये परेऽवर्णस्य ईर्भवति। नेत्यनुवृत्त्या क्वचिन्न भवति। पुत्रीयति। गंगीयति। अशनमिच्छति। अशनायति। अशनीयति। धनायति। धनीयति। उदकीयति। उदकपर्याय उदन्शब्दोऽप्यस्ति। तस्योदन्यति। सुडाम इत्यत्र सुडिति योगविभागात्क्वचिदन्यत्रापि सुट्। अश्वस्यति वडवा। क्षीरस्यति बालः। वृषस्यति गौः। लवणस्यत्युष्ट्र इति सिद्धम्। ङअगित्यत्रान्यत्राप्यग्भवतीत्युक्तम्। क्वचिदकूसुटोः सहप्रयोगो भवति। यद्वा। हशषांतादित्यतः सकमनुवृत्य 'दिवादावट्' इत्यतोऽटमनुवृत्य नाम्नः सक्। सकोऽट्शब्दाधिकारमाश्रित्य सगागमो बोध्यो व्याख्यानात्। दध्यस्यति। दधिस्यति। मध्वस्यति। मधुस्यति। षः स इति विपरीतानिर्देशान्न षः। चोऽनुक्तसमुच्चयार्थः। तेन मांताव्ययभ्यां यो न। किमिच्छति। स्वरिच्छति।

क्वचित्काम्यप्रत्ययो भवति । पुत्रकाम्यति । गंगाकाम्यति । स्वःकाम्यति किंकाम्यति । एकार्थीभावरूपेऽन्वये वृत्तिर्व्यपेक्षायां तु वाक्यमिति व्यवस्थया रूपद्वयसिद्धौ पाणिनीये सूत्रेऽनुवृत्तं वेति व्यर्थम् । पश्य पुत्रमिच्छति घटमिति प्रत्युदाहरणं तु द्विविधस्याप्यन्वयस्याभावद्योतनाय । वस्तुतस्तु वाक्यप्रत्युदाहरणमेकार्थीभावात् यकाम्यंतान्न कर्मणि प्रत्ययः । कर्मणो धात्वर्थांतरभावेनाकर्मकत्वात् । ननु पुत्रीयति शिष्यमित्यादाविवेच्छा । येपि सकर्मता कुतो नेति चेन्न । इच्छाया अप्रतीतेः । नहि शिष्यं पुत्रीयतीत्युक्ते इच्छा गम्यते किंत्वाचार एव । ननु तात्पर्ये सति इच्छा गम्यत इति चेन्न । तात्पर्यज्ञानस्य शब्दबोधाहेतुत्वात् । नहि वक्तुस्तात्पर्यं श्रोत्रा वगंतुं शक्यं परबुद्धेरप्रत्यक्षत्वात् । अर्थप्रकरणादिना तात्पर्यज्ञानांगीकरणं तु न युक्तम् । अर्थादिना शाब्दबोध एवांगीकर्तुमुचितः । किं च सुप्तोन्मत्तशुकादिवाक्ये व्यभिचाराच्च । नहि वक्तुस्तत्र तात्पर्यमस्ति तत्रेश्वरतात्पर्यं ग्राह्यमिति चेन्न । वक्तृतात्पर्यमित्यस्य वैयर्थ्यप्रसंगात् । आवश्यकेन तेनैव निर्वाहात् । किंचेश्वरतात्पर्यमप्यज्ञातं हेतुर्ज्ञातं वा । नाद्यः । तस्य सर्वत्र साम्येन कुत्रास्ति नास्ति वेति ज्ञातुमशक्यत्वात् । चैत्रस्य तत्तात्पर्यज्ञाने सति मैत्रस्यापि बोधप्रसंगात् । नांत्यः । अस्माकमीश्वरतात्पर्यज्ञानासंभवात् । कार्येण तदनुमास्यतीति चेन्न । परस्पराश्रयप्रसंगात् । शाब्दबोधे सति तस्य कारणत्वग्रहः । कारणत्वे गृहीते च शाब्दबोध इति । किंचेश्वरानंगीकर्तॄणां सांख्यमीमांसकादीनां शाब्दबोधो न स्यात् । तेषामीश्वर एव नास्ति । तात्पर्यज्ञानं तु दूरापास्तमिति दिक् ॥ **आचार उपमानात्** ॥ आचरणमाचारः चरेर्भावे घञ् । ज्ञानं व्यवहारो वा उपमीयतेऽनेनेत्युपमानं माङः साधने ल्युट् । कर्मण उपमानादाचारे यस्तस्मिंश्च ये परे पूर्वस्यास्य ईः इति वाक्यभेदेनैव द्वयोः समावेशे सिद्धे चोऽनुक्तसमुच्चयार्थः । तेनाधारस्याप्युपमानाद्यः । पुत्रमिवाचरतीति पुत्रीयति शिष्यमुपाध्यायः । हरीयति विप्रं राजा । भानूयति चंद्रं विरहिणी । प्रासादीयति कुट्यां भिक्षुः । कुटीयति प्रासादे नृपः । गंगीयति पल्वले मूर्खः । अत्र नाम्नः सिबंताद्वा यः । आद्ये लोप इत्याद्यनुवृत्त्या नलोपः कार्यः । अंतेऽप्ययोरिति ज्ञापकात्पदका-

र्यभावः साध्यः । ज्ञापकसिद्धं न सर्वत्रेति नस्य लोपः । राजानमिवाचरति राजीयति आढ्यं भिक्षुः । पुत्राविषयकं यज्ज्ञानं व्यवहारो वा तत्सदृशं शिष्याभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनकूलो वर्तमान एकगुर्वभिन्नाश्रयको व्यापारः । प्रासादाभिन्नाश्रयकं यज्ज्ञानं व्यवहारो वा तत्सदृशं कुट्यभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूल एकभिक्ष्वाश्रयो वर्त्तमानो व्यापारः ॥ **कर्तुर्यङ्** ॥ कर्तुरिति योगो विभज्यते । कर्तुरुपमानान्नाम्ना इति वर्त्तते । चोऽनुक्तसमुच्चयार्थः । तेनानुक्तः क्विप्प्रत्ययः । समुच्चीयते नामत्वसिबंतं ग्राह्यम् । न सिबंतं विभक्तिकार्यप्रसंगात्।कर्तुरुपमानादाचारेर्थे क्विप्प्रत्ययः । कृष्ण इवाचरति कृष्णति पौंड्रकः। अबादि । कृष्णांचकार । यत इत्यल्लोपः । कृष्ण्यात् । कवयति । विष्णवति। अ इवाचरति । अति । द्वित्वम् । सवर्णे दीर्घः । णब्डौ । औ । अतुः । क इवाचरति कति । चक । केचित्तु आ अत इति च्छित्वा अदंतादपि णब्डा वादेश उक्तः । तन्मते चकौ । माला इवाचरति मालाति सर्पः । पंथा इवाचरति पथीनति । नमांतस्येति दीर्घः । नन्विनांशावित्यनेनोपधादीर्घत्व मात्रस्य सौ नियतत्वात्कथमत्र दीर्घः । मैवम् । प्रवर्तमानं हि तत्सूत्रं दीर्घं नियच्छति । पथ्यादिषु प्रवर्तमानं कथं दीर्घं नियच्छेत् । केचित्तु अत्त्वात्त्वाभ्यां बाधितत्वान्न प्रवर्तते यदित्वात्त्वात्त्वे न विधीयेते तदात्रापि प्रवर्ततेति योग्यतामात्रेण नियमप्रवृत्तिमाहुस्तन्मते । पथेनति वृत्रहनतीत्यत्र तु नियमप्रवर्त्तनान्न दीर्घः । राजानति, इदामति, कीमति, । सजुषति, आशिषतीत्यादौ न पदकार्यं नाम्नो विधानात्। कर्तुः किम्। पुत्रीयति शिष्यम्। कर्मोपमानमिदम् । उपमानात्किम् । पुत्र आचरति । कृष्णनिष्ठज्ञानव्यवहारसदृशः पौंड्रकनिष्ठो वर्तमानो ज्ञानव्यवहारः । मालानिष्ठवर्तमानव्यवहारसदृशः सर्पनिष्ठो वर्तमानो व्यवहारः । उपमानस्य कर्तुः धात्वर्थांतरभावेपि उपमेयेन कर्त्रा सकर्तृत्वात् कर्तरि प्रत्ययः । यथा पूर्वसूत्रे उपमानस्य कर्मणो धात्वर्थांतरभावेपि उपमेयस्य कर्मणः सत्त्वात् कर्मणि अपि प्रत्ययाः। द्वयोरपि आचारक्रियापेक्षे कर्तृत्वकर्मत्वे बोध्ये । अवगल्भक्लीबहोडेभ्योऽ-क्विबंतेभ्यः पे प्राप्ते आदनुदात्तेत्यत्र आदिति योगविभागाद्बोध्यम् । णादौ

त्वनेकस्वरत्वादाम् । अवगल्भांचक्रे । क्विबंतानां तु अवजगल्भे, चिक्रीबे जुहोडे, इति विशेषः । ततः यङ् । उपमानात्कर्तुर्नाम्न आचारेऽर्थे यङ् । हंस इवाचरति हंसायते, गरुडायते, हंसनिष्ठव्यवहारसदृशो बकनिष्ठो वर्तमानो व्यवहारः । अत्र हसे इति चानुवर्त्य वाक्यभेदेन व्याख्येयम् । हसस्य लोपो यङि नस्य नित्यो लोपः । सस्य व्यवस्थितः।"ओजसोप्सरसो नित्यमन्येषां तु विकल्पनात् " । अन्यहसस्य तु नलोपः । राजायते । वृत्रहायते, पथीयते, दंडीयते, अत्र नलोपे ये इति दीर्घः । तस्यानुपधादीर्घत्वेन नियमाभावात् । अत्राद्धुवीत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । भवत्यर्थे नाम्नो यङ् । तस्मिंश्च नित्यं हसस्य लोपः । योगविभागादिष्टसिद्धिरिति भवत्यर्थो च्व्यर्थविशिष्टो ग्राह्यः । अशश्वत् शश्वत्भवति शश्वायते, सुमनायते, उन्मनायते । अत्र धातुसंज्ञाहेता प्रत्ययेपि चिकीर्षिते उपसर्गसमाकारं पूर्वपदं पृथक् क्रियते चुरादिषु संग्राम युद्धे इति विशिष्टपाठात् ज्ञापकात् । अन्यथा ग्राम युद्धे इत्येवापठिष्यत् । अतो मनः शब्दात्पूर्वोऽट् । स्वमनायत । नाम्नश्च कृतेति समासे क्यप्। सुमनाय्य सुमनायिषत इति द्वित्वं च सिध्यति । अत्र च करणे इत्युत्तरसूत्रादपकृष्य वाक्यभेदेन व्याख्येयम् । नाम्नो ययङौ स्तः करोत्यर्थे । करोत्यर्थश्च द्विधा। उत्पादनरूपः एकः । तत्तद्धात्वर्थोऽपरः। करोत्यर्थस्य सर्वधात्वर्थेष्वनुगतत्वात्सर्वधात्वर्थाः करोत्यर्था अपि भवंति । वरिवः शुश्रूषां करोति वरिवस्यति । नमस्यति देवान् । अत्र न चतुर्थी । जहत्स्वार्थायां वृत्तौ नमःशब्दस्यानर्थकत्वात् । अजहत्स्वार्थायां तु प्रत्ययार्थे उपसर्जनत्वात् तपश्चरति तपस्यति । शब्दं करोति शब्दायते। वैरायते। कलहायते । बाष्पमुद्वमति बाष्पायते । ऊष्मायते । कष्टाय क्रमते कष्टायते। कृच्छ्रायते ।गहनायते । एते वृत्तिविषये पापार्थाः। पापं कर्तुमुत्सहत इत्यर्थः। सुखं वेदयते सुखायते, दुःखायते, सुखं दुःखं चानुभवतीत्यर्थः । लक्ष्यानुसारादतिप्रसंगो नोद्भाव्यः । **ञिर्डित्करणे ॥** नाम्नो ञिः प्रत्ययो भवति द्विविधे करोत्यर्थे । स च डित् । यदि डित्संज्ञा विधीयेत तर्हि डिति टेरित्यादावस्यैव ग्रहणं स्यात् कृत्रिमत्वात् । ङ् इद्यस्य तस्य तु ग्रहणं न स्यादकृत्रिमत्वादतोऽतिदेशोयं परत्र प्रयुज्यमानः परशब्दो विनापि वर्तते

वत्यर्थं गमयति अडितं डिदित्याह । डिद्वदिति गम्यते । यद्यपि डिदिति सामान्यशब्दस्तथापि लक्ष्यानुसाराद्व्याख्यानाद्विशेषपरो बोध्यः । यद्वा डिदिति वचनसामर्थ्याद्विशेषपरः । अन्यथा ञिडिङ् करण इत्येवावक्ष्यत् । न चैव-मुत्तरयोगयोरपि डिद्विधाने टिलोप इति वाच्यम् । धातोर्ञिः प्रेरण इति गौरवाभावात्सुपठितत्वात् । न चैवं ञेरित्यादावस्यैव ग्रहणं स्यादेकानुबंध-कत्वादिति वाच्यम् । एकानुबंधग्रहणइति परिभाषाया अनित्यत्वात् । तत्र च शसः शित्त्वं ज्ञापकम् । शसीत्यस्य स्थाने असीति पाठ्यम् । तत्राननुबंध कस्यैव ग्रहणं भविष्यति न जसादेः । किं शित्त्वेन । तद् ज्ञापयति । तेन स्तुरारित्यत्र तृतृनोर्ग्रहणं भवति यथा। तथा ञेरित्यादौ ञिञिडोर्ग्रहणं भविष्यति। तेन डिद्वदित्यस्येष्ठवदित्यर्थः । तेनेष्ठे यत्कार्यं दृष्टं संभावितं च तन्नाम्नो भवतीत्यतिदिश्यते । टिलोपः । इष्ठे यथा । पटिष्ठः । एवं पटमाचष्टे पटयति । वृद्धौ सत्यां पूव वा टिलोपः । अपीपटदपपटद्वा । विन्-मतुवतुलोपो यथा । स्रग्विणमाचष्टे स्रजयति । अग्निमंतमाचष्टेऽ-ग्नयति । दंडवंतं दंडयति । गुरुमाचष्टे गरयति । युवानमल्पं वा युवयति। अल्पयति।अतिकं वाढं वा–नेदयति। साधयति । प्रियं स्थिरं स्फिरं प्राययति । स्थापयति । स्फाययति । अत्र ञिडिदिति योगं विभज्य सापेक्षादपि नाम्नो ञिर्विधेयः । माणवकं मुंडं करोति मुंडयति । गुडं मिश्रं करोति मिश्रयति । काष्ठं श्लक्ष्णं करोति श्लक्ष्णयति । पयो भोक्तुं व्रतं करोति व्रतयति । शूद्रान्नं भोक्तुं व्रतयति । अनयोर्योगयोर्नाम्नः प्रत्यय-विधिः । तेन पदकार्यं न । सजूरिवाचरति सजुष्यते । मरुत्वत्यते । वाच्यते । स्रजयति । यतयतीति यत् तमाचष्टे यतयति । ञकार उभयप-दार्थो वृद्ध्यर्थश्च । ननु वृद्धौ चरितार्थः कथं पातोर्हेतुरिति। मैवं उच्चारणसा-मर्थ्यात् । वृद्धिमात्रार्थत्वे तु णिरित्येव पठेत् । तेन णेरिति सूत्रं कर्त्तव्यं भवति । अत्रादादेर्लुगित्यतो लुगित्यनुवर्त्य वाक्यभेदेन व्याख्येयम् । नाम्नोऽवयवस्य कृत्प्रत्ययस्य लुक् ञौ । कंसवधमाचष्टे ञिप्रत्यये यदामित्य-प्रत्ययस्य लुक् । अकृतव्यूहेति । निमित्तापायेति न्यायेन वा वधादेशा-भावः । इह इति पूर्वपदं पृथक् क्रियते संग्राम युद्धे इति सामान्यापेक्षज्ञाप-

कात् तस्य च हंत्यर्थे कर्मत्वात्ततो द्वितीया । हनोघादिति घदादेशः । कंसं घातयति । एवं बलिबंधं राजागमनं वाचष्टे बलिं बांधयति । राजानमागमयति । यद्वा अव्यविकन्यायेन नाम्नो विग्रह एव हनादेर्धातोः प्रेरणे ञिमत्यय इति वक्ष्यते ॥ **धातोः प्रेरणे** ॥ धातोरिति योगो विभजनीयः । यक्चतुर्ष्वित्यतो यगित्यनुवर्त्य धातोर्यगिति व्याख्येयं स च कंड्वादिभ्य एव लक्ष्यानुसारात् । कंड्वादयो द्विविधाः । धातवो नामानि च । कंडूञ् गात्रविवर्षणे । नाम्नां तु विग्रह एव कंडूं करोति प्रेरणे करणे इत्यनुवर्तते । क्रियाविषयके प्रेरणे वाच्ये धातोर्ञिः प्रत्ययः स्यात् । प्रेरणं चानेकविधम् । भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेरणमाज्ञा गुर्वादेराराध्यस्य प्रवर्तनाध्येषणं प्रार्थना। यस्यानुमतिमंतरेणार्थो न प्रवर्तते तस्य राजादेरनुमत्या प्रेरकत्वम् । वैद्यादेस्तु "मुस्तापर्पटकं पिबेत् ज्वरितः" इत्याद्युपदेशेन प्रेरकत्वम् । यः पुनः केनचित् जिघांसंतं नलायमानं निरुणद्धि निरुद्धश्च हन्यते तत्र तिरोद्धा हंतुरनुग्रहं करोतीत्यनुग्रहेण तस्य प्रेरकत्वम् । एवं चोरस्य वासान्नादिप्रदस्याप्यनुकूलाचरणेन प्रेरकत्वम् । सर्वश्चायं विशेषः प्रकरणादिगम्यः । सर्वत्रानुगतं प्रेरणमात्रं ञ्यर्थः । ननु प्रेरणे इति धातोर्विशेषणमस्तु । प्रेरणे वर्तमानाद्धातोर्ञिरिति । अथ पचति पाचयतीत्युक्ते व्यक्तमर्थांतरं गम्यते तत् कथमयं स्वार्थिकः । इह हि कः पचेरर्थः । प्रधानार्थः । यासौ तंडुलानां विक्लित्तिःअधिश्रयणादीनां तु तादर्थ्यात्तदवच्छेदेन च पच्यर्थता । यो हि पानार्थमुदकमाहरति । विक्रियार्थं च काष्ठान्याहरति । शीतं चापनेतुमग्निं समिंधे । पेष्टुं च तंडुलान् प्रक्षालयति । नासौ पचतीत्युच्यते । तत्कस्य हेतोर्विक्लित्तिं प्रति साधनत्वाभावात् तदवच्छेदाभावाच्च । अतस्तादर्थ्यादेवाधिश्रयणादीनां पच्यर्थता । तद्वत् प्रेरकव्यापारोपि तादर्थ्यादेव पच्यादिवाच्यो भविष्यति । ञिप्रत्ययस्तु द्योतकः । तथा च योप्येकांते तूष्णीमासीनो भक्तबीजबलीवर्दैः प्रतिविधत्ते।स उच्यते पंचभिर्हलैः कृषतीति । तदेवं द्योतकपक्षोऽपि संभवति । न च यथा प्रकृत्यभिहिते ञिर्भवति एवमुक्तप्रेषितादिशब्दाभिहितेऽपि स्यात् । उक्तः करोति । प्रेषितः करोति । प्रेरणविषयार्थत्वात्करोत्यर्थस्य प्रत्ययार्थपक्षे तूक्तार्थत्वात् ञेरभाव इति वाच्यम् । उक्तार्थत्वात् प्रेरकव्यापारद्योतनार्थं

ञिः प्रयुज्यते । तस्य स्वशब्देनैव द्योतितत्वात् । इह तर्हि पाचयत्योदनं चैत्रो मैत्रेण । द्वयोः कर्त्रोः प्रत्ययेनाभिधानं प्राप्नोति पाचयतश्चैत्रो मैत्र इति । प्रत्ययार्थपक्षे तु प्रकृत्यर्थोपसर्जनस्य ञ्यर्थस्य प्राधान्यात्तस्यैव कर्तरि प्रत्यय इति दोषान्न द्योतकतापक्षो ग्राह्यः । किं च अन्वयव्यतिरेकाभ्यां शब्दार्थावसायः। न च पचति, पठति, गच्छतीत्यादावंतरेण ञिं क्वचिदपि प्रयोजकव्यापारोऽवसीयते । उत्पन्ने तु ञौ प्रतीयते । अतस्तदर्थत्वमेव युक्तम् । किं च एवं च सति अणादेरप्यपत्याद्यर्थो द्योत्य एव स्यात् । पंचभिर्हलैः कृषतीत्यत्र त्वनेकार्थत्वाद्धातूनां कृषिरेव प्रतिविधानेपि वर्तते इति युक्तम् । न पुनस्तद्दर्शनेन सर्वत्र प्रकृत्यर्थत्वम् । नन्वत्र पक्षे भेदिका बिभित्सा देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति कृद्योगलक्षणा षष्ठी न प्राप्नोति अप्रधानत्वात् । मैवम् । तृतीयाबद्धविष्यति । पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्तर्यप्रधानेपि तृतीया भवति व्याप्तेः । ननु भिक्षा वासयति कारीषोऽग्निरध्यापयतीति ञिर्न स्यात् । प्रवर्तनस्य चेतनधर्मत्वादिति चेन्न । चेतनस्यापि तत्संभवात् । नावश्यं स एव वा संप्रयोजयति आहोष्यतामिति योपि तूष्णीमासीनस्तत्समर्थमाचरति । सोऽपि वासं प्रयुंक्ते । भिक्षाश्च प्रचुराश्च व्यंजनवत्यश्च । लभ्यमाना वा संप्रयोजयंति । तथा कारीषोग्निर्निर्वातः । एकांते संप्रज्वलितः । शीतकृतमध्ययनविरोधिनमुपद्रवमपनयन् अध्ययनेऽनुकूलो भवति । तत्र यथाऽनुमतिरूपदेशोऽनुग्रह इत्येषु ञिर्भवति तथात्रापि भविष्यति । यद्यनुमत्यादिषु प्रयोज्यव्यापारोपदेशेन प्रवृत्तिः । इह तु न । तथाप्यानुकूल्याचरणमेव प्रयोजकव्यापारत्वेनाध्यारोप्यते । अथ कश्चित्कंचिदाह । पृच्छतु मा भवान् । अनुयुक्तां मा भवानिति तत्र प्रष्टा प्रयोज्यः । तस्य प्रेरकः प्रयोजकः । तद्व्यापारे ञिः प्राप्नोति । एकविषयत्वाच्च ञेस्तुवादीनां पर्यायप्रसंगः । उच्यते । प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्ञ्यर्थः । केवलात्तु तुबाद्यर्थ इति । तदुक्तम् "द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोङ् विधीयते । सक्रियस्य यदा प्रैषस्तदा सविषयो णिचः" इति । वासुदेवेन कंसं घातयति कायिकश्चित्रकरो वेत्यत्र कथं ञिः । उच्यते । ये कंसाद्यनुकारिणो नटानां व्याख्यानोपाध्यायाः ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तादृशेनैव वासुदेवेन घातयंति । येपि चित्रं

व्याचक्षते इयं मथुरा, अयं प्रासादः, अयं कंसः, अयं भगवान्, वासुदेवः प्रविष्टः, एताः कंसकर्षिण्यो रज्जवः, एते उग्रं निपाताश्च प्रहाराः। अयं हतः कंसः, अयमाकृष्ट इति । तेपि चित्रगतं कंसं तादृशेनैव च वासुदेवेन घातयंति। चित्रेपि हि तद्बुद्धिश्च पश्यताम्।एतेन चित्रलेखका व्याख्याताः। येपि ग्रंथं वाचयंतः कंसवधमाचक्षते काथिकाः नाम तेप्युत्पत्तिप्रभृत्या विनाशात् कंसादीन्वर्णयंति तेपि वर्ण्यमानाः श्रोतॄणां बुद्धिस्थाः प्रत्यक्षवद्भवंति चित्तमपि च तेषां तदात्मकमिव भवति । अत एव नानापक्षमाश्रिता भवंति । केचित्कंसभक्ताः केचिद्वासुदेवभक्ताः। वर्णान्यत्वं खल्वपि पुष्यंति केचिद्रक्तमुखाः। केचित्कालमुखाः। त्रैकाल्यमपि लोके लक्ष्यते कथायां वाच्यमानायां हि वक्तारो भवंति । गच्छ हन्यतां कंसः । गच्छ घातिष्यते । किं गतेन हतः कंसः । तदेव काथिकोपि बुद्धिसंस्थं कंसं बुद्धिस्थेन वासुदेवेन घातयति । श्रोतापि शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते एवं बलिं बंधयते राजानमागमयतीत्यादावपि द्रष्टव्यम् ॥ **चुरादेः** ॥ चुर आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः।अनुद्भूतावयवभेदसमुदायस्यान्यपदार्थत्वेनाश्रयणादेकवचनम् । चुरादेर्धातोर्ञिः प्रत्ययः । चोरयति। चोरयते । चुरादौ यानि नामानि पठितानि तेभ्यस्तु वचनसामर्थ्याञ्जिः । हस्तिनाऽतिक्रामति हस्तयाति । **सधातुः** ॥ अत्रानंतरोऽपि ञिर्न परामृश्यते सग्रहणवैयर्थ्यप्रसंगात् । आनंतर्य्यादेव तदनुवृत्तिसंभवात् । नापि व्यवहितस्तिबादिः । आदेशादिविधायकप्रकरणेन विच्छेदात् । अतो यङादिरेव परामृश्यते । यङादिना च प्रत्ययग्रहणपरिभाषया तदंतं गृह्यते । तेषां केवलानां संज्ञाप्रयोजनाभावाद्वा बोभूयत इत्यादि प्रागुदाहृतम् । यत्तु सनाद्यंता धातव इति सूत्रं तत्तु स धातुरिति कर्तुं युक्तम् । तच्छब्देन सनादयः परामृश्यंते पूर्वं विहितत्वेन प्राधान्यात् । सर्वादेरुत्सर्गतः प्रधानपरामर्शित्वात् । ननु सनादि परामर्शेपि तदंतस्य संज्ञा न स्यात् । संज्ञाविधौ प्रत्ययग्रहणे तदंतग्रहणाभावादिति चेन्न । सुप्तिङंतमिति ज्ञापकसिद्धस्य तस्यासार्वत्रिकत्वेनात्रानाश्रयणात् । केवलानां धातुसंज्ञाप्रयोजनाभावाच्च । न च सन्यङोरिति

द्वित्वं प्रयोजनमस्ति क्यजादेस्तदभावात् । स्तौतिण्योरेव षण्यभ्यासात्, सः स्विदिस्वदिसहीनां च गुणो यङ्लुकोरित्यादिसूत्रवैयर्थ्यप्रसंगाच्च । यद्वा भूवादयो धातव इत्यस्यानंतरं सङिति सूत्रणीयम् । सनेः सकारादारभ्य णिङो ङकारेण प्रत्याहारः । यत्तु चङङोर्ङकारेणापि प्रत्याहारः संभाव्येतेत्युक्त तन्न । व्याख्यानतो विशेषप्रतिपत्तिसंभवात् । अन्यथा रोः सुपीत्यादौ डापश्चापो वा पकारेण सुप्प्रत्याहारः स्यात् । यद्वा साणिङिति सूत्रमस्तु आद्यंताभ्यामवयवभ्यां संदंशन्यायेनाक्षिप्तस्तदंतः समुदायो धातुसंज्ञ इति सूत्रस्यार्थः ॥ **भ्वादिः** ॥ भवनं भूः क्रियासामान्यं संपदादिः, अंदतींद्रियेण बध्नाति अर्थमित्यादिः आगमजमनित्यमिति न नुम् । यद्वा अंद्यते संबध्यतेऽर्थोऽनेन । यद्वा अत्त्यंतर्भावयत्यर्थम् । अद भक्षणे । अद्यते मनसि क्रियतेऽर्थोनेन । औणादिक इञ् । यद्वा आदत्ते ग्राहयत्यर्थं अंतर्भावितण्यर्थः । यद्वा आदीयते गृह्यतेऽर्थोनेन आङः पराद्दाञः किः शब्द इति । भुवः क्रियासामान्यस्यादिर्वाचकः शब्दो धातुसंज्ञः । एवं सत्याणवयत्यादावपभ्रंशे हिरुक् नानेत्यादावव्यये बभूवे बभूव इत्यादावाख्यातांते चातिप्रसंगस्तद्वारणार्थं भ्वादिरित्यावर्त्य भूरादिर्यस्येति बहुव्रीहिर्व्याख्येयः । आवृत्त्यादौ च भ्वादिरिति पाठ एव मानमन्यथा भ्वर्थ इत्येवावक्ष्यत् । आदिशब्दश्च व्यवस्थायाम् । तेन भूशब्दादारभ्य ये पठितास्ते ग्राह्याः । तेन क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वम् । नामधातूनां तु सधातुरितिवचनाद्धातुत्वम् सौत्रास्तु गणे एव पाठ्याः । यद्वा स्तंभ्वादीनामुदित्करणात्तेषां धातुत्वं ज्ञाप्यते । तद्धि स्तभित्वा स्तंभित्वेतीड्विकल्पार्थं कृतम् । क्त्वा च धातोर्भवति धातुत्वाभावे क्त्वैव नास्ति । यद्वा स इत्यनुवर्त्य स प्रसिद्धो यो भ्वादिः पठितोपलक्षितार्थविशिष्टः स धातुसंज्ञ इत्यर्थः । यद्वा । प्रायःपाठात् यावादिषु नातिप्रसंगः । भूएधस्पर्द्धादयः क्रियावाचकाः पठितास्तन्मध्यपतिता यावादयोपि क्रियावाचका एव गृहीतुमुचिता न द्रव्यविकल्पवाचकाः । यद्वा या शब्दस्य न धातुसंज्ञा लाक्षणिकत्वात् । यदः स्यादौ त्यदाद्यत्वे आपि च येति सिद्धम् । लाक्षणिकस्यापि ग्रहणे गामादाग्रहणेष्वविशेष इति व्यर्थं स्यात् । वाशब्दस्य धातुत्वे किं स्याद्विकल्पार्थे गंधनादाविव वातीति

रूपं स्यादिति चेन्न। अव्ययाद्विभक्तेर्लुगिति तिबादेर्लुकः संभवात्।इत्थं च विभक्तिग्रहणस्यापि तत्र सार्थक्यं लभ्यते । अन्यथा सिपः स्यादेवावक्ष्यत् । सर्वादिपठितस्य उभशब्दस्य धातुसंज्ञा प्राप्नोति उभ उम्भेत्यत्र पाठादिति चेन्न। पाठे अकारस्योच्चारणार्थत्वात्सर्वादौ तु विवक्षितत्वात्। रूपसामान्याभावात्। किं च सर्वादिमध्ये पाठसामर्थ्यान्न उभकावित्यादिरूपसिद्ध्यर्थो हि पाठः, धातुत्वे सति स न सिध्येत् । द्योदिवाविति स्वर्गवाचकस्य न धातुत्वं अनुदितत्वात् । गणे चोदितस्य पाठात् । तदनुबंधकग्रहणे नातदनुबंधकस्येति न्यायात् । कुंडलिनं चैत्रमादायेत्यादौ अकुंडलिन आनयनादर्शनाच्चानया रीत्यान्यत्राप्यतिप्रसंगः परिहार्यः । यत्तु धातुरिति पूर्वाचार्यसंज्ञाग्रहणात्संज्ञ्यपि तेषां क्रियावाचको गृह्यते इति नातिप्रसंग इति । तन्न । इत्थं हि सूत्रवैयर्थ्यापातात्प्रथमेत्यादिवत् तत्संज्ञयैव व्यवहारसंभवात् । अत्र कश्चिदाह । धातुः क्रियावाची न प्रत्यय इत्यत्र किं प्रमाणमिति । उच्यते । भगवतः पाणिनेर्वचनं भूवादय इति । भ्वर्था वादयो भूवादय इति हि तदर्थः । यदि तु गणपठितत्वमात्रत्वं विवक्षितमभविष्यत् तदा चादय इत्येवावक्ष्यत् । "भुवो वार्थं वदंतीति भ्वर्था वा वादयः स्मृताः" इति कात्यायनवचनमपि मानम् । क्रियावाचका भ्वादय इति हि तस्यार्थः । समानशब्दानां प्रतिषेध इति हि नागनाथवचनमपि मानम् । अक्रियावचनेष्वतिप्रसंगवारणार्थं हि तत् । यास्कवचनमपि भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति भावः । क्रिया आख्यातं धातुः आख्येयेते फलभावनेऽनेनेति व्युत्पत्तेः । ननु प्रसिद्धं प्रत्ययमाख्यातशब्दस्यार्थं विहायैवं कथं व्याख्यायत इति चेत्। शृणु । सत्त्वप्रधानानीति साहचर्यात् । अन्यथा सुप इत्येवावक्ष्यत् ।अतः प्रकृतिसाहचर्य्याद्धातुरेव गृह्यते न तु प्रत्यय इति। तथा पदजातानामाख्यातोपसर्गा इति तेनैवोक्तम् । अत्रापि प्रकृतिसाहचर्य्याद्धातुरेवाख्यातशब्देन गृहीतुमुचितः । "साध्यत्वेन क्रिया तत्र धातुरूपनिबंधना। सिद्धरूपस्तु यस्तस्याः स घञादिनिबंधनः" इति हरिणाप्युक्तम्। धातुवाच्यायाः क्रियायाः साध्यत्वेपीदं वचनं

मानमिति दिक् का पुनः क्रिया। उच्यते । करोत्यर्थभूता उत्पादनापरपर्याया उत्पत्त्यनुकूलव्यापारसंतानरूपा भावनैव क्रिया। तथा हि । अभवतो गमनादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्तुः करोति कर्मत्वम् । तथा च करोत्यर्थकर्तुर्भवितृप्रयोजकतया भवतेरुत्पत्त्यर्थात्प्रयोजकव्यापारे ञिरुत्पद्यमानः करोत्यर्थमवलंबते। उक्तं च "करोतिः क्रियमाणेन न कश्चित्कर्मणा विना । भवत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ॥ १ ॥ भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥ प्रयोज्यकर्तृकैकांतव्यापारप्रतिपादकाः ॥ २ ॥ ञ्यंता एव प्रयुज्यंते तत्प्रयोजककर्मसु ॥ तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ॥३॥ प्रयोजकक्रियामाहुर्भावनां भावनाविदः" इति । सर्वे धातवो धातुत्वेन तस्या वाचकाः, अत एव किं करोतीति प्रश्ने पचति पठतीत्याद्युत्तरं संगच्छते । प्रातिस्विकेन तु रूपेण पचित्वादिना विक्लित्त्यादेः फलस्य वाचकाः । फलं तु प्रायेण व्यापारे साध्यत्वेनान्वेति । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ क्वचित्तु साधनत्वेनान्वेति । क्रिया च व्यापारत्वेन धातोर्वाच्या न तु फूत्कारत्वयतत्वादिरूपेण । पचतीत्युक्तेः फूत्कारादेरप्रतीतेः । क्वचित्प्रकरणादिना तत्प्रतीतावपि समुदाये वृत्ताश्शब्दा अवयवेपि वर्तंत इति न्यायो बोध्यः । तदुक्तम् । "गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ॥ बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" इति । न चासौ मीमांसकोक्तरीत्या आख्यातवाच्यैवास्तामिति वाच्यम् । भोक्तव्यमित्यादावाख्यातं विनापि तत्प्रतीतेः । तथा च तत्रापि कारकापेक्षया दृश्यते अस्ति च, तत्रापि करोतिसामानाधिकरण्यं किं कर्तव्यं भोक्तव्यम् । किं कृतवान् भुक्तवानिति । किं च भावयति घटमितीव त्वन्मते घटमित्यपि स्यात् तुल्यार्थत्वात् । दृष्टांते हि कर्तुः कुंभकारस्य व्यापारं ञिराचष्टे दार्ष्टांतिके त्वाख्यातप्रत्ययः । ननु प्रयोजकव्यापारो ञ्यर्थः । कर्तृव्यापारस्त्वाख्यातार्थ इति वैषम्यमिति चेत् कारकचक्रप्रयोक्तुः कर्तृत्वे घटस्यातथात्वात् । यदि तु "धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते" इति भर्तृहरिप्रतिपादितरीत्या

प्राधान्येन धातूपात्तव्यापाराश्रयत्वरूपं कर्तृत्वं तवापि समतं कस्तर्हीदानीमाख्यातार्थः। व्यापारस्य धातुनैवाभिहितत्वात् । अपि च धातोः सकर्मकाकर्मकविभाग उच्छिद्यते। ननु सिद्धांतेपि क्रियायाः कर्मापेक्षानियमात्कथमकर्मकतेति चेत् न। फलव्यापारयोः सामानाधिकरण्यवैय्यधिकरण्याभ्यां सकर्मकाकर्मकविभागस्य संभवात् । अथ स्ववाच्यव्यापारव्यधिकरणफलवाचकत्वं सकर्मत्वम्, स्ववाच्यव्यापारसामानाधिकरणफलवाचकत्वमकर्मकत्वमितितव मतम् । मयाँ तु स्वोत्तराख्यातवाच्यव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम् स्वोत्तराख्यातवाच्यव्यापारसामानाधिकरणफलवाचकत्वमकर्मकत्वं धातो सेट्त्वाऽनिट्त्ववदिति वाच्यमिति चेत्। न । घटो भवतीत्यत्रातिप्रसंगस्य सत्त्वात् । भावनायाः कुलालाश्रयत्वात् । फलस्योत्पत्तेर्घटाश्रयत्वात् । अथ व्यापारव्यधिकरणसमानाधिकरणत्वमेवाकर्मकत्वादेर्लक्षणं ब्रूषे, तथाप्युक्तातिप्रसंगस्तदवस्थ एव । कारकचक्रप्रयोक्तुः कर्तृत्वाभ्युपगमात् । किं च धातोः फलं आख्यातस्य च कर्ता वाच्यः भावनैवाक्षेपलभ्येति स्वीकुरु । न च तथा सति प्राधान्यप्रतीतिर्न स्यादिति वाच्यम् । व्यक्तिवदुपपत्तेः। तव मते हि गवादिशब्दानां जातिरेव वाच्या व्यक्तिस्त्वाक्षेपलभ्या । वाहदोहादौ तस्या एव प्राधान्यं साक्षादन्वयात् तद्वत् । भावनाया अपि भविष्यति । किं च आकृत्यधिकरणोक्तरीत्या भावनात्वमेव वाच्यं स्यात् । तव मते न भावना तस्या घटादिवदाक्षेपात् । ननु क्रियाया धात्वर्थत्वे पचतीत्यादौ एककर्तृका वर्तमाना पचिक्रियेति क्रियाविशेष्यको बोधो न स्यात्।प्रत्ययार्थं प्रति प्रकृत्यर्थस्य विशेषणताया औपगवादौ क्लृप्तत्वादिति चेन्न।अजा गौरीत्यादौ आबीपोर्वाच्यं स्त्रीत्वमिति पक्षे स्त्रीत्वस्य वैश्वदेवीत्यादौ "आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः"इति भट्टपादोक्तेस्ताद्धितार्थस्य देवतायाश्च विशेषणत्वगीकारात् । आख्यातार्थस्य कर्तुरपि विशेषणत्वोपपत्तेः । किं च युष्मदि समानाधिकरणे मध्यमः, अस्मद्युत्तम इत्यादि पुरुषव्यवस्था त्वन्मते न संभ

---

१ मीमांसकेन ।

वति । युष्मदस्तिवादिवाच्यकारकवाच्यत्वाभावात् । उक्ते कर्तरि प्रथमेत्यादि च न स्यात् । कर्तुः प्रत्ययेनानुक्तेः । न च समानाधिकरणे इत्यनेन स्वाभिधेयसंख्यान्वयित्वम् अभिहितशब्देन वाभिहितसंख्याकत्वं विवक्षितमिति वाच्यम् । सूत्राननुगुणत्वात् कृत्तद्धितसमासैः संख्याया अनभिधानात्तदभिहिते तृतीयाप्रसंगात् । न च कृत्यनभिधानमेव कर्तुरनभिधानमिति वाच्यम् । भावार्थप्रत्ययेऽपि कर्तरि प्रथमापत्तेरिति दिक् । तार्किकान्मत्ये ते दोषास्तुल्याः । ते हीत्थमाहुः । आख्यातस्य यत्नोर्थः यत्नस्य जातिरूपस्यावच्छेदकत्वलाभात् । न कर्ता कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात् । यत्नार्थककरोतिना सर्वाख्यातविवरणदर्शनाच्च । रथो गच्छतीत्यादौ यत्नाभावाद्व्यापारे लक्षणा। यत्नो हि प्रथमान्तार्थे विशेषणम् । आश्रयत्वं च संसर्गः । पचति चैत्र इत्यस्य पाकानुकूलकृतिमांश्चैत्र इति प्रथमान्तविशेष्यको बोध इति । अत्रोच्यते । कृतिमान् कर्तेति नास्मन्मते लक्षणम् । किं तु धातूपात्तव्यापाराश्रयः कर्तेति व्यापारस्य धातुनैवोपादानात् । नाख्यातस्य तदंशे शक्तिः कल्प्या । यत्नस्यापि व्यापारविशेषत्वेन धातुत एव लाभात् न तत्राख्यातस्य शक्तिः किं त्वाश्रये आख्यातशक्तिः । आश्रयत्वं च शक्यतावच्छेदकम् । तच्चाखण्डोपाधिरूपमिति न जातितो दोषः । यद्वा आश्रयत्वमेव वाच्यम् । तदेव तादात्म्येनावच्छेदकं च।रथो गच्छतीत्यत्र त्वया त्रयं कल्प्यम्,शक्तिज्ञानम्, उपपत्तिज्ञानं, शक्यसंबंधज्ञानं च । मम तु शक्तिज्ञानमेवैकं कल्प्यमिति लाघवम् । अथ यदि निरूढलक्षणा स्वीक्रियते तर्हि सा शक्तितो नाममात्रेण भिद्यते नार्थतः । अनादित्वस्योभयोस्तुल्यत्वात् । करोतिर्न यत्नार्थकोऽकर्म्मकतापत्तेः। फलस्थानीया यत्नवाचका हि यत्यादयोऽकर्मका दृष्टाः। नहि भवति घटं यतते इति।एवं घटं करोती त्यपि न स्यात्।करोतिनाऽऽख्यातविवरणमसिद्धम्।करोति र्हि धातोर्विवरणं नाऽऽख्यातस्य।आख्यातस्य त्वाऽऽख्यात एव। किमत्र विनिगमकमिति चेच्छृणु।विनाप्याख्यातं कृत्सु करोतिना विवरणं दृश्यते। पक्ता पाककर्ता पक्वान् पाकं कृतवान् इति धातुस्तूभयानुगतोऽस्ति। किं च कृञो यत्नार्थे

कर्त्वे कर्म्मकर्तरि प्रयोगो न स्यात् । अकर्मकाणां कर्मणोऽभावात्तस्य कर्तृत्वासंभवात् । अस्मन्मते त्वाश्रयोऽर्थः । तत्र संख्यान्वेति । कर्तृप्रत्यये सा व्यापारेऽन्वेति, कर्मप्रत्यये तु फले । कालस्तूभयत्र व्यापारे । ओदनं पचति स्थाल्यां चैत्रः । एकौदनाभिन्नाश्रयका या विक्लित्तिस्तदनुकूलैकचैत्राभिन्नाश्रयको वर्त्तमानो व्यापारः । ओदनः पच्यते चैत्रेणेत्यत्रैकौदनाभिन्नाश्रयका या विक्लित्तिस्तदनुकूलैकचैत्राभिन्नाश्रयकस्थाल्यभिन्नाश्रयको वर्त्तमानो व्यापारः । अत्राश्रयस्तु तृतीयार्थ इति प्रथमांतविशेष्ये पक्षे पश्य मृगो धावतीति न सिध्येत् । पश्य धावंतं मृगमिति स्यात् । सरणक्रियाविशेष्यस्य मृगस्य दर्शने कर्म्मत्वात् द्वितीया स्यात् । तत्सामानाधिकरण्यात्स तेरपि सत्ता स्यात् न च तामित्यध्याहार्य्यम् । गौरवाद्वाक्यभेदापत्तेश्च । न चेदमेकं वाक्यं नेति वाच्यम् । नागनाथादिभिरेकवाक्यत्वस्य स्वीकारात्। न चात्र मृगो दिदर्शयिषितः । तथा सति मृगं पश्येत्यस्य सुवचत्वात् धावतीत्यस्य वैयर्थ्यप्रसंगात् । सिद्धान्ते तु शीघ्रं सरणमेव दिदर्शयिषितम् । तस्य मृगाश्रयत्वात् मृगाश्रयोपादानम् । तिबंतात्तु न द्वितीया । नामत्वाभावात् । भावनायाः प्रत्ययार्थत्वं वदन् प्रष्टव्यः—यः प्रत्ययार्थः स प्रधानमित्युच्यते त्वया किंवा यः प्रधानं स प्रत्ययार्थ इति । नाद्यः । संख्याकालयोः प्रत्ययार्थयोरपि प्राधान्यादर्शनात् । नांत्यः।चित्रग्वादौ प्रधानस्याऽन्यपदार्थस्य प्रत्ययार्थत्वादर्शनात् । तस्माद्धातुवाच्या क्रिया विशेष्येत्यत्र न कश्चिद्दोष इति दिक् ॥ नन्वस्तिभवतिविद्यतिषु क्रियावाचित्वमव्याप्तम् । न । तत्रोत्पादना प्रतीयते एवं तिष्ठतीत्यादावपि । तथा जायते उत्पद्यते इत्यत्रापि । उत्पत्तिर्हि आद्यक्षणसंबंधः तदनुकूलव्यापारश्चोत्पादना तदनुभवश्चास्त्यादिभ्यो नास्त्येव । अत एव किं करोतीति पश्ने पचतीत्यादिवदस्तीति न प्रतिब्रुवते इति चेत् । उच्यते । अस्तीत्यादेः स्वरूपधारणं करोतीत्यर्थः । धारणं चोत्तरकालसंबंधः । तथा सत्यपि करोत्यर्थेन धात्वर्थांतरगतेन धारणेनैव भाव्याकांक्षायाः पूरणाज्जी-

वति नृत्यतीत्यादिवदकर्म्मकता।कृञा हि व्यापारव्याधिकरणोत्पत्तिरुच्यते।अत एव तत्र घटादीनां कर्म्मता । परसमवेतव्यापारफलीभूतोत्पत्तिशालित्वात् । जनिप्रभृतिभिस्तु व्यापारसमानाधिकरणैवोच्यते। अत एवाऽकर्मता।तेषां स्वोत्पत्त्यनुकूलव्यापारभाजामपि सूक्ष्मरूपापन्नघटादीनां परसमवेतत्वघटितकर्मताविरहात् । तदुक्तं च हरिणा "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते" इति । अन्ये त्वाहुः।"अस्त्यादावपि धर्म्यंशे भाव्यस्त्येव हि भावना" इति दिक् । हाटकेशपुरस्थायी विनायकसुतोऽकरोत्॥रघुनाथाभिधो व्याख्यां तिबन्तस्य यथामति ॥ १ ॥ इति श्रीसरस्वतीमणीतसूत्रोत्तरार्द्धे आख्यात विवरणं लघुभाष्यं संपूर्णम् ॥

## लघुभाष्यं संपूर्णम् ।



पुस्तकमिलनेका ठिकाना-

**खेमराज श्रीकृष्णदास,**

**"श्रीवेङ्कटेश्वर" छापाखाना, खेतवाडी-बंबई.**

श्रीगणेशायनमः ।

# अथ सरस्वतीप्रणीतसूत्रपाठः ।

अइउऋऌ समानाः १ ह्रस्वदीर्घप्लुतभेदाः सवर्णाः २ एऐओऔ संध्यक्षराणि ३ उभये स्वराः ४ अवर्ज्जा नामिनः ५ हयवरल ६ ञणनङम ७ झढधघभ ८जडदगब ९ खफछठथ १० चटतकप ११ शषस १२ आद्यंताभ्याम् १३ अन्त्यस्वरादिष्टिः १४ अन्त्यात्पूर्व उपधा १५ कार्य्यायित् १६ आरैऔ वृद्धिः १७अरेदोन्नामिनो गुणः १८ स्वरानंतरिताहसाः संयोगः १९ कुचुटुतुपु वर्गाः २० विभक्त्यंतं पदम् २१ इति संज्ञाप्रकरणम् ॥ १ ॥ इ यं स्वरे २२ उ वम् २३ ऋ रम् २४ ऌ लम् २५ ए अय् २६ ऐ आय् २७ ओ अव् २८ औ आव् २९ य्वोर्लोपश् वा पदान्ते ३० एदोतोऽतः ३१ ङस्य ३२ सवर्णे दीर्घः सह ३३ अ इ ए ३४ उ ओ ३५ ऋ अर् ३६ ऌ अल् ३७ ए ऐ ऐ ३८ ओ औ औ ३९ इति स्वरसंधिः ॥ २ ॥ नामी ४० द्वे द्वित्वे ४१ औ निपातः ४२ प्लुतः ४३ दूरादाह्वाने टेः प्लुतः ४४ इति प्रकृतिभावः ॥ ३॥ चपा अबे जबाः ४५ ञमे ञमा वा ४६ चपाच्छः शः ४७ हो झभाः ४८ स्तोः श्चुभिः श्चुः ४९ न शात् ५० ष्टुभिः ष्टुः ५१ तोर्ल्लिः ५२ न षि ५३ टोरंत्यात् ५४ नः सक् छते ५५ शे चक् वा ५६ ङ्णनो ह्रस्वाद्विः स्वरे ५७ छः ५८ हसेऽर्हहसः ५९ रहाद्यपो द्विः ६० मोऽनुस्वारः ६१ नश्चाऽपदान्ते झसे ६२ यमा यपेऽस्य ६३ वा ६४ इति व्यंजनसंधिः ॥४॥ विसर्ज्जनीयस्य सः ६५ कुप्वोः ⌓क⌓पौ वा ६६ अतोत्युः ६७ हबे ६८ आदबेलोपश् ६९ स्वरे यत्वं वा ७० भोसः ७१ नामिनो रः ७२ रः ७३ रि लोपो दीर्घश्च ७४ सैषाद्धसे ७५ इति विसर्गसंधिः ॥ ५ ॥ अविभक्ति नाम१तस्मात्२सि,औ,जस् १ अम् औ,शस्२टा,भ्यां,भिस् ३ ङे,भ्यां,भ्यस् ४ ङसि,भ्यां, भ्यस् ५ ङस्, ओस्, आम् ६ ङि, ओस्, सुप् ३ समानाद्धेर्ल्लोपोऽधातोः ४ अम्शसोरस्य ५ सो नः पुंसः ६ नुडामः ७ रः संख्यायाः ८ ष्णः ९ त्रेरयङ् १० ङुः ११ जश्शसोर्लुक् १२ डतेः १३ अष्टनो डौ १४ वासु १५ रै स्मि १६ अद्भि १७ भ्यः १८ ए स्मि बहुत्वे १९ ओसि २०

ङसिरत् २१ ङस्स्यः २२ टेनः २३ ङेरक् २४ सर्वादेः स्मट् २५ अतः २६ ङि स्मिन् २७ जसी २८ सुडामः २९ इति विभक्तौ प्रथमः पादः ॥१॥

यटोच्च १ हसेपः सेर्लोपः २ आपः ३ टौसोरे ४ घिरी ५ औ ६ ङितां यट् ७ आम्ङेः ८ नियः ९ स्त्रियां योः १० धौ ह्रस्वः ११ ङितामट् १२ वेयुवः १३ इदुद्भ्याम् १४ औ यू १५ टा नास्त्रियाम् १६ ए ओ जसि १७ धौ १८ ङिति १९ ङेरौ डित् २० ऋतो ङ उः २१ सेरा २२ धेरर् २३ ङौ २४ पंचसु २५ स्तुरार् २६ पुंसोसुङ् २७ वृतो नुम् २८ वादीपोः शतुः २९ अप्ययोरान्नित्यम् ३० न्सम्महतोर्धौ दीर्घः शौ च ३१ नोपधायाः ३२ अत्वसोः सौ ३३ शसि ३४ नामि ३५ इनां शौ सौ ३६ अल्लोपः स्वरेम्वयुक्ताच्छसादौ ३७ वेङ्योः ३८ अंचेर्दीर्घश्च ३९ तिरश्चादयः ४० क्षुभ्नो णोनंते ४१ अवकुप्वंतरेपि ४२ किलात्पः सः कृतस्य ४३ प्रादेश्च तथा तौ सुनमाम् ४४ इति विभक्तौ द्वितीयः पादः ॥ २ ॥

नपुंसकात्स्यमोर्लुक् १ अतोम् २ इत्वन्यादेः ३ ईमौ ४ जश्शसो शिः ५ नुमयमः ६ सावनडुहः ७ नामिनः स्वरे ८ अच्चास्थां शसादौ ९ टादावुक्तपुंस्कः पुंवद्वा १० वसोर्व उः ११ श्वादेः १२ इति विभक्तौ तृतीयः पादः ॥ ३ ॥

आतो धातोर्लोपः १ पथां टेः २ इतोत्पंचसु ३ थो नुट् ४ आ सौ ५ दिव औ ६ ऊरसे ७ चतुराम् शौ च ८ अनुडुहश्च ९ धावम् १० ओरौ ११ आम्शसि १२ ऐ सख्युः १३ सेर्डाधेः १४ उशनसाम् १५ य्वोर्धातोरियुवौ स्वरे १६ स्त्रीभ्रुवोः १७ वाम्शसि १८ य्वौ वा १९ नुधातोः २० इति विभक्तौ चतुर्थः पादः ॥ ४ ॥

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमे वांनौ वस्नसौ १ त्वा माऽमा २ नादौ ३ चादिभिश्च ४ त्वन्मदेकत्वे ५ युवावौ द्विवचने ६ आमौ ७ त्वमहं सिना ८ यूयं वयं जसा ९ तुभ्यं मह्यं ङया १० तव मम ङसा ११ ङसिभ्यसोः स्तुः १२ भ्यस् भ्यम् १३ सामाकम् १४ आम्स्भौ १५ एटाङ्योः १६ सखिपत्योरीक् १७ ङे १८ ऋङ्ङे १९ त्रिचतुरोः स्त्रियां तिसृचतसृवत् २० काप्यतः २१ ह्रस्वो वा २२ अन्यार्थे २३ गोः २४ नपुंसकस्य २५ त्यदादेष्टेरः स्यादौ २६ दस्य मः २७ सौ सः २८ तः २९ इदमोऽयं

पुंसि ३० इयं स्त्रियाम् ३१ स्म्यः ३२ अनटौसोः ३३ भिस् भिस् ३४ अदसः ३५ सेरौ ३६ मादूः ३७ एरी बहुत्वे ३८ भिदपाम् ३९ वसां रसे ४० चोः कुः ४१ दिशाम् ४२ षो डः ४३ नाम्नो नो लोपशधौ ४४ संयोगांतस्य लोपः ४५ स्कोराद्योश्च ४६ स्रोर्विसर्गः ४७ सस्तौ ४८ अह्नः ४९ रोरात्रिषु ५० दोषां ५१ धातोश्च झसे ५२ मो नो धातोः ५३ हो ढः ५४ दादेर्घः ५५ द्रुहादेर्वा ५६ नहो धः ५७ छशषराजादेः षः ५८ षढोः कः से ५९ सस्तोनपि ६० दिपि ६१ सिपि वा ६२ दः ६३ खसे चपा झसानाम् ६४ झबे जबाः ६५ वावसाने ६६ आदिजबानां झभांतस्य झभास्स्ध्वोः ६७ तथोर्द्धः ६८ अव्ययाद्विभक्तेर्लुक् ६९ समासप्रत्यययोः ७० अलुक् क्वचित् ७१ अव्ययीभावात् ७२ अतोमनतः ७३ वा टाङ्च्योः ७४ स नपुंसकम् ७५ एकत्वे द्विगुद्वंद्वौ ७६ इति युष्मत्पादः ॥ १ ॥

लिंगार्थे प्रथमा १ आमंत्रणे च २ सिर्द्धिः ३ भोस् भगोस् अघोस् ४ शेषाः कार्य्ये कर्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबंध आधारभावयोः ५ विनासहनमःऋतेनिर्द्धारणस्वाम्यादिभिश्च ६ कर्तृकार्य्ययोरक्तादौ कृति षष्ठी ७ अन्योक्ते प्रथमा ८ इति विभक्त्यर्थनिरूपणम् ॥ १ ॥

अपत्येऽण् १ अत इञनृषेः २ ण्यायनणेयण्णीया गर्गनडात्रिस्त्री पितृष्वस्रादेः ३ लुग्बहुत्वे क्वचित् ४ देवतेदमर्थे ५ णितो वा ६ कारकात्क्रियायुक्ते ७ केनेयेकाः ८ स्वार्थेपि ९ वत्तुल्ये १० भावे तत्वयणः ११ अस्त्यर्थे मतुः १२ मांतोपधाद्वत्विनौ १३ तरतमेयस्विष्ठाः प्रकर्षे १४ वोव्यः स्वरे १५ ऋत उरणि १६ यस्य लोपः १७ डिति टेः १८ नो वा १९ त्यतनौ २० आदिस्वरस्य ञ्णिति च वृद्धिः २१ क्वचिद्व्योः २२ न संधिय्वोर्युट् च २३ धातोर्नामिनः २४ अत उपधायाः २५ आतो युक् २६ हनो घत् २७ हनो घ्ने २८ रातो ञौ पुक् २९ मितां ह्रस्वः ३० शेषा निपात्याः कत्यादयः ३१ इति तद्धितपादः ॥ १ ॥

आबतः स्त्रियाम् १ ऋण ईप् २ ष्टितः ३ नदादेः ४ जातेरयोपधात् ५ इंद्रादेरानीप् ६ स्वांगाद्वा ७ पुंयोगे च ८ ऐ च मन्वादेः ९ पत्न्यादयः १० वौर्गुणात् ११ उतः ऊः १२ यूनस्तिः १३ इति स्त्रीप्रत्ययाः ॥ १ ॥

समासश्चान्वये नाम्नाम् १ संख्यापूर्वो द्विगुः २ समाहारे अत ईप्

द्विगुः ३ पूर्वेऽव्ययेऽव्ययीभावः ४ अवधारणार्थे यावति च ५ यथाऽसादृश्ये ६ अमादौ तत्पुरुषः ७ नञि ८ चार्थे द्वंद्वः ९ बहुव्रीहिरन्यार्थे १० कर्मधारयस्तुल्यार्थे ११ दिक्संख्ये संज्ञायाम् १२ टाडकाः १३ पुंवद्वा १४ ना १५ अन्स्वरे १६ सहादेः सादिः १७ आदेश्च द्वंद्वे १८ इति समासप्रक्रिया॥ १॥

प्रादिरुपसर्गः १ प्राग्धातोः २ नाम्नश्च कृता समासः ३ चादिर्निपातः ४ तत्रादिर्विभक्त्यर्थे ५ सद्यआदिः काले ६ तदव्ययम् ७ इत्यव्ययानि ॥ १ ॥ इति पूर्वार्द्धसूत्राणि ॥ १ ॥

धातोः १ वर्तमाने तिप् तस् अंति सिप् थस् थ मिप् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे २ विधिसंभावनयोः याव् यातां युस् यास् यातं यात याम् याव याम ईत ईयातां ईरन् ईथास् ईयाथां ईध्वं ईय ईवहि ईमहि ३ आशीः प्रेरणयोः तुप् ताम् अंतु हि तं त आनिप् आवप् आमप् तां आतां अंतां स्व आथां ध्वं ऐप् आवहैप् आमहैप् ४ तुह्योस्तातङाशिषि वा ५ अनद्यतनेऽतीते दिप् तां अन् सिप् तं त अमिप् व म तन् आतां अंत थास् आथां ध्वं इ वहि महि ६ परोक्षे णप् अतुस् उस् थप् अथुस् अ णप् व म ए आते इरे से आथे ध्वे ए वहे महे ७ द्विश्च ८ आशिषि याव् यास्तां यासुस् यास् यास्तं यास्त यासं यास्व यास्म सीष्ट सीयास्तां सीरन् सीष्ठास् सीयास्थां सीध्वं सीय सीवहि सीमहि ९ आशीर्यादादेः पं किव् १० श्वस्तने ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस् ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ११ आद्भुवि कर्मणि १२ कर्तरि पं च १३ यक् चतुर्षु १४ अप् कर्तरि १५ अदादेर्लुक् १६ ह्वादेर्द्विश्च १७ दिवादेर्यः १८ स्वादेर्नुः १९ तुदादेरः २० रुधादेर्नम् २१ तनादेरुप् २२ ना क्र्यादेः २३ हसादान हौ २४ त्यादौ भविष्यति स्यप् २५ दिवादावट् २६ स्वरादेः २७ स्यप् क्रियातिक्रमे २८ भूते सिः २९ नव पम् ३० पराण्याव् ३१ नाम्नि च युष्मदि चास्मदि च भागैः ३२ णित्वे ३३ अनिटोऽनामिवतः ३४ हशषांतात्सक् ३५ एरङ् द्विश्च ३६ लित्पुषादेर्ङः ३७ इरितो वा ३८ इण् तन्यकर्तरि ३९ लोपः ४० दिस्योर्हसात् ४१ अद्रुदादेरट् ४२ अस्तेरीट् ४३ सेः ४४ लोपो ह्रस्वाज्झसे ४५ इट ईटि ४६ झसात् ४७

दादेः पे ४८ मेटः ४९ ओर्वाहेः ५० अतः ५१ अदे ५२ ञ्मोराः ५३ आदाथ इः ५४ याः ५५ यामियम् ५६ युस इट् ५७ ओर्म्मोर्वा लोपः ५८ कृञौ पे ५९ ङित्यदुः ६० नातः ६१ ई हसे ६२ द्वेस्तौ ६३ नमसोस्य ६४ सिसः ६५ आतोन्तोदनतः ६६ द्वेः ६७ अन उस् ६८ स्याविदः ६९ आतो णब्डौः ७० आदनुदात्तङितः ७१ निविशादेः ७२ ञित्स्वरितेत उभे ७३ परतोन्यत् ७४ अपित्तादिर्ङित् ७५ णादिः कित् ७६ ऋसंयोगान्न ७७ त्कसेट् रुदाम् ७८ क्तोवा ७९ अतिशये हसादेर्यङ् द्विश्च ८० इच्छायामात्मनः सः ८१ गुभ्यः ८२ आयः ८३ नाम्नो यः ८४ ईचास्य ८५ आचार उपमानात् ८६ कर्तुर्यङ् ८७ ञिर्ङित् करणे ८८ धातोः प्रेरणे ८९ चुरादेः ९० स धातुः ९१ भ्वादिः ९२ सेर्द्विः ९३ प्वोर्वि हसे ९४ ये ९५ दादेरिः ९६ ऋतो रिङ् ९७ अयकि ९८ यादादौ ९९ दादेरे १०० सस्वरादिर्द्विरद्विः १ स्वरादेः परः २ पूर्वस्य हसादिः शेषः ३ शसात्खपाः ४ कुहोश्चुः ५ झपानां जबचपाः ६ रः ७ ह्रस्वः ८ यस्त्ये ९ भृञां लुकि १० निजां गुणः ११ यङि १२ आतः १३ ञमजपां नुक् १४ रीगृदुपधस्य च १५ अङि लघोर्ह्रस्वोपधायाः १६ लघोर्दीर्घः १७ नारितः १८ आभ्वोर्णादौ १९ नुगशाम् २० लोपः पचां कित्ये चास्य २१ इस्से २२ झसाद्धिर्हिः २३ जह्योधिसाधिः २४ गुणः २५ नूपः २६ शीङः २७ उपधाया लघोः २८ नानिटि से २९ सिस्योः ३० उः ३१ क्वित्यद्युसि ३२ नो लोपः ३३ नमः ३४ गमां स्वरे ३५ आतोनपि ३६ यतः ३७ ञेः ३८ य्योः ३९ असादेर्भ्वादिः ४० संध्यक्षराणामानपि ४१ आदेः ष्णः स्नः ४२ विदो नवानां त्यादीनां णबादिर्वा ४३ ब्रुव आहश्च पंचानाम् ४४ तथे ४५ अवादावी पिति त्सिम ४६ ओरौ ४७ गमां छः ४८ दृशादेः पश्यादिः ४९ ज्ञा जनोर्जा ५० प्वादेर्ह्रस्वः ५१ मुचादेर्मुम् ५२ खिति पदस्य ५३ इदितो नुम् ५४ शमां दीर्घः ५५ जमस्य क्ङिति झसे ५६ लोपस्त्वनुदात्ततनाम् ५७ ऋत इर् ५८ पोरुर् ५९ सिसतासीस्यपामिट् ६० रुदादेश्चतुर्णां ह्रसादेः ६१ कृतः ६२ हनृतः स्यपः ६३ ऊदितो वा ६४

